KĀVYAMĀLĀ. 47.

THE

# SETUBANDHA

OF

## PRAVARASENA.

With the Commentary of S'rīrāmdāsa Bhūpati.

EDITED BY

PAṆḌIT S'IVADATTA

Head Paṇḍit and Superintendent, Sanskṛit Department, Oriental College, Lahore.

AND

KĀS'ĪNĀTH PĀṆḌURANG PARAB.

REVISED BY

WĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'ĪKAR.




Second Edition.



PUBLISHED
BY
PĀNDURANG JĀWAJĪ,
PROPRIETOR OF THE 'NIRṆAYA SĀGAR' PRESS,
BOMBAY.

1935.

*Price 8 Rupees.*



काव्यमाला ४७.

श्रीप्रवरसेनविरचितं

# सेतुबन्धम् ।

श्रीरामदासभूपतिप्रणीतया टीकया समेतम् ।

जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डितशिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा,
पणशीकरोपाह्वलक्ष्मणशर्मात्मजवासुदेवशर्मणा
च संशोधितम् ।

(द्वितीयावृत्तिः ।)

तच्च
मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः,
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

शाकः १८५७, खिस्ताब्दः १९३५.

मूल्यं ३ रूप्यकत्रयम् ।



# सेतुबन्धमहाकाव्यस्य भूमिका।

अस्य—

'एत्थ समप्पइ एअं सीआलम्भेण जणिअरामब्भुअअम्।
रावणवह त्ति कव्वं अणुराअङ्कं समत्थजणणिव्वेसम्॥
[अत्र समाप्यत एतत्सीतालम्भेन जनितरामाभ्युदयम्।
रावणवध इति काव्यमनुरागाङ्कं समस्तजननिर्द्वेषम्॥]'

इति समाप्तिस्कन्धक(१५।९५)कथित**रावणवधे**तिनामककाव्यस्यैव प्रत्याश्वाससमाप्तिलेखनिर्दिष्ट**दहमुहवहे(दशमुखवधे)**तिनामकस्यैव

'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः।
सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम्॥'

इति **काव्यादर्शे** (१।३४) आचार्यदण्ड्युक्तं **'सेतुबन्धम्'** इति नामान्तरम्.

कर्ता चास्य—

'अहिणवराआरद्धा चुक्कक्खलिएसु विहडिअपरिट्ठविआ।
मेत्ति व्व पमुहरसिआ णिव्वोढुं होइ दुक्करं कव्वकहा॥
[अभिनवराजारब्धा च्युतस्खलितेषु विघटितपरिस्थापिता।
मैत्रीव प्रमुखरसिका निर्वोढुं भवति दुष्करं काव्यकथा॥]

इति (१।९) स्कन्धकेन, 'इअ सिरि**पवरसेण**विरइए (इति श्री**प्रवरसेन**विरचिते)' इतिप्रत्याश्वाससमाप्तिलेखेन,

'कीर्तिः **प्रवरसेन**स्य प्रयाता कुमुदोज्ज्वला।
सागरस्य परं पारं कपिसेनेव सेतुना॥'

इति **हर्षचरिते** खिस्ताब्दसप्तमशतकोत्पन्नमहाकवि**बाणभट्टो**क्त्या,

'यथा ( सेतुबन्धे १।२ ) प्रवरसेनस्य—

'दणुइन्दरुहिरलग्गे जस्स फरन्ते णहप्पहाविच्छड्डे ।
गुप्पन्ती विवलाआ गलिअव्वत्थणसुए महासुरलच्छी ॥
[दनुजेन्द्ररुधिरलग्ने यस्य स्फुरति नखप्रभासमूहे ।
व्याकुलीभवन्ती विपलायिता गलितस्तनांशुका महासुरलक्ष्मीः ॥]'

इति काव्यमालाप्रथमगुच्छकमुद्रितौचित्यविचारचर्चायां खिस्ताब्दैकादशशतकोत्पन्नकाश्मीरिकमहाकविक्षेमेन्द्रवचनेन च **प्रवरसेनमहाराजो**ऽभूत्—इति प्रतीयते.

**प्रवरसेन**नाम्ना विख्याताश्च राजानश्चत्वारः श्रूयन्ते. तत्र द्वौ तु काश्मीरिकौ राजतरङ्गिणीतृतीयतरङ्गे कल्हणेन वर्णितौ. तयोः समयस्तु—

'शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षाणामभवन्कुरुपाण्डवाः ॥'

इति ( राज० १।५१ ) कल्हणोक्त्या ६५३ मितकल्याद्यब्दगणे—

'वर्षाणां द्वादशशती षष्टिः षड्भिश्च संयुता ।
भूभुजां कालसंख्यायां तद्द्वापञ्चाशतो मता ॥'

इति ( राज० १।५४ ) वाक्यतोऽन्तर्गतविस्मृतनामकल्यकपञ्चत्रिंशन्नृपावलिकद्वापञ्चाशन्नृपाणां १२६६ मितवर्षाणाम्

'चतुर्दशाधिकं वर्षसहस्रं नव वासराः ।
मासाश्च विगता ह्यस्मिन्नेकविंशतिराजसु ॥'

इति प्रथमतरङ्गसमाप्तिसारवाक्यतः ( राज० १।८४ ) श्लोकवर्णितराज्यप्रारम्भलवमहाराजराज्यात् १०१४ मितवर्षाणाम्

'शतद्वये वत्सराणामष्टभिः परिवर्जिते ।
अस्मिन्द्वितीये व्याख्याताः षट् प्रख्यातगुणा नृपाः ॥'

इति द्वितीयतरङ्गसमाप्तिसारवाक्यतः १९२ मितवर्षाणाम्

'तस्मिन्नस्तंगते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः ।
अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥ ३।९६ ॥'

इत्युक्त्या ३४ मितानां **मेघवाहन**राज्याब्दानाम्

'अथ क्ष्माभृदरक्ष क्ष्मां **श्रेष्ठसेन**स्तदात्मजः ।
आहुः **प्रवरसेनं** यं तुञ्जीनं चाञ्जसा जनाः ॥ ३।९७ ॥
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनाम् ।
स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोऽभवत् ॥ ३।१०१ ॥'

इत्युक्त्या ३० मितानां प्रथम**प्रवरसेन**राज्याब्दानां योगेन ३१५९-८९ मितकल्याद्यब्देषु ५८-८८ खिस्तवत्सरेषु प्रथम**प्रवरसेनः काश्मीर**मण्डले राज्यं चकार.

'पौत्रः **प्रवरसेनस्य** गिरा मातुर्नृपात्मजः ।
पैतामहेन नाम्नैव कुलाल्या ख्यापितोऽभवत् ॥ ३।१०९ ॥
निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः ।
ययौ **प्रवरसेनो**ऽथ तीर्थोत्सुक्याद्दिगन्तरम् ॥ ३।१२३ ॥
रक्षित्वा दशमासोनाः क्ष्मामेकत्रिंशतं समाः ।
तस्मिन्क्षणे **हिरण्यो**ऽपि शान्तिं निःसंततिर्ययौ ॥ ३।१२४ ॥
तत्रानेहस्य**ुज्जयिन्यां** श्रीमान्**हर्षा**पराभिधः ।
एकच्छत्रश्चक्रवर्ती **विक्रमादित्य** इत्यभूत् ॥ ३।१२५ ॥'

इत्युक्त्या प्रथम**प्रवरसेन**ज्येष्ठपुत्र**हिरण्य**राज्यवर्षाणां ३१ मितानां योजनेन ३२२० मितकल्यब्दात्प्रागेव **प्रवरसेन**कनिष्ठसुत**तोरमाण**सुत**प्रवरसेन**स्य जन्म. एवं च ख्रिस्ताब्दद्वितीयशतके काश्मीरिकद्वितीय**प्रवरसेन**स्य राज्यं निश्चीयते सारवाक्यानां प्रामाणिकत्वे.

'**वाकाटक**वंशे द्वौ **प्रवरसेनौ** समुद्भूतौ' इति Dr. G. Bühler, Ph. D., C. I. E., महाशयैः "स्वस्ति **प्रवरपुरा**दग्निष्टोमाप्तोर्यामोक्थ्यषोडश्यतिरात्रवाजपेयबृहस्पतिसवसाद्यस्कचतुरश्वमेधयाजिनो वि[ष्णुवृ]द्धसगोत्रस्य सा

(स)म्राजो **वाकाटकानां** महाराज**प्रवरसेनस्य** सूनोः सूनोः(?) अत्यन्तस्वामिमहाभैरवभक्तस्य अंसभारनिवेशितशिवलिङ्गोद्वहनशिवसुपरितुष्टसमुत्पादितराजवंशानां पराक्रमाधिगतभागीरथ्यमलजलमूर्धाभिषिक्तानां दशाश्वमेधावभृथस्नातानां **भारशिवानां** महाराज**भवनाग**दौहित्रस्य **गौतमीपुत्रस्य** वाकाटकानां महाराजश्री**रुद्रसेनस्य** सूनोरत्यन्तमाहेश्वरस्य सत्यार्जवकारुण्यशौर्यविक्रमनयविनयम(मा)हात्म्यधि(धी)मत्त्वहा(पा)त्रागतभक्तित्वविजयित्वमनोनैर्मल्यादिगुणैः समुपेतस्य वर्षशतमभिवर्धमानकोशदण्डसाधनसंतानपुत्रपौत्रिणो युधिष्ठिरवृत्तेर्वाकाटकानां महाराजश्री**पृथिवि(वी)षेण**(?)स्य सूनोर्भगवतश्चक्रपाणेः प्रसादोपार्जितश्रीसमुदायस्य वाकाटकानां महाराजश्रीरुद्रसेनसूनोर्महाराजाधिराजश्री**देवगुप्त**सुतायां **प्रभावती**गुप्तायामुत्पन्नस्य शंभोः प्रसादधृति(त)कार्तयुगस्य वाकाटकानां परममाहेश्वरमहाराजश्री**प्रवरसेनस्य** वचनात्—" इति प्राचीनलेखव्याख्यावसरे ( Indian Antiquary. Vol.XII. P. 243 ) दर्शितम्. तत्रापि 'प्रथम**प्रवरसेन**महाराजः ख्रिस्ताब्दचतुर्थशतके राज्यं चकार. द्वितीय**प्रवरसेन**महाराजस्तु-ख्रिस्ताब्दपञ्चमशतके' इत्यपि तत्रैव तैर्निर्णीतम्.

एवं चत्वारः प्रवरसेनमहाराजाः श्रुताः परं त्वेतन्नैव निश्चितम्—कस्य **प्रवरसेनस्य** कृतिः—इति.

**'प्रवरसेनो भोजदेवः'** इति कश्चित्—इति प्रकृतकाव्यनवमस्कन्धकव्याख्यावसरे **रामसेतुप्रदीप** एव यद्यप्युक्तम्, तथापि **भोजदेवस्य** महाकविबा**णतः** पूर्वमुत्पन्नत्वाद्धर्षचरिते प्रवरसेनसेतुनामग्रहणानुपपत्तिः.

**रामसेतु**प्रदीपे तु—

'धीराणां काव्यचर्चाचतुरिमविषये **विक्रमादित्य**वाचा
यं चक्रे **कालिदासः** कविकुमुदविधुः **सेतु**नामप्रबन्धम् ।
तद्व्याख्यासौष्ठवार्थं परिषदि कुरुते **रामदासः** स एव
ग्रन्थं **जल्लालदीन्द्र**क्षितिपतिवचसा **रामसेतु**प्रदीपम् ॥'

इति प्रारम्भ एव श्लोकोक्त्या "इह तावन्महाराजप्रवरसेननिमित्तं महाराजाधिराज-

विक्रमादित्याज्ञया निखिलकविचक्रचूडामणिः कालिदासमहाशयः सेतुबन्धप्रबन्धं चिकीर्षुर्निर्विघ्नसमाप्त्यर्थं रामचन्द्रात्मकमधुमथनरूपाभीष्टदेवतानमस्कारोपदेशमुखेन मङ्गलमाचरन्नाह—" इति प्रथमस्कन्धकावतरणिकया च प्रकृतग्रन्थे प्रत्याश्वासकं 'इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे' इति लेखेन 'प्रवरसेनकारितं कालिदासकृतमेतत्काव्यम्' इति प्रतीयते. तत्र काश्मीरिकद्वितीय**प्रवरसेनविक्रमादित्य**योः समानकालकत्वेऽपि **विक्रमादित्य**समये द्वितीय**प्रवरसेन**स्य राज्यप्राप्तेः प्रागेव तीर्थयात्रार्थं कश्मीरमण्डलेभ्यो निर्गतत्वात्[१], **विक्रमादित्य**स्य परलोकप्रस्थानोत्तरमेव **मातृगुप्तेन** कश्मीरमण्डले त्यक्त एव द्वितीय**प्रवसेन**स्य कश्मीरराज्यप्राप्तेः कदा **विक्रमादित्यप्रवरसेन**योः राज्ये समकालकत्वम्. राजतरङ्गिण्यां **कालिदासस्य सेतुबन्धस्य** च नाममात्रमपि न दृश्यते. किंच **कालिदास**कृतत्वे बाणादिभिः कुतो न कालिदासग्रन्थेष्वेवास्य नाम लिखितम्. मातृगुप्तस्यैव कालिदास इति नामान्तरं यदि भवेत्, तदा तु मातृगुप्तस्य राज्यं त्यक्त्वा काश्यां तिष्ठतोऽस्ति स्म द्वितीयप्रवरसेनेन मैत्री. संभवति च तदा तन्नाम्ना निर्माणमेतद्ग्रन्थस्येति. परं च तदपि न विचारसहम्. यतः—औचित्यविचारचर्चादिषु 'यथा मातृगुप्तस्य, यथा कालिदासस्य' इति पृथक्पृथङ्नामोपलम्भात्. इति विरम्यतेऽनिश्चितपदार्थे याथातथ्याग्रहेण.

अस्य च महाकविबाणादिप्रशस्तस्य महाकाव्यस्य—

१ कुलनाथकृता
२ रामदासकृता
३ श्रीकृष्णकृता

इति तिस्रो व्याख्याः Catalogue Catalogrum ग्रन्थे Dr. Theodor Aufrecht महाशयैर्लिखिताः. तासु च महामहोपाध्यायपण्डितवर**श्रीदुर्गाप्रसादैः** डॉक्दर **पी. पीटर्सन्**महाशयैर्मथुरायां क्रीतेषु पुस्तकेषु **रामदास-**

१. अत एव द्वितीयप्रवरसेनपितृव्यहिरण्यमहाराजमरणोत्तरं कश्मीरेषु नीराजकेषु विक्रमादित्यो **मातृगुप्तं** राजानं प्रत्यष्ठापयत्.

विरचिता **रामसेतुप्रदीपा**ख्या व्याख्यैव समुपलब्धा. अत एषैव टीका तैरेव मुद्रयितुमारब्धा.

एतट्टीकानिर्माता **रामदास**भूपतिस्तु संप्रति सकलभूमण्डलप्रख्यातसौन्दर्यसवाईजयपुराधीशपूर्वपुरुषमानसिंहमहाराजानां सकुल्य आसीदिति प्रकृतटीकाप्रारम्भपद्यैः प्रतीयते. अतस्तत्समयश्च **जल्लालदीन्द्रा**परनामका**कब्बर**पातिसाहिनां ४० मिताब्दसमय एव

'चक्षुर्भूतारिशीतांशु(१६५२)भिरभिगणिते साहसाङ्कस्य वर्षे
वर्षे **जल्लालदीन्द्र**क्षितिमुकुटमणेरप्यनन्तागमा(४०)भ्याम् ।
पञ्चम्यां शुक्लपक्षे नभसि गुरुदिने **रामदासे**न राज्ञा
विज्ञेनापूरितोऽयं तिथितुलितशिखो **रामसेतुप्रदीपः** ॥'

इति समाप्तिश्लोकेन स्वयमेव स्फुटमेव विक्रमसंवत् १६५२ (ख्रिस्तसंवत् १५९५) उक्तः

अयं **रामदास**श्च **जयपुर**राज्यान्तर्गत**बोली**नगराधीश आसीत्. एतद्वंशीयाश्चाधुना **'धीरावत्'** शब्देन प्रसिद्धा **धाणक्या**ग्रामाधीशा वर्तन्ते—इति **जयपुर**राजकीयवंशगायकेभ्योऽवगतम्.

राजतरङ्गिण्याम्—

'**जल्लालदीन**भूपालनित्यसेवनतत्परः ।
बभूव **रामदासा**ख्यो विप्राणामुपकारकः ॥
तादृशान्ब्राह्मणान्दृष्ट्वा **रामदासो** महायशाः ।
वितीर्णस्वर्णदुर्वर्णो बभौ कर्ण इवापरः ॥

यद्वर्षणैरमृतमेष ददाति मेघस्तद्गर्जितेन स विकत्थत एतदेव ।
दानं सदैव ददतो न बभूव तस्य श्री**रामदास**नृपतेर्हृदयेऽभिमानः ॥
मांधातर्मन्ददाता भवसि गुणगणैः कर्ण कर्णं पिधेहि
व्रीडा जीमूतवाह त्वयि भवति न वा किं बले त्वं बलीयान् ।

सत्यं वा वेद्मि नित्यं किमु तव यशसा विक्रमादित्य कृत्यं
दानं सम्यग्विधानं वितरति चतुरं **रामदासः** सदासः ॥'

इत्यादिश्लोकैः **प्राज्यभट्टेन** वर्णितोऽपि **रामदासो**ऽसावेव प्रतीयते.

एतदाश्रितेन **रामज्योतिर्विदा** **रामविनोदाख्यः** करणग्रन्थो निर्मीयते स्म, यदाधारगणितेनैवाद्यापि **सवाईजयपुर**राजधान्यां निर्मीयमाणे रामविनोदीयाख्ये पञ्चाङ्गे ग्रहस्पष्टीकरणं जायते.

अनेन **रामज्योतिर्विदै**वेयं **रामसेतुप्रदीपा**ख्या व्याख्यापि रचिता भवेदित्यपि कल्पनं संभवत्येव.

एवं चास्य शोधनेऽस्मद्दोषादक्षरयोजकदोषाद्वा क्वचिदशुद्धिः स्थिता जाता वा तत्र सन्त एव समाधास्यन्ति. यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ इति.



# काव्यमाला ।

## महाकविश्रीप्रवरसेनमहीपतिविरचितं

(दशमुखवधापरनामकं)

# सेतुबन्धम् ।

श्रीरामदासभूपतिप्रणीतया रामसेतुप्रदीपाख्यया व्याख्यया समेतम् ।

प्रथम आश्वासः ।

असितमहसि सेतौ पङ्क्तिकायामुदञ्चत्तटयुगघनमुक्तावर्णपङ्क्तिद्वयेन ।
अलिखदिव कठिन्या यत्प्रशस्तिं समुद्रः स जयति रघुवंशग्रामणी रामचन्द्रः ॥

गङ्गाम्बुस्तिमिताङ्घ्रिमौलि दिनकृत्कन्याम्बुकम्बुप्रभं
तत्त्वां पातु समुद्रजागिरिजयोरानन्दबीजं महः ।
नाभीपङ्कजनालमूलमिलनात्सव्यांसकूलस्थितो
यत्र स्थूलमृणालवल्लितुलनामालम्बते भोगिराट् ॥

अद्वैतदन्तकलितकरेणुमयवामभागमिभवदनम् ।
पितुरर्धनागरीकं वपुरनुकुर्वन्तमिव कलये ॥

आ मेरोरा समुद्रादवति वसुमतीं यः प्रतापेन ताव-
द्दूरे गाः पाति मृत्योरपि करमुचत्तीर्थवाणिज्यवृत्त्योः ।
अप्यश्रौषीत्पुराणं जपति च दिनकृन्नाम योगं विधत्ते
गङ्गाम्भोभिन्नमम्भो न च पिबति जयत्येष जल्लालदीन्द्रः ॥

अङ्गं वङ्गं कलिङ्गं सिलहट-तिपुरा-कामता-कामरूपा-
नान्ध्रं कार्णाट-लाट-द्रविड-मरहठ-द्वारका-चोल-पाण्ड्यान् ।
भोटान्तं मारुवारोत्कल-मलय-खुरासान-गन्धार-जम्बू-
काशी-काश्मीर-ठठ्ठा-बलख-बदकशाँ-काबिलान्यः प्रशास्ति ॥

---

१. हरिहरात्मकम्. २. 'कामता' इति चित्रकूटाचलस्य नामान्तरम्.

कलियुगमहिमापचीयमानश्रुतिसुरभिद्विजधर्मरक्षणाय ।
धृतसगुणतनुं तमप्रमेयं पुरुषमकब्बरशाहमानतोऽस्मि ॥
अंशे रघोरुष्णकरस्य वंशे बभूव राजा **कुलदेव** एकः ।
श्रीमानसिंहप्रमुखा जयन्ति यदन्वये संप्रति कच्छवाहाः ॥
सूनुस्तस्य विरोधिवारणमदाकूपारकालानलो
जङ्गालो रणरङ्गभूमिषु बली यः **क्षेमराजो**ऽभवत् ।
वीरो दीप्तयशःकदम्बतुलितक्षीरोदनीरोदर-
स्तस्याजायत पञ्चसायकरुचिर्**माणिक्यरायः** सुतः ॥
एतस्यापि मुकुन्दवन्दनवलत्पुण्यो वदान्यो जग-
न्मान्यो **मोकलराय**भूपतिरभूदाक्रान्तभूपान्तरः ।
तस्मादप्यजनिष्ट बाहुजकुलक्षीराब्धिहीरायितो
**धीराराय**महीमहेन्द्रतिलको वीरावलीभिः स्तुतः ॥
**नापाराय**नृपः कृपानिधिरभूदस्यापि सूनुर्महा-
नुद्दामप्रतिपक्षकुञ्जरघटासंघट्टकण्ठीरवः ।
एष प्रेङ्खदशेषशत्रुविजयव्यापारपारंगमं
पुत्रं **पातलराय**मायतभुजादण्डोद्धुरं लब्धवान् ॥
**खानाराय**स्ततोऽभूदरिदहनघनः प्रौढनाराचधारा-
पातासाराभिवर्षी समरभुवि लसत्कार्मुको गाढगर्जः ।
सूनुस्तेनारिसेनाम्बुधिकलशभवोऽलम्भि कंदर्पकाय-
**श्चन्दाराय**स्त्रिलोकीतलविशदयशोवीचिनीचीकृतेन्दुः ॥
अभवदु**दयराजः** प्रौढभूभृत्समाजप्रथितगुणगरिष्ठस्तत्सुतो धर्मनिष्ठः ।
समरभुवि न के वा निर्जिता येन देवाधिपतिपुरपुरंध्रीगीतदोर्विक्रमेण ॥
दिनेशभक्त्या जगति प्रकाशस्ततः सुतोऽजायत **रामदासः** ।
आसेवते जिष्णुमिव क्षितीन्द्रं यः सर्वभावेन **जलालदीन्द्रम्** ॥
धीराणां काव्यचर्चाचतुरिमविधये विक्रमादित्यवाचा
यं चक्रे कालिदासः कविकुमुदविधुः सेतुनामप्रबन्धम् ।
तद्व्याख्या सौष्ठवार्थं परिषदि कुरुते रामदासः स एव
ग्रन्थं **जलालदीन्द्र**क्षितिपतिवचसा रामसेतुप्रदीपम् ॥
इह सविधे साधूनां भविता न कदापि दुर्जनप्रसरः ।
गरुडोद्गारसमीपे न भवति गरलोद्गमः क्वापि ॥

व्याख्यानवसनमनघं दोषमषीम्लानमाचरन्ति खलाः ।
क्षालयति सपदि साधुः साधुसमाधानदुग्धेन ॥
उद्गिरति रसमुदारं दुर्जनदलितापि मामकी व्याख्या ।
इक्षुलता माधुर्यं शतशश्छिन्नाधिकं धत्ते ॥
सेतौ दुर्गे यदि विचरितुं वर्तते वः समीहा
दत्त स्नेहं तदिह कवयो रामसेतुप्रदीपे ।
मोहध्वान्ते सपदि शमिते यद्गताभिः शिखाभिः
का वा भावानधिगमकथा का च भीः कण्टकेभ्यः ॥
राजाहमायुधविलासवशीकृतोऽहमित्यत्र मा कृतधियः कुरुतावहेलाम् ।
मद्गोत्र एव जगतीपतिरस्त्रशिक्षादक्षो मनीषिमुकुटं मनुराविरासीत् ॥

इह तावन्महाराजप्रवरसेननिमित्तं महाराजाधिराजविक्रमादित्येनाज्ञप्तो निखिलकविचक्रचूडामणिः कालिदासमहाशयः सेतुबन्धप्रबन्धं चिकीर्षुर्निर्विघ्नसमाप्त्यर्थं रामचन्द्रात्मकमधुमथनरूपाभीष्टदेवतानमस्कारोपदेशमुखेन मङ्गलमाचरन्नाह—

**णमह अवड्ढिअतुङ्गं अवसारिअवित्थअं अणोणअगहिरम् ।**
**अप्पलहुअपरिसण्हं अणाअपरमत्थपाअडं महुमहणम् ॥ १ ॥**

[नमतावर्धिततुङ्गमप्रसारितविस्तृतमनवनतगभीरम् ।
अप्रलघुकपरिश्लक्ष्णमज्ञातपरमार्थप्रकटं मधुमथनम् ॥]

हे जनाः, मधुमथनं विष्णुं नमत नमस्कुरुत । तथा चाहमपि तं प्रत्यस्मि प्रणत इत्याक्षेपलभ्यम् । मधुं मथ्नातीति मधुमथनस्तमिति कर्तरि ल्युट् । तेन तथाविधदुष्टदैतेयदमनहेतुनामुना विष्णुना सुदमा विघ्नवराका इति ध्वनितम् । कीदृशं तम् । अवर्धितश्चासौ तुङ्गश्चेत्यवर्धिततुङ्गस्तम् । अत्रावर्धितस्योर्ध्वदेशावच्छिन्नतारूपतुङ्गताया असंभवेनाभासमानो विरोधः परमेश्वरस्याजन्यतयेतरकर्तृकवर्धितत्वाभावेन परिह्रियते । तथा च विरोधवदाभासते न तु विरोध इति विरोधाभासनामायमलंकारः । किं चैतन्मूला विभावनापि संभाव्यते । तदुक्तं दण्डिना—'प्रसिद्धहेतुव्यावृत्त्या यत्किंचित्कारणान्तरम् । यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥' तथा च तुङ्गत्वे कार्ये वर्धितत्वरूपप्रसिद्धहेतुव्यावृत्त्या तत्स्वभावत्वं विभोरवगम्यते । एवमन्यत्रापि विशेषणे । तथाहि पुनः कीदृशम् । अप्रसारितश्चासौ विस्तृतश्चेति तम् । एवमनवनतश्चासौ गभीरश्चेति तथाविधम् । तथा च तुङ्गत्व-

विस्तृतत्वगभीरत्वरूपविशेषणत्रयेणोर्ध्वमध्याधःसकलदेशव्यापकत्वमुक्तम् । नन्वीश्वरस्य व्यापकैकरूपत्वे 'ब्रह्मैवेदं सर्वम्' इत्यादि प्रतिपन्नजगद्रूपत्वविरोध इत्यत आह—अप्रलघुको महांश्चासौ परिश्लक्ष्णः कृशश्चेति तथा । तथा च स्थूलघटाकाशादिसूक्ष्मपरमाण्वादिसत्तारूपमित्यर्थः । तथा च श्रुतेरपि ब्रह्मसत्तैव सर्वेषां सत्तेत्यत्र तात्पर्यमिति भावः । एवं सति ब्रह्मणः स्थूलसूक्ष्मसकलसत्तात्मकत्वमेव सर्वात्मकत्वमिति स्थिते व्यक्ताव्यक्तत्वविरोधगन्धोऽपि नेत्याह—अज्ञातः परमार्थस्तत्त्वं यस्य तथाविधश्चासौ प्रकटश्चेति तथा । तथा चातीन्द्रियवर्गसत्तारूपत्वेनाप्रत्यक्षपरमार्थमप्यैन्द्रिकघटपटादिसत्तारूपत्वेन प्रकटं प्रत्यक्षमित्यर्थः । यद्वा तत्त्वमस्यादिवाक्यजन्यब्रह्माकारवृत्तिरहितानां पूर्णानन्दस्वरूपेण प्रत्यक्षपरमार्थमपि चैतन्यांशेन प्रकटमित्यर्थः । तद्वृत्तिमतां तद्रूपेण प्रकटमिति वा । एवं पूर्ववद्विस्तृतत्वादीनामप्रसारितत्वादिभिर्विरोधस्य सत्त्वेऽप्यजन्यतया तत्तदर्थविशेषेण च परिहारश्चिन्तनीयः । 'श्लक्ष्णं दभ्रं कृशं तनु' तथा 'निम्नं गभीरं गम्भीरम्' इत्यमरः । गभीरं दुराकलनीयमिति केचित् । 'ओदवापयोः' इत्यवशब्दस्यौकारादेशेन 'अणो ण अ' इति । एवं च तुङ्गत्वविस्तृतत्वगभीरत्वश्लक्ष्णत्वप्रकटत्वैस्तत्तदर्थविशेषेणाकाशपृथिवीजलानिलतेजःस्वरूपोपस्थापकैस्तत्तद्रूपतया पञ्चभूतात्मकशरीरयोगित्वमप्यस्योक्तम् । तथा च भगवद्गीता—'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥' इति । प्रकृते कर्तव्यग्रन्थनायको मानुषशरीरः श्रीरामावतार एवोक्त इति वस्तुनिर्देशः कृतः । तदुक्तं भरतेन—'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् । आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ॥' इति संक्षेपः ॥ ॥ वयं तु—"मधुमथनपदश्लेषेणाग्रे वर्णनीययोः समुद्रसेत्वोर्नतिरूपमङ्गलमुखेन वस्तुनिर्देशमेव कटाक्षयति—तथा हि हे सखे, मधुमथनं समुद्रं नम नमस्कुरु । मधुमथनं मधुजनकं मथनं यस्य तमिति मध्यमपदलोपी समासः । वारुण्याः समुद्रमथनादेवोत्पत्तेरिति भावः । अथवा मधुना दानवेन चरणविक्षेपादिना मथनं यस्य तम् । तथा कीदृशम् । हतवर्धिकतुङ्गम् । हतं च तद्वर्धि वृद्धिशालि कं जलं कल्लोलरूपं भङ्गुरत्वेन शश्वन्नाशवृद्धिशालित्वात्तेन तुङ्गमूर्ध्वाकाशव्यापकम् । पुनः कीदृशम् । अबशार्यविस्तृतम् । अपोऽश्नाति भक्षयतीत्यच्प्रत्ययेनाबशो वडवानलः स एवारिः शत्रुस्तेनाविस्तृतमवृद्धिशीलम् । वेलानतिक्रामक-

१. समुद्रपक्षे छाया—'नम हतवर्धिकतुङ्गमबशार्यविस्तृतं च नो न च गभीरम् । अप्रलघ्वपरिश्लक्ष्णमनाकपरमाक्षप्रकटं मधुमथनम् ॥'

त्वात् । अथवा अवसारितविस्तृतम् । अकारो विष्णुर्वकारो वरुणस्ताभ्यां सारितं सारीकृतमितरविलक्षणीकृतम् । तयोस्तत्राधिष्ठानात् । सारितमिति सारशब्दात् 'तत्करोति–' इति णिचि । विस्तृतमिति विभिः पक्षिभिः स्तृतं व्याप्तम् । जलपक्षिबहुलत्वात् । अथवा अवसारिकविस्तृतम् । अकारवकारसारशब्दानां विष्णुवरुणरत्नादिवाचकत्वात्तद्विशिष्टत्वेनावसारी चासौ कविस्तृतो जलपक्षिव्याप्तश्चेति तम् । यद्वा अपसारितविस्तकम् । अपसारित आकृष्टो विस्तः सुवर्णो यस्मात्तम् । तथा समुद्रस्य सुवर्णाद्याकरत्वेन बहुशस्तदाहरणात् । अ णो ण अ गहिरम् । च नो न च गभीरम् । अकारश्चकारविकारः समुच्चये । नो न च गभीरमर्थादुक्तिविशेषेणातिगभीरम् । निषेधद्वयस्य प्रकृतार्थगमकत्वात् । एवमप्रलघ्वपरिश्लक्ष्णं कर्मधारयेण । यत एवाप्रलघुमतिमहान्तमत एवापरिश्लक्ष्णमकृशम् । एवमनाकपरमास्त्रप्रकटम् । अनाके मर्त्ये एव परमास्त्रेण रामस्यामेयशरेण प्रकटमध्यक्षीभूतमिति समुद्रपक्षः ॥ ॥ सेतुपक्षे तु हे जनाः, मधु जलं मथ्नात्यवष्टभ्नातीति मधुमथनः सेतुस्तं नमत । विशेषणमहिम्ना रामसेतोर्लाभात्तत्संबन्धेन च तस्य नमस्यत्वम् । 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसेऽपि च' इति विश्वः । कीदृशम् । अवर्धिततुङ्गमखण्डितोच्चम् । अतिसाम्रमित्यर्थः । चौरादिकस्य वर्धधातोः खण्डनार्थत्वात् । एवमवशार्यविस्तृतम् । अवशोऽनधीनोऽरिः शत्रुर्दशकण्ठो यस्य तादृगकारो विष्णुरूपो रामस्तेन विस्तृतं घटितम् । अथवा असारितापम् । प्राकृते पूर्वनिपातानियमादसारिता अशबलीकृता आपो येन तं प्रतिरुद्धजलमथ च विस्तृतम् । पर्वतपक्षिव्याप्तमित्यर्थः । अणोणअगहिरम् । अशब्दस्य निषेधवाचकत्वपक्षे अनोनिषेधद्वयेनोक्तिविशेषेण नगगभीरं नगैः पर्वतैर्गभीरम् । कुञ्जादिबाहुल्येन दुराकलनीयमित्यर्थः । पर्वतमयत्वात् । निषेधावाचकत्वेऽकारश्चकारविकार एव । नो इति शिरश्चालनेन पूर्ववदेव नगगभीरमिति बोध्यम् । एवमप्रलघुकपरिश्लक्ष्णम् । अप्रलघुनि महति के समुद्रजले परिश्लक्ष्णं कृशम् । सूत्रायमाणत्वात् । तथा अज्ञातपरमस्तप्रकटम् । अज्ञातं परं परदिग्वर्ति यस्मादेतादृशं यन्मस्तं मस्तकं तेन प्रकटं दूरत एव दृश्यम् ।" इति ब्रूमः । स्कन्धकं नाम च्छन्दः । तदुक्तम्—'चउमत्ता अट्ठगणा पुव्वद्धे उत्तरद्ध होइ सरूआ । सो खन्धआ विआणहु पिङ्गल पभणेइ मुद्धि बहुसंभेआ' ॥

१. 'चतुर्मात्रा अष्टगणाः पूर्वार्धे उत्तरार्धे भवन्ति सरूपाः । तं स्कन्धकं विजानीत पिङ्गलः प्रभणति मुग्धे बहुसंभेदम् ॥' इति च्छाया. 'स्कन्धकमपि तत्कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात् । तत्तुल्यममिमदलं भवति चतुःषष्टिमात्रिकशरीरमिदम् ॥' एतदपि स्कन्धकलक्षणम्.

मधुमथनस्य हिरण्यकशिपुविदारणवर्णनेन प्रकृतग्रन्थविघ्नविघातसामर्थ्यमाह—

दणुएन्दरुहिरलग्गे जस्स फुरन्ते णहप्पहाविच्छड्डे ।
गुप्पन्ती विवलाआ गलिअ व्व थणंसुए महासुरलच्छी ॥ २ ॥

[दनुजेन्द्ररुधिरलग्ने यस्य स्फुरति नखप्रभाविच्छर्दे ।
व्याकुला विपलायिता गलित इव स्तनांशुके महासुरलक्ष्मीः ॥]

यस्य नरसिंहरूपिणो मधुमथनस्य प्रभायाः स्वाभाविक्याः श्वेताया विच्छर्दः समूहो यत्र तथाभूते नखे स्फुरत्युरोविदारणसमये प्रकाशमाने सति महासुरस्य हिरण्यकशिपोः श्रीर्व्याकुला सती विपलायिता तस्योपमर्दे विपर्यासं प्राप्ता । अपगतेत्यर्थः । विकटनखदर्शनजन्यभयादिति भावः । यत्पदस्योत्तरवाक्यगतत्वान्न पूर्वस्कन्धके तत्पदापेक्षा । कथंभूते प्रभाविच्छर्दनखे । लग्नदनुजेन्द्ररुधिरे । उभयत्र प्राकृतत्वात्पूर्वनिपातानियमः । लग्नं दनुजेन्द्रस्य रुधिरं यत्र तादृशे । कस्मिन्निव सति । स्तनांशुके गलित इव स्खलित इव । नखानां महत्त्वादसृग्भिरव्यापनात्तदेकदेशलग्नरुधिरतया लक्ष्म्या अर्धरक्तश्वेतवस्त्रत्वेनोत्प्रेक्षा कृता । अन्यापि स्त्री स्तनवसनविपर्यासे सव्रीडा पलायत इति ध्वनिः । तथा च म्रियमाणो दानवेन्द्रो निःश्रीको वृत्त इति तात्पर्यम् । 'व्याकुलापि पलायिता' इत्यपि व्याख्यानम् । तत्र व्याकुलस्यापयानमशक्यमित्यपेरर्थः । 'विच्छर्दस्तु समूहे स्याद्वान्तौ विश्लेषभेदयोः' ॥

जन्मान्तरेऽपि दुष्टदैत्यनिबर्हणक्षमतां विभोराह—

पीणत्तणदुग्गेज्झं जस्स भुआअन्तणिट्ठुरपरिग्गहिअम् ।
रिट्ठस्स विसमवलिअं कण्ठं दुक्खेण जीविअं बोलीणम् ॥ ३ ॥

[पीनत्वदुर्ग्राह्यं यस्य भुजान्तनिष्ठुरपरिगृहीतम् ।
अरिष्टस्य विषमवलितं कण्ठं दुःखेन जीवितं व्यतिक्रान्तम् ॥]

यस्य कृष्णरूपिणो मधुमथनस्य भुजान्तौ हस्तौ ताभ्यां निष्ठुरं यथा स्यादेवं परि सर्वतोभावेन गृहीतं धृतमरिष्टस्य वृषभरूपिणोऽसुरविशेषस्य कण्ठं कर्म जीवितं कर्तृ [दुःखेन] व्यतिक्रान्तम् । अपगतमित्यर्थः । 'भुजायन्त्र' इति प्रकृतौ मिथःसंबद्धभुजायुगलरूपयन्त्रपरिगृहीतमिति वा । कण्ठं कीदृशम् । पीनत्वेन दुर्ग्राह्यम् । अत एव विषमं विपर्यस्तं यथा स्यादेवं वलितं वक्रीकृतम् । आमोटितमिति यावत् । पीनत्वेन सम्यग्धर्तुमशक्यत्वात् । अत्र जीवितस्य दुःखव्यतिक्रमणे विषमवलनं हेतुः ।

तस्य च निष्ठुरपरिग्रहणम् । तस्य च दुर्ग्राह्यत्वम् । इत्युत्तरोत्तरं प्रति पूर्वपूर्वस्य हेतुत्वमिति हेतुपरम्परालंकारः । किं च, विषमवलनादृजुमार्गालाभेन जीवितस्य कण्ठाद्दुःखेन निर्गमो वृत्त इति वस्तुना निजमायतनमरिष्टशरीरं त्यक्तुमशक्नुवतोऽपि जीवितस्य परमेश्वरहस्तेन बहिर्गमनं पुण्यहेतुरित्याशयेनेव सदुःखं निष्क्रमणमासी-दित्युत्प्रेक्षा व्यज्यते ॥

मधुमथनस्य रामावतारे सीतां प्रत्यनुरागातिशयवर्णनोपयोगित्वेन कृष्णावतारेऽपि सत्यभामां प्रत्यनुरागप्रकर्षमाह—

**ओआहिअमहिवेढो जेण परूढगुणमूललद्धत्थामो ।**
**उम्मूलन्तेण दुमं पारोहो व्व खुडिओ महेन्दस्स जसो ॥ ४ ॥**
**( आइकुलअम् )**

[अवगाहितमहीवेष्टं येन प्ररूढगुणमूललब्धस्थाम ।
उन्मूलयता द्रुमं प्ररोह इव खण्डितं महेन्द्रस्य यशः ॥]
(आदिकुलकम्)

येन कृष्णरूपिणा द्रुमं पारिजातमुन्मूलयतोत्पाटयता महेन्द्रस्य यशः खण्डितम् । कृष्णकृत्या पारिजातस्य मर्त्यलोकागमनेन महेन्द्रस्यैवायमिति प्रकर्षो गतो युद्धे च पराजयो वृत्त इति भावः । यशः कीदृशम् । अवगाहितं व्याप्तं महीवेष्टं येन तत्तथा । एवं प्ररूढा उपचिता ये गुणा दानशौर्यादयस्त एव मूलं कारणं तेन लब्धं स्थाम स्थैर्यं येन तत् । यशसो दानादिमूलकत्वात् । कीदृगिव । प्ररोह इव । प्ररोहः शिफा । तथा च पारिजातस्य महेन्द्रयश एव प्ररोह इति भावः । अन्येनापि द्रुमोत्पाटने प्ररोहः खण्ड्यते । प्ररोहोऽपि कीदृक् । अवगाहितमहीवेष्टः । भूमिनिष्ठत्वात् । एवं प्ररूढा ये गुणाः प्ररोहतन्तवस्तैः [मूले] लब्धं स्थाम येन तत्तथा । वस्तुतस्तु यथा द्रुममुत्पाटयता कृष्णेन प्ररोहः खण्डितस्तथा महेन्द्रयशोऽपि खण्डितमित्यन्यत्समानमिति सहोपमा। चतुःस्कन्धकीयमादिकुलकरूपा । तदुक्तम्—'कुलकं बहुभिः श्लोकैः साकाङ्क्षैरेकवाक्यता । द्वाभ्यां तु युग्मकं नाम तुल्यार्थाभ्यां तु चुम्बकम् ॥' इति ॥

अथ ज्ञानप्रदत्वेन शिवं स्तौति—

**णमह अ जस्स फुडरवं कण्ठच्छाआघडन्तणअणग्गिसिहम् ।**
**फुरइ फुरिअट्टहासं उद्धपडित्ततिमिरं विअ दिसाअक्कम् ॥ ५ ॥**

[नमत च यस्य स्फुटरवं कण्ठच्छायावटमाननयनाग्निशिखम् ।
स्फुरति स्फुरिताट्टहासमूर्ध्वप्रदीप्ततिमिरमिव दिक्चक्रम् ॥]

तं च शिवं नमत । विशेषणमहिम्ना तल्लाभः । यच्छब्दयोगात्तच्छब्दाध्याहारोऽपि । तं कम् । यस्य कण्ठच्छायया घटमाना संबध्यमाना नयनाग्नेः शिखा यत्र तथाभूतं दिक्चक्रं स्फुरति शोभते । विचित्ररूपवत्त्वात् । नृत्यकालीनभ्रमणेन कण्ठकान्तिलोचनाग्निशिखयोरभिन्नवृद्धेरिति भावः । दिक्चक्रं कीदृशम् । स्फुरितोऽट्टहासो यत्र तत् । कान्तिप्रसरणात् । एवं स्फुटो रवो हासकालीनः शब्दो यत्र तथा । उत्प्रेक्षते—कीदृशमिव । ऊर्ध्वे उपरिभागे प्रदीप्तं दग्धं भवत्तिमिरं यत्र तादृशमिव । कण्ठच्छायायाः श्यामत्वेन तिमिरेण, अट्टहासस्य कण्ठच्छायासंबन्धेन शबलतया धूमेन, रवस्य दाहकालीनशब्देन च साम्यं गम्यते । यद्वा ऊर्ध्वप्रदीप्ततिमिरमिव स्फुरति भासते । प्रेक्षकाणामर्थादिति समन्वयः । अर्थान्तरं समानमेव । केचित्तु—'दिशां चक्रं चक्राकारता यत्र तादृशं मण्डलीनृत्यं यस्य स्फुरति । नृत्यस्य विशेषणमन्यत्सर्वम्' इति वदन्ति ॥

पुनस्तदेवाह—

**वेवइ जस्स सविडिअं वलिउं महइ पुलआइअत्थणअलसम् ।**
**पेम्मसहावविमुहिअं वीआवासगमणूसुअं वामद्धम् ॥ ६ ॥**

[वेपते यस्य सव्रीडं वलितुं महति पुलकाचितस्तनकलशम् ।
प्रेमस्वभावविमुषितं द्वितीयावकाशगमनोत्सुकं वामार्धम् ॥]

यस्यार्धनारीश्वरमूर्तेर्वामार्धं गौरीशरीरं वामभागो वेपते । वलितुं वक्रीभवितुं महति वाञ्छति । नृत्यभ्रमिं कुर्वति महेशे स्त्रीस्वभावेन भयादिति भावः । किंभूतं वामार्धम् । सव्रीडं सलज्जम् । एवं पुलकेनाचितः स्तनकलशो यत्र तत् । तथा च भयोत्पन्ने पुलके प्रेक्षकाणां सात्त्विकविकारशङ्का स्यादिति लज्जा । वक्रीभवनं प्रति हेतुमाह—द्वितीयावकाशं दक्षिणार्धं प्रति गमने उत्सुकमुत्कण्ठितम् । स्त्रीणां भयेन स्वामिपरिरम्भणमिति स्वभावः । पुनः कीदृशम् । प्रेमस्वभावेन प्रियं प्रत्यनुरागेण

विमुषितं किंकर्तव्यतामूढम् । तत्र गमने लज्जा अगमने भयमिति दोलायमानम् । अत एव गमनेच्छामात्रं न तु कृतिरिति तात्पर्यम् । वस्तुतस्तु भर्तुर्नृत्यकालीनकटाक्षभुजक्षेपादिभिरुत्पन्नसात्त्विकविकारम् । अत एव सलज्जं कामोत्पत्त्या दक्षिणार्धमालिङ्गितुमुत्कण्ठितमपि लज्जया निवर्तमानं वेपते । पुरः पश्चात्संचारशीलमित्यर्थः । तदुक्तं प्रेमस्वभावेति । प्रियानुरागेण गन्तुकं लज्जया किंकर्तव्यतामूढतया विमुषितम् । अत एवोक्तं वलितुमाकाङ्क्षति न तु वलते इति सारम् ॥

शिवस्याट्टहासमानन्दमूलकत्वेन वर्णयति—

**जस्स विलग्गन्ति णहं फुडपडिसद्दा दिसाअलपडिक्खलिआ ।**
**जोण्हाकल्लोला विअ ससिधवलासु रअणीसु हसिअच्छेआ ॥ ७ ॥**

[यस्य विलगन्ति नभः स्फुटप्रतिशब्दा दिक्तलप्रतिस्खलिताः ।
ज्योत्स्नाकल्लोला इव शशिधवलासु रजनीषु हसितच्छेदाः ॥]

यस्य हसितैकदेशा ज्यौत्स्नीषु रात्रिषु नभो विलगन्ति वियद्व्यापका भवन्ति । अन्तरान्तरा विच्छिद्य विच्छिद्योत्पत्त्या खण्डा इत्युक्तमिति वा । कथंभूताः । स्फुटः प्रतिरवो येषां ते । एवं दिक्तलेषु प्रतिस्खलिता घनीभूय परावृत्ताः । पुनः कथंभूता इव । ज्योत्स्नायाः कल्लोला इव । श्वेतत्वात् । शिरःस्थितचन्द्रकलाया वा । अन्येऽपि कल्लोलाः पर्वतादिषु स्खलिताः सन्तः ऊर्ध्वं दिशश्च व्याप्नुवन्ति प्रतिशब्दहेतुशालिनश्च भवन्ति । एतेन हसितस्य व्यापकत्वमुक्तम् । ज्योत्स्नाकल्लोला इवेति सहोपमा वा । यथा ते दिक्तलस्खलिता इव नभो विगलन्ति तथैतेऽपीत्युत्प्रेक्षामूलम् ॥

नृत्ये सत्त्वोद्रेकमाह—

**णट्टारम्भक्खुहिआ जस्स भउब्भन्तमच्छपहअजलरआ ।**
**होन्ति सलिलुद्धुमाइअधूमाअन्तवडवामुहा मअरहरा ॥ ८ ॥**

**(आइकुलअम्)**

[नृत्यारम्भक्षुभिता यस्य भयोद्भ्रान्तमत्स्यप्रहतजलरयाः ।
भवन्ति सलिलोद्ध्मापितधूमायमानवडवामुखा मकरगृहाः ॥]

(आदिकुलकम्)

मकरगृहाः सप्तापि समुद्रा यस्य नृत्यारम्भ एव क्षुभिताः सन्त ईदृशा भवन्ति ।

कीदृशाः। भयेनोद्भ्रान्ता मूर्च्छिता इतस्ततश्चारिणो वा ये मत्स्यास्तैः प्रहतः प्रतिरुद्धो जलस्य रयो वेगो येषु ते। तथा मत्स्यानां महत्त्वेन सति संचारे समुद्रसेतुभावादिति भावः। पुनः कीदृशाः। सलिलेनोद्ध्मापितमुद्ध्मापयितुं निर्वाणीकर्तुमारब्धमत एव धूमायमानं धूममुद्वमद्वडवामुखं वडवानलो येषु ते। चरणक्षेपेण धरणिक्षोभे जलधिजलक्षोभादार्द्रेन्धनसंबन्धादनलस्य धूमायमानत्वम्। उद्ध्मापित इत्यादिकर्मणि क्तः। उच्छब्दोऽत्राभाववाची। तेनाग्निदीपनाभावो लभ्यते। उत्क्रान्तिरुद्वास इत्यादौ दृष्टत्वात्। इत्यपि चतुर्भिरादिकुलकम्॥

अथ स्वानवधानपरिजिहीर्षया काव्यस्य दुष्करत्वमाह—

अहिणवराआरद्धा चुक्कक्खलिएसु विहडिअपरिट्ठविआ।
मेत्ति व्व पमुहरसिआ णिव्वोढुं होइ दुक्करं कव्वकहा॥ ९॥

[अभिनवराजारब्धा च्युतस्खलितेषु विघटितपरिस्थापिता।
मैत्रीव प्रमुखरसिका निर्वोढुं भवति दुष्करं काव्यकथा॥]

काव्यकथा निर्वोढुमाद्यन्तं यावत्तुल्यतया निष्पादयितुं दुष्करं यथा स्यादेवं भवति। दुःखनिर्वाह्येत्यर्थः। केव। मैत्रीव। साप्याद्योपान्तं यावत्समतया निर्वाहयितुं दुष्करं भवति। काव्यकथा कीदृशी। अभिनवेन राज्ञा प्रवरसेनेनारब्धा। कालिदासद्वारा तस्यैव कृतिरियमित्याशयः। प्रवरसेनो भोजदेव इति केचित्। पुनः कीदृशी। च्युतोऽनवहितः कविस्तस्य स्खलितेषु च्छन्दोभङ्गादिनानवधानेषु विघटिता सती परिस्थापिता परिष्कारं प्रापिता। एवं प्रमुखो रसिको यत्र तादृशी। मैत्र्यप्यभिनवेन रागेणानुबन्धेनारब्धा। एवं च्युतोऽनवहितो यो जनस्तस्य स्खलितेष्वपराधेषु विघटिता ततः पुनरपराधमार्जनादिना परिस्थापिता प्रथमावस्थां प्रापिता। एवं प्रमुखरसिका च। तथा च मैत्रीव काव्यं सहृदयनिर्वाह्यमिति भावः। काव्यकथापक्षे प्रमुखरसः शृङ्गारादिस्तद्युक्ता। 'चुक्कशब्दः प्रमादे देशी' इति केचित्॥

काव्यानामुपादेयताप्रयोजकं रूपमाह—

परिवड्ढइ विण्णाणं संभाविज्जइ जसो विढप्पन्ति गुणा।
सुव्वइ सुउरिसचरिअं किं तं जेण ण हरन्ति कव्वालावा॥१०॥

[परिवर्धते विज्ञानं संभाव्यते यशोऽर्ज्यन्ते गुणाः।
श्रूयते सुपुरुषचरितं किं तद्येन न हरन्ति काव्यालापाः॥]

काव्यानामालापा येन न हरन्ति न मनोहारिणो भवन्ति। किं तत्। अपि तु न किमपीत्यर्थः । तदाह—यतः काव्याद्विज्ञानं विशिष्टज्ञानं वर्धते । तथा यशः संभाव्यते । गुणा विवेकादयोऽर्ज्यन्ते । सुपुरुषस्य रामादेश्चरितं श्रूयते । अत एतस्योपादेयत्वम् । तदुक्तम्—'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये' इत्यादि । परिवर्ध्यत इति वा । 'अर्जेर्विढप्पिः' इति विढप्पिरादेशः ॥

निर्दोषकाव्यस्यातिदुष्करत्वमाह—

**इच्छाइ व धणरिद्धी जोव्वणलद्ध व्व आहिआईअ सिरी ।**
**दुःखं संभाविज्जइ बन्धच्छाआइ अहिणवा अत्थगई ॥ ११ ॥**

[इच्छयेव धनऋद्धिर्यौवनलब्धेवाभिजात्या श्रीः ।
दुःखं संभाव्यते बन्धच्छाययाभिनवार्थगतिः ॥]

बन्धः काव्यशरीरं छन्दो वा तस्य च्छाया कान्तिस्तया बन्धरम्यतया अभिनवा अर्थगतिरर्थप्रकारो दुःखं यथा स्यादेवं संभाव्यते संबध्यते । गतिविधाप्रकारास्तुल्यार्थाः । कया केव । इच्छया धनऋद्धिरिव । यथेच्छया धनर्द्धिर्दुःखं संबध्यते । इच्छानुरूपा धनसमृद्धिर्दुःखसाध्येत्यर्थः । अभिजात्या यौवनलब्धा श्रीरिव । यथा कुलीनतया यौवनलब्धा श्रीर्दुःखं संबध्यते । यौवनोद्धतया श्रिया अकर्तव्यमपि क्रियते । तत्र कुलीनता न तिष्ठतीत्यर्थः । तथा चापूर्वार्थघटनं बन्धच्छाया च द्वयमपि मिथो योजयितुं दुष्करमिति तात्पर्यम् ॥

कर्तव्यकाव्यमाह—

**तं तिअसबन्दिमोक्खं समत्थतेल्लोक्कहिअअसल्लुद्धरणम् ।**
**सुणह अणुराअइण्हं सीआदुक्खक्खअं दहमुहस्स वहम् ॥ १२ ॥**

[तं त्रिदशबन्दिमोक्षं समस्तत्रैलोक्यहृदयशल्योद्धरणम् ।
शृणुतानुरागचिह्नं सीतादुःखक्षयं दशमुखस्य वधम् ॥]

तं प्रसिद्धं दशमुखवधं शृणुत । एतद्ग्रन्थश्रवणेनैव तच्छ्रवणोपपत्तेः । अत्र प्राधान्यतस्तस्यैव वर्णितत्वात् । शाब्दज्ञानविषयत्वेनार्थेऽपि श्रवणार्थकशब्दप्रयोगः 'युद्धं श्रुतम्' इतिवत् । प्रसिद्धार्थकत्वेन तच्छब्दस्य न यच्छब्दापेक्षा । तं कथंभूतम् । त्रिदशबन्दीनां मोक्षः परित्यागो यस्मात् । समस्तत्रैलोक्यस्य हृदयस्थशल्यानामु-

द्धारश्च यस्मात् । अनुरागस्य प्रेम्णश्चिह्नं ज्ञापकं च यत् । सीतां प्रति रामानुरागस्य रावणवधावधिकत्वात् सीताया दुःखस्य क्षयश्च येन तथाभूतम् । रावणवधानन्तरं बन्दीकृतदेवस्त्रीणां परित्यागो लोकानां च रावणभयेनाप्रकाशनाद्धृदयस्थानां च शल्यानामुद्धारः सीताया अशोकवनिकानिवासादिक्लेशनिवृत्तिरित्यर्थः । अथ च दश-मुखवधनामानं ग्रन्थं शृणुत । तमधिकृत्य प्रवृत्तत्वात्तन्नामकत्वम् । किंभूतम् । त्रिदशबन्दीनां मोक्षो वर्णितो यत्र तथाभूतम् । अनुरागचिह्नमित्यनुरागपदचिह्नि-तम् । प्रत्याश्वासकान्तस्कन्धकेऽनुरागपदसत्त्वादिति भावः ॥

अथ प्रकृतग्रन्थकथां प्रस्तौति—

अह पडिवण्णविरोहे राहववम्महसरेण माणब्भहिए ।
विद्धाइ वालिहिअए राअसिरीअ अहिसारिए सुग्गीवे ॥ १३ ॥
ववसाअरइपओसो रोसगइन्ददिढसिङ्खलापडिबन्धो ।
कह कह वि दासरहिणो जअकेसरिपञ्जरो गओ घणसमओ ॥ १४ ॥
(जुग्गअम्)

[अथ प्रतिपन्नविरोधे राघवमन्मथशरेण मानाभ्यधिके ।
विद्धया वालिहृदये राजश्रियाभिसारिते सुग्रीवे ॥
व्यवसायरविप्रदोषो रोषगजेन्द्रदृढशृङ्खलाप्रतिबन्धः ।
कथंकथमपि दाशरथेर्जयकेसरिपञ्जरो गतो घनसमयः ॥] (युग्मकम्)

अथ वर्षर्तुप्रभूतसीताविरहदुःखानुभवानन्तरं कथंकथमपि सीतानुद्धारजन्ये सीतायाः स्वस्य च दुःखे सत्येव प्राणत्याग इत्यपौरुषमकीर्तिकरं चेति दुःसहविरह-कष्टेऽपि प्राणधारणपूर्वं दाशरथे रामस्य गतो घनसमयो वर्षा इत्युत्तरस्कन्धकेन समन्वयः । अथशब्दस्य ग्रन्थारम्भे मङ्गलत्वं वा । तदुक्तम्—'ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥' कस्मिन्सति । राजश्रिया वालिलक्ष्म्या सुग्रीवेऽभिसारिते स्वपदमानीते सति । कथंभूतया । राघवो रामः स एव मन्मथस्तदीयशरेण वालिरूपे हृदये विद्धया जातप्रहारया । किंभूते वालि-हृदये । प्रतिपन्नः प्राप्तो विरोधो यत्र तथाभूते । एवं मानेन चित्तसमुन्नत्याभ्यधिके । अयं भावः—राजश्रियो नायिकाया नायकः सुग्रीवः । हृदयं वाली । परमप्रियत्वात् । तत्र

राज्यादिनिमित्तं विरोधोत्पत्तावहंकाराधिके वालिनि रामेण हते सुग्रीवेण राजलक्ष्मीर्लब्धा । तथा सतीत्यर्थः । एवं रागस्यानुरागस्य श्रीर्यत्र सा रागश्रीर्नायिका तया प्रतिपन्नः प्राप्तो विरोधो नायकापराधजन्मा यत्र तादृशि । वलनं वक्रीभवनं वालस्तद्वति वालिनि हृदये मानाभ्यधिके महत्तरे च । राधं वैशाखं वसन्तं पातीति राधपो वसन्तसहचरो यो मन्मथस्तस्य शरेण विद्धया सत्या सुग्रीवः सुकण्ठो नायकोऽभिसार्यते स्वपदमानीयत इति ध्वनिः । घनसमयः कीदृशः । व्यवसायः सीताप्रत्युद्धारहेतुर्व्यापारः स एव रविः । असंपद्यमानत्वेन संतापकत्वात् । तस्य प्रदोषस्तिरोधानकालः । एवं रोष एव गजेन्द्रः । परोपमर्दकत्वात् । तस्य दृढशृङ्खलया प्रतिबन्धो बन्धनं तद्रूपः । प्रसरणप्रतिबन्धकत्वात् । तथा जय एव केसरी । प्रतिपक्षशून्यत्वात् । तस्य पञ्जरो बन्धनस्थानम् । अवरोधकत्वादित्यर्थः । रूपकमत्रालंकारः । तथा च दण्डी—'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति ॥ युग्मकम् ॥

अथ राघवस्यावस्थामाह—

**गमिआ कलम्बवाआ दिट्ठं मेहन्धआरिअं गअणअलम् ।**
**सहिओ गज्जिअसद्दो तह वि हु से णत्थि जीविए आसङ्को ॥१५॥**

[गमिताः कदम्बवाता दृष्टं मेघान्धकारितं गगनतलम् ।
सोढो गर्जितशब्दस्तथापि खल्वस्या नास्तिजीविते आसङ्गः ॥]

सीताविरहविधुरेण रामेण वर्षतौं सीतामुद्धृत्य पुनर्द्रक्ष्यामीति प्रत्याशया कथंकथमपि धैर्यमवलम्ब्य कदम्बवाता गमिताः दुःखैकहेतवोऽप्यतिवाहिताः । मेघान्धकारितं गगनतलं च दृष्टम् । न तु चक्षुःसुखहेतुत्वेनावसितम् । गर्जितशब्दश्च सोढो न तु श्रुतिसुखमधिगतमिति यद्यपि तथाप्यस्य रामस्य शरदि कथं कुमुदवनवाता गमयितव्याः कथं च शरच्चन्द्रिकाधवलं नभो द्रष्टव्यं कथं वा कलहंसध्वनिः सोढव्य इति त्वक्चक्षुःश्रवणव्यापारेण वैक्लव्यशङ्कया पुनर्जीवितव्यं मयेत्यासङ्गोऽध्यवसायो नाभूदिति भाव इति संप्रदायः । वस्तुतस्तु—कदम्बवातादिव्यतिकरे कथंचिन्मया जीवितमपि मद्वियोगिन्या सीतया कथं जीवितव्यं कथं च वा तद्विपत्तौ मया जीवितव्यमिति संदिहानस्य नाध्यवसायोऽभूदिति मदुन्नीतः पन्थाः ॥

अथ यात्रानुकूलत्वेन शरदं प्रस्तौति—

**तो हरिवइजसवन्थो राहवजीअस्स पढमहत्थालम्बो ।**
**सीआबाहविहाओ दहमुहवज्झदिअहो उवगओ सरओ ॥ १६ ॥**

[ततो हरिपतियशःपथो राघवजीवस्य प्रथमहस्तालम्बः ।
सीताबाष्पविघातो दशमुखवध्यदिवस उपगता शरत् ॥]

ततो वर्षानन्तरं शरदुपगता । कीदृशी । हरिपतेः सुग्रीवस्य यशोमार्गः । शरदमालम्ब्य तस्य सेतुबन्धनादियशःप्रादुर्भावात् । एवं राघवजीवस्य प्रथमो हस्तालम्बः । सेतुबन्धरावणवधसीतासमागमानां द्वितीयतृतीयचतुर्थानामपेक्षया शरदेव प्रथमो हस्तालम्बः । शरत्प्राप्तिरेव तस्य दुष्करासीत् । तस्यां तु सत्यां सर्वमिदमीषत्करमिति भावः । एवं सीताया बाष्पाणामश्रूणां विघातोऽवसानम् । रामसमागमाध्यवसायात् । वधमर्हतीति यत्प्रत्ययेन वध्यमिति साधु । तथा च दशमुखस्य वधार्हो दिवस इति सर्वत्र रूपकम् । पूर्वनिपातानियमाद्वध्यो दशमुखो यत्र एतादृशो दिवस इति वा । रावणवधस्य दिवस एव वृत्तत्वादित्यर्थः ॥

अथ सप्तदशभिः स्कन्धकैः शरदमाह—

**रइअरकेसरणिवहं सोहइ धवलब्भदलसहस्सपरिगअम् ।**
**महुमहदंसणजोग्गं पिआमहुप्पत्तिपङ्कअं व णहअलम् ॥ १७ ॥**

[रविकरकेसरनिवहं शोभते धवलाभ्रदलसहस्रपरिगतम् ।
मधुमथनदर्शनयोग्यं पितामहोत्पत्तिपङ्कजमिव नभस्तलम् ॥]

नभस्तलं शोभते । कीदृशमिव । पितामहस्य ब्रह्मण उत्पत्तिपङ्कजमिव । नभः कीदृक् । केसरनिवह इव रविकरा यत्र तथाभूतम् । एवं दलसहस्राणीव सभङ्गिधवलाभ्राणि तैः परिगतं व्याप्तम् । एवं मधुमथनस्य नारायणस्य दर्शनयोग्यम् । उत्तानसुप्तस्य तस्योत्थाने सति तत्रैव दृष्टिपातसंभावनासत्त्वात् । अथवा मधुमथनस्य रामस्य दर्शनयोग्यम् । जलदविगमेन मादकत्वाभावात्प्रयाणसमयलाभाच्च । कमलमपि रविकरसदृशकेसरनिवहं धवलाभ्रसदृशदलसहस्रपरिगतं मधु मथ्नातीति मधुमथनस्य भ्रमरस्य दंशनं दशनक्रिया तद्योग्यं भवति । यद्वा मधुमथनस्य नारायणस्य दृश्यतेऽनेनेति दर्शनं चक्षुस्तद्योग्यम् । तस्य पुण्डरीकाक्षत्वात् । यद्वा मधुमहेन मधूत्सवेन दर्शनयोग्यम् । केचित्तु पङ्कजमिवेति पृथक्कुर्वते । प्रियायाः

सीताया महोत्पत्तिरुत्सवोत्पत्तिर्यस्मात् । मेघाद्यपगमेन सुखदत्वादिति नभोविशेषणम् । पितामहस्योत्पत्तिर्यत्रेति पङ्कजविशेषणमिति व्याचक्षते । 'साधर्म्यमुपमा भेदे' इत्युपमालंकारः ॥

अथेन्द्रधनुराह—

**दिणमणिमोहप्फुरिअं गलिअं घणलच्छिरअणरसणादामम् ।**
**उडुमअणबाणवत्तं णहमन्दारणवकेसरं इन्दधणुम् ॥ १८ ॥**

[दिनमणिमयूखस्फुरितं गलितं घनलक्ष्मीरत्नरशनादाम ।
ऋतुमदनबाणवक्त्रं नभोमन्दारनवकेसरमिन्द्रधनुः ॥]

इन्द्रधनुर्गलितमपगतम् । कीदृशम् । दिनमणिः सूर्यस्तन्मयूखैः स्फुरितं प्रकाशितम् । मेघाद्यन्तरिततिर्यग्गतरविकिरणा एव शक्रधनुर्भवन्तीति प्रसिद्धिः । तथा च मेघाद्यपगमे धनुरप्यपगतमिति भावः । दिनमणिकिरणवत्स्फुरितमिति वा । नानारूपत्वात् । दिनमणिः सूर्यस्तस्य मोषे मेघाद्यन्तर्धाने सति स्फुरितमिति वा । दिनमेव मणिस्तन्मयूखैः स्फुरितमित्यन्ये । एवं घनलक्ष्म्या वर्षश्रियो गलितं पतितं रत्नघटितं रशनादामेति रूपकम् । धनुषो हरिल्लोहितत्वेन विचित्ररूपरशनासाम्यम् । तथा च घने गते तदनुगामिन्यास्तल्लक्ष्म्या अपि हठादपसरन्त्या मेखलास्खलनमिति भावः । पुनः कीदृशम् । ऋतुर्वर्षासमयः स एव मादकत्वान्मदनस्तदर्धचन्द्रबाणस्य वक्त्रं मुखम् । तस्य धनुराकारत्वात् । ऋतुमदनबाणपात्रं वा । ऋतोर्मदनस्य बाणपात्रं तूणीरः । ऋतुमतनवाज्ञापत्रं वा । ऋतोर्वर्षाकालस्य मते संमते नवमाज्ञापत्रम् । आज्ञालिखनमित्यर्थः । वर्षर्तोरेव राजायमानत्वात् । ऋतुमतनवातपत्रं वा । वर्षर्तो राज्ञ इव मतं संमतं नवमातपत्रं छत्रम् । वस्तुतस्तु—ऋतुमदनपानपात्रम् । माद्यतीत्यर्थे ल्युट् । ऋतुरेव मदनो मत्तस्तस्य पानपात्रं चषकः । तथा च मत्तेन तेन जगदेव मादितमिति भावः । एवं नभ एव मन्दारो वृक्षविशेषस्तस्य नवं केसरम् । वक्रलोहितत्वात् ॥

पुनस्तदेवाह—

**धुअमेहमहुअराओ घणसमआअड्ढिओणअविमुक्काओ ।**
**णहपाअवसाहाओ णिअअट्ठाणं व पडिगआओ दिसाओ ॥१९॥**

[धुतमेघमधुकरा घनसमयाकृष्टावनतविमुक्ताः ।
नभःपादपशाखा निजकस्थानमिव प्रतिगता दिशः ॥]

दिशो निजकस्थानमिव प्रतिगता व्यावृत्य पूर्वस्थानं गता इवेत्युत्प्रेक्षा। किंभूताः। नभ एव पादपस्तस्य शाखा इति रूपकम्। पुनः किंभूताः। धुता इतस्ततो गता मेघा एव मधुकरा याभ्यस्ताः। एवं घनसमयो वर्षर्तुस्तेनाकृष्टा अथावनता अथ विमुक्ताः। तथा च वर्षर्तोरुपक्रमे दिशो मेघसंभारेणाकृष्टा निकटवर्तिन्य इव, मध्ये गगनदिग्व्यापिमेघबाहुल्येनावनता अधो वर्तुलीकृता इव, वर्षान्ते मेघापगमेन विमुक्ताः प्रसारिण्य इव ज्ञाता इति भावः। शरदि तथाभूतमेघसंबन्धस्त्यक्त इति तात्पर्यम्। अन्या अपि पादपशाखाः केनचित्प्रथममाकृष्यन्ते। पश्चादवनमय्य विमुच्यन्ते तदानीमुपमर्देन धुता इतस्ततः संचारिणो मेघतुल्या मधुकरा याभ्यस्तथाभूता भवन्ति। स्थितिस्थापकसंस्कारेण च निजकस्थानमेव प्रतिगच्छन्तीति ध्वनिः। यद्वा 'दिश अतिसर्जने' [इति] धातुमहिम्ना दिश्यन्तेऽतिसर्ज्यन्त उपदिश्यन्ते वा सुरतकार्याण्याभिरिति दिशः प्रौढाङ्गनास्ता निजकस्थानं प्रति गताः शरदि रात्रौ नायकमभिसृत्य प्रभाते स्वं स्वं गृहं गता इत्यर्थः। कीदृश्यः। धुता विपर्यासिता मेधा बुद्धिर्येन तद्धुतमेधं मधु। तत्करे यासां ताः। पीतावशिष्टं मधु करे कृत्वा प्रतिनिवर्तन्त इत्यभिसारिकासंप्रदायः। ता अपि घनो निबिडः समयः संकेतो यस्य तादृशेन घनं यथा स्यादेवं समदेन मदसहितेन वा नायकेन संभोगार्थमाकृष्टाः कराभ्यामङ्कमानीतास्तदुत्तरमवनमिता उपमर्दविषयीकृता अथोपभोगानन्तरं विमुक्तास्त्यक्ताः। एवमिवशब्दस्याकर्षणान्नखपातप्रसाधा इव नखपातो नखक्षतं तदेव प्रसाधा प्रसाधनमिव यासां ताः। तथा च नखक्षतालंकृता इवेत्यर्थः॥

अथ दिवसमाह—

अहिणवणिद्धालोआ उद्देसासारदीसमाणजललवा ।
णिम्माअमज्जणसुहा दरवसुआअच्छविं वहन्ति व दिअहा ॥२०॥

[अभिनवस्निग्धालोका उद्देशासारदृश्यमानजललवाः ।
निर्मितमज्जनसुखा दरशुष्कच्छविं वहन्तीव दिवसाः ॥]

दिवसा ईषच्छुष्कच्छविं वहन्ति धारयन्ति। वसुआअशब्दः शुष्कवाची। कीदृशाः। स्निग्ध आलोको रवितेजो येषु ते। आकस्मिकमेघापायादालोकानामभिनवचैक्कण्यप्रतिभासनात्। एवं चोद्देश एकदेशस्तत्रासारो वेगवर्षणं तेन दृश्यमाना जलखण्डा यत्र। अत्रोत्प्रेक्षते—निर्मितं मज्जनसुखमर्थाज्जलेषु यैस्ते कृतमज्जना इव। तथा च शरदि वासरे कदाचिद्वर्षणं कदाचित्क्वचिदेकदेशे जलसंबन्धः परत्र

शुष्कता । अत एव कृतमञ्जना इवेत्युक्तम् । अन्येऽपि कृतमञ्जनाः स्निग्ध आलोको दर्शनं येषां तथाविधा दरशुष्कतादशायां क्वचित्क्वचिद्दृश्यमानजलबिन्दवश्च भवन्ति। 'आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले' इति कोषः ॥

भगवदुत्थानमाह—

**सुहसंमाणिअणिद्दो विरहालुङ्घिअसमुद्ददिण्णुक्कण्ठो ।**
**असुवन्तो वि विबुद्धो पढमविबुद्धसिरिसेविओ महुमहणो ॥२१॥**

[सुखसंमानितनिद्रो विरहस्पृष्टसमुद्रदत्तोत्कण्ठः ।
अस्वपन्नपि विबुद्धः प्रथमविबुद्धश्रीसेवितो मधुमथनः ॥]

मधुमथनो विबुद्ध उत्थितः । उत्थानैकादशी बभूवेत्यर्थः । अस्वपन्नपि निद्रामलभमानोऽपि । देवानामस्वप्नत्वात् । अतः सुखं यथा स्यादेवं संमानिता आदृता निद्रा येन तादृक् । आलस्यादिना निद्राया आदरमात्रं न तु पारमार्थिकत्वमपीति भावः । पुनः कीदृक् । विरहस्पृष्टाय समुद्राय दत्ता उत्कण्ठा येन तादृक् । जागरणोत्तरं परमेश्वरस्यान्यत्र गमनशङ्कया विरहिणः समुद्रस्य कदा पुनरयमत्रायास्यति लक्ष्म्या च समं मदङ्के शयिष्यत इत्युत्कण्ठादानं तदानीमेवेति सुभगत्वमुक्तम् । एवं प्रथमविबुद्धया श्रिया चरणसंवाहनादिना सेवितः । पञ्चम्यामेव लक्ष्म्युत्थानात् । अथ च नारायणे जाग्रति मधुमथनो रामरूपो विबुद्धः । तदात्मकत्वात् । वर्षामेघापगमे लब्धचेष्टो बभूवेत्यर्थः । कीदृक् । विरहवैक्लव्येनास्वपन्नपि निद्रामनासादयन्नपि । एवं च विरहस्पृष्टश्चासौ समुद्रेण मुद्रासहितेन हनूमता दत्ता उत्कण्ठा यस्मै तादृशश्च । जानकीवियोगिनोऽभिज्ञानमुद्रामादाय गतं हनूमन्तं प्रति जानकीवार्तालाभायोत्पत्तेरित्यर्थः । एवं प्रथमोद्बुद्धया श्रिया कान्त्या सेवित आश्रितः । शरदागमेनाग्रिमव्यापारं प्रति साध्यवसायत्वेन सुखादिश्रीसमृद्धेरिति भावः ॥

तारामाह—

**सोहइ विसुद्धकिरणो गअणसमुद्दम्मि रअणिवेलालग्गो ।**
**तारामुत्तावअरो फुडविहडिअमेहसिप्पिसंपुडमुक्को ॥ २२ ॥**

[शोभते विशुद्धकिरणो गगनसमुद्रे रजनिवेलालग्नः ।
तारामुक्ताप्रकरः स्फुटविघटितमेघशुक्तिसंपुटमुक्तः ॥]

गगनरूपे समुद्रे तारारूपमुक्ताप्रकरः शोभते । कीदृक् । विशुद्धः शुभ्रः किरणो

यस्य तथा। एवं रजनिरेव वेला तीरं तत्र लग्नः। शर्वरीसमयलग्न इत्यपि। एवं स्फुटं यथा स्यात्तथा विघटिता ये मेघास्त एव शुक्तिसंपुटास्तेभ्यो मुक्त इतस्ततः प्रकीर्णः। शरदि मेघानां नानाखण्डत्वेन शुभ्रतया च विघटितशुक्तिसाम्यम्। अन्यत्रापि समुद्रे शुक्तिमुक्ता विशुद्धचाकचक्या मुक्तास्तीरलग्ना दीप्यन्त इति सर्वत्र रूपकम्॥

शरत्प्रौढिमाह—

सत्तच्छआणँ गन्धो लग्गइ हिअए खलइ कलम्बामोओ।
कलहंसाणँ कलरओ ठाइ ण संठाइ परिणअं सिहिविरुअम्॥२३॥

[सप्तच्छदानां गन्धो लगति हृदये स्खलति कदम्बामोदः।
कलहंसानां कलरवस्तिष्ठति न संतिष्ठते परिणतं शिखिविरुतम्॥]

सप्तच्छदानां गन्धो हृदये लगति मनोहारीभवति। सामायिकत्वात्। कदम्बामोदः स्खलति हृदयग्राह्यो न भवति। असामयिकत्वादित्यर्थः। लगत्यपूर्वत्वादन्यतः संबध्यते स्खलत्यतिपरिचितत्वादस्वकालारमणीयत्वाच्च संबद्धोऽपि न स्वदत इति भावः। एवं कलहंसानां कलरवो हृदये तिष्ठति। सामयिकत्वादेव। न संतिष्ठते शिखिनां विरुतं ध्वनिः। असामयिकत्वादेवेत्यर्थः। अनवस्थाने हेतुमाह—परिणतं विरसम्। कदम्बामोदेऽपीदं विभक्तिविपरिणामेन योज्यम्। तथा च परिणामप्राप्तं सर्वमेव स्खलति न संतिष्ठते चेति ध्वनिः। समयजं सर्वमेव मनोहरमिति तात्पर्यम्॥

पुनरपि सिंहावलोकितेनेन्द्रधनुराह—

पीणपओहरलग्गं दिसाणँ पवसन्तजलअसमअविइण्णम्।
सोहग्गपढमइण्हं पम्माअइ सरसणहवअं इन्दधणुम्॥ २४॥

[पीनपयोधरलग्नं दिशां प्रवसज्जलदसमयवितीर्णम्।
सौभाग्यप्रथमचिह्नं प्रम्लायति सरसनखपदमिन्द्रधनुः॥]

इन्द्रधनुरेव सरसं तात्कालिकं नखपदमिति रूपकम्। प्रम्लायति प्रकर्षेण म्लानिमाप्नोति। विगलतीति यावत्। सरसत्वेन लौहित्यान्नखपदस्येन्द्रधनुस्तौल्यम्। कीदृशम्। दिक्षु पीनो यः पयोधरो मेघस्तत्र लग्नम्। पुनः कीदृक्। प्रवसता गच्छता जलदकालेन वितीर्णं दत्तम्। सौभाग्यस्य सौन्दर्यस्य प्रथमं चिह्नं लक्षणम्। तथा च प्रावृषि दिशां मांसलमेघलग्नेन्द्रधनुषा सौन्दर्यमासीत्। अथ शरदि यथा-

यथा मेघापगमस्तथा तथा तदविनाभावेन तदप्यपगतमिति भावः । नखक्षतमपि दिशां प्रौढाङ्गनानां पीनस्तनलग्नं सत्क्रमेण म्लायति । नखक्षतं कीदृक् । प्रवसता प्रवासशीलेन कामचेष्टया जलं जाड्यं ददातीति व्युत्पत्त्या जलदेन नायकेन समये प्रस्थानकाले वितीर्णं दत्तम् । अत एव सौभाग्यस्यानुरागस्य प्रथमं ज्ञापकम् । वर्षासु गृहे स्थित्वा शरदि प्रवासीभवता नायकेन प्रियास्तने सततस्मरणाय नखक्षतं कृत्वा गम्यत इति कामशास्त्रम् ॥

चन्द्रमण्डलमाह—

**पज्जत्तसलिलधोए दूरालोक्कन्तणिम्मले गअणअले ।**
**अच्चासण्णं व ठिअं विमुक्कपरभाअपाअडं ससिबिम्बम् ॥ २५ ॥**

[पर्याप्तसलिलधौते दूरालोक्यमाननिर्मले गगनतले ।
अत्यासन्नमिव स्थितं विमुक्तपरभागप्रकटं शशिबिम्बम् ॥]

गगने शशिबिम्बमतिनिकटवर्तीव स्थितम् । किंभूतम् । विमुक्तः परभागोऽन्यभागो मेघादिसंबन्धस्तेन प्रकटमतिव्यक्तम् । गगने कीदृशि । पर्याप्तं बहुतरं यत्सलिलं वर्षर्तुसंभवं तेन धौते प्रक्षालिते । एवं दूरादालोक्यमानं सन्निर्मलं यत्तादृशि । अयं भावः—यथा वस्त्रादौ क्षालिते मालिन्यापगमेन स्थितं रूपान्तरवद्द्रव्यं स्फुटं प्रकाशते तथा वृष्टिजलक्षालिते वियति मेघरूपमालिन्यापगमादत्युज्ज्वले तथा स्वभावतः स्वच्छश्यामले धवलं विधुमण्डलमतिप्रकटमालोकितं लोकैः । तदुक्तं श्रीहर्षेण—'सिते हि जायेत शितेः सुलक्ष्यता' इति । वस्तुतस्तु विशब्दस्याभाववाचितया विमुक्तोऽत्यक्तः परभागोऽन्यतः शोभा नीलाकाशकृतकान्तिविशेषस्तेन प्रकटं शुभ्रत्वादित्युन्नयामः । अत्रोत्प्रेक्षा ॥

हंसागमनमाह—

**चिरआलपडिणिउत्तं दिसासु घोलन्तकुमुअरअवेल्लविअम् ।**
**भमइ अलद्धासाअं कमलाअरदंसणूसुअं हंसउलम् ॥ २६ ॥**

[चिरकालप्रतिनिवृत्तं दिक्षु घूर्णमानकुमुदरजोविलिप्तम् ।
भ्रमत्यलब्धास्वादं कमलाकरदर्शनोत्सुकं हंसकुलम् ॥]

दिक्षु हंसानां कुलं समूहो भ्रमति घूर्णते । किंभूतम् । चिरकालेन परावृत्तम् । प्रावृषि मानसं गता हंसाः शरदि पुनरागताः । कुत्र । कमनीये जलाशये स्थातव्यमित्यु-

ह्रासेनाभित उड्डयन्त इत्यर्थः । एवं घूर्णमानैर्निशि मन्दानिलप्रेरितैः कुमुदरजोभिर्विलिप्तम् । सरसि सरसि स्थितेरित्यर्थात् । एवमलब्ध आस्वादस्तृप्तिर्येन तथा । अग्रिमाग्रिमवासनया क्वचिदपि स्थैर्याभावात् । अलब्धाशाकं वा । अलब्धा आशा आकाङ्क्षा येन तत्तथा । नानासरःसौभाग्यसौकर्येणैकत्र मनोवृत्त्यभावात् । एवं कमलाकरस्याभिप्रेतसरसो दर्शने उत्सुकम् । वस्तुतस्तु निशि कुमुदाकरे कुमुदसौभाग्यसौकर्येण कुंमुदवनवासमनुभूय तदुपमर्देन तत्परागानुलिप्तं सत्प्रभाते कमलाकरस्य कमलाधिष्ठानसरसो दिदृक्षया भ्रमति । तदुक्तमलब्धास्वादम् । कुमुदकोषभोजनजन्यतृप्तावपि कमलकोषभोजनजन्यतृप्त्यर्थित्वादित्युन्नयामः ॥ ध्वनिपक्षे हंसः संन्यासिविशेषस्तत्कुलं भ्रमति । कीदृक् । चिरकालेन वर्षर्तौ क्वचिद्प्युषित्वा शरदि प्रतिनिवृत्तं पूर्वस्थानमागतम् । दिक्षु घूर्णमानम् । कौ पृथिव्यां मोदते कुमुदं तद्रजस्तेन विलिप्तम् । धूलीधूसरमित्यर्थः । यद्वा दिक्षु घूर्णमानं सत्कुत्सिता मुत्प्रीतिर्यस्मादेतादृशो यो रजोगुणस्तेन वेल्लितं प्रेरितम् । रजोगुणमहिम्ना भक्ष्यार्थितया भ्रमतीति भावः । एवमलब्ध अशाकः शाकभिक्षो येन तत् । अत एव कमलाया लक्ष्म्या आकरस्य धनिकस्य दर्शने भोजनार्थितयोत्कण्ठितम् । तथा च स्वप्रयुक्त्या शाकमात्रलाभादतृप्ताः संन्यासिनः समीहितभिक्षार्थितया धनिकमन्विष्यन्तीति भावः ॥

अहोरात्रशोभामाह—

**चन्दाअवधवलाओ फुरन्तदिअसरअणन्तरिअसोहाओ ।**
**सोम्मे सरअस्स उरे मुत्तावलिविब्भमं वहन्ति णिसाओ ॥ २७ ॥**

[चन्द्रातपधवलाः स्फुरद्दिवसरत्नान्तरितशोभाः ।
सौम्ये शरद उरसि मुक्तावलिविभ्रमं वहन्ति निशाः ॥]

निशाः सौम्ये रमणीये शरद उरसि मुक्तावलिविभ्रमं वहन्ति । मुक्ताहारायन्त इत्यर्थः । हारतौल्यमाह— किंभूताः । चन्द्रातपेन ज्योत्स्नया धवलाः । स्फुरन्मेघादिशून्यतया दीप्यमानं दिवसमेव रत्नं पुष्परागादिकं पिञ्जरत्वात्तैरन्तरिता व्यवहिताः शोभा यासां ताः । स्फुरता दिवसरत्नेनादित्येनान्तरिता शोभा यासामिति ध्वन्यर्थः । दिवरूपरत्नान्तरप्राप्तशोभा इति वा । इतच् ॥ अन्यस्या अपि नायिकाया उरस्यन्तरान्तरा रत्नान्तरविशिष्टो हारः शोभते । शरदस्तु निशादिवसरूपरत्नघटितो हारोऽभूदिति निगर्वः । सरअस्स सरतस्य रतासक्तस्य पुरुषस्योरसि या मुक्तावलिस्तस्या विशिष्टभ्रमं धारयन्ति निशा इत्यपि केचिद्व्याचक्षते ॥

कमलमाह—

**भमररुअदिण्णसण्णं घणरोहविमुक्कदिणअरअरालिट्ठम् ।**
**फरिससुहाअन्तं विअ पडिबुज्झइ जलणिहितणालं णलिणम् ॥२८॥**

[भ्रमररुतदत्तसंज्ञं घनरोधविमुक्तदिनकरकराश्लिष्टम् ।
स्पर्शसुखायमानमिव प्रतिबुध्यते जलनिहितनालं नलिनम् ॥]

जले सरोवरादिपयसि निहितं नालं येन । शरदीषज्जलापगमात् । तादृशं नलिनं प्रतिबुध्यते विकसति । प्रभात इत्यर्थात् । भ्रमरै रुतेन दत्ता संज्ञा संकेतो यस्मै तादृशमिव । कुमुदवनस्य मुद्रितत्वात्कमलमधुतृष्णया भ्रमरैः शब्दव्याजाज्जागृहीत्युक्तमिवेत्यर्थः । घनो मेघस्तदवरोधविमुक्ता ये दिनकरस्य करास्तैराश्लिष्टं स्पृष्टम् । अन्योऽपि निद्राणः केनचिद्रुतेन शब्देन दत्ता संज्ञा अमुक, जागृहीत्यादिरूपा यस्मै तथाभूतः करतलपरामृश्यमानश्च तत्स्पर्शसुखं लब्ध्वा जागर्ति । जले जाड्ये निहिता नाला नाड्यो यस्य तादृशो भवति । निद्रया जडीकृतकलेवरत्वादित्यभिप्रायः ॥ अत्र केचित्—'अन्योऽपि दुर्गतो घनरोधविमुक्तो दैन्यकरः करस्पृष्टश्चेति घनरोधविमुक्तदिनकरकराश्लिष्टः सन् करो राजग्राह्यद्रम्मादिस्तत्पृष्टस्तदुत्तरं जडेन मूर्खेण निहितो नालो बन्धनरज्जुर्यस्मिन्नित्थंभूतश्च दैन्यं त्यागार्थं क्लैब्यं तत्करश्च मूर्खनिहितबन्धनदार्ढ्येन मूर्च्छितत्वाद्धनावरोधाद्विमुक्तो भवति प्राणपीडाशङ्कया त्यज्यते । तदवस्थायां भ्रमरेण निजभृत्यप्रेषितदूतेन जिज्ञासुतया दत्तसंज्ञः संज्ञया किंचिद्बोध्यमानः प्रतिबुध्यतेऽवगच्छति' इति ध्वन्यर्थमाहुः ॥ अपरे तु—'भ्रमरेण विदग्धमित्रेण रुतेन दत्तसंज्ञो निशि निरुद्ध एव प्रभाते त्यक्तनिरोधो दिने संचारीति दिनचरः कराश्लिष्टः प्रतिबुध्यते' इति व्याचक्षते ॥

हंसध्वनिमाह—

**मम्महधणुणिग्घोसो कमलवणक्खलिअलच्छिणेउरसद्दो ।**
**सुव्वइ कलहंसरओ महुअरिवाहित्तणलिणिपडिसंलाओ ॥ २९ ॥**

[मन्मथधनुर्निर्घोषः कमलवनस्खलितलक्ष्मीनूपुरशब्दः ।
श्रूयते कलहंसरवो मधुकरीव्याहृतनलिनीप्रतिसंलापः ॥]

कलहंसानां रवः श्रूयते । नक्तमित्यर्थात् । कलो हंसरव इति वा । कीदृक् । मन्मथधनुषो निर्घोषष्टंकारः । मादकत्वात् । ज्योत्स्नाधवलायां रजन्यां विश्वमेव जेतव्यमिति धनुषष्टंकारः । एवं कमलवनात्स्खलिताया लक्ष्म्या नूपुरनादः । तथा

च रात्रौ संकुचत्कमलवनमुपद्रुतं परित्यजन्त्या हठात्संचारः स्खलने बीजम् । तथा निमीलनरूपविपद्दशायां मधुकरीभिर्व्याहृताया नलिनि, क्वासि किं करोषीत्येवं पृष्टाया नलिन्या इहास्मि संनिहिता भवत इत्येवंरूपः प्रतिसंलापः प्रत्युत्तरम् । लोकेऽप्येको विपद्ग्रस्तं वादयति स पुनः प्रत्युत्तरयतीति ॥ दिवातनध्वनिपक्षे तु व्याख्या—कीदृक्कलहंसरवः । मदनधनुर्ध्वनिस्तथाभूतलक्ष्मीनूपुरशब्दश्च । अत्र पक्षे कमलमुन्निद्रमुद्वीक्ष्य निजावासग्रहणायोल्लासेन हठाद्व्रजनं स्खलने बीजम् । मधुकरीभिर्नलिनि, जागर्षि मया मधुपानमागत्य कर्तव्यं न वेति पृष्टाया नलिन्या मधुकरि, जागर्मि मधु समागत्य पीयतामित्येवंरूपः प्रतिसंलाप इति पक्षद्वयेऽपि रूपकम् ॥

नलिनीमाह—

**खुडिउप्पइअमुणालं दट्ठूण पिअं व सिढिलवलअं णलिणिम् ।**
**महुअरिमहुरुल्लावं महुमअतम्बं मुहं व घेप्पइ कमलम् ॥ ३० ॥**

[खण्डितोत्पाटितमृणालां दृष्ट्वा प्रियामिव शिथिलवलयां नलिनीम् ।
मधुकरीमधुरोल्लापं मधुमयाताम्रं मुखमिव गृह्यते कमलम् ॥]

कमलं गृह्यते हस्तेनादीयते । लोकैरित्यर्थात् । अत्रोत्प्रेक्षते—खण्डितमथोत्पाटितमुत्थापितं मृणालं यस्यास्तां नलिनीं शिथिला रतिकालीनकरपरामर्शेन विपर्यस्ता वलया यस्यास्तां प्रियामिव दृष्ट्वा । अयं भावः—शरदि लोका जलन्यूनतायां कमलमृणालाद्यवचिन्वन्ति । तत्रोत्पाटितमृणाले विलुलितवलयभ्रमेण पद्मिन्यां पद्मिनीबुद्ध्या पद्ममपि मुखधिषणया चुम्बनाद्यर्थमिवाकृष्टवन्तः । कीदृक्कमलम् । मधुमयमत एवाताम्रम् । एवं मधुकरीणां मधुर उल्लापो यत्र तत्तथा । कमलोपमर्देन मधुकरादिध्वनिसंभवात् । मुखमपि मधुमदेनाताम्रमीषल्लोहितं मधुकरीवन्मधुर उल्लापो यत्र (तादृशं च) । चुम्बनादिसमये मधुकरादिध्वनिकरणात् । तदुक्तम्—'हारीतपारावतकोकिलादिनादं विदध्यात्सुरतावतारे' इति ॥ केचित्तु—'नलिनीं प्रियामिव दृष्ट्वा कमलं मुखमिव गृह्यते ज्ञायते लोकैरिति सर्वमन्यत्तुल्यम्' इत्याहुः ॥

पवनमाह—

**पज्जत्तकमलगन्धो महुतण्णाओसरन्तणवकुमुअरओ ।**
**भमिरभमरोअइव्वो संचरइ सदाणसीअरो वणवाओ ॥ ३१ ॥**

[पर्याप्तकमलगन्धो मध्वार्द्रापसरन्नवकुमुदरजाः ।
भ्रमद्भ्रमरोपजीव्यः संचरति सदानशीकरो वनवातः ॥]

दानशीकरसहितो वनपवनः संचरति । करिणामुत्सर्गतः शरदि मदोद्भेद इति प्रसिद्धिः । कीदृक् । चिरनिरुद्धस्यैकत्र संचितस्याकस्मिकबहिर्भावे बाहुल्यात्पर्याप्तः परिपूर्णः कमलगन्धो यत्र । एवं विकासप्रकर्षेण मधुप्रकर्षादार्द्रं सदपसरत्पवनसंबन्धादधः स्खलन्नवं कुमुदरजो यत्र । तथा च वायोरुषःकालीनत्वात्कमलकुमुदयोर्मुकुलरूपयोर्गन्धस्य रजसश्च संबन्ध इति भावः । पुनः कीदृक् । कमलकुमुदमदगजादिजिज्ञासया भ्रमणशीलानां भ्रमराणामुपजीव्यो गन्धरजोमदलोभात्सेव्यः । कमलकुमुदमदसंबन्धात्सौरभम् । मधुमदवनसरःसंबन्धाच्छैत्यम् । सामयिकत्वाच्च मान्द्यम् । एवं संध्याकालीनत्वेऽपि । 'तण्णापसरन्त' इति पाठे आर्द्रप्रसरदित्यर्थः ॥

पुनर्नलिनीमाह—

**कण्टइअणूमिअङ्गी थोअत्थोओसरन्तमुद्धसहावा ।**
**रइअरचुम्बिज्जन्तं ण णिअत्तेइ णलिणी मुहं विअ कमलम् ॥३२॥**

[कण्टकितगोपिताङ्गी स्तोकस्तोकापसरन्मुग्धस्वभावा ।
रविकरचुम्ब्यमानं न निवर्तयति नलिनी मुखमिव कमलम् ॥]

नलिनी कमलं न निवर्तयत्यूर्ध्वं प्रापयति । प्रकाशयतीति यावत् । कीदृशम् । रविकरेण चुम्ब्यमानं संबध्यमानम् । प्रभातवशात् । नलिनी कीदृशी । कण्टकितं जातकण्टकं गोपितं जलान्तःस्थापितमङ्गं नालो यया । जलस्य किंचिन्न्यूनतया नालं पयसि नभसि कमलमिति भावः । पुनः कीदृशी । स्तोकस्तोकमीषदीषदपसरन्मुग्धस्वभावः कलिकाभावो यस्याः । क्रमेण विकासादिति भावः । उत्प्रेक्षते—मुखमिव । यथा पद्मिनी नायिका रतिकरो नायकस्तेन चुम्ब्यमानं, रविणः संगमकाले कृतशब्दविशेषस्य नायकस्य करेण चुम्ब्यमानं वा मुखं न निवर्तयति किं तु संमुखमेव स्थापयति तथेयमपीत्यर्थः । सापि कीदृशी । कण्टकितं रोमाञ्चितं भावोदयात्, अथ च गोपितं लज्जया सिचयाञ्चलेनावृतमङ्गं हृदयादि यया । एवं स्तोकस्तोकं क्रमेणापसरन्मुग्धस्वभावो बाल्यं लज्जा वा यस्यास्तथाभूता । यथायथा नायकविस्रम्भस्तथातथा लज्जाविगम इति भावः ॥

पुनर्भ्रमरमाह—

**परिघोलन्तक्खलिअं सत्तच्छअकुसुमधवलरेणुक्खइअम् ।**
**उप्पुसइ दाणवङ्कं मुहुत्तगअकण्णचामरं भमरउलम् ॥ ३३ ॥**

[परिघूर्णमानस्खलितं सप्तच्छदकुसुमधवलरेणूत्खचितम् ।
उत्प्रोञ्छति दानपङ्कं मुहूर्तंगजकर्णचामरं भ्रमरकुलम् ॥]

मुहूर्तं व्याप्य गजस्य कर्णचामरं भ्रमरकुलं दानपङ्कमर्थाद्गजस्यैवोत्प्रोञ्छति उड्डयनप्रयत्नेनोर्ध्वं प्रोञ्छति। दानपङ्कपातानन्तरमुड्डयनासंभवान्मुहूर्तमित्युक्तम्। कीदृशं भ्रमरकुलम्। परिघूर्णमानं सत्स्खलितम्। प्रथमं गण्डयोरुपरि भ्रमित्वा पतितमित्यर्थः। चामरमपि परिघूर्णमानं सत्स्खलितं भवति। पुनः कीदृक्। सप्तच्छदकुसुमानां धवलरेणुभिरुत्खचितम्। अत एव श्वैत्याचामरतौल्यम्। तथा च सप्तच्छदकुसुमेभ्यो दानस्य पङ्कीभावान्माधुर्यमधिगत्यागतमिति भावः॥

अथ रामस्य विरहावस्थामाह—

**इअ पहसिअकुमुअसरे भडिमुहपङ्कअविरुद्धचन्दालोए ।**
**जाए फुरन्ततारे लच्छिसअंगाहणवपओसे सरए ॥ ३४ ॥**

[इति प्रहसितकुमुदसरसि भटीमुखपङ्कजविरुद्धचन्द्रालोकायाम् ।
जातायां स्फुरत्तारायां लक्ष्मीस्वयंग्राहनवप्रदोषे शरदि ॥]

रामस्य क्षीणापि तनुः क्षीयत इत्युत्तरस्कन्धकेनान्वयः। सीताया विश्लेषाद्वार्तानुपलम्भाच्च। कस्यां सत्याम्। इत्युक्तप्रकारेण शरदि जातायाम्। किंरूपायाम्। लक्ष्म्याः स्वयंग्राहस्तस्य नवप्रदोषे रजनीमुख इति रूपकम्। शरत्पक्षे लक्ष्मी रिपुराजश्रीस्तस्या स्वयंग्राहोऽतिक्रम्य ग्रहणम्। प्रदोषपक्षे लक्ष्मीर्नायिका तस्याः स्वयंग्राहो विवाहविशेषः। तस्य प्रदोषकर्तव्यत्वादित्यवसेयम्। शरदि किंभूतायाम्। प्रहसितं विकसितं कुमुदं यत्र तादृक्सरो यत्र तस्याम्। एवं भटी शूरवधूस्तन्मुखकमलस्य विरुद्धो मालिन्यहेतुश्चन्द्रस्यालोको ज्योत्स्ना दर्शनं वा यस्याम्। शरदि शूराणां रणयात्रया तद्वधूनां विरहोद्रेकादिति भावः। एवं स्फुरन्त्यस्तारा यस्यां तस्याम्। प्रदोषेऽपि कीदृशि। प्रहसितकुमुदसरसि भटीमुखतुल्यं यत्पङ्कजं तद्विरुद्धश्चन्द्रालोके स्फुरत्तारे चेति योज्यम्। केचित्तु—'शरदि कथंभूतायाम्। प्रहसितस्य कुमुदनाम्नो वानरस्य स्वरः शब्दविशेषो यत्र तथा प्रहसितकुमुदस्वरायाम्। एवं भटी राक्षसवधूस्तन्मुखपङ्कजविरुद्धश्चन्द्रस्य रामचन्द्रस्यालोको दर्शनं तेजो वा यत्र तथा तद्विरुद्धचन्द्रालोकायाम्। स्फुरन्ती तारा सुग्रीववधूर्यत्र। तारो वानरविशेषो वा। लक्ष्मीः सीता तत्स्वयंग्राहस्य प्रदोषे' इति व्याचक्षते॥

छिज्जइ झिण्णावि तणू अट्ठिअवाहं पुणो परुण्णं व मुहम् ।
रामस्स अईसन्ते आसाबन्धे व्व चिरगए हणुमन्ते ॥ ३५ ॥
(जुग्गअम्)

[क्षीयते क्षीणापि तनुरास्थितबाष्पं पुनः प्ररुदितमिव मुखम् ।
रामस्यादृश्यमाने आशाबन्ध इव चिरगते हनूमति ॥]
(युग्मकम्)

एवमास्थितो बाष्पो यत्रैवं सत्पुनः प्ररुदितमिव मुखम् । रोदनोन्मुखमित्यर्थः । अतिरोदनेन बाष्पशून्यतायामपि दैन्योद्रेकादिति भावः । धीरोदात्तत्वाद्वा । कस्मिन्सति । चिरगते हनूमत्यदृश्यमाने सति । कस्मिन्निव । आशाबन्ध इव । सीतां प्रति पुनः प्राप्तिप्रत्याशाबन्धोऽप्यदृश्यमान इत्यर्थः । तथा च यथा सीताप्राप्त्याशाबन्धो न दृश्यते तथा हनूमानपि न दृश्यत इति चिन्ताधिक्यादियमवस्थाभूदिति भावः । सहोपमा । यद्वा हनूमति कथंभूते । सीतां प्रत्याशाबन्ध इव । सीताप्राप्त्याशाबन्धस्य हनूमदागमनावधिकत्वादिति भावः । यद्वा परुण्णं व प्ररुदितं वा । पुनः प्ररुदितं चेत्यर्थः । वाशब्दः समुच्चये ॥

अथ हनूमदागमनमाह—

णवरि अ जहासमत्थिअणिव्वत्तिअकज्जणिव्वलन्तच्छाअम् ।
पेच्छइ मारुअतणअं मणोरहं चेअ चिन्तिअसुहोवणअम् ॥ ३६ ॥

[अनन्तरं च यथासमर्थितनिर्वर्तितकार्यनिर्वलच्छायम् ।
प्रेक्षते मारुततनयं मनोरथमेव चिन्तितसुखोपनतम् ॥]

णवर-णवरि केवलानन्तर्ये । एतदनन्तरं च स रामो मारुततनयं हनूमन्तं प्रेक्षते । कीदृशम् । यथा समर्थितं रामेण यथाध्यवसितं तथा निर्वर्तितं निष्पादितं यत्कार्यं सीतावार्ताहरणादि तेन निर्वलन्ती इतरवानरापेक्षया पृथग्भवन्ती छाया मुखादिकान्तिर्यस्य तम् । दूतस्य मुखश्रीरेव सदसन्निवेदयतीति मुखश्रीसत्त्वासत्त्वाभ्यां कार्यसिद्ध्यसिद्धी ज्ञातुमित्सया तद्दर्शनं कृतवानिति भावः । पुनः कीदृशम् । चिन्तितः स्मृतः सन्सुखायोपनतस्तम् । चिन्तितः सन्यः समागच्छति स कार्यसिद्धिशंसितया सुखदो भवति । तदुक्तम्—'अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्' इति ।

पुनः कीदृशमेव। मनोरथमेव मनोरथस्वरूपमेव। सोऽपि चिन्तितः सन्सुखायोपनत उपगतो भवति। मनोरथेन सुखं लभ्यत इत्यर्थः॥

अथ हनुमच्चेष्टामाह—

पढमं विअ मारुइणा हरिसभरिज्जन्तलोअणेण मुहेण।
जणअतणआपउत्ती पच्छा वाआइ णिरवसेसं सिट्ठा॥ ३७॥

प्रथममेव मारुतिना हर्षभ्रियमाणलोचनेन मुखेन।
जनकतनयाप्रवृत्तिः पश्चाद्वाचा निरवशेषं शिष्टा॥

धीरोदात्तस्य जिज्ञासो रामस्य प्रेक्षणमेतत्प्रश्नार्थकमित्युन्नीय क्रमिकवर्णसमुदायरूपवाक्यतदर्थपर्यालोचनापर्यन्तं सीतावृत्तविषयकसंशयेन क्लेशः स्यादस्येति वचनापेक्षया चेष्टयैव हठाद्वार्ताप्रतिपत्तिर्भवेदित्यभिसंधाय परमचतुरेण मारुतिना सीता दृष्टा जीवति चेति वार्ता हर्षसूचकप्रसादविशेषविशिष्टचक्षुर्मुखचमत्कारेण प्रथममेव प्रेक्षणसमकाल एव शिष्टा निरगादि। पश्चात्पुनरस्य सीताकुशलसमधिगमसुस्थस्याकाङ्क्षाक्रमेण गतागतप्रपञ्चसंबद्धतदवस्थाकथनपर्यन्तमुक्ता। तथा च मुखदर्शनेन सीता कुशलवती दृष्टा चामुनेति रामस्तर्कयांचकारेति भावः॥

अथ हनूमन्तं प्रति रामव्यापारमाह—

दिट्ठ त्ति ण सद्दहिअं झीण त्ति सबाहमन्थरं णीससिअम्।
सोअइ तुमं ति रुण्णं पहुणा जिअइ त्ति मारुई उवऊढो॥३८॥

[दृष्टेति न श्रद्धितं क्षीणेति सबाष्पमन्थरं निःश्वसितम्।
शोचति त्वामिति रुदितं प्रभुणा जीवतीति मारुतिरुपगूढः॥]

अत्र रामः प्रश्नकर्ता हनूमानुत्तरयिता। तथा च सीता दृष्टेति प्रश्ने दृष्टेत्युत्तरम्। तत्र प्रभुणा रामेण न श्रद्धितं श्रद्धाप्रत्ययो न कृतः। रावणान्तःपुरवर्तिन्या राक्षसीलक्षपरिवृतायाः सीतायाः कथमस्य वानरस्य दर्शनं स्यादिति भावः। कीदृशीत्यवस्थाप्रश्ने क्षीणेत्युत्तरम्। तत्र सबाष्पं सोच्छ्वासं च तन्मन्थरं यथा स्यात्। अथ वा बाष्पोऽश्रु तन्मान्थर्यसहितं यथा स्यादेवं निःश्वसितम्। मद्विश्लेषेण क्षैण्यमस्या युज्यत एवेति प्रतीतेन मयि जीवत्येव मत्प्रेयसी ईदृशीमवस्थामयासीदित्यन्तःखेदान्निःश्वास इति भावः। तन्मान्थर्यं च तथा कृत्वापि रावणो भ्रियत इत्यन्त-

मन्यूत्पीडात् । अश्रुपक्षे तु धीरोदात्तत्वात्सदसि तन्निर्गमनिरोधादिति भावः । किं करोतीति प्रश्ने रामो मां विना वने वसन्नेकाकी कीदृक् स्यादिति त्वां शोचतीत्युत्तरम् । तत्र प्रभुणा रुदितम् । निजदुःखमगणयित्वैव मामेव शोचतीत्यहो पातिव्रत्यमस्या राक्षसकरे संदिग्धमिति भावः । कुलकलङ्कशङ्कया धैर्यादप्यश्रुनिरोधो मा भूदिति तात्पर्यम् । शोचतीति लट्प्रत्ययेन सीतावर्तमानत्वमवधृत्य जीवतीति विहाय जीविष्यतीति प्रश्ने जीवतीत्युत्तरम् । तत्र वर्तमानसामीप्यार्थकलट्प्रत्ययमहिम्ना भवदागमनप्रत्याशया मदनुद्धारनिबन्धनः कलङ्कः प्रभोर्मा प्रसाङ्क्षीदिति किंचित्कालं प्राणान्धारयति । न तु चिरं जीविष्यतीत्यभिप्रायमस्य विदित्वा मारुतिरालिङ्गितः । कियत्कालमेव चेज्जीविष्यति तदा वार्ताज्ञानमेव दुःशकमासीदथ तत्प्रत्युद्धारो हठादेव मया करिष्यत इत्युत्साहात् । अथवा यद्ययमसत्यमावेदयति तदा क्षोभतः सकम्पहृदयः स्यादिति जिज्ञासावशात् । यद्वा महत्कार्यमयमकार्षीत्तद्धनमस्त्येव न, परिरम्भणेनापि सत्क्रियतामित्याशयादिति भावः । उत्तरनामायमलंकारः । तथा च वामनः (रुद्रटः)—'उत्तरवचनश्रवणादुन्नयनं प्रश्नवचनानाम् । उत्तरमिति तं प्राहुः प्रश्नादप्युत्तरं यत्र ॥' 'प्रश्नं विनैव हनूमता दृष्टेत्यादि सीतावृत्तचतुष्टयमुदगारि । तत्र न श्रद्धितमित्यादि रामावस्थाचतुष्टयमुक्तं पूर्वोक्ततत्तदभिप्रायेण' इत्यपि केचिदाचक्षते । परे तु—'उत्तरालंकारमहिम्नैव दृष्टेत्युपनायकस्य सुग्रीवस्य प्रश्नः । तस्य तावन्मात्रप्रयोजनकत्वात् । कीदृशीत्यनुनायकस्य लक्ष्मणस्य प्रश्नः । तस्य स्नेहवशादवस्थाजिज्ञासुत्वात् । किं करोतीति नायकस्य रामस्य प्रश्नः । तस्य वल्लभत्वेन वल्लभागतराक्षसोपकल्पितविभीषाहेतुकव्यभिचारशङ्कित्वात् । अत एव त्वामेव शोचतीति कुलस्त्रीत्वव्यञ्जकमुत्तरम् । जीवतीति नानापरिजनप्रश्नः । तेषां तावन्मात्रोद्देश्यकत्वात् । एषु दृष्टेत्याद्युत्तरेषु प्रभुणा न श्रद्धितमिति संबन्धानामवस्थाचतुष्टयं प्रभोरेव पूर्वोक्ततत्तदभिप्रायेणोक्तम्' इत्याहुः । इतरे तु—'हे क्षीणतृड्बाधमन्थ, क्षीणा तृट् तृषा येषां ते क्षीणतृषो देवास्तान्बाधन्ते पीडयन्तीति क्षीणतृड्बाधा राक्षसास्तान्मथ्नातीति क्षीणतृड्बाधमन्थेति रामसंबोधनम् । 'क्षीणतृड्बाधमन्थ इति' वा । 'व्यध ताडने' धात्वनुसारात् । सीता मया दृष्टेति न शब्दहितं शब्दमात्रेण हितमिति न किं त्वर्थेनापि हितम् । सीता मया दृष्टेवेत्यर्थः । अरण्येशाश्रितं त्वामरण्येशः सुग्रीवस्तमाश्रितं त्वां पृथ्वीपतिस्तथाविधो रामः संप्रति मर्कटमाश्रित इति शोचतीति मारुतिनोक्ते प्रभुणा रुदितम् । जीवतीत्युक्ते मारुतिरुपगूढ इत्युक्तिद्वयेऽपि रामस्य रोदनालिङ्गनोपवर्णनं पूर्वोक्ततत्तदभिप्रायद्वयेन' इति प्रश्नाप्रश्नसाधारणमर्थमुपवर्णयांचक्रुः । अत्रैव 'त्वामित्यस्य

विशेषणं दृष्टार्तिनशब्दहितं दृष्टा आर्तिर्येषां ते दृष्टार्तयस्तेषु न शब्दहितं किं त्वर्थहितमपि' इत्यपि वदन्ति ॥

अथ सीतामणिमाह—

**चिन्ताहअप्पहं मिव तं च करे खेअणीसहं व णिसण्णम् ।**
**वेणीवन्धणमइलं सोअकिलन्तं व से पणामेइ मणिम् ॥ ३९ ॥**

[चिन्ताहतप्रभमिव तं च करे खेदनिःसहमिव निषण्णम् ।
वेणीबन्धमलिनं शोकक्लाम्यन्तमिवास्य प्रणयति मणिम् ॥]

मारुतिरस्य रामस्य तं च मणिं प्रणयति । उपनीतवानित्यर्थः । किंभूतम् । वेणीबन्धने सति मलिनम् । पूर्वं प्रत्यहमेव चिकुरपरिष्कारसमये मार्जनादिनोज्ज्वलमासीत् । संप्रति तदभावाद्विरहिण्या वेणीबन्धः स्थिर इति भावः । मालिन्यमुत्प्रेक्षते—पुनः कीदृशमिव । शोकेन सीताविश्लेषदुःखेन क्लाम्यन्तमिव । अन्योऽपि विरहक्लान्तो वपुरपरिष्कारेण मालिन्यमासादयतीति भावः । मालिन्यहेतुकं तेजोविरहमप्युत्प्रेक्षते—राक्षसपरिवृता सीता संप्रति किं स्यादित्यादिकया चिन्तया हतप्रभमिव । पुनः कीदृशम् । हनुमतः करे निषण्णं स्थिरम् । स्थैर्यमुत्प्रेक्षते—खेदेन विदूरागमनश्रमेण निःसहमिव । तथा च करे कृत्वा दर्शयामासेति भावः ॥

अथ मणिग्रहणमाह—

**सो करअलञ्जलिगओ वाहत्थवअपहओसिहन्तमऊहो ।**
**णअणेहिँ दासरहिणा दिट्ठो पीओ णु पुच्छिओ णु पउत्तिम् ॥४०॥**

[स करतलाञ्जलिगतो बाष्पस्तबकप्रहतावसीदन्मयूखः ।
नयनाभ्यां दाशरथिना दृष्टः पीतो नु पृष्टो नु प्रवृत्तिम् ॥]

स मणिः करतलाद्धनूमत्कारात्स्वाञ्जलिगतो रामेण नयनाभ्यां दृष्टः । कीदृक् । आनन्दबाष्पस्तबकेन प्रहतोऽत एवावसीदत्किरणः । विच्छविरित्यर्थः । दर्शनमुत्प्रेक्षते—पीतो नु नयनयोर्निमेषराहित्येन मणेश्च सीतासंबन्धादतिप्रियत्वेन पीत इव । अञ्जलिगतबाष्पमग्नत्वेनादृश्यत्वात् । तदुक्तमञ्जलिगत इति । अन्यदप्यञ्जलिस्थं जलादि पीयत इति । नन्वन्तर्नयनरूपस्य पानस्य द्रवद्रव्यसाध्यत्वादत्र तदसंभव इत्यत आह—प्रवृत्तिं पृष्टो नु सीतोद्देशप्राप्तिजनितानन्दोत्फुल्लनयनत्वादिकया चेष्टया नियं तत्संनिहितत्वेन सीता क्वास्ति कीदृशीत्यादि वार्तां पृष्ट इव । तदुक्त-

मवसीदन्मयूख इति । अन्योऽपि केनचित्संगोप्यवृत्तं नयनादिचेष्टया पृष्टः स्वचेष्टयैव निवेदयति । प्रकृते किरणावसादरूपमालिन्येन सीताक्लेशमावेदयामासेवेत्यर्थः । नुशब्दो वितर्के ॥

अथ मणिशोचनमाह—

**सोअइ अ णं रहुवई विरलङ्गुलिगलिअकिरणधारावअरम् ।**
**वअणे विमलुज्जोअं दररोत्तूण सलिलञ्जलिं व णिमेन्तो ॥ ४१ ॥**

[शोचति चैनं रघुपतिर्विरलाङ्गुलिगलितकिरणधाराप्रकरम् ।
वदने विमलोद्द्योतं दररुदित्वा सलिलाञ्जलिमिव नियोजयन् ॥]

सीतामपहाय कुत्रागतः कीदृग्वा वृत्तोऽसीत्यादि क्रमेण रघुपतिरेनं मणिं शोचति च । कीदृशम् । विरलाङ्गुलिभ्यो गलितकिरणधारासमूहम् । विरहदौर्बल्यहेतुकाङ्गुलिसंधिभ्यो धाराकारकिरणनिर्गमादिति भावः । 'महापुरुषलक्षणमङ्गुलिसंधिः' इत्यपि कश्चित् । किं कुर्वन् । दरेत्यव्ययम् । ईषद्रुदित्वा विमलमुद्द्योतं मणितेजः प्रक्षालनसलिलाञ्जलिमिव वदने निवेशयन् । अन्योऽपि रुदित्वा मुखं प्रक्षालयति । 'बहुव्रीहिणा विमलोद्द्योतं मणिमेव मुखे नियोजयन् प्रियं वस्तु मुखादावर्ण्यते' इत्यपि कश्चित् । तथा च रामस्य वार्ताज्ञानानन्तरमध्यवसायेन रोदनशेषो वृत्त इति मुखक्षालनमिति भावः ॥

अथ रामावस्थामाह—

**तं दइआहिण्णाणं जम्मि वि अङ्गम्मि राहवेण ण णिमिअम् ।**
**सीआपरिमट्ठेण व वूढो तेण वि णिरन्तरं रोमञ्चो ॥ ४२ ॥**

[तद्दयिताभिज्ञानं यस्मिन्नप्यङ्गे राघवेण न नियोजितम् ।
सीतापरिमृष्टेनेव व्यूढस्तेनापि निरन्तरं रोमाञ्चः ॥]

अभिज्ञानं संदेशो मणिरूपः । दयितं प्रीतिपात्रम् । दयिताया इति वा । तद्राघवेण यस्मिन्नप्यङ्गेन न निवेशितं तेनाप्यङ्गेन सीतया परि सर्वतोभावेन मृष्टेनेव न तु स्पृष्टमात्रेण । निरन्तरं रोमाञ्चो व्यूढः । तथा च यथा सीतापरिमृष्टेनाङ्गेन रोमाञ्चो ध्रियते तथा मणिस्पृष्टेनाप्यङ्गेन विशेषतः ऊढः । सीतासंबन्धिमणिसंबन्धादिति भावः । तथा च नित्यसंनिहितसीतास्पर्शापेक्षया विरहकालीनसीतापरम्परासंबन्धोऽप्यधिक इति तात्पर्यम् ॥

अथ सीतापहारमूलकत्वेनाधिकबलमपि शृङ्गारमुपमृद्योत्पद्यमानं रामकोपमाह—

**बाहमइलं पि तो से दहमुहचिन्ताविअम्भमाणामरिसम् ।**
**जाअं दुक्खालोअं जरढाअन्तरविमण्डलं विअ वअणम् ॥ ४३ ॥**

[बाष्पमलिनमपि ततोऽस्य दशमुखचिन्ताविजृम्भमाणामर्षम् ।
जातं दुःखालोकं जरठायमानरविमण्डलमिव वदनम् ॥]

ततो मणिमर्षणानन्तरमस्य रामस्य बाष्पेण मलिनमपि वदनं दुःखालोकं दुःखेन दर्शनीयं जातम् । तत्र हेतुमाह—कीदृक् । दशमुखविषयिणी या वधादिचिन्ता तया विजृम्भमाणोऽमर्षो यत्र तत् । यथायथा चिन्तोदयस्तथा तथामर्षोदय इति भावः । तदभिव्यक्तिस्तु ताम्रत्वादिना । अत एव मलिनस्यापि दुःखालोकत्वम् । तथा च ताम्रत्वादिना मालिन्यमपहस्तितमेवेति भावः । अत एव जरठायमानं प्रौढं मध्याह्नकालीनं रविमण्डलमिवेत्युपमा तदपि दुर्निरीक्षमेवेति भावः ॥

अथ रामस्य धनुर्दर्शनमाह—

**तो से चिरमज्झत्थे कुविअकअन्तभुमआलआपडिरूए ।**
**दिट्ठी दिट्ठत्थामे कज्जधुरव्व णिअए धणुम्मि णिसण्णा ॥ ४४ ॥**

[ततोऽस्य चिरमध्यस्थे कुपितकृतान्तभ्रूलताप्रतिरूपे ।
दृष्टिर्दृष्टस्थाम्नि कार्यधुरेव निजके धनुषि निषण्णा ॥]

ततः क्रोधानन्तरमस्य दृष्टिर्निजे स्वायत्ते धनुषि निषण्णा । कीदृशे । वालिवधे दृष्टं स्थाम बलं दार्ढ्यं यस्य तस्मिन् । एवम्, चिरं व्याप्य मध्यस्थे उदासीने । कार्यानुद्युक्त इति यावत् । तथा च बहुदिनमारभ्य लब्धविश्राममसि वाली च त्वयैव हतस्तत्तदभिभूतो रावणस्ते कियानितीह निजस्य भवत एव प्रत्याशा ममेति रामेण धनुर्दृष्टमिति भावः । तथा च तदुक्तकार्यधुरेव दृष्टिर्नार्पिता किं तु रावणवधरूपस्य अकृतकार्यस्य भार एवार्पित इत्युत्प्रेक्षा । भारसमर्पणे हेतुमाह—कुपितस्य यमस्य भ्रूलतायाः प्रतिरूपे । प्रतिबिम्बस्य प्रकृतिसमानशीलत्वात् । यथा कुपितयमभ्रूविषयो न जीवति तथैव धनुर्विषयोऽपीति भावः । प्रतिरूपे सदृश इति वा । 'णिहुअकअन्त' इति पाठे निभृता निर्व्यापारेत्यर्थः । धनुरपि तदानीं निर्व्यापारमेवेति तात्पर्यम् ॥

तदेवाह—

**खणमूलाबद्धाए णिव्वण्णन्तमसिणं समारूढाए ।**
**सज्जीअं विअ जाअं अणोणमन्तं पि रामदिट्ठीअ धणुम् ॥ ४५ ॥**

[क्षणमूलाबद्धया निर्वर्ण्यमानमसृणं समारूढया ।
सजीवमिव जातमनवनतमपि रामदृष्ट्या धनुः ॥]

क्षणं व्याप्य मूलात्संबद्धया निर्वर्ण्यमाने सति धनुर्गुणकार्यविचारे सति मसृणं मन्दं यथा स्यादेवं परामटनिमारूढया रामदृष्ट्या धनुर्जीवा ज्या तत्सहितमिव कृतम् । कीदृक् । अनवनतनम्रमपि । अन्यत्र ज्यासमर्पणे धनुर्नम्रं भवति, प्रकृते धनुरनवनतमेव स्थितम् । दृष्टिः पतञ्जिका भूत् । तथा च मूलादग्रपर्यन्तं दृष्टमिति भावः । 'ज्या जीवा जीवनं जीवो जीवौ कर्णबृहस्पती' इति शाश्वतः । सज्जीवमिव सत्प्राणमिव । निधीयमानप्राणमिवेति यावत् । तथा च रामदृष्ट्या सप्राणीकृतं धनुरिति रामदृष्टिरेव धनुषः प्राणा इव लग्नास्तेन चेतनतुल्यरिपुहननादिव्यापारयोगित्वमस्य व्यज्यत इति वयम् ॥

अथ सुग्रीवहर्षमाह—

**सुग्गीअस्स वि हिअअं राहवसुकअपडिमोअणासत्तण्हम् ।**
**अगणिअदहमुहदप्पं णिव्वूढभरं व तक्खणं ऊससिअम् ॥ ४६ ॥**

[सुग्रीवस्यापि हृदयं राघवसुकृतप्रतिमोचनासतृष्णम् ।
अगणितदशमुखदर्पं निर्व्यूढभरमिव तत्क्षणमुच्छ्वसितम् ॥]

अपिना रामस्य हृदयमुच्छ्वसितमेव । सुग्रीवस्यापि हृदयं राघवस्य सुकृतमुपकारो वालिवधरूपस्तत्प्रतिमोचना तत्प्रत्युपकारः सीतोद्धाररूपस्तत्र सतृष्णं साकाङ्क्षं सन्निर्व्यूढो निष्पादितो रावणवधरूपो भरः कार्यगौरवं येन तादृशमिवोच्छ्वसितम् । रामप्रत्युपकारो दशमुखवधायत्तः । स चेषत्कर एवेत्यर्थः । अत्र हेतुः—अगणितो रावणदर्पो येन तथा । रावणस्य तद्भ्रातृकक्षानिक्षिप्तत्वादिति भावः । अन्यस्यापि गुरुद्रव्यभारापगमे उत्फुल्लतारूपः श्वासोद्गमरूपो वा उच्छ्वासो भवतीति ध्वनिः ॥

अथ रामस्य लङ्कागमनेच्छामाह—

चिन्तिअलद्धत्थं विअ भुमआविक्खेवसूइआमरिसरसम्।
गमणं राहवहिअए रक्खसजीविअहरं विसं व णिहित्तम् ॥४७॥
[चिन्तितलब्धार्थमिव भ्रूविक्षेपसूचितामर्षरसम्।
गमनं राघवहृदये राक्षसजीवितहरं विषमिव निहितम्॥]

राघवमनसि गमनं निहितं संबद्धम्। लङ्कागमनाभिमुखं राघवचित्तमासीदित्यर्थः। गमनं कीदृक्। भ्रूविक्षेपेण लङ्काभिमुखभ्रूसंचारेण सूचितोऽमर्षरसो यत्र तथा। तथा च रामस्य धीरोदात्तत्वाल्लङ्काभिमुखभ्रूविकारेणैवामर्षो ज्ञात इत्यर्थः। उत्प्रेक्षते—चिन्तितः सँल्लब्धोऽर्थः प्रकृतोपयुक्तो येन तादृशमिव। गमनेन चिन्तितं यदि हनूमानायास्यति तदा मया राघवमनसि संबद्धव्यमिति तस्मिन्नागते तत्र संबद्धमित्युत्प्रेक्षाशरीरम्। पुनः कीदृक्। राक्षसजीवितहरं विषमिव। यथा विषं प्राणापहारकं तथा राक्षसानां प्राणापहारकं तदेव गमनमासीत्। तेनैव ते मृता इति भावः॥

अथ रामस्य लक्ष्मणाद्यवलोकनमाह—

**सोह व्व लक्खणमुहं वणमालं व्व विअडं हरिवइस्स उरम्।**
**कित्ति व्व पवणतणअं आण व्व बलाइँ से विलग्गइ दिट्ठी ॥४८॥**
[शोभेव लक्ष्मणमुखं वनमालेव विकटं हरिपतेरुरः।
कीर्तिरिव पवनतनयमाज्ञेव बलान्यस्य विलगति दृष्टिः॥]

अयं बालो दुर्दमशत्रुसंमुखगमनाय सोत्साहो न वेति प्रथममतिसंनिहितसंबन्धिनः प्रियतमस्य लक्ष्मणस्य मुखमस्य रामस्य दृष्टिः शोभेव लग्ना। यथा शोभा लग्ना तथेत्यर्थः। तथा च लक्ष्मणमुखं तदानीमतिसश्रीकमासीदिति भावः। एवमचिरादेवामुष्योपकारः कृतः स तूरसि वर्तते न वेति निरूपणाय तत्पश्चादुदासीनप्रियतरस्य सुग्रीवस्य विकटं विस्तारशालिहृदयं यथा वनमाला लग्ना तथेयमपीत्यर्थः। रक्तनीलश्वेताकारत्वान्मालासाम्यम्। सुग्रीवस्य माला स्वाभाविकमलंकरणमिति प्रसिद्धिः। अयमिदानीमेव लङ्कातः समागतो राक्षसबलाबलज्ञो मद्गमने साध्यवसायो न वेति जिज्ञासया शरीरचेष्टया क्षोभाक्षोभनिरूपणाय तत्पश्चात्प्रियं पवनसुतं यथा समुद्रलङ्घनादि कीर्तिर्लग्ना तथेयमपि। एत एव संप्रति सहायास्तदमीषां चेष्टा कीदृशीति ततोऽपि पश्चात्परिवारतापन्नानि वानरबलानि। यथा तत्क्षण एव सुग्रीव-

द्वारा कृता लङ्कागमनाज्ञा लग्ना तथेयमपि दृष्टिर्लग्नेति सर्वत्र सहोपमा । तथा च रामेण सर्वेऽप्यालोकिता इत्यर्थः । वस्तुतस्तु पूर्वोक्ततत्तदभिप्रायेणैव । तत्र तत्र यथा शोभादिकं लगति तथा दृष्टिरपि लग्नेति सर्वत्र साधर्म्योपमा । परमार्थतस्तु पूर्वोक्ततत्तदभिप्रायेणैव तत्र तत्र लग्ना दृष्टिर्यथासंख्यं शोभादित्वेनोत्प्रेक्षिता । तथा हि प्रथमं लक्ष्मणमुखं रामदृष्टिः शोभेव लग्ना । दृष्टिरेव तत्र शोभाभूदित्यर्थः । एवं सुग्रीवहृदयं वनमालेव पवनतनयं कीर्तिरिवाज्ञेव बलानीत्युन्नयामः ॥

रामप्रयाणमाह—

**संखोहिअमहिवेढो तो सो कइसेण्णविलुलिअवणाहोओ ।**
**खुहिअसमुद्दाहिमुहो महणारम्भम्मि मन्दरो विअ चलिओ ॥४९॥**

[संक्षोभितमहीवेष्टस्ततः स कपिसैन्यविलुलितवनाभोगः ।
क्षुभितसमुद्राभिमुखो मथनारम्भे मन्दर इव चलितः ॥]

ततः स रामश्चलितः । कीदृक्सन् । क्षुभितो यः समुद्रस्तदभिमुखः सन् । तथा च रामे चलति कपिसैन्यचङ्क्रमेण परमार्थतो वृत्तः समुद्रक्षोभो भविष्यद्रामशरानलदाहसेतूपमर्दादिहेतुकत्वेनोत्प्रेक्षितः । क्षुभितपदेन इवार्थस्य गम्यमानत्वात् क इव । समुद्रमथनोपक्रमे मन्दरपर्वत इव । प्रकृतेऽपि समुद्रमथनोपक्रम एवायमिति भावः । रामः कीदृक् । संक्षोभितं चालितं महीवेष्टं येन । एवम्, कपिसैन्यद्वारा विलुलितो वनाभोगश्च येन । एतावता वानराणां संख्याबलोल्बणत्वप्रकर्षः सूचितः । तथा । मन्दरोऽप्युत्पाटनसमये क्षोभितभूवलयः स्वभावादेव सेनाकारस्थितकपिविलुलितवनाभोगो जलप्रवेशसमये क्षुभितसमुद्राभिमुखश्चेति साम्यम् ॥

अथ वानरबलसंचारमाह—

**चलिअं च वाणरबलं चलिए तम्मि चलकेसरसड्डुज्जोअम् ।**
**गहिअदिसापरिणाहं मऊहजालं व दिणअरस्स फुरन्तम् ॥ ५० ॥**

[चलितं च वानरबलं चलिते तस्मिंश्चलकेसरसटोद्द्योतम् ।
गृहीतदिक्परिणाहं मयूखजालमिव दिनकरस्य स्फुरत् ॥]

तस्मिन्रामे चलिते वानरबलं च चलितम् । कीदृक् । चलानां चञ्चलानां केसरसटानामुद्द्योतो यत्र । सूर्यकिरणसंबन्धादिति भावः । एवम्, गृहीता आक्रान्ता

दिशां परिणाहो येन तत्तथा । एवम्, स्फुरणमुत्साहावस्था तद्वत् । किमिव । दिनकरस्य मयूखजालमिव । तदपि सकलदिग्व्यापि स्फुरत्सच्चलति । तथा च यथा दिनकरकिरणानामुदयतामेव शैघ्र्यात्सकलदिग्व्यापकत्वं तथा कपीनां प्रस्थितानामेव तदासीदिति भावः । अत्र यद्यपि केसरशब्दस्यैव स्कन्धवालवाचकत्वमिति सटेत्यधिकं तथापि करिबृंहितादिपदवत्सार्थकत्वम् । वस्तुतस्तु किंचित्ताम्रत्वप्रतिपादनाय केसरवत्किञ्जल्कवत्सटेति व्युत्पत्तिमभिप्रेत्योक्तमिति सारम् ॥

अथ कपीनां वृद्धिमाह—

वेराराणिपज्जलिओ तो सो रोसपवणाहउद्धअमुहलो ।
वड्ढइ मग्गाणुगओ लङ्कावणराइवणदओ कइलोओ ॥ ५१ ॥

[वैरारणिप्रज्वलितस्ततः स रोषपवनाहतोद्धतमुखरः ।
वर्धते मार्गानुगतो लङ्कावनराजिवनदवः कपिलोकः ॥]

ततः स कपिलोको वर्धते । स्वं स्वमाकारं गृहीतवानित्यर्थः । कीदृक् । मार्गो रामस्य पश्चात्तमनुगतः । मार्गशब्दः पश्चादर्थे निपातितः । पुनः कीदृक् । लङ्केव वनराजिस्तस्या वनदवः कपिशत्वाद्दाहकत्वादिति रूपकम् । एवं वैरमेवारणिर्यज्ञकाष्ठं तया प्रज्वलितः । दीप्त इत्यर्थः । एवम्, रोष एव पवनस्तेनाहतः सन्नुद्धतो मुखरः शब्दायमानः । तथा च वैरेण प्रदीप्ताः क्रोधेन कृतकोलाहलाः कपयो रामपृष्ठलग्नाश्चेलुरिति भावः । वह्निरपि काष्ठसंबन्धात्प्रज्वलितो वायुसंबन्धादुद्धतं रसन्वर्धते गगनव्यापी च भवति ॥

अथ रामप्रस्थानावस्थामाह—

वच्चइ अ चडुलकेसरसडुज्जलालोअवाणरपरिक्खित्तो ।
सव्वदिसाआअड्ढिअपलअपलित्तगिरिसंकुलो व्व समुद्दो ॥५२॥

[व्रजति च चटुलकेसरसटोज्ज्वलालोकवानरपरिक्षिप्तः ।
सर्वदिगाकृष्टप्रलयप्रदीप्तगिरिसंकुल इव समुद्रः ॥]

व्रजति च राम इत्यर्थात् । किंभूतः । चटुलाः संचारे सति चञ्चला याः केसरसटास्तासामालोकस्तेजो यत्र तथाभूता ये वानरास्तैः परिक्षिप्तो वेष्टितः । संचारे सति रवितेजश्छटासंपर्कात्सटानामपि तेजोविशेषप्रतीतिरिति भावः । क इव । समुद्र इव । सोऽपि कीदृक् । सर्वदिग्भ्य आकृष्टाः प्रचण्डानिलेन वर्तुलीकृताः प्रलये दह्य-

माना ये गिरयस्तैः संकुलो व्याप्तः । तथा स्वभावतो निश्चल एव समुद्रः प्रलयवशान्मर्यादामतिक्रम्य जगदाक्रम्यति तथा धीरोऽपि रामो रावणप्रलयमिव कर्तुमुत्पथचरो निखिलमाचक्रामेति भावः । कपीनां पिङ्गलत्वात्कोपवशादुष्णत्वाच्च दह्यमानगिरिसाम्यम् । यद्वा समुद्रश्चलतीति योजनीयम् । कीदृक् । तथाभूतवानरवेष्टितः । तेषु चलत्सु भूमेरवनमनात्समुद्रस्योत्पथगामित्वेन तज्जलानामत्रैवागमनात्कपिवेष्टितत्वमिति भावः । एतदेवोत्प्रेक्षते—तथाभूतगिरिसंकुल इव । शेषं समानम् ॥

अथ रामस्य दिङ्मोहमाह—

घोलन्ति णिम्मलाओ फुरन्तदिअसअरपाअडिअरूआओ ।
दाविअमग्गम्मि वि से हिअए सोअन्धआरिअम्मि दिसाओ ५३

[घूर्णन्ते निर्मलाः स्फुरद्दिवसकरप्रकटितरूपाः ।
दर्शितमार्ग इव यस्य हृदये शोकान्धकारिते दिशः ॥]

यस्य रामस्य हृदये सीताविश्लेषजशोकरूपान्धकारविशिष्टे दिशो घूर्णन्ते इयं प्राचीयं प्रतीचीति स्थैर्यं न लभन्ते । भ्रमविषया भवन्तीति यावत् । किंभूता दिशः । निर्मला मेघाद्यच्छन्नाः । अत एव स्फुरता दिवसकरेण प्रकटितं व्यक्तीकृतं रूपं प्राचीप्रतीचीत्वनिर्णायकचिह्नं यासां ताः । हृदये कीदृशे । दर्शित उपन्यस्तः कपिभिरर्थात्पन्था यस्मै तथाभूते । तथा च सूर्यप्रकाशमार्गोपदर्शनादिप्रभासामग्रीसत्त्वेऽपि दिग्भ्रम इति शोकस्याधिक्यम् । विशेषोक्तिरलंकारः । तदुक्तम्—'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति । अन्योऽपि दर्शितवर्त्मन्यपि तिमिरे चलन्भ्राम्यतीति ध्वनिः ॥

अथ विन्ध्यप्राप्तिमाह—

आलोएइ अ विञ्झं धणुसंठाणस्स साअरस्स भरसहम् ।
संधिअणइसोत्तसरं अवहोवासघडिअं व जीआबन्धम् ॥ ५४ ॥

[आलोकते च विन्ध्यं धनुःसंस्थानस्य सागरस्य भरसहम् ।
संहितनदीस्रोतःशरमुभयावकाशघटितमिव जीवाबन्धम् ॥]

रामो धनुराकारस्य सागरस्य भरसहं कल्लोलतटपाताद्युपमर्दनीयं विन्ध्यं नाम पर्वतमालोकते च । कमिव । संहितो नदीस्रोतोरूपः शरो यत्र तथाभूतमुभयाव-

काशः प्रान्तभागद्वयमटनी तत्र घटितमारोपितं जीवाबन्धमिव । जीवा ज्या। तथा च चक्राकारः समुद्रो धनुः। ऋजुः पर्वतस्तत्प्रान्तद्वयलग्नः पतञ्जी। विन्ध्यमध्यान्निर्गम्य तत्र समुद्रे पतन्नदीप्रवाहः शर इति तात्पर्यम्॥

अथ वानराणामुल्बणत्वमाह—

मसिणिअसिहरुच्छङ्गो विहुअणिअम्बवणपाअडिअतुङ्गअडो।
विञ्झेण भरिअकुहरो हेलावाओ वि वाणराणँ ण सहिओ॥५५॥

[मसृणितशिखरोत्सङ्गो विधुतनितम्बवनप्रकटिततुङ्गतटः।
विन्ध्येन भृतकुहरो हेलापातोऽपि वानराणां न सोढः॥]

विन्ध्येन वानराणां हेलयाऽनास्थयापि पातो गमनम्, 'पत्लृ पतनगतौ' इति धात्वनुसारादुत्फालादवपतनं वा न सोढः। तदुपमर्दितोऽभवदित्यर्थः। तदेवाह—पातः कीदृक्। मसृणितो विलुलितः शिखरक्रोडो यस्मात्तादृक्। एवम्, विधुतैरुन्मूलितैर्नितम्बवनैः प्रकटितस्तुङ्गस्तटो यस्मात्। तथा च वनवृक्षाणामुन्मूलनेनावरकाभावात्तटतुङ्गिमा परं प्रकटोऽभूदिति भावः। पुनः कीदृक्। भृतं पूर्णमर्थात्कपिभिरेव कुहरं कंदरादिप्रदेशो येन तत्तथा। तथा च मूलमध्यशिरःप्रदेशावच्छेदेन कपिभिस्तथोपमर्दः कृतो यथा कियानप्यवकाशो न स्थित इति भावः। 'हेलावातो हेलया वातः पवनो जङ्घादिसमुत्थो न सोढः। तद्विशेषणं सर्वम्' इत्यपि कश्चित्॥

अथ सह्यगमनमाह—

पत्ता अ सीअराहअधाउसिलाअलणिसण्णराइअजलअम्।
सज्झं ओज्झरपहसिअदरिमुहणिक्कन्तबउलमइरामोअम्॥ ५६॥

[प्राप्ताश्च शीकराहतधातुशिलातलनिषण्णराजितजलदम्।
सह्यं निर्झरप्रहसितदरीमुखनिष्क्रान्तबकुलमदिरामोदम्॥]

ते सह्यं गिरिं प्राप्ताश्च। कीदृशम्। शीकरैराहतं यद्गैरिकादिशिलातलं तत्र निषण्णा अत एव राजिताः शोभिता रागप्राप्तत्वाज्जलदा यत्र तथाभूतम्। निजशीकरेण धातूनां पङ्कीभावात्तत्संबन्धेन मेघानां लौहित्यमिति भावः। एतावता उच्चत्वमुक्तम्। एवम्, निर्झर एव प्रहसितं यत्र तादृशी या दरी सैव मुखं तस्मान्निष्क्रान्तो बकुलमेव मदिरा तदामोदो यत्र तादृशम्, तथा च कंदरारूपमुखाद्वि-

क्षीरस्वरूपहास्योद्गमसमये बकुलपुष्परूपमदिराणामामोदो निर्याति निरन्तरमित्यर्थः । इति विकटोदरत्वमुक्तम् । अन्यस्यापि हास्यसमये मदिरामोदो निर्यातीति ध्वनिः ॥

अथ गिरिनदीलङ्घनमाह—

बोलन्ति अ पेच्छन्ता पडिमासंकन्तधवलघणसंघाए ।
फुडफडिअसिलासंकुलखलिओवरिपत्थिए विअ णइप्पवहे ॥५७॥

[व्यतिक्रामन्ति च पश्यन्तः प्रतिमासंक्रान्तधवलघनसंघातान् ।
स्फुटस्फटिकशिलासंकुलस्खलितोपरिप्रस्थितानिव नदीप्रवाहान् ॥]

ते नदीनां प्रवाहान्पश्यन्तः सन्तो व्यतिक्रामन्ति । उल्लङ्घन्त इत्यर्थः । किंभूतान् । प्रतिमया प्रतिबिम्बेन संक्रान्ता धवलघनानां संघाता यत्र तथाभूतानिति नदीनामच्छत्वमतिमहत्त्वं चोक्तम् । उत्प्रेक्षते—स्फुटा व्यक्ता या स्फटिकशिला तत्संकुले । स्फटिकभूमावित्यर्थः । तत्र स्खलितान् । अत एवोपरि प्रस्थितानिव । जलानां क्वचित्स्खलनादुपरि प्रस्थानं भवति । तथा च शुभ्रशारदजलदानां प्रतिबिम्बाज्जलं स्फटिकोपरि तिष्ठतीति प्रतिभाति । तत एवोक्तं पश्यन्त इति । कपीनामपि स्फटिकादिसंदेहादिति भावः ॥

अथ कपीनामुद्धतसंचारमाह—

तडपब्भारभरन्ता दलन्तपाआलगलिअजलपइरिक्का ।
आवाए च्चिअ जाआ पहअमहावहणिहा महाणइसोत्ता ॥ ५८ ॥

[तटप्राग्भारभ्रियमाणानि दलत्पातालगलितजलप्रतिरिक्तानि ।
आपात एव जातानि प्रहतमहापथनिभानि महानदीस्रोतांसि ॥]

महानदीनामपि स्रोतांसि अपात एव तदानीमेव प्रहतो जनसंचारघृष्टो यो महापथः प्रसारी पन्थास्तत्संनिभानि जातानि । कीदृशानि । तटयोः प्राग्भारैरेकदेशैर्भृतानि पूर्णानि । एवम्, दलत्पातालेषु गलितैर्जलैः प्रतिरिक्तानि तुच्छानि । तथा च जलानां दलत्पातालप्रविष्टत्वात्तटयोश्च पदाहत्या त्रुटित्वा खात एव निविष्टत्वात्सैन्यसंचारेण समीकृतत्वाच्च नित्यसंचरत्पथिकः पन्था इव नदीनां प्रवाहोऽभूदिति तात्पर्यम् । महापथशब्दस्य तु श्मशानवाचकत्वं न शङ्कनीयम् । प्रहतपदसंनिधानात् । नहि श्मशानं जनसंचारघृष्टं भवतीति भावः ॥

अथ मलयप्राप्तिमाह—

जलहरणिद्दाअन्तं पाअवगहणेसु सिसिरणिद्दाअन्तम् ।
सइ दुद्दिणसामलअं पत्ता भग्गधुअचन्दणरसा मलअम् ॥५९॥

[जलधरनिर्दावान्तं पादपगहनेषु शिशिरनिद्रायन्तम् ।
सदा दुर्दिनश्यामलतं प्राप्ता भग्नधुतचन्दनरसा मलयम् ॥]

ते मलयं प्राप्ताः । किंभूताः । भग्ना धुतस्य चन्द्रस्य रसा भूमियैस्ते । कपिभिः स्वभावाच्चन्दनान्दोलने कृते तत्तटभूमिभग्नेत्यर्थः । मलयं किंभूतम् । जलधरेण निर्दावोऽन्तः स्वरूपं यस्य तम् । नित्यं मेघाधिष्ठानात्तज्जलेन दावनाशादिति भावः । यद्वा जलगृहनिर्दावान्तं जलगृहेण समुद्रेण निर्दावोऽन्तः प्रान्तो यस्य समुद्रसंनिहितदेशस्य नित्यं जलसंबन्धेन नष्टदावकत्वात् । यद्वा पूर्वनिपातानियमेन निद्रायमाणजलधरं निद्रायमाणा जलधरा यत्र । महोच्चत्वेन जनसंचाराभावात् । अथवा जलधरनिद्रावन्तं जलधराणां निद्राविशिष्टम् । एवं च मलयं प्राप्ता इति समन्वये जलधरणिद्रावम् । जलविशिष्टा या धरणिस्तां द्रावयतीत्यर्थः । जलसंबन्धाद्धरण्या द्रवीभावादिति भावः । एवं जलगृहनिर्दायं जलगृहेण दायशून्यम् । समुद्रकल्लोलेन खनिस्थरत्नादीनामाकर्षणात् । एवं जलधरनिद्राकं जलगृहनिद्राकं वा तयोर्निद्रा यत्र तम् । अवष्टम्भभूतत्वात् । एवं निद्रातजलधरं निद्रातजलधरगृहं वा बहुव्रीहिः । जलधरनिर्दावं वा तृतीयातत्पुरुषः । एवं पादपगहनेषु शिशिरेण शैत्येन निद्रां कारयन्तम् । अर्थात्तत्रत्यजनान् । यद्वा शिशिरनिद्राकान्तम् । शिशिरेण निद्रया कान्तं शैत्यहेतुकनिद्राकारकत्वेन कमनीयमित्यर्थः । एवं सदा दुर्दिनेन मेघच्छन्नतया श्यामलता यत्र तम् । आतपाभावेन जलसंबन्धेन च लतानां श्यामत्वमित्यर्थः । यद्वा सदा दुर्दिनश्यामलकम् । स्वार्थे कन् । सदा दुर्दिनेन मेघच्छन्नत्वेन श्याममित्यर्थः । यद्वा सदा दुर्दिनेन श्यामलं कं जलं यत्र तत्तथा । यद्वा सदादुर्दिनसामलकम् । सदा दुर्दिनं यत्रेति बहुव्रीहिणा सदा दुर्दिनं च तत्सामलकमामलकवृक्षसहितं चेत्यर्थः । एवं सदादुर्दिनं च तच्छयामालयं श्यामानां नारीणामालयं च । श्यामा रात्रिस्तस्या लयो लीनता यत्र तमिति वा । सदा दुर्दिने कुञ्जमयप्रवेशे । दिनरात्रिविभागाभावादिति भावः । श्यामा सोमलता तदालयमिति वा । 'श्यामः स्यान्मेचके वृद्धदारके हरिते घने । श्यामा स्यादङ्गना रम्या तथा सोमलतौषधिः ॥' इति कोषः ॥

अथ चन्दनवृक्षालोकनमाह—

चन्दणपाअवलग्गे खुडिउव्वेल्लिअलआपरिमलच्छाए ।
संदाणिअणिम्मोए पेच्छन्ति महाभुअङ्गवेढणमग्गे ॥ ६० ॥

[चन्दनपादपलग्नान्खण्डितोद्वेल्लितलतापरिमलच्छायान् ।
संदानितनिर्मोकान्पश्यन्ति महाभुजंगवेष्टनमार्गान् ॥]

ते चन्दनवृक्षसंबद्धान्महाभुजंगानां वेष्टनस्य मार्गान्वलयाकारस्थितिर्येन यथा-सीत्ताञ्चित्यं सर्वसंबन्धाच्चिन्नीभूय स्थितान्पश्यन्ति । किंभूतान् । संदानितो मिश्रितो निर्मोको यत्र । लग्नकञ्चुकानित्यर्थः । कपिसंक्षोभेण सर्पाणां पलायितत्वान्निर्मोकोऽत्रैव स्थित इति भावः । अहो एतादृशाः सर्पा इह स्थिता इत्याश्चर्येण पश्यन्तीति तात्पर्यम् । पुनः किंभूतान् । खण्डिता अथोद्वेल्लिता उद्घाटिता । स्फोटितेति यावत् । एवंभूता या लता तस्याः परिमलो विमर्दस्तच्छायान् । तदाकृतीनित्यर्थः । वृक्ष-संबद्धलतोद्घाटनानन्तरं यथा तच्चिह्नं निम्नं वलयाकृति जायते तथेदमपीत्यर्थः । तथा चेदृगगम्यस्थानं कपिभिराक्रान्तमिति भावः ॥

अथ गिरिनदीप्रवेशमाह—

सेवन्ति तीरवड्ढिअणिअअभरोव्वत्तचन्दणलआलिद्धे ।
रम्मत्तणदिप्पवहे वणगअदानकडुए गिरिणईप्पवहे ॥ ६१ ॥

[सेवन्ते तीरवर्धितनिजकभरापवृत्तचन्दनलतालीढान् ।
रम्यतृणदीप्रपथान्वनगजदानकटून्गिरिनदीप्रवाहान् ॥]

ते गिरिनदीप्रवाहान्सेवन्ते । दर्शनस्पर्शनमज्जनादिभिरित्यर्थः । 'शसए' इत्ये-कारादेशेन 'गिरिणइप्पवहे' इति द्वितीयाबहुवचनम् । किंभूतान् । तीरे वर्धिता अत एव निजकभरेणैवापवृत्ता विपरीत्य स्थिता याश्चन्दनलतास्ताभिराश्लिष्टानिति चन्दनसंबन्धात्सुरभितया पेयजलत्वमुक्तम् । एवं जलसंबन्धाद्रम्याणि तटयोर्यानि तृणानि तैर्दीप्रो दूरदृश्यः पन्था निःसरणमार्गो येषां तान् । हरिद्वर्णतृणरेखोभयतटो-द्भूतैर्दूरत एव ज्ञायते प्रवाहपथोऽयमिति भावः । तथा वनगजदानजलेन कटून् । एतावता तत्संबन्धेन स्वादस्य हृद्यत्वमुक्तम् ॥

अथ स्कन्धकचतुष्टयेन समुद्रतीरप्राप्तिमाह—

तो तरुणसिप्पिसंपुडदरदाविअजलणिहित्तमुत्तावअरम् ।
पत्ता पत्तलवउलं गअदाणसुअन्धिरअणवेलं वेलम् ॥ ६२ ॥

[ततस्तरुणशुक्तिसंपुटदरदर्शितजलनिहितमुक्ताप्रकराम् ।
प्राप्ता पत्रलबकुलां गजदानसुगन्धिरजोनवैलां वेलाम् ॥]

ततस्ते वेलां समुद्रस्य तीरं प्राप्ताः । कीदृशीम् । तरुणेषु भिदेलिमेषु शुक्तिसंपुटेषु दरदर्शितः किंचित्प्रकाशितो जलनिहितो जलस्थितो मुक्ताप्रकरो यत्र ताम् । भिदुरशुक्तिनिर्गत्वरीणां मुक्तानां तीरजलेषु किंचिद्व्यक्तीभूय स्थितत्वादित्यर्थः । एवं पत्रला बहुलपत्रयुक्ता बकुलवृक्षा यत्र ताम् । पुनः कीदृशीम् । गजानां दानं मदस्तद्वत्सुगन्धि रजः परागो यस्या एतादृशी नवा एला यत्र तादृशीम् । एतेन सैनिकान्प्रति हृद्यत्वमुक्तमिति भावः ॥

अथ स्कन्धकत्रयेण वेलामेव वर्णयति—

विअसिअतमालणीलं पुणो पुणो चलतरङ्गकरपरिमट्ठम् ।
फुल्लेलावणसुरहिं उअहिगइन्दस्स दाणलेहं व ठिअम् ॥ ६३ ॥

[विकसिततमालनीलां पुनः पुनश्चलतरङ्गकरपरिमृष्टाम् ।
फुल्लैलावनसुरभिमुदधिगजेन्द्रस्य दानलेखामिव स्थिताम् ॥]

पुनः कीदृशीम् । उदधिरेव गजेन्द्र इति रूपकम् । तस्य दानलेखामिव मदधारामिव स्थितामित्युत्प्रेक्षा । मदलेखातौल्यमाह—पुनः कीदृशीम् । विकसितं यत्तमालपुष्पं तेन नीलाम् । तमालस्य श्यामत्वात् । एवं वारंवारं चञ्चलकल्लोलरूपेण करेण परिमृष्टाम् । भूयोभूयस्तरङ्गसंबन्धात् । एवं फुल्लं यदेलावनं तेन सुरभिम् । मदलेखापि तमालवच्छ्यामा चञ्चलतरङ्गवद्यः करः शुण्डा तया परामृष्टा फुल्लैलावनवत्सुरभिश्च भवतीत्यर्थः ॥

फेणविसमङ्गराअं विद्दुमदन्तव्वणाणिअमुहच्छाअम् ।
मलिअवणकेसकुसुमं परिहुत्तसमुद्दपरिमलं व वहन्तिम् ॥ ६४ ॥

[फेनविषमाङ्गरागां विद्रुमदन्तव्रणानीतमुखच्छायाम् ।
मृदितवनकेशकुसुमां परिभुक्तसमुद्रपरिमलमिव वहन्तीम् ॥]

एवं परिभुक्त उपभुक्तो यः समुद्रस्तस्य परिमलः संभोगरूपसंबन्धस्य चिह्नं तदिव धारयन्तीम् । तच्चिह्नमेवाह—कीदृशीम् । फेन एव विषमः परिरम्भणादिना क्वचित्क्वचिद्विलुलितोऽङ्गरागो यस्यास्ताम् । एवं विद्रुम एव दन्तव्रणः । लोहितत्वात् । तेनानीता प्रापितातीव प्रौढा वा मुखे नदीप्रवेशस्थाने छाया कान्तिर्यस्यास्ताम् । नदीसमुद्रयोः संघट्टेन विद्रुमाणां प्रकटत्वादिति भावः । एवं च मृदितानि वनान्येव केशास्तेषां कुसुमानि यत्र । तथा च समासोक्त्या समुद्रस्य नायकत्वं वेलायाश्च नायिकात्वं प्रतीयते । सापि नायकोपमर्देन क्वचित्क्वचिद्विषमितफेनतुल्यचन्दनाद्यङ्गरागा विद्रुमप्रायरक्तदन्तक्षतानीताननकान्तिः कराकर्षणादिना मृदितकेशकुसुमा च भवतीति साम्यम् ॥

सिप्पिउडमउलिअच्छिं लआहरब्भन्तरेसु परिवड्ढन्तम् ।
अणुराअपरिट्ठविअं आअण्णन्तिं व किंणरुग्गीअरवम् ॥ ६५ ॥

इअ सिरिपवरसेणविरइए दसमुहवहे महाकव्वे
पढमो आसासओ समत्तो ।

[शुक्तिपुटमुकुलिताक्षीं लतागृहाभ्यन्तरेषु परिवर्धमानम् ।
अनुरागपरिस्थापितमाकर्णयन्तीमिव किंनरोद्गीतरवम् ॥]

इति श्रीप्रवरसेनविरचिते दशमुखवधे महाकाव्ये प्रथम आश्वासकः समाप्तः ।

किंनराणामुद्गीतरूपं रवमाकर्णयन्तीमिव । पुनः कीदृशीम् । शुक्तिपुट एव मुकुलितमक्षि यस्यास्ताम् । पूर्वोक्तभिदुरशुक्तिपुटानां मुकुलितनयनतुल्यत्वादित्यर्थः । गीतरवं कीदृशम् । लतागृहाणामभ्यन्तरेषु परिवर्धमानम् । प्रतिशब्दोपचयादिति भावः । एवमनु रागं प्रति नाटकार्णोटादिरागं परि सर्वतोभावेन स्थापितं मूर्च्छनां प्रापितम् । अनुरागेण गीतप्रीत्या वा परिस्थापितं यथोचितश्रुतिग्रामादिषु प्रापितम् । अन्योऽपि गीतश्रवणकाले मुकुलितचक्षुर्भवतीति ध्वनिः । अथ चानुरागपदचिह्नितत्वादाश्वासकविच्छित्तिरप्युक्ता ॥

रामप्रस्थानदशया[१] रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णाभूत्प्रथमा शिखा ॥

१. दशा दीपवर्तिरपि.

## द्वितीय आश्वासः ।

अथ षट्त्रिंशता स्कन्धकैरादिकुलकेन समुद्रमाह—

अह पेच्छइ रहुतणओ चडुलं दोससअदुक्खबोलेअव्वम् ।
अमअरससारगरुअं कज्जारम्भस्स जोव्वणं व समुद्दम् ॥ १ ॥
[अथ पश्यति रघुतनयश्चटुलं दोषशतदुःखव्यतिक्रमणीयम् ।
अमृतरससारगुरुकं कार्यारम्भस्य यौवनमिव समुद्रम् ॥]

अथ वेलाप्राप्त्युत्तरं रघुतनयो रामः समुद्रं पश्यति । कीदृशम् । चटुलं चञ्चलम् । एवं दोषो मकरकल्लोलादिस्तद्बाहुल्येन दुःखलङ्घनीयम् । शतशब्दस्याधिक्यार्थत्वात् । दोःशतदुःखव्यतिक्रमणीयं वा । दोःशतेन बाहुशतेनापि दुर्लङ्घ्यमित्यर्थः । एवममृतरसेन सारेण रत्नादिना च गुरुकं गौरवयुक्तम् । यद्वाऽमृतरस एव सारो धनं तेन गुरुकमतिशयितम् । उत्प्रेक्षते—किमिव । कार्यारम्भस्यारभ्यमाणकार्यस्य । कृदभिहित इति न्यायात् । यौवनं मध्यभागमिव । कार्ये आद्यन्तभागौ सुकरौ मध्यभागस्य परं दुष्करत्वमित्यर्थः । तदपि दोषशतेन विघ्नशतेन दुःखनिष्पादनीयम् । एवममृतरसप्रायं यत्सारं फलभागस्तेन गुरुकमादरणीयमिति साम्यम् । आश्चर्यरूपत्वमग्रिमकार्यप्रत्यूहत्वेन पारावारजिज्ञासा च दर्शने तात्पर्यम् ॥

गअणस्स व पडिबिम्बं धरणीअ व णिग्गमं दिसाण व णिलअम् ।
भुअणस्स व मणितडिमं पलअस्स व सावसेसजलविच्छड्डम् ॥२॥
[गगनस्येव प्रतिबिम्बं धरण्या इव निर्गमं दिशामिव निलयम् ।
भुवनस्येव मणितडिमं प्रलयस्येव सावशेषजलविच्छर्दम् ॥]

पुनः कीदृशम् । गगनस्य प्रतिबिम्बमिव । एतेन प्रतिबिम्बस्य प्रकृतिसमानाकारत्वादाकाशतौल्यम् । धरण्या निर्गममिव । निर्गम्यतेऽनेनेति निर्गमो द्वारम् । येन धरणी निर्गता । तथा च निर्गमखातत्वेन गाम्भीर्यं भूम्यधिकपरिमाणवत्त्वं च । दिशां निलयो गृहमिव । तथा च दिगपेक्षयाप्यतिव्यापकत्वम् । भुवनस्य मणिघटितभित्तिमिव । तडिममवच्छेदकभित्तिभागः । तथा च स्वभावान्मर्त्यपातालव्यापिनोऽपि कल्लोलद्वारा गगनव्यापकत्वं चतुर्दिगवस्थितस्य क्रोडीकृतत्रिभुवनत्वं च । 'तडिमं कुट्टिममिवेति त्रिभुवनाश्रयप्राङ्गणत्वम्' इति क्वचित् । प्रलयस्य साव-

शेषजलविच्छर्दमिव । विच्छर्दः समूहः । तावता विश्वप्लावकत्वं समुद्रस्य प्रतीयते । सर्वत्रोत्प्रेक्षा 'तद्धिमं कुट्टिमे भित्तौ' इति कोषः ॥

भमिरुब्भडकल्लोलं थोरकराहअदिसामुहोत्थअसलिलम् ।
सासअमएण बहुसो खोहिज्जन्तं दिसागएण व ससिणा ॥ ३ ॥

[भ्रमणशीलोद्भटकल्लोलं स्थूलकराहतदिङ्मुखावस्तृतसलिलम् ।
स्वाश्रयमृगेण(पक्षे—शाश्वतमदेन)बहुशः क्षोभ्यमाणं दिग्गजेनेव शशिना]

पुनः कीदृशम् । स्वमाश्रयो यस्य स स्वाश्रयस्तादृशो मृगो यस्य तेन शशिना बहुशः क्षोभ्यमाणम् । चन्द्रोदयेन तरङ्गोत्थानात् । केनेव । दिग्गजेनेव । यथा दिग्गजेन श्वेतत्वादैरावतेन बहुधा क्षोभ्यते । दिग्गजेन कीदृशेन । शाश्वतः सार्वदिको मदो यस्य तेन । एवं भ्रमणशीला आवर्तीभूता उद्भटाः कल्लोला यस्य तम् । एवं स्थूलो विस्तीर्णः करः किरणस्तेनाहृतानि स्पृष्टानि अत एव दिङ्मुखेष्ववस्तृतानि सलिलानि यस्य तम् । चन्द्रोदयेन सावर्तगगनदिग्व्यापिजलशालित्वादित्यर्थः । गजपक्षे करः शुण्डा तयाहतानि ताडितानीति व्याख्येयम् । अन्यत्तुल्यम् । शुण्डाहतजलानां भ्रमणशीलत्वाद्दिग्गामित्वाच्चेति भावः ॥

कल्लोलानाह—

अप्फुण्णविद्दुमवणे गुप्पन्तपढित्थिरे सलिलकल्लोले ।
मन्दरगूढप्पहरे अज्ज वि संखाअलोहिए व्व वहन्तम् ॥ ४ ॥

[आक्रान्तविद्रुमवनान्व्याकुलपरिस्थिरान्सलिलकल्लोलान् ।
मन्दरगूढप्रहारानद्यापि संस्त्यानलोहितानिव वहन्तम् ॥]

एवं सलिलकल्लोलान्वहन्तम् । कीदृशान् । आक्रान्तमाक्रुष्टमाच्छादितं वा विद्रुमवनं यैस्तान् । एवं व्याकुलानितस्ततोवर्तिनः सतः परिस्थिरान् । कदाचित्स्थिरतया भासमानानित्यर्थः । उत्प्रेक्षते—कानिव । अद्यापि संस्त्यानं विष्टब्धं लोहितं रुधिरं यत्र तान् । मन्दरस्य गूढानभ्यन्तरवर्तिनः प्रहारानिव । प्रहारस्तत्स्थानम् । तथा च लौहित्येन विद्रुमवनस्य रुधिरेणोच्छूनतया प्रसारितया च प्रहारस्थानस्य कल्लोलेन साम्यम् । व्याकुले पुरुषे परिस्थिरानित्यत्राप्यभ्यन्तरप्रहारे शोणितं वर्तुलीभूय तिष्ठतीति स्वभावः ॥

अथ नदीजलप्रवेशमाह—

मुहलघणविप्पइण्णं जलणिवहं भरिअसअलणहमहिविवरम् ।
णइमुहपल्हत्थन्तं अप्पाण विणिग्गअं जसं व पिअन्तम् ॥ ५ ॥

[मुखरघनविप्रकीर्णं जलनिवहं भृतसकलनभोमहीविवरम् ।
नदीमुखपर्यस्यन्तमात्मनो विनिर्गतं यश इव पिबन्तम् ॥]

आत्मनो विनिर्गतं बहिर्भूतं जलसमूहं पिबन्तं क्रोडीकुर्वन्तम् । आत्मनिर्गतं पयः स्वेदप्रायमपेयमपीत्यपेरर्थः । यद्वा आत्मनिर्गतमपि पातालजलं पिबन्तमित्यपिना सूचितमनुक्तम् । तथा च सकलजलविश्रामभूमिमिति भावः । तदुक्तम्—'पयसामर्णव इव' इति । जलनिवहं किंभूतम् । मुखराः शब्दायमाना ये घना मेघास्तैर्विप्रकीर्णमितस्ततो विक्षिप्तम् । अत एव भृते व्याप्ते महीनभोविवरे येन । वृष्टिकाले भूम्याकाशव्यापनादित्यर्थः । एवं नदीमुखेन नदीप्रवेशस्थानेन पर्यस्यन्तमितस्ततो गच्छन्तम् । समुद्रतरङ्गाभिघातादिति भावः । अथ च समासोक्त्या समुद्रस्य नायकत्वं नदीनां च नायिकात्वं प्रतीयते । यथा ह्यन्योऽपि नायको नायिकामुखेन विक्षिप्यमाणमात्मन एव निर्गतं जलं मधु तन्निवहं पिबति । तदपि मुखरेण रतिकालीनशब्दं कुर्वता नायकेनैव विप्रकीर्णं भवति । एवं पानकाले स्खलनाद्भूम्याकाशव्यापि च । तथा च यथा नायको नायिकामुखे गण्डूषितं मधु दत्त्वा पुनस्तया दीयमानं पिबति तथा समुद्रोऽपि मेघद्वारा नदीमुखे समर्पितं निजं पयस्तैनैव प्रत्यर्प्यमाणं पुनर्गृह्णातीत्यर्थः । तथा च जलव्ययलाभयोरपि ह्रासवृद्धिशून्यत्वमस्येति ध्वनितम् । उत्प्रेक्षते—जलनिवहं किमिव । यश इव । समुद्रस्यैवेदं जलमिति कीर्तिरूपमिव । अन्योऽपि यशः पिबत्यास्वादयति । कीदृशम् । मुखरा मागधास्तैर्विप्रकीर्णमितस्ततः प्रकाशितम् । एवं व्याप्ताकाशमहीपातालम् । विवरं पातालम् । एवं नतिमुखेन याचकेन पर्यस्यद्दिशि दिशि गच्छत् । अथ चात्मन एव निर्गतम् । स्वयशः स्वस्मादेव निर्गच्छतीति भावः ॥

अथ सदा शोभासंबन्धमाह—

जोह्णाए व्व मिअङ्कं कित्तीअ व सुउरिसं पहाए व्व रविम् ।
सेलं महाणईअ व सिरीअ चिरणिग्गआइ वि अमुच्चन्तम् ॥६॥

[ज्योत्स्नयेव मृगाङ्कं कीर्त्येव सुपुरुषं प्रभयेव रविम् ।
शैलं महानद्येव श्रिया चिरनिर्गतयाप्यमुच्यमानम् ॥]

अपिर्विरोधाभाससूचनाय । तथा च लक्ष्म्याश्चिरनिर्गतत्वादसंबन्धेन प्रसज्यमानो विरोधः श्रीशब्दश्लेषेण शोभया अमुच्यमानत्वेन परिह्रियते । यद्वा चिरं निर्गतया बहिर्भूतया कान्त्या अमुच्यमानम् । उभयपक्षेऽपि सश्रीकमित्यर्थः । उभयसाधारणीमुपमामाह—कया कमिव । ज्योत्स्नया मृगाङ्कमिव । कीर्त्या सुपुरुषमिव । प्रभया रविमिव । महानद्या शैलमिव । तथा च यथा ज्योत्स्नाकीर्तिप्रभामहानदीभिस्ततस्ततश्चिरं निर्गताभिरपि मृगाङ्कसुपुरुषरविशैला न परित्यज्यन्ते मूलेऽविच्छेदात्तथा शोभया समुद्रोऽपीति भावः ॥

अथ वडवानलमाह—

कालन्तरजीअहरं गओणिअत्तन्तपवणरअघट्टिज्जन्तम् ।
सल्लं व देहलग्गं विअडं वडवामुहाणलं वहमाणम् ॥ ७ ॥

[कालान्तरजीवहरं गतापनिवर्तमानपवनरयघट्ट्यमानम् ।
शल्यमिव देहलग्नं विकटं वडवामुखानलं वहमानम् ॥]

पुनः किंभूतम् । विकटं वडवामुखानलं वहमानम् । मुखानलं कीदृशम् । देहे लग्नम् । अन्तःस्थितमित्यर्थः । पुनः कीदृशम् । कालान्तरे प्रलये जीवो जलं तस्य संहारकम् । प्रलये समुद्रजलं वाडवेन धक्ष्यत इति पुराणवार्ता । एवं गतप्रत्यागतस्य पवनस्य रयेण घट्यमानं संबध्यमानम् । प्रलयवायुना वडवानलस्योद्दीपनमित्यर्थः । उत्प्रेक्षते—वडवानलं किमिव । शल्यमिव । यथा देहान्तर्लग्नं (शल्यं) कालान्तरे कतिपयसमयमपेक्ष्य प्राणहरम् । गतप्रत्यागतश्वासरूपपवनवेगेन घट्यमानं चाल्यमानं विकटं कर्णिकादिविशिष्टं च शल्यं शरफलादिरूपं ध्रियते तथा वाडवोऽपि दुःखदत्वादित्यर्थः ॥

भूम्युपमर्दकत्वमाह—

धुअवणराइकरअलं मलअमहिन्दत्थणोरसोल्लणसुहिअम् ।
वेलालिङ्गनमुक्कं छिविओसरिएहि वेलवन्तं व महिम् ॥ ८ ॥

[धुतवनराजिकरतलां मलयमहेन्द्रस्तनोरआर्द्रीकरणसुखिताम्
(पक्षे—सुहिताम्) ।
वेलालिङ्गनमुक्तां स्पृष्टापसृतकैर्वेपयन्तमिव (पक्षे—व्याकुलयन्तमिव)
महीम् ॥]

स्पृष्टं स्पर्शः । अपसृतं स्पर्शान्तरमपसरणमस्पर्शः । प्रशंसायां कन् । तेन प्रौढैः स्पृष्टापसृतकव्यापारैर्वेला समुद्रतीरं तदवच्छेदेनालिङ्गने सति मुक्तां त्यक्तां महीं कम्पयन्तम् । तथा च तरङ्गगतागताभ्यां स्पृष्टे सति वेलावच्छेदेनालिङ्गनमपसृते सति विमुक्तिर्मह्या इत्यर्थः । तेन भूम्यान्दोलनक्षमतरङ्गमहत्त्वेन सिन्धोरधिकपरिमाणवत्त्वमुक्तम् । एवं समासोक्त्या समुद्रस्य नायकत्वं भूमेर्नायिकात्वं च लभ्यते । नायिकापि नायकेन स्पृष्टापसृतकैरालिङ्गनविशेषव्यापारैर्वेलायां सुरतसमये आलिङ्ग्यालिङ्ग्य रभसेन मुच्यमाना व्याकुलतामाप्नोतीति ध्वनिः । किंभूतां महीम् । धुतं स्वकम्पेन कम्पितं वनराजिरूपं करतलं यया ताम् । एवं मलयमहेन्द्रावेव स्तनौ यत्र तादृशं यदुरः स्वमध्यदेशस्तरङ्गेण तदार्द्रीकरणेन सुखितां शैत्यमासादयन्तीम् । नायिकापि नायकालिङ्गने हावेन विधुतपाणिः स्वेदेनार्द्रितमलयमहेन्द्रप्रायस्तनहृदया सौहित्यमाप्नोतीति साम्यम् ॥

धैर्यमाह—

ठाणे वि ठिइपहुत्तं पलए महिमण्डलम्मि वि अमाअन्तम् ।
पणअन्तवामणतणुं कमन्तदेहभरभरिअलोअं व हरिम् ॥ ९ ॥

[स्थानेऽपि स्थितिप्रभूतं प्रलये महीमण्डलेऽप्यमान्तम् ।
प्रणयद्वामनतनुं क्रममाणदेहभरभृतलोकमिव हरिम् ॥]

स्थाने खातेऽपि स्थित्या मर्यादया प्रभूतं मान्तम् । प्रलये महीमण्डलेऽप्यमान्तमुद्वृत्तजलम । त्रिजगत्प्लावकत्वादित्यर्थः । कमिव । प्रणयन्ती बलिं याचमाना वामनरूपा तनुर्यस्य तम् । क्रममाणं पादविक्षेपशालि यद्देहं तस्य भरेण प्राचुर्येण भृता व्याप्ता लोका भुवनानि येन तथाविधं च हरिमिव । तथा च यथा हरिर्बलिहरणे कार्यवशाद्वामनीं तनुमास्थाय क्रमेण त्रैलोक्यमाचक्राम तथायमपि मर्यादया प्रवाहप्रभूतः काले स्वां त्रैलोक्यप्लाविनीं मूर्तिमादास्यत इति भावः । वामनः पादविक्षेपेण ब्रह्माण्डमस्फोटयदिति पुराणवार्ता ॥

अथ लोकोत्तरत्वमाह—

दीसन्तं अहिरामं सुव्वन्तं पि अविइह्णसोअव्वगुणम् ।
सुकअस्स व परिणामं उअहुज्जन्तं पि सासअसुहप्फलअम् ॥१०

[दृश्यमानमभिरामं श्रूयमाणमप्यवितृष्णश्रोतव्यगुणम् ।
सुकृतस्येव परिणाममुपभुज्यमानमपि स्वाश्रयशुभ-
(पक्षे—शाश्वतसुख) फलदम् ॥]

दृग्विषयः सन्पोतमकरकम्बुकल्लोलादिभिरतिरमणीयः । श्रुतिविषयः सन्नवितृष्णं श्रोतव्या बृहत्त्वसूचकाः पूर्वोक्ता एव गुणा यस्य तादृक् । तथा स्नानपानावगाहनादिभिरुपभुज्यमानः सन्स्वमाश्रयो यस्य तादृक् शुभं श्वेतं फलं मुक्तादि तद्दाता यस्त-मित्यर्थः । उत्प्रेक्षते—कमिव । सुकृतस्य पुण्यस्य परिणाममन्त्यभागमिव । सोऽपि करितुरगादिसमृद्धिद्वारा दृश्यमानो रमणीयः षष्ठिवर्षावच्छिन्नफलजनकत्वेन श्रूयमाणः सन्सश्लाघश्रोतव्यतथाविधस्वर्गादिगुणः । एवमुपभोगविषयीक्रियमाणः सञ्शाश्वतं सार्वदिकं सुखस्वरूपं यत्फलं तत्प्रद इत्यर्थः । सुकृतपरिणामेनैव समुद्र-दर्शनं भवतीति भावः ॥

अथ नानागुणानाह—

**उक्खअदुमं व सेलं हिमहअकमलाअरं व लच्छिविमुक्कम् ।**
**पीअमइरं व चसअं बहुलपओसं व मुद्धचन्दविरहिअम् ॥११॥**

[उत्खातद्रुममिव शैलं हिमहतकमलाकरमिव लक्ष्मीविमुक्तम् ।
पीतमदिरमिव चषकं बहुलप्रदोषमिव मुग्धचन्द्रविरहितम् ॥]

उत्खात उत्पाटितो द्रुमो यस्य तं शैलमिव । शैले सामान्यद्रुमस्योच्छेदादितः पारिजातस्याकर्षणात् । हिमेन हतानां कमलानामाकरः सर इव लक्ष्म्या विमुक्तं त्यक्तम् । लक्ष्मीपदस्य श्लिष्टत्वेन सरसि शोभाया विगमादितस्तु हरिप्रियाया उद्धृ-तत्वात् । पीता मदिरा यस्य तादृशं चषकमिव । मदिराशून्यमित्यर्थः । चषके मदिरायाः पीतत्वादितस्तूद्धारात् । बहुलः कृष्णपक्षस्तत्प्रदोषमिव मुग्धचन्द्रेण विर-हितं शून्यम् । तत्संध्याकाले मनोहरचन्द्रानुदयादितस्तु बालचन्द्रस्योत्थापनात्तु-ल्यत्वम् । तथा च पारिजातादीनामुत्पत्तिस्थानमित्यर्थः । केचित्तूद्धृतसारत्वं दोष-मुद्भाव्य प्रकारान्तरेण व्याचक्षते । तथा हि—

[उत्खातद्रुमं वशेलं हिमहयकमलाकरं बलच्छिद्विमुक्तम् ।
पीतमदिरं वचाशयं बहुलप्रदोषं वमुग्धचन्द्रविरहितम् ॥]

उत्खाता द्रुमा यस्मात्तम् । वशा आयत्ता इला पृथिवी यस्य तम् । ससुद्रावृत-त्वात् हिमं चन्दनं श्रीखण्डम्, हय उच्चैःश्रवाः, कमला लक्ष्मीस्तेषामाकरम् । बलं सामर्थ्यं छिनत्तीति बलच्छिद्विषं तेन विमुक्तम् । कालकूटस्योद्धारात् । पीता मदिरा यस्य तम् । वचा पृथिवी तत्र शेते यस्तम् । बहुलाः प्रकृष्टा दोषा ग्राहादयो यत्र तम् । इत्थमुत्कर्षरूपमेवेति भावः । वकारो वरुणः स एव मुग्ध-

चन्द्रस्तेन विरहितं विशिष्टम्। विशब्दयोरहितशब्दयोरभाववाचकत्वेन निषेधद्वयस्य प्रकृतार्थगमकत्वादित्यर्थः। 'हिमश्चन्द्रे तुषारे च चन्दनेऽपि हिमं मतम्'। एवं 'पृथिवी स्यादिला वचा'॥

अथ रत्नान्याह—

णिप्फण्णसुहालोअं विमलजलब्भन्तरट्ठिअं वहमाणम्।
दरकड्ढिअं व रइणा करावलम्बिअकरं रअणसंघाअम्॥ १२॥

[निष्पन्नसुखालोकं विमलजलाभ्यन्तरस्थितं वहमाणम्।
दरकृष्टमिव रविणा करावलम्बितकरं रत्नसंघातम्॥]

एवं विमलानां जलानामभ्यन्तरे स्थितं रत्नसमूहं वहमानम्। कीदृशम्। निष्पन्नं निष्पादितं सुखं यैस्तादृशा आलोकास्तेजांसि यस्य तम्। जलाभ्यन्तरवर्तिरत्नादिचाकचक्यं दृष्ट्वा लोकानामानन्दो जायत इति दृष्टमेव। सूर्यतेजःसंबन्धादत्यच्छजलाभ्यन्तरवर्तिरत्नादीनां व्यवहितानामपि सांनिध्यमधिगम्यते। तदुत्प्रेक्षते— किंभूतं रत्नसंघातम्। रविणा करेण तेजसावलम्बितः करस्तेजो यस्य तथाविधम्। अत एव दरकृष्टमीषदाकृष्टमिव। तथा च सूर्यतेजसा रत्नतेजःसंबन्धे सांनिध्यभानादाकृष्टमिव रत्नादि भासत इति भावः। अन्योऽपि लोको जलाभ्यन्तरे मज्जन्नन्येन समुत्पादितसुखदर्शनः करे करेणालम्ब्याकृष्यत इति ध्वनिः। एतेनाच्छजलत्वमुक्तम्॥

पुनर्वाडवानलमाह—

महणासाअविमुक्कं उच्छित्तामअविसङ्खलाणलणिवहम्।
वासुइमुहणीसन्दं वडवामुहकुहरपुञ्जिअं वहमाणम्॥ १३॥

[मथनायासविमुक्तमुत्क्षिप्तामृतविशृङ्खलानलनिवहम्।
वासुकिमुखनिःस्यन्दं वडवामुखकुहरपुञ्जितं वहमानम्॥]

एवं वासुकिमुखस्य निःस्यन्दं विषक्षरणरूपम्। वडवामुखकुहरे पुञ्जितं वर्तुलीभूतं वडवानलतया व्यवस्थितं धारयन्तम्। कीदृशं सुखनिःस्यन्दम्। मथने आयासेन विमुक्तं त्यक्तम्। एवमुत्क्षिप्तमुत्थितं यदमृतं तेन विशृङ्खल इतस्ततश्चारी अनलनिवहो यत्र तथाभूतम्। सुधानामुत्थितत्वेन तत्सांनिध्याभावाद्विषाग्नीनां विशृङ्खलत्वम्। सुधासंनिधौ गरलप्रादुर्भावाभावात्। तथा च समुद्रमथनकालीनमन्दरपरिघट्टनसमुत्थश्रमसमुद्गतनेत्रीभूतवासुकिमुखविषस्तोम इव वडवाग्निरित्युत्प्रे-

क्षितम् । इवार्थस्य व्यङ्ग्यत्वात् । यद्यपि विषस्य स्वभावतः श्यामत्वं तथापि ज्वलद्रूपस्य वह्निसाम्यमिति भावः ॥

अथ गुणान्तरमाह—

धीरं व जलसमूहं तिमिणिवहं विअ सपक्खपव्वअलोअम् ।
णइसोत्ते व्व तरङ्गे रअणाइ व गरुअगुणसआइँ वहन्तम् ॥१४॥

[धैर्यमिव जलसमूहं तिमिनिवहमिव सपक्षपर्वतलोकम् ।
नदीस्रोतांसीव तरङ्गान्रत्नानीव गुरुकगुणशतानि वहन्तम् ॥]

यथा धैर्यतिमिनिवहनदीस्रोतोरत्नानि वहन्तं तथैव जलसमूहपर्वतलोकतरङ्गपरोपकारित्वादिगुरुकगुणशतान्यपि वहन्तमित्यर्थः । तिमिवत्संचारित्वलाभाय सपक्षपदं पर्वते । धैर्यादीनामच्छत्वमहत्त्वप्रौढिदैर्घ्यनिर्मलत्वैर्यथासंख्यं जलसमूहादिभिस्तौल्यमिति सहोपमालंकारः ॥

अथ गाम्भीर्यादिगुणानाह—

पाआलोअरगहिरे महिपइरिक्कविअडे णहणिरालम्बे ।
तेल्लोक्के व्व महुमहं अप्पाण बिअ गआगआइँ करेन्तम् ॥ १५ ॥

[पातालोदरगभीरे महीप्रतिरिक्तविकटे नभोनिरालम्बे ।
त्रैलोक्य इव मधुमथनमात्मन्येव गतागतानि कुर्वन्तम् ॥]

पातालोदरपर्यन्तं गभीरे महीप्रतिरिक्ते भूमिशून्ये खाते विकटे भयानके नभसि निरालम्बे । तरङ्गादिना नभःस्पर्शेऽपि स्थैर्याभावात् । अत एवावलम्बशून्ये आत्मन्येव स्वखाताभ्यन्तर एव गतागतानि प्रवाहरूपेण कुर्वन्तम् । एतेन धैर्यमुक्तम् । कुत्र कमिव । त्रैलोक्ये मधुमथनमिव । यथा मधुमथनस्त्रैलोक्ये गतागतान्यात्मन्येव करोति तदुदरवर्तित्वाज्जगतस्तथा समुद्रोऽपीत्यर्थः । त्रीनपि लोकान्क्रमेणाह—कीदृशि त्रैलोक्ये । पातालोदरे गभीरे । महीप्रतिरिक्ते मह्या व्यतिरिक्ते । कंदरादौ विकटे शून्ये । नभसि निरालम्बे तदवच्छेदेनावलम्बशून्य इत्यर्थः ॥

अथ पुनर्नदीसंगममाह—

अहिलीअ परम्मुहीहिँ छिविओसरिएहिँ अणुसअविलोलाहिँ ।
अणुणिज्जमाणमग्गं वेवन्तणिअत्तपत्थिआहिँ णईहिँ ॥ १६ ॥

[अभिलीय पराङ्मुखीभिः स्पृष्टापसृताभिरनुशयविलोलाभिः ।
अनुगम्य(नीय)मानमार्गं वेपमाननिवृत्तप्रस्थिताभिर्नदीभिः ॥]

स्पृष्टापसृतकरूपव्यापारैरभिलीय मिलनं कृत्वा पराङ्मुखीभिर्नदीभिरनुगम्यमान-मार्गम्। कीदृशीभिर्नदीभिः। वेपमानाभिरथ च निवृत्तं समुद्राभिमुखीकृतं प्रस्थितं प्रतीपगमनं याभिस्ताभिः। तथा चायमर्थः—समुद्रं प्रति प्रस्थाने तरङ्गाभिहता नद्यः प्रतीपं गत्वापि तरङ्गशान्तौ सकम्पसलिलाः पुनः परावृत्य समुद्रमेव निवृत्ततरङ्गं पश्चाल्लग्नाः प्रविशन्तीति। तत्रोत्प्रेक्षते—समासोक्त्या समुद्रेण समं नदीनां नायक-नायिकावृत्तान्ते परावृत्य यन्मया गम्यते तदनुचितं क्रियत इत्येवंरूपानुशयेन चञ्चलाभिरिव। इवार्थस्य गम्यमानत्वात्। अन्यत्रापि नायिकाभिः स्पृष्टापसृतकेन नायकमालिङ्ग्य केनापि हेतुना पुनः पराङ्मुखीभिरथ किमित्येवं क्रियत इत्यनुशयेन गन्तव्यं न वेति दोलायमानाभिरनौचित्यप्रतिसंधानेन कम्पवतीभिरथ च निवर्तित-विप्रतीपगमनाभिर्नायकोऽनुगम्यत इति ध्वनिः॥

अथ मदिरादियोगमाह—

जीअगरुईहि अज्ज वि इच्छापज्जत्तसुहरसाहि मदएन्तम्।
धणरिद्धीअ सिरिअ अ सलिलुप्पण्णाइ वारुणीअ अ लोअम्॥१७

[जीवगुर्वीभिरद्यापीच्छापर्याप्तसुखरसाभिर्मदयन्तम्।
धनऋद्ध्या श्रिया च सलिलोत्पन्नया वारुण्या च लोकम्॥]

प्राणेभ्योऽपि गुर्वीभिरादृताभिः। इच्छापर्याप्तो यावदिच्छं स्रक्चन्दनवनितादि-सुखरसो याभ्यस्ताभिः। सलिलादुत्पन्नया रत्नादिधनसमृद्ध्या लक्ष्म्या मदिरया च लोकं मदयन्तम्। मत्तं कुर्वन्तमित्यर्थः। लोके रत्नादीनामतिमादकत्वात्। तथा चायमाकरो रत्नादीनामिति भावः। 'महणुप्पण्णाइ' इति पाठे मथनोत्पन्नयेत्यर्थः॥

अथ गुणान्तरमाह—

चडुलं पि थिईअ थिरं तिअसुक्खित्तरअणं पि सारब्भहिअम्।
महिअं पि अणोलुग्गं असाउसलिलं पि अमअरसणीसन्दम्॥१८॥

[चटुलमपि स्थित्या स्थिरं त्रिदशोत्क्षिप्तरत्नमपि साराभ्यधिकम्।
मथितमप्यनवरुग्णमस्वादुसलिलमप्यमृतरसनिःस्यन्दम्॥]

तरङ्गादिना चञ्चलमपि स्थित्या मर्यादया स्थिरं वेलानतिक्रामकम्। त्रिदशै-रुत्क्षिप्तं मथनादुद्धृतं रत्नं यस्मात्तादृशमपि सारेण धनेनाभ्यधिकं पूर्णम्। नाना-रत्नानां सत्त्वादेव मन्दरेण मथितमप्यक्षीणम्। लवणाकरत्वादस्वादुसलिलमपि

निःस्यन्दमानामृतरसम् । कृदभिहितत्वात् । अत्र चटुलत्वस्थिरत्वयोरेवमुत्क्षिप्तरत्नत्वादिभिः साराभ्यधिकत्वादीनां प्रतीयमानो विरोधस्तत्तदर्थेनापाक्रियते । अत एवापिर्विरोधाभाससूचनाय ॥

निधिशैलमाह—

**पज्जत्तरअणगब्भे णहअरुपल्हत्थचन्दअरपारोहे ।**
**उअरब्भन्तरसेले सुरवइडिम्बणिहिए णिहि व्व वहन्तम् ॥ १९ ॥**

[पर्याप्तरत्नगर्भान्नभस्तरुपर्यस्तचन्द्रकरप्ररोहान् ।
उदराभ्यन्तरशैलान्सुरपतिडिम्बनिहितान्निधीनिव वहन्तम् ॥]

उदराभ्यन्तरशैलान्वहन्तम् । कानिव । सुरपतेरिन्द्राड्डिम्बो भयं तेन निहितानर्पितान्निधीनिव । तथा च तद्भिया जलाभ्यन्तरे वर्तमाना मैनाकादयस्त्रासनिखातनिधित्वेनोत्प्रेक्षिता इत्याशयः । अन्योऽपीश्वरत्रासाद्धनानि गर्ते गोपयतीति ध्वनिः । निधिलक्षणमाह—किंभूतान् । पर्याप्तानि पूर्णानि रत्नानि गर्भे येषां तान् । रत्नशिखरत्वात् । एवं नभ एव तरुस्तस्मात्पर्यस्ता इतस्ततोवर्तिनश्चन्द्रकरा एव प्ररोहा यत्र तान् । एवं गर्तस्था निधयोऽपि पर्याप्तरत्नगर्भा उपरिरोपितचिह्नवृक्षप्ररोहपरिवृता भवन्ति । प्रकृते समुद्रो भूमिस्तदन्तर्गताः पर्वता निधयस्तदुपरि चिह्नवृक्षो गगनं तत्प्ररोहाश्चन्द्रकरा इति भावः । यद्वा असुरादिभिः [सह] सुरपतित्रासनिहितान्निधीन्यथा वहति तथा शैलानपीति सहोपमा । विशेषणद्वयं तुल्यम् । वस्तुतस्तूदराभ्यन्तरशैलान्निधीन्सुरपतिडिम्बनिहितानिव वहन्तमित्यन्वयः । तथा च वस्तुतः पर्वता रत्नगर्भत्वान्निधय एव । इन्द्रत्रासनिहितत्वं परमुत्प्रेक्षितम् । अन्यत्समानम् । प्ररोहः शिफा । 'तत्र पद्ममहापद्मौ तथा मकरकच्छपौ । मुकुन्दकुन्दौ नीलश्च शङ्खश्चैवाष्टमो निधिः' ॥

चन्द्रोदये स्वभावमाह—

**परिअम्भिअं उवगए बोलीणम्मिअ णिअत्तचडुलसहावम् ।**
**णवजोव्वणे व्व कामं दइअसमागमसुहम्मि चन्दुज्जोए ॥ २० ॥**

[परिजृम्भितमुपगते व्यतिक्रान्ते निवृत्तचटुलस्वभावम् ।
नवयौवन इव कामं दयितसमागमसुखे चन्द्रोद्योते ॥]

चन्द्रोद्योत उपगते सति परिजृम्भितं वर्धितम् । व्यतिक्रान्तेऽपगते च सति

निवृत्तचाञ्चल्यम् । तरङ्गवृद्ध्यवृद्धिभ्यामित्यर्थः । चन्द्रोद्योते कीदृशि । परितः प्रीतिविषयो यः समागमस्तेन सुखं यस्मात्तादृशि । कस्मिन्कमिव । नवयौवने काममिव । यथा कामो नवयौवन उपगते परिजृम्भते व्यतिक्रान्ते तु निवृत्तचाञ्चल्यस्वभावस्तथायमपीत्यर्थः । नवयौवनेऽपि कीदृशि । वल्लभस्य दयितस्य समागमेन सुखं यत्र तादृशि ॥

अथ शङ्खादिसत्त्वमाह—

दरफुडिअसिप्पिसंपुडपलोट्टसङ्खमुहभरिअमुत्ताणिअरम् ।
मारुअदूरुच्छालिअजलभरिअद्धवहपडिणिअत्तजलहरम् ॥ २१ ॥

[दरस्फुटितशुक्तिसंपुटप्रलुठितशङ्खमुखभृतमुक्तानिकरम् ।
मारुतदूरोच्छालितजलभृतार्धपथप्रतिनिवृत्तजलधरम् ॥]

परिणतमुक्ताभरादीषत्स्फुटिते शुक्तिसंपुटे मुक्ताबुभुक्षया प्रलुठितं यच्छङ्खमुखं तेन भृतो धृतो मुक्तानिकरो यत्र तम् । शुक्तिपुटाच्छङ्खेनाकृष्टा मुक्तास्तदभ्यन्तरे प्रविशन्तीत्यर्थः । एवं मारुतेन दूरं व्याप्योत्थापितैर्जलैर्भृताः पूर्णा अत एव कृतकार्यत्वादर्धपथान्नभस्त एव परावृत्ता जलधरा यस्मात्तमिति जलबाहुल्येन खातगगनयोरपि समानाकारत्वमुक्तम् ॥

मरकतादीनाह—

मरगअमणिप्पहाहअहरिआअन्तजरढप्पवालकिसलअम् ।
सुरगअगन्धुद्धाइअकरिमअरासण्णदिण्णमेहमुहवडम् ॥ २२ ॥

[मरकतमणिप्रभाहतहरितायमानजरठप्रवालकिसलयम् ।
सुरगजगन्धोद्धावितकरिमकरासन्नदत्तमेवमुखपटम् ॥]

मरकतमणीनां प्रभाभिराहताः संबद्धाः अत एव हरितायमाना जरठाश्चिरंतनाः प्रवालस्य विद्रुमस्य पल्लवा यत्र तम् । मरकतकान्तिसंबन्धात्प्रवालकिसलयानामपि हरिद्वर्णत्वमित्यर्थः । एवं जलमज्जनार्थमागच्छतां सुरगजानामैरावतादीनां गन्धादर्थतो मदस्योद्धावितेभ्यो गगनमार्ग एवागच्छत एतानाकलय्योर्ध्वं नभसि गच्छद्भ्यः करिमकरेभ्यो जलहस्तिभ्य आसन्ने निकट एव दत्ता मेघा एव मुखपटा येन तम् । तथा च सुरगजयुयुत्सयोद्धावितकरिमकराणामासन्नत्वेन जलपानार्थमागच्छन्तो नभसि वर्तमाना मेघा मुखपटत्वेनोत्प्रेक्षिताः । मुखपटो मुखावरणपटः । अन्य-

त्रापि गजयोः संनिपाते दर्पोद्धताय मुखपटो दीयत इति समाचारः । तथा च करिमकराणां युयुत्सया निरालम्बे व्योम्नि धावनेन तेजःशालित्वं सुरगजान्विहाय मुखपटदानेन तदपेक्षया दर्पोद्धतत्वं च सूचितम् । केचित्तु 'पूर्वनिपातानियमेनासन्नमेघदत्तमुखपटं निकटवर्तिभिर्मेघैर्दत्ता मुखपटा येन' इति योजयन्ति ॥

अथ सर्पादिसंबन्धमाह—

मणिवालअं तीरलआघरप्पहोहासिअरम्मणिवालअम् ।
घणवारिअं वेलालिङ्गणेण चडुलं महिलङ्घणवारिअम् ॥ २३ ॥
[मणिपालयं तीरलतागृहप्रभावभासितरम्यनृपालयम् ।
घनवारिदं वेलालिङ्गनेन चटुलं महिलङ्घनवारितम् ॥]

मणीन्पान्तीति मणिपाः सर्पा यक्षा वा तेषामालयं गृहम् । यद्वा मणिपालकं मणीनां पालकमित्यर्थः । मणिवालकं वा । मणीन्संवृणोत्याश्रयत्वेन धारयतीत्यर्थः । 'वल वल्ल संवरणे' इति धातुः । ण्वुल्प्रत्ययः । एवं तीरे लतागृहाणां प्रभाभिरवभासिता उपद्रावि(भासि)ता नृपालयाः सौधादयो येन तम् । सौधापेक्षया लतागृहाणामुत्तमत्वादित्यर्थः । एवं घना बहवो वारिदा यत्र तम् । घनेभ्यो वारिदं जलप्रदं वा । मेघानां समुद्रजलग्राहकत्वात् । यद्वा घनवारितं घनैर्वारितं वेष्टितम् । अथवा घनवारिकं घनं वारि यत्र तम् । प्राशस्त्ये कन् । एवं वेलालिङ्गनेन वेलातिक्रमेण हेतुना यन्महीलङ्घनं तत्र वारितं निषिद्धम् । मर्यादाशीलत्वात् । महीलङ्घनेच्छुरिति कुतो ज्ञायते तत्राह—चटुलं चञ्चलम् । कल्लोलशालित्वात् । वस्तुतस्तु वेलालिङ्गनेन चटुलं चञ्चलम् । अत एव महीलङ्घने वारितम् । वेलयैव निषिद्धप्रसरत्वात् । तथा च सखीरूपाया वेलाया आलिङ्गनेन तरलत्वान्मुख्यनायिकारूपाया मह्या लङ्घनेऽतिक्रम्योपमर्दे वारितमिति समासोक्त्या लभ्यते । अन्यत्रापि सखीसंभोगशीलं नायकं नायिका परिहरतीति ध्वनिः ॥

अथ चन्द्रोदये जलवृद्धिमाह—

ससिमऊहपडिपेल्लणपक्खुब्भन्तअं
संचरन्तधरणीहरपक्खुब्भन्तअम् ।
धीरअं सइमुहलघणपअविज्जन्तअं
अट्ठिअं च वलवाणलपअविज्जन्तअम् ॥ २४ ॥

[शशिमयूखपरिप्रेरणप्रक्षुभ्यत्कं
संचरद्धरणीधरप्रक्षोभ्यमाणम् ।
धैर्यकं सदामुखरघनपीयमान-
मस्थितं च वडवानलप्रताप्यमानम् ॥]

चन्द्रकिरणपरिप्रेरणेन प्रक्षुभ्यद्वर्धमानं कं जलं यस्य तम् । एवं संचरद्भिर्धरणीधरैः प्रक्षोभ्यमाणमितस्ततश्चाल्यमानम् । पर्वते चलति जलक्षोभादिति पर्वतानां महत्त्वमुक्तम् । 'संचरद्धरणीधरपक्षोद्भ्रान्तम्' इति वा । तत्र संचरता धरणीधरपक्षेणोद्भ्रान्तम् । तथा चैकपक्षचलनेन समुद्रः क्षुभ्यतीति शैलानामतिमहत्त्वमुक्तम् । एवं धैर्यकं धैर्यस्वरूपम् । वेलानतिक्रमशीलत्वात् । तथा च धैर्यरूपधर्माभेदेनातिधीरत्वमुक्तम् । प्राशस्त्ये कन् । 'धीरकम्' इति वा । एवं सदा मुखरैः सशब्दैर्घनैः पीयमानम् । विहगादयोऽपि भक्ष्यादिलाभे शब्दायन्त इति ध्वनिः । अस्थितं च कल्लोलशालितया चञ्चलमित्यर्थः । एवं वडवानलेन प्रताप्यमानं न तु शोष्यमाणमिति जलबाहुल्यमुक्तम् । अत्र प्रथमेन द्वितीयेन च पादेन शशिरूपसुतस्नेहः शरणागतपर्वतादिवात्सल्यं च, तृतीयेन धैर्यं जलदादिभिक्षुकोपकारित्वं च, तुर्येण भीषणत्वमङ्गीकृतवडवानलधारणजन्यदुःखसहिष्णुत्वं चोक्तम् । 'को ब्रह्मपवनार्केषु समरे सर्वनाम्नि च । पानीये च मयूरे च मुखशीर्षसुखेषु कम्' ॥

अथ सर्पसंचारमाह—

**णिअअविसाणलपअविअमुत्ताणिअरपरिघोलमाणविसहरम् ।**
**मीणगइमग्गपाअडसेआलोमइलमणिसिलासंघाअम् ॥ २५ ॥**

[निजकविषानलप्रतापितमुक्तानिकरपरिघूर्णमानविषधरम् ।
मीनगतिमार्गप्रकटशेवालावमलिनमणिशिलासंघातम् ॥]

निजकविषानलप्रतापितैर्मुक्तानिकरैरर्थात्स्फुटित्वा देहे लग्नैः परिघूर्णमाना विषधरा यत्र तम् । तथा च निजनिःश्वासविषानलसंबन्धस्फुटितवपुर्निपतितमुक्ताभितापहेतुकपरिभ्रमणेन सर्वत्र मुक्तासत्त्वेन तथैव पुनस्तथाविधमुक्तासंबन्धनिबन्धनोऽभिताप इत्यस्थैर्येण भुजंगानां समुद्रस्य मुक्तानवच्छिन्नदेशराहित्यमुक्तम् । वस्तुतस्तु निजकविषानलप्रतापिता अत एव शीतलतया मुक्तानिकरे परिघूर्णमाना विषधरा यत्र तमित्यर्थः । तेन तथाविधप्रौढविषमहासर्पसत्त्वं तदभितापनिवर्तनक्षम-

मुक्तासत्त्वं च सूचितम् । एवं पूर्वनिपातानियमेन प्रकटो व्यक्तो यो मीनानां गतिमार्गस्तत्र शैवालैरर्थादितस्ततः पतितैरवमलिनः श्यामीकृतः । छन्न इति यावत् । मणिरूपशिलानां संघातो यत्र तम् । अत्र समुद्रशेवालानां प्रान्तद्वये पातान्मत्स्यादीनां संचारपथस्य प्रकटत्वेनाकारस्य महत्त्वमुक्तम् ॥

लक्ष्मीसंबन्धमाह—

**सरिसंकुलं महुमहवल्लहाइ लच्छीअ सारसरिसं कुलम् ।**
**महिलाइअं णइमुहपत्थिओणिअत्तिअवेलामहिलाइअम् ॥ २६ ॥**

[सरित्संकुलं मधुमथनवल्लभाया लक्ष्म्याः सारसदृशं कुलम् ।
महीलालितं नदीमुखप्रस्थितापनिवृत्तवेलामहिलायितम् ॥]

सरिद्भिः संकुलं व्याप्तम् । नदीनां तत्रैव प्रवेशादित्यर्थः । एवं हरिप्रियाया लक्ष्म्याः सारं श्रेष्ठं सदृशं हरिप्रियायोग्यम् । अथवा सारो धनं तेन सदृशं योग्यम् । लक्ष्म्या धनवत्त्वेन तत्पितुरपि तथैवौचित्यादिति भावः । एवंभूतं कुलं वंशम् । पितृरूपत्वादित्यर्थः । एवं मह्यां लालितं घृष्टम् । तदधिष्ठितत्वात् । 'महीलागितं' इति वा । मह्यां लागितं योगितमर्थादीश्वरेण । एवं नदीमुखेन प्रस्थिता समुद्राभिमुखी अथापनिवृत्ता तत्तरङ्गाभिघातेन पश्चादभिमुखी वेला जलं महिलायिता महिलावदाचरन्ती यत्र तम् । तथा च स्पृष्टापसृतकव्यापारेण नायकमालिङ्ग्यापसरन्ती नायिकेव वेलापि समुद्रमभिलीयापसरतीति कल्लोलप्रकर्षः । यद्वा तथाभूतवेलामहिलाजितं तथाभूता वेलैव महिला तया जितं पुनरतिक्रान्तम् । तत्रैव तज्जलप्रवेशादित्यर्थः । 'वेला तत्तीरनीरयोः' इति कोषः ॥

पुनर्नदीसंघट्टमाह—

**णइसहस्सपडिउम्बणणाअरसन्तअं**
**पलअमेहसमदूसहणाअरसन्तअम् ।**
**पेलवेण पवणेण महुरसंचारिअं**
**मउअमअखलन्तं व महुरसं चारिअम् ॥ २७ ॥**

[नदीसहस्रपरिचुम्बनज्ञातरसान्तरं
प्रलयमेघसमदुःसहनादरसन्तम् ।
पेलवेन पवनेन मधुरसंचारितं
मृदुमदस्खलन्तमिव मधुरसं चारितम् ॥]

नदीसहस्रपरिचुम्बनेन ज्ञातं रसान्तरं जलान्तरं यत्र तम्। नदीसंगमेन ज्ञायते नद्या जलमिदमित्यर्थः। यद्वा नदीसहस्रस्य परिचुम्बने संगमे ज्ञातो रसो जलं यस्य तम्। इदं समुद्रस्य जलमिति बुद्धिविषय इत्यर्थः। एवं ततं विस्तीर्णम्। एवं प्रलयमेघसदृशेन नादेन रसन्तं शब्दायमानम्। 'सुवर्णेन धनी' इतिवत्। प्रलयमेघध्वनितुल्यजलध्वनिमित्यर्थः। यद्वा प्रलयमेघसमनादेन रसत्कं जलं यस्य तं प्रलयमेघसमनादरसत्कम्। एवं कोमलेन पवनेन मधुरं यथा स्यात्तथा संचारितम्। कमिव। मधुरसं मदिरारसं चारितं भोजितं पुरुषमिव। पुरुषं किंभूतम्। मृदुना मदेन स्खलन्तं पतन्तम्। 'चर गतौ भक्षणे च' इति धातुः। तथा च यथा निपीतमद्यो मदमार्दवे मन्दं स्खलति तथा समुद्रोऽपि मन्दानिले मन्दं चलतीत्युपमा। एवं मत्तोऽपि नदीसहस्रप्रायसतरङ्गकामिनीसहस्रपरिचुम्बनेन ज्ञातं शृङ्गारादिरसान्तरं येन तादृशः प्रलयमेघतुल्यशब्दश्च भवत्युच्चैः शब्दायमानत्वादिति भावः। वस्तुतस्तु मन्दसंचारे परमुत्प्रेक्षेयम्। तथा हि कमिव। मधुरसं भोजितमिव। अत एव मृदुमदेन स्खलन्तमिव। काकाक्षिगोलकन्यायादिवशब्दस्योभयत्रान्वयः। तथा च पवनेन मधुरं चलतीति नार्थः। किं तु मदिरारसं पीतवानतो मृदुमदेन मन्दं स्खलतीति। सर्वमन्यत्समानम्। 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसेऽपि च' इति विश्वः॥

शेषनागमाह—

**कसणमणिच्छाआरसरज्जन्तोवरिपरिप्पवन्तप्फेणम्।**
**हरिणाहिपङ्कअक्खलिअसेसणीसासजणिअविअडावत्तम्॥ २८॥**

[कृष्णमणिच्छायारसरज्यमानोपरिप्लवमानफेनम्।
हरिनाभिपङ्कजस्खलितशेषनिःश्वासजनितविकटावर्तम्॥]

कृष्णमणीनामिन्द्रनीलादीनां छाया कान्तिः सैव रसो नीलिकादिद्रवस्तेन रज्यमाना वर्णान्तरं प्राप्ता उपरिप्लवमानाः संचरन्तः फेना यत्र। तथा च गभीरजलमूलस्थमणिच्छायानामतिदूरोपरिस्थफेनसंबन्धेन मणीनामुद्दामतेजस्वित्वं जलस्य च स्वच्छत्वमिति भावः। एवं हरिनाभिपङ्कजे स्खलितेन शेषनिःश्वासेन जनितो विकटावर्तो यत्र तम्। तथा चाधोमुखस्य शेषस्य क्रोडेशयोत्तानहरिनाभिकमले तलवर्तिनि स्खलितो निःश्वास ऊर्ध्वं धावन्नुपरि जलावर्तं जनयतीत्यर्थः। तेनाशेषनिःश्वासावरोधकत्वेन कमलस्य मूले स्खलितस्योपरि विकटावर्तजनकत्वेन निःश्वासस्य तादृशावर्ताधिकरणत्वेन समुद्रस्य च महत्त्वमुक्तम्॥

**सअरङ्गअं विद्दुमपल्लवप्पहाघोलिरसासअरङ्गअम् ।**
**रविराइअं धरणिअलं व मन्दराअड्ढणदूरविराइअम् ॥ २९ ॥**

[सतरङ्गकं विद्रुमपल्लवप्रभाघूर्णमानशाश्वतरङ्गकम् ।
रविराजितं धरणितलमिव मन्दराकर्षणदूरविराविकम् ॥]

सह तरङ्गेण वर्तते यत्तम् । यद्वा सगराङ्कं सगरं विषसहितमङ्कं यस्य तम् । सगराङ्गजं वा सगरस्याङ्गजं पुत्रमिव । तत्खानितत्वादित्यर्थः । एवं विद्रुमस्य पत्राणां प्रभाभिर्घूर्णमानं शाश्वतं सार्वदिकं रङ्गकं लौहित्यं यत्र तम् । विद्रुमलौहित्यस्य जले संक्रमात् । यद्वा विद्रुमपल्लवेषु घूर्णमानप्रभाः संचरत्कान्तयः शाश्वता रङ्गका धातुविशेषा यत्र तम् । पूर्वनिपातानियमात् । एवं रवः शब्दस्तद्विशिष्टा रविणो हंसादयस्तै राजितं शोभितम् । एवं मन्दरपर्वतस्य मथनसमये आकर्षणेन परितश्चालनेन दूरं व्याप्य विरावि शब्दयुक्तं कं जलं यस्य तम् । मन्दरभ्रमणेन ध्वनिगाम्भीर्यादस्य महत्त्वमुक्तम् । अथवा दूरविराजिकं मन्दरचालनेन दूरं व्याप्य विराजि समुच्छलत्कं जलं यस्येत्यर्थः । किमिव । धरणीतलमिव । कीदृशं भूतलम् । सकराङ्कं सह करेण राजग्राह्येण वर्ततेऽङ्कं शरीरं यस्य तत् । तथा भूमौ करसत्त्वात् । विशिष्टो द्रुमो विद्रुमस्तत्पल्लवप्रभाभिर्घूर्णमानः संवध्यमानः स्वाश्रयः स्वनिष्ठो रङ्गो यत्र तत् । तल्लौहित्यसंक्रमात् । प्रशंसायां कन् । एवं रविणा सूर्येण राजितं दीपितम् । मन्दराकर्षणेन दूरं व्याप्य विदारितम् । तदुत्पाटनेन भूमेर्विदीर्णत्वादित्यर्थः ॥

**मुत्तालअं तिअसविइण्णजीविअसुहामअजम्मुत्तालअम् ।**
**वित्थिण्णअँ पलउव्वेलसलिलहेलामलिउव्वित्थिण्णअम् ॥ ३० ॥**

[मुक्तालयं त्रिदशवितीर्णजीवितसुखामृतजन्मोत्तालकम् ।
विस्तीर्णकं प्रलयोद्वेलसलिलहेलामृदितोर्वीस्त्यानकम् ॥]

मुक्तानां मौक्तिकानां जीवन्मुक्तानां चालयम् । त्रिदशेभ्यो वितीर्णं जीवितसुखं येन तादृशस्यामृतस्य जन्मनोत्तालकमुद्भटम् । तथा च त्रिदशश्लाघ्यामृतस्याकरोऽयमित्यर्थः । एवं विस्तारशीलम् । प्रशंसायां कन् । विस्तीर्णजलं वा । एवं प्रलये उद्वेलमुच्छलितं यत्सलिलं तस्य हेलया संचारेण मृदितया उर्व्याः स्त्यानं काठिन्यात्कर्दमीभूतम् । तथा च प्रलयहेतुत्वमस्येति सूचितम् ॥

चिरपरूढसेआलसिलाहरिअन्तअं
पवणभिण्णरवदारुणणीहरिअन्तअम् ।
महुमहस्स णिद्दासमए वीसामअं
पलअडड्ढविज्झाअतलुव्वीसामअम् ॥ ३१ ॥

[चिरप्ररूढशेवालशिलाहरितायितं
पवनभिन्नरवदारुणनिर्ह्रदत्कम् ।
मधुमथनस्य निद्रासमये विश्रामदं
प्रलयदग्धविध्माततलोर्वीश्यामकम् ॥]

चिरप्ररूढानि शेवालानि यत्र तादृशीभिः शिलाभिर्हरिद्वर्णम् । शेवालकान्तिसंक्रमात् । तथा च तादृशमपि स्थलं वर्तते यत्र मकराद्यगम्यत्वेन शेवालादीनामभङ्गुरत्वमिति भावः । यद्वा तथाविधशिलाभिर्हरितं हरिद्वर्णम् । ततं विस्तीर्णम् । तान्तं ग्लानं वडवानलसंबन्धात्कं जलं यस्य तं शिलाहरितान्तकम् । एवं पवनेन भिन्नं क्षुभितमत एव क्षोभजेन रवेण दारुणं कठिनं निर्ह्रदच्छब्दान्तरोत्पादि कं जलं यस्य तम् । एवं मधुमथनस्य निद्रासमये विश्रामदम् । प्रलये दग्धं पश्चाद्विध्मातं निर्वाणं यदुर्वीतलम् । पूर्वनिपातानियमात्तलशब्दस्योर्वीसंगतत्वम् । तद्वच्छ्यामम् । तथा च पृथ्वीसमानपरिमाणत्वमस्येति भावः ॥

असुरोवडणविहट्टिअजलविवरुट्ठिअरसाअलुम्हाणिवहम् ।
महणवसभिण्णभामिअदीवन्तरलग्गमन्दरअडक्खण्डम् ॥ ३२ ॥

[असुरावपतनविघटितजलविवरोत्थितरसातलोष्मनिवहम् ।
मथनवशभिन्नभ्रामितद्वीपान्तरलग्नमन्दरतटखण्डम् ॥]

असुराणां हिरण्याक्षप्रभृतीनामवपतनेन झम्पेन विघटितं द्विधाभूतं यज्जलं तस्य विवरेणोत्थितो रसातलोष्मनिवहो यस्मात्तम् । तथा च चिरसंचितानामपि पातालोष्मणामुत्थानप्रतिबन्धकत्वेनातिगभीरत्वमुक्तम् । एवं मथनवशेन भिन्नं त्रुटितमत एव तत्काले भ्रामितं मन्दरभ्रमणाकृष्ट्या चक्रवद्विघूर्णितं पश्चाद्द्वीपान्तरे लग्नं मन्दरतटस्य खण्डं यत्र तत् । तथा च तादृक्समुद्रस्य महत्त्वं येन मन्दरखण्डो द्वीपवद्भासत इति भावः ॥

एस अमअरससंभवो त्ति संभाविअं
णहणिहतमेण व चउद्दिसं भाविअम् ।
गुणमहग्घसारं वसुहारक्खाणिअं
णिअअजसणिहाणं विअ सअरक्खाणिअम् ॥ ३३ ॥

[एषोऽमृतरससंभव इति संभावितं
नभोनिभतमसेव चतुर्दिशं भावितम् ।
गुणमहार्घसारं वसुधारक्षानीतं
निजकयशोनिधानमिव सगरखानितम् ॥]

एवमेष सुधारसोत्पत्तिस्थानमिति संभावनायुक्तम् । महत्त्वान्नीलत्वाच्च नभसस्तुल्यम् । नीलिमानमस्योत्प्रेक्षते—किंभूतम् । चतुर्दिशं तमसा तिमिरेण भावितमुत्पादितमिव । अत एव श्याममित्यर्थः । एवं स्वस्य गुणैर्महार्घो बहुमूल्यः सारो रत्नादिर्यत्र तम् । एवं वसुधायाः पृथिव्या रक्षायै आनीतमुत्पादितम् । समुद्रावष्टब्धा पृथिवी तिष्ठतीति पुराणवार्ता । तथा च स्वाधिकात्स्वरक्षा भवतीति पृथिव्यधिकपरिमाणवत्त्वं समुद्रस्योक्तम् । एवं सत्युत्प्रेक्षते—कीदृशमिव । सगरेण राज्ञा खानितं निजकयशोनिधानमिव । निधानं निधिधारणस्थानम् । तथा च यशोरूपद्रव्यं निधिस्तद्धारणगर्तः समुद्र एव । सगरस्य प्रतिष्ठाहेतुत्वादिति भावः । निधिस्थानमप्यमृतरसोत्पत्तिस्थानमिवादृतं विस्तीर्णत्वान्नभोनिभमावरणीयत्वाच्चतुर्दिशमन्धकारेण भावितमिव गुणमहार्घहिरण्यादिसारयुक्तं वसुधायां निधिरक्षायै आनीतमुत्पादितं भवति । निधिगर्तस्य क्षितावेवोत्पत्तेरिति साम्यम् ॥

पवणुग्गाहिअजललवणिवहपहम्मन्तमुहलतीरतलवणम् ।
ससिसेलमऊहोज्झरपरिवड्ढिअसलिलमलिअपवणुच्छङ्गम् ॥३४॥

[पवनोद्ग्राहितजललवनिवहप्रहन्यमानमुखरतीरतलवनम् ।
शशिशैलमयूखनिर्झरपरिवर्धितसलिलमृदितपुलिनोत्सङ्गम् ॥]

पवनोत्थापितेन जललवनिवहेन प्रहन्यमानान्यत एव मुखराणि शब्दायमानानि तीरतले वनानि यस्य तम् । तीरे तालवनानि यस्येति केचित् । एवं शशिशैलश्चन्द्रकान्तमणिपर्वतस्तस्य मयूखप्रवाहेण परिवर्धितैः सलिलैर्मृदिताः पुलिनोत्सङ्गा यस्य तम् । चन्द्रशैलानां चन्द्रकान्तमणिमयत्वेन तत्किरणेषु ज्योत्स्नाबुद्ध्या समुद्र-

जलवृद्धिर्वास्तवी मयूखनिर्झरसंबन्धमूलकत्वेनोत्प्रेक्षिता। शश्येव शैलस्तस्य मयूखा एव निर्झरास्तैः परिवर्धितं यत्सलिलं तेन मृदितः पुलिनोत्सङ्गो यस्य तमिति वा। अन्यदपि जलं निर्झरान्तरसंबन्धेन वर्धत इति ध्वनिः॥

**मन्दरमेहक्खोहिअससिकलहंसपरिमुक्कसलिलुच्छङ्गम्।**
**मरगअसेवालोवरि णिसण्णतुण्हिक्कमीणचक्काअजुअम्॥ ३५॥**

[मन्दरमेघक्षोभितशशिकलहंसपरिमुक्तसलिलोत्सङ्गम्।
मरकतशेवालोपरि निषण्णतूष्णीकमीनचक्रवाकयुगम्॥]

मन्दर एव मेघस्तेन क्षोभित आन्दोलितः शश्येव कलहंसस्तेन परिमुक्तः सलिलोत्सङ्गो यस्य तम्। अन्यत्रापि मेघमालोक्य हंसा अपगच्छन्तीति ध्वनिः। तथा च मन्दरान्दोलनेनामुष्माचन्द्र उत्थित इत्यर्थः। एवं मरकत एव शेवालं तत्र निषण्णमुपविष्टं मीन एव चक्रवाकस्तद्युगं यत्र तम्। मन्दरपरिघट्टनभिया तूष्णींभूय मीनाः पातालमूले स्थितास्तेन तत्र मन्दरसंबन्धाभावादस्य गाम्भीर्यमुक्तम्। हंसपलायनं दृष्ट्वा भीतश्चक्रवाकस्तूष्णीं तिष्ठतीति ध्वनिः। चन्द्राभावेन चक्रयोर्मिलनमुचितमेवेति कश्चित्॥

**पुण्णणइसोत्तसंणिहजलमज्झमुणिज्जमाणचलतिमिणिवहम्।**
**वलआमुहमूलसमीसरन्तमसिरासिकज्जलिअपाआलम्॥ ३६॥**
**(आइकुलअम्)**

[पुण्यनदीस्रोतःसंनिभजलमध्यज्ञायमानचलतिमिनिवहम्।
वडवामुखमूलसमवसरन्मषीराशिकज्जलितपातालम्॥]
(आदिकुलकम्)

पुण्यनदीनां गङ्गादीनां प्रवाहस्य तुल्यं यज्जलमध्यं तेन ज्ञायमानश्चलश्चलिततिमिनिवहो यत्र तम्। तिमिषु चलितेषु जलमध्ये प्रवाहा भवन्ति तैरनुमीयते तिमयश्चलन्तीत्यर्थः। तेन प्रवाहाणां गङ्गादिप्रवाहतौल्येन तिमीनां जलमध्य एवोत्पत्त्या समुद्रस्य च महत्त्वमुक्तम्। अथवा पुण्यनदीस्रोतःसंनिभा जलमध्ये ज्ञायमानाश्चलिततिमिनिवहा यत्र। तथा च गङ्गादिप्रवाहतुल्यास्तिमय इति भावः। पूर्णनदीस्रोतःसंनिभेति वा। एवं वडवामुखमूलात्समवसरद्भिरधः पतद्भिर्मषीराशिभिः कज्जलितं पातालं येन तम्। अयमर्थः—अधोमुख्या वडवाया मुखानल-

स्योर्ध्वज्वलनतया तन्मुख एव शिखासंबन्धादुत्पन्नैः कज्जलैः कणशः कणशो निपत्य पातालं श्यामीकृतमिति पातालमालिन्यसमर्थकज्जलोत्पत्तिहेतुवडवानलमहत्त्वेन समुद्रस्य महत्त्वमिति भावः । वडवानलोऽप्यधोगत इति कश्चित् । कुलकम् ॥

अथ समुद्रदर्शने रामस्याध्यवसायमाह—

**तो उग्घाडिअमूलो पवअबलकन्तमहिअलुद्धुच्छलिओ ।**
**दिट्ठीअ दिट्ठसारो णज्जइ तुलिओ त्ति राहवेण समुद्दो ॥ ३७ ॥**

[तत उद्घाटितमूलः प्लवगबलाक्रान्तमहीतलोर्ध्वोच्छलितः ।
दृष्ट्या दृष्टसारो ज्ञायते तुलित इति राघवेण समुद्रः ॥]

ततस्तदनन्तरं राघवेण दृष्ट्या नयनेन समुद्रस्तुलित एतावदस्य बलं सुखेन लङ्घनीय इत्यध्यवसित इति ज्ञायते । ज्ञातं सर्वैरित्यर्थः । कीदृक् । प्लवगबलेन वानरसैन्येनाक्रान्तान्महीतलादूर्ध्वमाकाशं प्रत्युच्छलितः । अत एवोद्घाटितं पयःशून्यत्वाद्व्यक्तीकृतं तलं यस्य । तथा च प्लवेनोत्फालेन गच्छतां भारेण महीतलावनमने समुद्रस्य जलमाकाशे लग्नं मूलमुद्घाटितमित्यर्थः । तदुक्तं दृष्टं प्रत्यक्षीकृतं सारं बलं यस्य । तथा च प्लवगबलानामनास्थयैव चलने चेदस्य जातेयमवस्था तदा का कथा व्यवसाये सतीत्यवज्ञाविषयीकृत इति भावः ॥

अथ रामस्य लक्ष्मीविस्मरणमाह—

**कालन्तरपरिहुत्तं दट्ठूण वि अप्पणो महोअहिसअणम् ।**
**जणअसुआबद्धमणो रामो पलअघरिणिं ण संभरइ सिरिम् ॥ ३८ ॥**

[कालान्तरपरिभुक्तं दृष्ट्वाप्यात्मनो महोदधिशयनम् ।
जनकसुताबद्धमना रामः प्रलयगृहिणीं न स्मरति श्रियम् ॥]

कालान्तरे देहान्तरेण परिभुक्तमुपभुक्तमात्मनः स्वस्य महोदधिरूपं तल्पं शयनं दृष्ट्वापि रामः प्रलये गृहिणीं प्रलयसहचरीं श्रियं लक्ष्मीं न संस्मरति । तत्र हेतुमाह—जनकसुतायां नूतनभार्यायां बद्धमनाः । सानुराग इत्यर्थः । तथा च यदेकसंबन्धिमहोदधिरूपसततोपभुक्तनिजशयनदर्शने रामस्यापरसंबन्धिन्याः सहशायिन्या लक्ष्म्याः स्मरणं स्यात्तदा तत्पितुः समुद्रस्य घर्षणं न स्यादिति भावः । अन्योऽपि नूतनभार्यानुरक्तः पुरातनभार्यां न स्मरतीति ध्वनिः ॥

अत्र लक्ष्मणधैर्यमाह—

**ईसिजलपेसिअच्छं विहसन्तविइण्णपवअवइसंलावम् ।**
**अदिट्ठे व्व ण मुक्कं दिट्ठे उअहिम्मि लक्खणेण वि धीरम् ॥३९॥**

[ईषज्जलप्रेक्षिताक्षं विहसद्वितीर्णप्लवगपतिसंलापम् ।
अदृष्ट इव न मुक्तं दृष्टे उदधौ लक्ष्मणेनापि धैर्यम् ॥]

अदृष्ट इव दृष्टेऽप्युदधौ सति लक्ष्मणेनापि धैर्यं न मुक्तम् । पूर्वमदृष्ट उदधौ यथा धैर्यं न त्यक्तं तथा दृष्टेऽपीत्यर्थः । यद्वा दृष्टेऽप्युदधावदृष्ट इव सत्यवज्ञावशाद्धैर्यं न त्यक्तमित्यर्थः । धैर्यं कीदृक् । ईषज्जले प्रेषितमक्षि यत्र तत् । भयाभावेन संपूर्णदृष्ट्यनर्पणादित्यवज्ञा सूचिता क्षोभेऽपि संवरणं वा । तदेवाह—विहसता अर्थात्तेन वितीर्णो दत्तः प्लवगपतये संलापः परस्परभाषणं यत्र तत् । सस्मितं सुग्रीवेण सह कथां कुर्वाणेन हृदि जागरूकः कदाचित्समुद्रोऽपि कटाक्षित इत्यवज्ञासंवरणसाधारणम् ॥

अथ सुग्रीवस्य समुद्रदर्शनमाह—

**हरिसणिराउण्णामिअपीणअरालोअपाअडोवरिभाअम् ।**
**पवआहिवो वि पेक्खइ अद्धुप्पइअं व रुम्भि(न्धि)ऊण सरीरम् ४०**

[हर्षनिरायतोन्नामितपीनतरालोकप्रकटोपरिभागम् ।
प्लवगाधिपोऽपि प्रेक्षते अर्धोत्पतितमिव रुद्ध्वा शरीरम् ॥]

हर्षेण समुद्रदर्शनोत्साहेन निरायतो दीर्घीकृतस्तथैवोन्नामित उत्थापितः पीनतरो मांसलः अत एवालोके शरीरदर्शने प्रकटो व्यक्त उपरिभागो हृदयाद्यङ्गं यस्य एतादृशं शरीरमर्धेनोपरिभागेनोत्पतितं समुद्रलङ्घनाय कृतोत्फालमिव रुद्ध्वा अहो ममैव धार्ष्ट्यं प्रथमतः कथं स्यादित्युत्फालादिव निवर्त्य सुग्रीवोऽपि प्रेक्षते । समुद्रमित्यर्थात् । कियदस्य मानं कथं वा लङ्घनीय इत्याशयादिति समुद्रदर्शनायोत्थापितपूर्वकायस्येयमुत्प्रेक्षा ॥

अथ सुग्रीवस्य कपिसैन्यदर्शनमाह—

**गरुडेण व जलणणिहं समुद्दलङ्घणमणेण वाणरवइणा ।**
**अवहोवासपसरिअं पक्खविआणं व पुलइअं कइसेण्णम् ॥४१॥**

[गरुडेनेव ज्वलननिभं समुद्रलङ्घनमनसा वानरपतिना ।
उभयावकाशप्रसृतं पक्षवितानमिव प्रलोकितं कपिसैन्यम् ॥]

गरुडेनेव सुग्रीवेण पक्षवितानमिव कपिसैन्यं प्रलोकितम् । कपीनां कीदृशी मुखश्रीः को वा व्यवसाय इति दर्शने तात्पर्यम् । समुद्रलङ्घनचित्तेनेति गरुड-सुग्रीवयोर्विशेषणम् । ज्वलनो वह्निस्तत्संनिभं कपिशत्वादिति । उभयावकाशयोः पार्श्वयोः प्रसृतं विस्तीर्णमिति च पक्षवितानकपिसैन्ययोर्विशेषणम् । उड्डयनकाले पक्षिणः पक्षौ प्रसार्य पश्यन्तीति स्वभावः ॥

अथ कपीनां क्षोभमाह—

**साअरदंसणहित्था अक्खित्तोसरिअवेवमाणसरीरा ।**
**सहसा लिहिअव्व ठिआ णिप्पन्दणिराअलोअणा कइणिवहा ४२**

[सागरदर्शनत्रस्ता आक्षिप्तापसृतवेपमानशरीराः ।
सहसा लिखिता इव स्थिता निःस्पन्दनिरायतलोचनाः कपिनिवहाः॥]

समुद्रदर्शनत्रस्ताः कपिनिवहाः सहसा समुद्रं दृष्ट्वैव लिखिताश्चित्रन्यस्ता इव स्थिताः । त्रासाद्भुतयोरुत्पत्त्या जडीभावादिति भावः । तदेवाह—कीदृशाः । आक्षिप्तानि हठादेव लङ्घयतामयमित्याशया पारावारदर्शनायोत्तोलितानि अथाप-सृतानि अहो कष्टमलङ्घनीयोऽसाविति मामेव लङ्घनाय यदि प्रभुः प्रेरयेत्तदानर्थं आपतेदित्यप्रतिभयापसृतान्यधोगतानि सन्ति वेपमानानि लङ्घने समुद्रपतनमलङ्घने सुग्रीवस्ताडयेदित्युभयथापि संकटमिति कम्पमानानि शरीराणि येषां ते । एवं निरायते समुद्रदिदृक्षया विस्फारिते पश्चादाश्चर्येण निःस्पन्दे लोचने येषां ते । तथा च किंकर्तव्यविमूढा आसन्निति भावः ॥

अथ कपीनां हनूमद्दर्शनमाह—

**पेच्छन्ताण समुद्दं चडुलो वि अउव्वविम्हअरसत्थिमिओ ।**
**हणुमन्तम्मि णिवडिओ सगोरवं वाणराण लोअणणिवहो ॥४३॥**

[पश्यतां समुद्रं चटुलोऽप्यपूर्वविस्मयरसस्तिमितः ।
हनूमति निपतितः सगौरवं वानराणां लोचननिवहः ॥]

समुद्रं पश्यतां वानराणां तत्काल एव लोचननिवहो हनूमति सगौरवं पतितः । साधुस्त्वं धन्यजन्मा माता च ते पुत्रप्रसूर्भवतीत्याशयादिति भावः । लोचननिवहः कीदृक् । चटुलोऽपि मर्कटस्वाभाव्याच्चञ्चलोऽपि तदानीमपूर्वः प्राथमिको यो विस्मयरसो हनूमत्कृतसमुद्रलङ्घनोत्थस्तेन स्तिमितो निश्चलः । समुद्रदर्शनाश्चर्येण

वा। पश्यतामिति समुद्रदर्शनस्य वर्तमानत्वेऽपि हनूमति दृष्टिपातेन समुद्रापेक्षयापि तल्लङ्घनादाश्चर्यभूमित्वं हनूमत इति व्याङ्ग्यम् ॥

अथ वानराणां मोहमाह—

उअहिं अलङ्घणिज्जं दट्ठूण गआगअं च मारुअतणअम्।
मोहन्धआरिएसु वि गूढो भमइ हिअएसु सिं उच्छाहो ॥ ४४ ॥

[उदधिमलङ्घनीयं दृष्ट्वा गतागतं च मारुततनयम्।
मोहान्धकारितेष्वपि गूढो भ्रमति हृदयेष्वेषामुत्साहः ॥]

अलङ्घ्यं समुद्रं लङ्घयित्वा गतमागतं च मारुततनयं दृष्ट्वा तत्र स्थितानामेषां वानराणां हृदयेषूत्साहो गूढः सन्गुप्तो भ्रमति। असज्जातीयेन हनूमता लङ्घितोऽयमिति हनूमद्दर्शनादुत्साह उद्भवति अस्माभिर्न लङ्घ्यत इति लज्जया न बहिर्भवतीति गूढभ्रमणपदयोस्तात्पर्यम्। भ्रमणबीजमुत्प्रेक्षते—कीदृशेषु। समुद्रं दृष्ट्वाऽज्ञानं मोहस्तद्रूपान्धकारविशिष्टेषु। तथा च मोहच्छन्नत्वादुत्साहो न प्रकाशित इति भावः। अन्योऽप्यन्धकारे पतन्भ्राम्यतीति ध्वनिः। 'मूढः' इति पाठे जडीभूत इत्यर्थः॥

अथ कपीनां जडीभावमाह—

तो ताण हअच्छाअं णिच्चललोअणसिहं पउत्थपआवम्।
आलेक्खपईवाण व णिअअं पइइचडुलत्तणं पि विअलिअम् ४५

[ततस्तेषां हतच्छायं निश्चललोचनशिखं प्रोषितप्रतापम्।
आलेख्यप्रदीपानामिव निजकं प्रकृतिचटुलत्वमपि विगलितम् ॥]

ततस्तेषां वानराणां निजकं स्वाभाविकं प्रकृतीनामाकृतीनाम्। शरीराणामिति यावत्। चटुलत्वमपि विगलितम्। अप्रतिमया व्यवसायो गत एव शरीरचाञ्चल्यमपि न स्थितमित्यर्थः। एवं हता छाया कान्तिर्यत्र तत्। निश्चला लोचनरूपा शिखा यत्र तत्। कपिलोचनानामग्निशिखाकारत्वान्निश्चलदृष्ट्यप्रमिति वा। प्रोषितो नष्टः प्रतापस्तेजो यत्र तद्यथा स्यात्तथेति क्रियाविशेषणत्रयम्। तथा च तेषां देहकान्तिनयनचाञ्चल्यप्रतापानां चाञ्चल्यरूपस्वभावस्य चापगमः समकालमेव वृत्त इति तात्पर्यम्। केषामिव। आलेख्यानां प्रदीपानामिव। यथा चित्रलिखितानां दीपानां दीपस्वभावसिद्धमपि चाञ्चल्यं न तिष्ठति। तत्रापि कान्तिर्हता भवति। लोचनं ज्ञानम्। तथा च चञ्चलत्वज्ञानशून्या शिखा भवति। लिखितशिखाया

निश्चलत्वात् । प्रतापश्च प्रोषितः स्वत एव निस्तेजस्त्वात्, तथा च वानराः प्रकृत्या चञ्चला अपि मोहादप्रतिभया च समुद्रं दृष्ट्वा निश्चला बभूवुरित्यर्थः । प्रकृतिशब्दः स्वभावार्थो वा । तेन चटुलत्वं स्वभाव इत्यर्थः ॥

अथ वानराणामाकारसंवरणमाह—

कह वि ठवेन्ति पवङ्गा समुद्ददंसणविसाअविमुहिज्जन्तम् ।
गलिअगमणाणुराअं पडिवन्थणिअत्तलोअणं अप्पाणम् ॥ ४६ ॥

इअ सिरिपवरसेणविरइए दसमुहवहे महाकव्वे
विइओ आसासओ समत्तो ॥

[कथमपि स्थापयन्ति प्लवङ्गाः समुद्रदर्शनविषादविमुह्यमानम् ।
गलितगमनानुरागं प्रतिपथनिवृत्तलोचनमात्मानम् ॥]

इति श्रीप्रवरसेनविरचिते दशमुखवधे महाकाव्ये द्वितीय आश्वासकः समाप्तः ।

प्लवङ्गाः कथमप्यात्मानं स्थापयन्ति । परावृत्य गमने सुग्रीवः शास्तिमाचरेदपकीर्तिश्च भवेदित्यालोच्य परावर्तनेच्छुमपि निवर्तयति । किंभूतमात्मानम् । समुद्रदर्शनजन्यविषादेन मोहमापन्नमिति परावृत्तौ हेतुः । एवं गलितः शास्तिदुष्कीर्तिभिया नष्टो गृहाभिमुखगमनेऽनुरागो यस्य तमिति स्थापने हेतुः । अत एव प्रतिपथादपसरणपथान्निवृत्ते लोचने यस्य तम् । तथा चापसरणेच्छया प्रतिपथगते अपि लोचने परामर्शादपवर्तितातामिति भावः ॥

समुद्रोत्कर्षदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य द्वितीयाभूदियं शिखा ॥

---

तृतीय आश्वासः ।

अथ कपीन्प्रति सुग्रीवस्योत्तेजनवचनमाह—

तो ते कइमाअङ्गे रूढविसाअमअभाविओमीलन्ते ।
आलाणक्खम्भेसु व बाहूसु सिलाअलट्ठिएसु णिसण्णे ॥ १ ॥
आहासइ सुग्गीवो णिअअरवाहि फुडणिन्तजसणिग्घोसम् ।
धीराहि सारगरुअं दन्तुज्जोआहि णिम्मलत्थं वअणम् ॥ २ ॥
(जुग्गअम्)

[ततस्तान्कपिमातङ्गान्रूढविषादभावितानवमीलतः।
आलानस्तम्भेष्विव बाहुषु शिलातलस्थितेषु निषण्णान् ॥
आभाषते सुग्रीवो निजकरवात्स्फुटनिर्यद्यशोनिर्घोषम्।
धैर्यात्सारगुरुकं दन्तोद्योतान्निर्मलार्थं वचनम् ॥]

(युग्मकम्)

ततस्तेषामप्रतिभादर्शनानन्तरं तान्स्तम्भितान्कपीनेव मातङ्गान्हस्तिनः सुग्रीवो वचनमाभाषत इत्यग्रिमस्कन्धकेनान्वयः। कथंभूतान्। रूढः समुद्रलङ्घनं कथं स्यादिति विषाद एव मदस्तेन भावितान्संबद्धान्। अत एवावमीलतो मुकुलितलोचनान् एवं शिलातलस्थितेष्वालानस्तम्भेष्विव बाहुषु निषण्णान्। विषण्णाः कपयो बाहू पश्चादुद्दण्डयित्वा तदवष्टम्भेन दृष्टी मुकुलयित्वा तिष्ठन्तीति स्वभावः। तत्र बाह्वोः स्तम्भत्वमुत्प्रेक्ष्य कपीनां मातङ्गत्वमुक्तमिति रूपकम्। मातङ्गोऽपि मदोत्पत्तिदशायां मीलदृष्टिरालानस्तम्भे निषण्णः क्रियत इत्यर्थः। वचनं कीदृक्। वदतः सुग्रीवस्य निजको रव एव स्फुटस्ततोऽपि स्फुटं निर्यन् 'साधु सुग्रीव, स त्वं सम्यगभिधत्से' इतिरूपो निर्घोषो यत्र तत्। तथा च कपीन्प्रत्युत्तेजनवचने सुग्रीवस्यैव यशः प्रकाशत इत्यर्थः। एवं धैर्यमेव तस्य बलेन सारेण गुरुकं यथा बलप्रकर्षस्तथानुद्धतौ धैर्यस्यैव प्रकर्षः। तथा च ततोऽपि सारेण सत्त्वेन गुरुकमादरणीयम्। एवं च दन्तोद्योत एव तस्य निर्मलस्ततोऽपि निर्मलः सुश्लिष्टोऽर्थो वाच्यो यत्र तत्। तथा च गभीरं सधैर्यमतिव्यक्तमूर्जितवानित्यर्थः॥ युग्मकम्॥

प्रथमं कर्तव्यकार्यानुकूलां कपिस्तुतिमाह—

**धरणिधरणे भुआ च्चिअ महणम्मि सुरासुरा खअम्मि समुद्दा।**
**हन्तव्वम्मि दहमुहे एण्हिं तुम्हे त्थ महुमहस्स सहाआ॥ ३॥**

[धरणिधरणे भुजा एव मथने सुरासुराः क्षये समुद्राः।
हन्तव्ये दशमुखे इदानीं यूयं स्थ मधुमथनस्य सहायाः॥]

मधुमथनस्य वराहमूर्त्या भूमिधारणे बाहव एव सहाया वृत्ता न परापेक्षाभूत्। समुद्रमथने सुरा असुराश्च सर्व एव प्रलये कार्ये समुद्रा एव। जगत्प्लावकत्वात्। इदानीं सीतोद्धारे दशमुखे हन्तव्ये यूयमेव सहकारिणः स्थ वर्तध्वमित्यर्थः। तथा च तत्तत्कार्यं तत्तत्कार्ययोग्यसहकारिभिः साधितमिदं तु समुद्रबन्धनानुकूलपर्वताहरणसमर्थभवदायत्तमेवेति भावः। तथा च भवद्भिरौदास्यमाचरणीयं चेत्तदा

तत्तत्कठिनकर्मज्ञातसारभुजादिद्वारैव साधयेत् । भवतां लज्जामात्रं स्यात् । कार्यमपि तत्तत्सकलसाधारणमासीत् । इदं तु रावणवधरूपत्वेन साधारणमसाधारणं तु सीतालाभरूपत्वेन प्रभोरिति तात्पर्यम् ॥

वनेचराणामस्माकं किमत्र प्रयोजनमित्यमीषामुत्तरमाशङ्क्य यशोयाचनं चावश्यरक्षणीयमित्याह—

**मा सासअसोडीरं कह वि णिअत्तन्तसँमुहसंठविअपअम् ।**
**आअअवित्थक्कन्तं पणअन्तं व सुअणं परुम्हाह जसम् ॥ ४ ॥**

[मा शाश्वतशौटीर्यं कथमपि निवर्तमानसंमुखसंस्थापितपदम् ।
आगतवितिष्ठमानं प्रणयन्तमिव सुजनं प्रम्लापयत यशः ॥]

हे कपयः, यूयं यशो मा प्रम्लापयत मा मलिनयत । यशः कीदृक् । शाश्वतं सार्वदिकं शौटीर्यमहंकारो यस्मात् । तथा च यशश्च्युतावहंकारक्ष्यवत इति भावः । एवं भवतामौदास्येन निवर्तमानं सत्कष्टसृष्ट्या भवदीयोद्योगसंशयेन संमुखे संस्थापितं पदं स्थानं येन । अत एवागतं सद्वितिष्ठमानं स्थिरम् । तथा च भवद्भिः समीपवर्ति यशो नोपेक्षणीयमिति भावः । कमिव । प्रणयन्तं किमपि याचमानं सुजनमिव । यथा याचमानः सुजनो न म्लानीक्रियते किं तु तदभ्यर्थितं संपाद्यते तथा यशोऽप्युपस्थितकार्यापेक्षया न म्लापनीयमिति भावः । सुजनमपि कीदृशम् । स्वभावतः शाश्वताहंकारम् । एवं प्रार्थनाभङ्गभिया निवर्तमानं पुनर्लाभसंशयेन कथमपि संमुखसंस्थापितचरणम् । अथागते सति वितिष्ठमानमप्रतिभया किमपि न ब्रुवाणं तथा चैवंविधः सुजनः प्रकृते राम एवेति न म्लापनीय इति भावः । प्रणयं कुर्वन्तं सुजनमिवेति केचित् । वस्तुतस्तु प्रणयन्तमभ्यर्थयन्तं सुजनं राममिव यशो न म्लापयतेति सहोपमा । तथा चौदास्ये सति रामो यशश्च म्लायेदित्यनुचितमिति भावः ॥

कर्मेदमस्मदन्येषामसाध्यमेव, राघवस्त्वेकाकी न शक्नुयादिति कथं यशो म्लायेदित्युत्तरमाशङ्क्य युष्मानपि विना राम एव कर्तुं समर्थः कुर्यादित्याह—

**रक्खसवहदुव्वोज्झो कज्जारम्भो समुद्दलङ्घणगरुओ ।**
**पढुमं च्चिअ रहुवइणा उवरिं हिअअ तुलिओ भरो व्व विलइओ ५**

[राक्षसवधदुर्घात्यः(पक्षे-रक्ष्यशपथदुर्वाह्यः)कार्यारम्भः समुद्रलङ्घनगुरुः ।
प्रथममेव रघुपतिना उपरि हृदये तुलितो भर इव विगलितः ॥]

रघुपतिना कार्यारम्भः प्रस्तुतमारभ्यमाणकार्यमुपर्यर्थात्स्वस्य प्रथममेव विगलितो

नियोजितः । कीदृक् । हृदयेन तुलितो मयेदमित्थं कर्तव्यमित्यध्यवसितः । एवं राक्षसवधेन द्वारेण दुर्घात्यो दुःखनिर्घात्यः । राक्षसवधस्यैव दुःसाध्यत्वादिति भावः । एवं समुद्रलङ्घनेन गुरुरतिशयितः । तस्यातिदुष्करत्वात् । तथा च युष्माकमुपेक्षायामपि समुद्रलङ्घनराक्षसवधयोः स्वकर्तव्यतयाध्यवसितत्वेन सीतामप्युद्धरेत् । ततः सुतरां भवतामपकीर्तिरिति भावः । क इव । भर इव । यथा केनापि प्रथमं हृदये तुलितो मयेदमित्थमुद्वहनीयमित्यध्यवसितो भारः पश्चादुपरि स्कन्धादावारोप्यते तथेदमपीत्यर्थः । भरोऽपि कीदृक् । रक्ष्येणालङ्घनीयेन राजादिशपथेन दुर्वहनीयः । शपथभङ्गस्य दोषावहत्वात् । यद्वा सरक्षपथदुर्वाह्यः सरक्षे दानग्राहकादियुक्ते पथि दुर्वहनीयः । पूर्वनिपातानियमात्सशब्दस्य परनिपातः । एवं समुद्रस्य मुद्रा राजचिह्नविशेषस्तत्सहितस्य लङ्घने देशाद्देशान्तरप्रापणे गुरुर्गौरवयुक्तः । स्वयं हृदयेन तुलितः कार्यारम्भो योग्यत्वाद्भवतामुपरि नियोजित इत्यर्थ इति केचित् ॥

स्वयमेव चेदध्यवसितं रामेण तर्हि करोतु, भवानपि समर्थः किमस्मान्प्रेरयतीत्याशङ्क्याह—

तुम्ह चिअ एस भरो आणामेत्तप्फलो पहुत्तणसद्दो ।
अरुणो छाआवहणो विसअं विअसन्ति अप्पणा कमलसरा ॥६॥

[युष्माकमेवैष भर आज्ञामात्रफलः प्रभुत्वशब्दः ।
अरुणश्छायावहनो विशदं विकसन्त्यात्मना कमलसरांसि ॥]

हे वानराः, एष प्रस्तुतकार्यभरो युष्माकमेव । साध्य इत्यर्थः । परेषामसमर्थत्वात् । तर्हि भवतो रामस्य च कुत्रोपयोग इत्यत आह—आज्ञामात्रं फलं यस्य तादृक्प्रभुशब्दः । तथा चाहं रामश्च प्रभुरित्याज्ञामात्रोपक्षीणौ कार्यं तु भवदधीनमेवेत्यर्थः । अर्थान्तरं न्यस्यति—अरुणः सूर्यश्छाया कान्तिस्तत्प्रापकः परं सरःकमलानि विशदं यथा स्यादेवमात्मनैव विकसन्ति । तथा च सूर्यप्रायः प्रभुः । छायाप्राया आज्ञा । कमलप्रायाः प्रेष्याः । विकासप्रायं प्रेष्यकार्यमिति । 'अरुणः स्यात्स्फुटे रागे सूर्ये सूर्यस्य सारथौ ॥'

वयं तु समुद्रमेवोत्तरीतुं न शक्नुमः किं पुनः कार्यान्तरं कर्तुमित्युत्तरमाशङ्क्याह—

तरिउं णहु णवर इमं वेलावणबउलकुसुमवासिअसुरहिम् ।
हत्थउडेहि समत्था तुम्हे पाउं पि फलरसं व समुद्दम् ॥ ७ ॥

[तरितुं न खलु केवलमिमं वेलावनबकुलकुसुमवासितसुरभिम् ।
हस्तपुटाभ्यां समर्था यूयं पातुमपि फलरसमिव समुद्रम् ॥]

यूयमिमं समुद्रं केवलं तरितुं न खलु समर्था अपि तु हस्तपुटाभ्यामञ्जलिना फलानामाम्रादीनां रसमिव पातुमपि समर्थाः । कीदृशम् । वेलावर्तिवनबकुलपुष्पैर्वासितमतः सुरभिम् । फलरसोऽपि कुसुमवासितः करपुटाभ्यां पीयते । तथा च समुद्रपानसमर्थत्वेन तदधिकपरिमाणवतां भवतामनायासलङ्घनीयोऽब्धिरिति भावः ॥

समर्थासमर्थसाधारणमुण्डमेलके कृतमपि कार्यं न विशेषयेदिति यदि कश्चिद्ब्रूयात्तत्राह—

**चिरआलकङ्खिआणं धुआवमाणणिअलुण्णमन्तमुहाणम् ।**
**एसो णवर अवसरो असरिससमसीसबन्धणविमोक्खाणम् ॥८॥**

[चिरकालकाङ्क्षितानां धुतापमाननिगलोन्नमन्मुखानाम् ।
एष केवलमवसरोऽसदृशसमशीर्षबन्धनविमोक्षाणाम् ॥]

असदृशेनायोग्येन कृतं यत्समशीर्षं स्पर्धा तदेव बन्धनमवज्ञारूपत्वात्तस्य विमोक्षाणां त्यागानामेष केवलमवसरः । अत्रासमर्थाः पलायिष्यन्ते समर्थाः साधयिष्यन्तीति तत्कृतसादृश्यरूपबन्धनत्यागो हठादेव स्यादिति भावः । कीदृशानाम् । तादृक्कार्यं कदापि लप्स्येत यतोऽयमपकर्षो गच्छेदिति चिरकालं व्याप्य काङ्क्षितानाम् । एवं धुतस्त्यक्तोऽपमान एव निगलस्तेनोन्नमन्मुखं येभ्यस्तेषाम् । तथा च यावदयोग्यस्पर्धारूपनिबन्धनं तावदपमानरूपनिगलसत्त्वे लज्जया मुखं नमति तद्बन्धनत्यागे त्वपमाननिगलशान्तौ मुखमुन्नमतीत्यर्थः । तथा चासमर्थाः कतिकपयौ न स्पर्धामाचरन्ति तेभ्यो विशेषं प्रतिपादयितुमयमेव काल इति भावः । अयोग्येन सह समशीर्षं समानशिरस्कत्वेन सभायामुपवेशनं तद्रूपबन्धनत्यागानाम् । अन्यत्समानम् । इति केचित् ॥

प्रेष्या वयं प्रभोराज्ञामपेक्षाम इत्याशङ्क्याह—

**ते विरला सप्पुरिसा जे अभणन्ता घडेन्ति कज्जालावे ।**
**थोअ च्चिअ ते वि दुमा जे अमुणिअकुसुमणिग्गमा देन्ति फलम् ९**

[ते विरलाः सत्पुरुषा येऽभण्यमाना घटयन्ति कार्यालापान् ।
स्तोका एव तेऽपि द्रुमा येऽज्ञातकुसुमनिर्गमा ददति फलम् ॥]

कार्यालापानालपितकार्याणि । कृदभिहितत्वात् । तथा चाभण्यमाना उक्तिमनपेक्ष्य ये कार्याणि घटयन्ति ते सत्पुरुषा विरलाश्चितुरा एव । भवन्तस्तूक्तिम-

पेक्षमाणाः कापुरुषा इति भावः । अर्थान्तरं न्यस्यति—अज्ञातः कुसुमनिर्गमो येषां तथाविधा ये द्रुमाः फलं ददति तेऽपि वनस्पतयः स्तोका एव । तथा च द्रुमप्रायाः सत्पुरुषाः कुसुमनिर्गमप्रायाणि वचनानि फलप्रायं कार्यमिति । अभणन्त इति केचित् 'कज्जअलावे' इति पाठे कार्यकलापान् ॥

व्यवसायं विना का क्षतिरस्माकमित्यत आह—

**खिण्णं चावम्मि करं चिरकालुक्कण्ठिअं अमरिसम्मि मणम् ।**
**मा दा देउ रहुवई बाणाहिमुहिं च बाहगरुइं दिट्ठिम् ॥ १० ॥**

[खिन्नं चापे करं चिरकालोत्कण्ठितममर्षे मनः ।
मा तावद्ददातु रघुपतिर्बाणाभिमुखीं च बाष्पगुर्वीं दृष्टिम् ॥]

रघुपतिः खिन्नं सीताविश्लेषदुर्बलं करं चापे, सीतादर्शनाय चिरकालमुत्कण्ठितं मनोऽमर्षे विरहजन्यबाष्पच्छन्नां बाणाभिमुखीं दृष्टिं च तावन्मा ददातु मा विधत्ताम् । यावद्भवद्भिर्व्यवसायो न क्रियत इत्यर्थः । तथा च प्रियानुरागप्रागल्भ्येन तत्प्राप्तिप्रतिबन्धकसमुद्रजिघांसया रोषोत्कर्षेण धनुर्गृहीत्वा शरं संदधानो बाष्पच्छन्नदृष्टित्वेन रक्षणीयमपि न लक्षयेत् । अतस्त्रैलोक्यमपि निर्दहेत् । तद्विशेषतः क्रोधबीजत्वेन भवन्तो न तिष्ठेयुरिति भावः । एवं च रामस्यातिखिन्नकरस्य चापार्पणे उत्कण्ठितमनसोऽमर्षसंबन्धे बाष्पगुर्व्या दृशो बाणाभिमुखीकरणे महद्वैक्लव्यं स्यादित्यधिकमनिष्टमिति तात्पर्यम् ॥

अत्र व्यवसाये सति न केवलं भवतामनिष्टनिवृत्तिरपि त्वभीष्टोत्पत्तिरपीत्याह—

**ओवग्गउ तुम्ह जसो दहवअणपआवपत्थिवपरिग्गहिअम् ।**
**विलुलिअसमुद्दरसणं णहभवणन्तेउरं दिसावहुणिवहम् ॥ ११ ॥**

[अवक्रामतु युष्माकं यशो दशवदनप्रतापपार्थिवपरिगृहीतम् ।
विलुलितसमुद्ररसनं नभोभवनान्तःपुरं दिग्वधूनिवहम् ॥]

दिश एव वधूनिवहस्तं युष्माकं यशोऽवक्रामतु । किंभूतम् । रावणप्रताप एव पार्थिवो राजा तेन परिगृहीतमाक्रान्तम् । अथ च परिग्रहः करग्रहणं तद्विषयीकृतम् । एवं विलुलिता समुद्र एव मेखला यस्य तम् । नभ एव गृहं तदेवान्तःपुरमवस्थितिस्थानं यस्य तमिति रूपकरूपकम् । 'मुखपङ्कजरङ्गेऽस्मिन्भ्रूलतानर्तकी तव' इतिवत् । प्रकृते रावणप्रतापो राजा तस्य वध्वो दिशस्तासामन्तःपुरं नभोगृहम् ।

समुद्रो रसना । तथा च भवद्भिर्व्यवसाये कृते समुद्रलङ्घनादिसमुत्थं यशो रावणप्रतापमपहस्तयित्वा तदाक्रान्तानि दिङ्गभःसमुद्रादीनि व्याप्नुयादित्यर्थः । अन्योऽपि राजा शत्रुपरिग्रहस्त्रीनिवहमन्तःपुरमतिक्रम्य रसनादिविपर्यासं कृत्वा रमणं करोतीति ध्वनिः । नभोगृहस्यान्तःपुरं राजस्त्रीरूपमिति वा ॥

प्राणिनां प्राणाः सर्वतोऽपि रक्षणीया व्यवसाये क्रियमाणे तत्संशय इत्याशङ्क्याह—

**जं साहसं ण कीरइ तं दअमाणेण जीविअं किर दइअम् ।**
**जो अपडिमुक्कसुकओ सो वि गणज्जइ जगम्मि जीअन्तमुओ १२**

[यत्साहसं न क्रियते तद्दयमानेन जीवितं किल दयितम् ।
योऽप्रतिमुक्तसुकृतः सोऽपि गण्यते जगति जीवन्मृतः ॥]

किल निश्चये । यत्साहसं न क्रियत इति तज्जीवितं दयमानेन दयितं प्रीतिविषयीकृतम् । साहसकरणाभावः साहसकरणे प्राणानां कुश्लेषः स्यादिति शङ्कया दयापात्रीकृतजीवितस्य पुरुषस्य दयित इत्यर्थः । एवं योऽप्रतिमुक्तमप्रत्युद्धतं सुकृतमुपकारो येन तादृक् सोऽपि संसारे जीवन्नेव मृतो गण्यते । तथा च रामेण बालिवधरूप उपकारः कृतः । तत्प्रत्युपकारस्य प्राणविगमसंदेहादकरणेऽपि मरणमिति वास्तविकमरणापेक्षया जीवतो मरणगणनारूपं मरणं महत्कदर्थनमिति भावः ॥

कार्यमिदमतिस्वल्पं किं तु 'सहसा विदधीत न क्रियाम्' इति विचारः क्रियताम् । तथा सति यत्स्यात्तत्कर्तव्यमित्याशङ्क्याह—

**किं व ण आणह एअं कज्जं परिपेलवं पि जह परिणामे ।**
**देइ परं संमोहं कुसुमं विसपाअवस्स व मलिज्जन्तम् ॥ १३ ॥**

[किं वा न जानीतैतत्कार्यं परिपेलवमपि यथा परिणामे ।
ददाति परं संमोहं कुसुमं विषपादपस्येव मृद्यमानम् ॥]

किं वा पक्षान्तरे । यूयमेतन्न जानीत यथा परिपेलवं सुकरमपि कार्यं क्रियमाणं सत्परिणामे उत्तरकाले विघ्नसंतापे सति परं क्लेशं ददाति । दृष्टान्तयति— विषवृक्षस्य मृद्यमानं कुसुममिव । यथा विषपुष्पं पेलवत्वात्सुखस्पर्शमपि करतलघृष्यमाणं सत्पश्चान्मूर्च्छयति तथा सुकरमपि समुद्रबन्धनरूपं कार्यमवसाने रावणकृतप्रतिक्रियापराहतं क्लेशयेदिति चिरं विचारो न घटते । तदुक्तम्—'क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्' इति भावः ॥

रावणकृतप्रतिक्रियाविघटमानमिदमतिदुर्घटं स्यादिति शङ्कयैव नारभ्यत इत्याशङ्क्याह—

**विहडन्तं पि समत्था ववसाअं पुरिसदुग्गमं णेन्ति वहम् ।**
**भुवणन्तरविक्खम्भं दिअसअरो विहडिएक्कचक्कं व रहम् ॥१४॥**

[विघटमानमपि समर्था व्यवसायं पुरुषदुर्गमं नयन्ति पन्थानम् ।
भुवनान्तरविष्कम्भं दिवसकरो विघटितैकचक्रमिव रथम् ॥]

समर्था आरभ्यमाणं व्यवसायमन्तरा विघटमानमपि पुरुषैर्दुर्गमं दुःसंचारं पन्थानं प्रापयन्ति । सुघटितं कुर्वन्तीत्यर्थः । दृष्टान्तयति—यथा भुवनान्तरं नभस्तदेव विष्कम्भं विवरं विघटितमेकं चक्रं यस्य तादृशं रथं दिवसकरः प्रापयति । तथा च द्विचक्रस्यापि दुःसंचारे नभसि यथा रविरेकचक्रमपि रथं सामर्थ्येन चारयति तथा भवन्तोऽपि विघटितमपि कर्म सामर्थ्येन घटयिष्यन्तीति भावः । 'विष्कम्भो योगभेदे च विस्तारप्रतिबन्धयोः । विष्कम्भो विवरे देश्याम्' इत्यादि ॥

समुद्रलङ्घनोत्तरमपि युद्धोपयुक्तखड्गादिविरहादनर्थकत्वं भवेदिति विलम्बिता वयमित्याशङ्क्याह—

**कअकज्जे तालसमे अइरा पेच्छह भुए अणुत्तालसमे ।**
**णिहुओ राअसहाओ पडिवक्खस्स अ अवेउ राअसहाओ ॥१५**

[कृतकार्यांस्तालसमानचिरात्पश्यत भुजाननुत्तालसमान् ।
निभृतो राजस्वभावः प्रतिपक्षस्य चापैतु राजस्वभावः ॥]

कृतं कार्यं युद्धादि यैस्तान् गृहीतसहचारान् तालवृक्षसमानांस्तदाकारान्भुजान्प्रेक्षध्वम् । कीदृशान् । अनुत्ता अप्रेरिता अलसैर्मा लक्ष्मीर्येषाम् । अथवा अनुत्ता अनुत्क्षिप्ता परैरित्यर्थात् । अत एवालसा स्थिरा मा लक्ष्मीर्येषाम् । यद्वा न उत्ताला उद्भटा अपि समास्तुल्या येषां तान् । तथा सति भवतां निभृतः परैरगम्यो राजसो भावो रजोगुणविजृम्भितं मरणादिभयमपैतु । ततः प्रतिपक्षस्य रावणस्य च राजस्वभावो राजत्वमपैतु गच्छतु । तथा च भवतां भुजा एव सामग्री । तदवलोकने साते बलस्मृत्या मरणभयनिवृत्तौ रावणवधः स्यादेवेति वृथा विलम्ब इति भावः ॥

समुद्रलङ्घनमशक्यमेवेति तदकरणेनाप्रकर्ष इत्याशङ्क्याह—

**संखोहिअमअरहरो संभन्तुव्वत्तदिट्ठरक्खसलोओ ।**
**वेलाअडमुज्झन्ते अह णे हसइ हिअएण मारुअतणओ ॥ १६ ॥**

[संक्षोभितमकरगृहः संभ्रान्तोद्वृत्तदृष्टराक्षसलोकः ।
वेलातटमुह्यतोऽथास्मान्हसति हृदयेन मारुततनयः ॥]

लङ्घनसमये चरणसंक्रमणादिना संक्षोभितमान्दोलितं मकराणां गृहं समुद्रो येन । लङ्कादाहसमये संभ्रान्ताः कृत्यमूढा उद्वृत्ता इतस्ततो गामिनो दृष्टा राक्षसलोका येन तादृशो मारुतिर्वेलातट एव मुह्यतो मोहापन्नानस्मान् अथ मोहोत्तरं हृदयेनोपहसति । तथा च मया समुद्रमुल्लङ्घ्य राक्षसानाकुलीकृत्य समागतम् । एते वेलाया एव तटे मुह्यन्ति न तु समुद्रस्य तटमप्यागता इति गूढाहंकारेण सगोत्रेण कृत उपहासो मरणादप्यतिरिच्यत इति भावः ॥

भयहेतुसमुद्रप्रतिहतत्वादुत्साह एव नोदेति कुतस्तत्प्रकृतिको वीरो रस इत्याशङ्क्याह—

**अव्वोच्छिण्णपसरिओ अहिअं उद्धाइ फुरिअसूरच्छाओ ।**
**उच्छाहो सुभडाणं विसमक्खलिओ महाणईण व सोत्तो ॥ १७ ॥**

[अव्यवच्छिन्नप्रसरितोऽधिकमुद्धावति स्फुरितसूर(सूर्य)च्छायः ।
उत्साहः सुभटानां विषमस्खलितो महानदीनामिव स्रोतः ॥]

सुभटानामुत्साहो वीररसस्थायी विषमे संकटे स्खलितः परैः प्रतिहतः सन्नधिकमुद्धावति वर्धते । कीदृक् । अव्यवच्छिन्नः सन्प्रसृतः । परैरनाक्रान्तत्वात् । एवं स्फुरिता शूरस्य छाया कान्तिर्यस्मात् । शूराणामेवोत्साह उत्पद्यत इति भावः । दृष्टान्तयति—यथा महानदीनां स्रोतोऽव्यवच्छिन्नप्रसृतं स्फुरिता सूरस्य सूर्यस्य च्छाया प्रतिबिम्बो यत्र तथाभूतं सत्पर्वतादिनिम्नोन्नतप्रदेशे स्खलितमधिकमुद्धावत्यूर्ध्वमुत्तिष्ठति । तथा वीराणामप्युत्साहो यथा यथा विषमभूमिलाभस्तथा तथा प्रौढिमालम्बत इति तात्पर्यम् । 'छाया स्यादातपाभावे प्रतिबिम्बेऽर्कयोषिति ।' इति ॥

गमनप्रतिबन्धकसमुद्राकान्ता भवतां शोभा समुद्रमुल्लङ्घ्य हनुमताप्याक्रम्यत इति नोचितमित्याह—

**माणेण परिट्ठविआ कुलपरिवाडिघडिआ अणोणअपुव्वा ।**
**चिन्तेउं पि ण तीरइ ओहुप्पन्ती परेण णिअअच्छाआ ॥१८॥**

[मानेन परिस्थापिता कुलपरिपाटिघटिता अनवनतपूर्वा ।
चिन्तयितुमपि न तीर्यते आक्रम्यमाणा परेण निजकच्छाया ॥]

निजकच्छाया निजप्रतिष्ठा परेणाक्रम्यमाणा चिन्तयितुमपि न तीर्यते न शक्यते । किं पुनः सोढुमित्यर्थः । कीदृशी । मानेन मनस्वितया परिस्थापिता । एवं कुलपरिपाट्या वंशानुक्रमेण घटिता । यथा पूर्वपुरुषैरर्जिता तथेत्यर्थः। तदुक्तम्—'निजवंशोचितपौरुषग्रहः' । एवमनवनतपूर्वा पूर्वं नावनता । अक्षुण्णेत्यर्थः । तथा च भवतामीदृशप्रतिष्ठारक्षणं समुद्रलङ्घनादेवेति भावः । अथ च निजकच्छाया आतपाभावः परेणोल्लङ्घ्यमाना चिन्तयितुमपि न शक्यते । छायालङ्घने दोषोत्पत्तेः । सापि कीदृशी । मानेन पुरुषपरिमाणेन स्थापिता । यावत्परिमाणं पुरुषस्य तदनुरूपा छायापीत्यर्थः । एवं कुं पृथ्वीं लात्यादत्ते तत्र लीयत इति कुलं शरीरं तत्परिपाट्या तत्क्रमेण घटिता संबद्धा । शरीरोत्थापनोपवेशनचलनक्रमेणोत्तिष्ठन्ती उपविशन्ती चलन्ती लक्ष्यत इत्यर्थः । एवं न अवनतो नम्रः पूर्वः पूर्वभागो यस्याः सा तथा छाया । पूर्वभागस्य सदैवोच्छ्रितत्वादिति भावः ॥

क्लेशविनाकृतमेव यशोऽपि श्लाघनीयं न तु क्लेशबहुलमित्याशङ्क्याह—

**परिवड्ढन्तुच्छाहो विअलिअरणमच्छरेहिँ अप्पत्तगुणो ।**
**अअसक्कन्तोसरिओ कड्ढिज्जइ दुक्करं भडत्तणसद्दो ॥ १९ ॥**

[परिवर्धमानोत्साहो विगलितरणमात्सर्यैरप्राप्तगुणः ।
अयशःक्रान्तापसृतः कृष्यते दुष्करं भटत्वशब्दः ॥]

भटत्वशब्दो भटोऽयमिति शब्दो दुष्करं कृष्यते दुःखेन परतः समानीयते । भटान्तरं जित्वा स्वनिष्ठः क्रियत इति यावत् । तथा चोत्कटसुखहेतुदुःखे द्वेषः कर्तुं न युज्यत इति भावः । कीदृग्भटत्वशब्दः । परिवर्धमान उत्साहो यस्मात् । आभिमानिकसुखहेतुरित्यर्थः । एवं विगलितं रणमात्सर्यं येषां तैरप्राप्तो गुणः पुलकादिव्यङ्ग्य आस्वादो यस्य । तथा च मात्सर्यं विना तत्तथाविधं साहसमेव नोदेतीति

भवद्भिरपि मात्सर्यमवलम्ब्यतामिति भावः । एवमयशोभिः क्रान्तो यः पुरुषस्त-स्मादपसृतः पृथग्भूतः । तथा च 'खड्गादिजनितं यशः' इति यशोविनाभूत इति तात्पर्यम् ॥

अस्माकं वस्तुतोऽनध्यवसाय एव । स चेत्सुग्रीवादिभिरवगतस्तदावगत एवेति कपयश्चेदौदास्यमालम्बेरंस्तदानर्थः स्यादिति मनसिकृत्य भवन्तो विचारेण विल-म्बिता न त्वनध्यवसायेनेति प्रवृत्त्यौपयिकत्वेन प्रस्तुवन्नाह—

**आहिअसमराअमणा वसणम्मि अ उच्छवे अ समराअमणा ।**
**अवसाअअविसमत्था धीरच्चिअ होन्ति संसए वि समत्था ॥२०**

[आहितसमरागमना व्यसने चोत्सवे च समरागमनसः ।
अवशागतविषमार्था धीरा एव भवन्ति संशयेऽपि समर्थाः ॥]

समर्थाः प्राणानां फलस्य वा संशयेऽपि धीरा एव भवन्ति । सामर्थ्यदत्तभरा विचार्य व्यवहरन्तीत्यर्थः । कीदृशाः । आहितं समर्पितमर्थात्स्वस्मिन्समरस्य सङ्ग्रा-मस्यागमनं यैः । सङ्ग्रामोऽपि कर्तव्य इति कृतनिश्चयाः । एवं विपत्तौ संपत्तौ च तुल्यो रागो यस्य तादृशं मनो येषां ते । व्यसनमिति न दुःखीयन्ति उत्सव इति न सुखीयन्तीति भावः । एवमवशोऽस्वायत्त आगत उपस्थितो विषमः संकटरूपोऽर्थो येषां ते । विषमदशायामप्यविमृश्यकारितां नाचरन्ति । तथा चेयत्कालं विचारितमतः परं यथोचितमाचरन्त्विति भावः । अवसादं यति खण्डयति विषमोऽर्थो येषां ते अव-सादद्विषमार्था इति वा । 'अवसाइअ' इति पाठे अवसादितविषमार्था इति बहुव्रीहिः ॥

संप्रति व्यवसायेनापि फलनिर्णयो नेत्याशङ्क्याह—

**ववसाअसप्पिवासा कह ते हत्थट्ठिअं ण पाहेन्ति जसम् ।**
**जे जीविअसंदेहे विसं भुजंग व्व उव्वमन्ति अमरिसम् ॥२१॥**

[व्यवसायसपिपासाः कथं ते हस्तस्थितं न पास्यन्ति यशः ।
ये जीवितसंदेहे विषं भुजंगा इवोद्वमन्त्यमर्षम् ॥]

व्यवसायेन सपिपासाः पिपासासहितास्ते करवर्तियशः कथं न पास्यन्ति नास्वा-दयिष्यन्ति । अपि त्वास्वादयिष्यन्त्येव । तथा च यशःस्वादस्तेषामेवेति भावः । अन्योऽपि व्यवसायजन्यपिपासया करवर्तिजलादिकं पिबतीति ध्वनिः । ते के । ये जीवितसंदेहे अमर्षमुद्वमन्ति । क इव । भुजंगा इव । यथा प्राणसंदेहे भुजंगा

विषमुत्सृजन्ति तेन च प्रतीकारोऽपि जायते तथा ये संशयेऽमर्षमाचरन्ति तेन तेषां व्यवसायोत्पत्तौ कार्यसिद्धिर्ध्रुवा यतेति भवन्तोऽप्यमर्षमाचरन्त्विति भावः ॥

व्यवसायं विना यशो मास्तु क्षतिरपि नास्तीत्यत आह—

**सीहा सहन्ति बन्धं उक्खअदाढा चिरं धरेन्ति विसहरा ।**
**ण उण जिअन्ति पडिहआ अक्खण्डिअववसिआ खणं पि समत्था ॥**

[सिंहाः सहन्ते बन्धं उत्खातदंष्ट्राश्चिरं ध्रियन्ते विषधराः ।
न पुनर्जीवन्ति प्रतिहता अखण्डितव्यवसिताः क्षणमपि समर्थाः ॥]

सिंहा अपि बन्धनं सहन्ते । उत्पाटितदंष्ट्रा अपि सर्पाश्चिरं ध्रियन्ते जीवन्ति । समर्थाः पुनः परैः प्रतिहताः कृताभिघाता अखण्डितं व्यवसितं परेषामेव यैः । स्वव्यवसितेन परव्यवसितमखण्डितवन्तः सन्तो न जीवन्ति । जीवनमपि तेषां मरणमेवेति भावः । यद्वा व्यवसायखण्डनमेकदेशकरणम् । तथा च किंचिदपि व्यवसितमकृतवन्तः सन्त इत्यर्थः । तदुक्तम्—'यत्ने कृते यदि न सिध्यति कोऽत्र दोषः' इति । प्रकृते समुद्रेण प्रतिहता भवन्तः कमपि व्यापारमाचरन्त्विति निगर्वः ॥

इदानीमुत्साहोद्दीपकत्वेनानिष्टापत्तिमुखेन तत्तद्भार्यामनुस्मारयन्नाह—

**अकअत्थपडिणिअत्ता कह सँमुहालोअमेत्तपडिसंकन्तम् ।**
**दप्पणअलेसु व ठिअं णिअअं देच्छिह पिआमुहेसु विसाअम् २३**

[अकृतार्थप्रतिनिवृत्ताः कथं संमुखालोकमात्रप्रतिसंक्रान्तम् ।
दर्पणतलेष्विव स्थितं निजकं द्रक्ष्यथ प्रियामुखेषु विषादम् ॥]

अकृतार्थाः सन्तः प्रतिनिवृत्ता यूयं स्थितं विद्यमानं समुद्रालङ्घनसमुत्थं निजकं स्वनिष्ठं विषादं निर्मलत्वेन दर्पणतलेष्विव वधूमुखेषु संमुखालोकनमात्रादेव प्रतिसंक्रान्तं संबद्धं कथं द्रक्ष्यथ । अप्रतिभया द्रष्टुं न पारयिष्यथेत्यर्थः । अन्यत्राप्यादर्शे मुखादिमालिन्यं संमुखदर्शनादेव प्रतिसंक्रामति प्रतिबिम्बात् । तथा चाकृतकार्यत्वेन विषण्णेषु भवत्सु दर्पणवदम्लानं वधूमुखं विषादादतिम्लानं भविष्यति । ततस्तु 'प्रायो वीररताः स्त्रियः' इति ता अपि विरज्येयुः । तदुक्तम्—'अकृतार्थो गृहं गच्छन्दारैरप्यवमन्यते' इति भावः ॥

अत्र बहूनां बहवः क्षतिलाभभागिनस्ते निवर्तयन्तीति व्यवसायो न क्रियत इत्यत आह—

णिज्जन्ति चिरपअत्ता समुद्दगहिरा व पडिपहं णइसोत्ता ।
तीरेन्ति णिअत्तेउं असमाणिअपेसणा ण उण सप्पुरिसा ॥२४॥

[नीयन्ते चिरप्रवृत्तानि समुद्रगम्भीराण्यपि प्रतिपथं नदीस्रोतांसि ।
तीर्यन्ते निवर्तयितुमसंमानितप्रेषणा न पुनः सत्पुरुषाः ॥]

चिरं व्याप्य प्रवृत्तानि वहद्रूपाणीत्याभ्यसिकवेगवत्त्वम् । समुद्रवद्गभीराणीत्य-साध्यसेतुकत्वम् । एवंभूतान्यपि नदीस्रोतांसि प्रतिपथं विपरीतमार्गं पश्चान्नीयन्ते उपायेन नेतुं शक्यन्ते । सत्पुरुषाः पुनरनिष्पादितप्रेषणाः सन्तः परावर्तयितुं न शक्यन्ते । प्रेषणमीश्वराज्ञा । तथा च जलस्याचेतनस्य स्वाभाविकक्रमतः परावृत्ति-रुपायसाध्या न त्वजडानां चेतनानामिति राजाज्ञानिष्पत्तिरेव पुरुषार्थ इति भावः ॥

समुद्रविमर्दः कदापि केनापि न कृत इति कपिभिः कथं कर्तुं शक्यत इत्यत आह—

जो लङ्घिज्जइ रइणा जो वि खविज्जइ खआणलेण वि बहुसो ।
कह सो उइअपरिहओ दुत्तारो त्ति पवआण भण्णउ उअही २५

[यो लङ्घ्यते रविणा योऽपि क्षप्यते क्षयानलेनापि बहुशः ।
कथं स उदितपरिभवो दुस्तार इति प्लवगानां भण्यतामुदधिः ॥]

रविलङ्घितत्वात्क्षयानलेनापि बहुशः क्षपितत्वाच्चोदितो जातः पराभवो यस्य तादृगप्युदधिः प्लवगानां दुस्तरणीय इति कथं भण्यताम् । भणितुमप्ययोग्यमिद-मित्यर्थः । प्लवेन गच्छन्तीति प्लवगाः । उदकं निधीयतेऽत्रेत्युदधिरिति च समुद्र-गञ्जनसामग्रीकथनम् । तथा च वानरा अलङ्घ्यमपि लङ्घन्ते, अदाह्यमपि दहन्ति, किं पुनस्तरणिलङ्घितमनलदग्धं वा समुद्रम् । यथादृष्टपरकृतकार्यानुकारित्वादिति भावः । उचितपरिभवो योग्यपरिभव इति वा ॥

तथापि समुद्रलङ्घनमतिदुष्करमिति न तथा कर्तव्यमित्यत आह—

चिन्तिज्जउ दाव इमं कुलववएसक्खमं वहन्ताण जसम् ।
लज्जाइ समुद्दस्स वि दोण्ह वि किं होइ दुक्करं बोलेउम् ॥ २६ ॥

[चिन्त्यतां तावदिदं कुलव्यपदेशक्षमं यशो वहताम् ।
लज्जायाः समुद्रस्यापि द्वयोरपि किं भवति दुष्करं व्यतिक्रमितुम् ॥]

युष्माभिरिदं तावच्चिन्त्यताम्। किं तत्। कुलस्य वंशस्य व्यपदेशेऽस्मिन्कुले इदमनुरूपमिति कथने क्षमं योग्यं यशो वहताम्। युष्माकं लज्जायाः समुद्रस्यापि द्वयोरपि मध्ये किं वस्तु व्यतिक्रमितुं लङ्घितुं दुष्करं भवति। शतयोजनावच्छिन्नस्य समुद्रस्य लङ्घनं सुकरमनवच्छिन्नाया लज्जायास्तु दुष्करमत एवाभ्यर्हिततत्वेन प्रथमं तदुपन्यास इति भावः॥

दुष्करमपि लज्जाया एव लङ्घनं कर्तव्यं न तु समुद्रस्येत्यत आह—

**किरणासणिं रहुसुए सुहस्स किर णासणिं विमुञ्चउ मा दा।**
**सेलससारअमे हो तुम्हे जेऊण चन्दसारअमेहो॥ २७॥**

[किरणाशनिं रघुसुते सुखस्य किल नाशनीं विमुञ्चतु मा तावत्।
शैलससारतमान्भो युष्माञ्जित्वा चन्द्रशारदमेघः॥]

भो इति संबोधनम्। किल संभावनायाम्। शुभ्रतया चन्द्र इव शारदो मेघ इति रूपकम्। शरन्मेघा बहुधा वज्रं त्यजन्तीत्याशयात्। रघुसुते किरणरूपामशनिं वज्रं मा तावद्विमुञ्चतु। किंभूताम्। सुखस्य नाशनीं नाशिकाम्। किं कृत्वा। शैलादपि ससारतमान्बलवत्तमान्। यद्वा शैलं स्यति खण्डयतीति शैलसं वज्रं तद्वत्सारः स्थिरांशो येषां तेषु श्रेष्ठतमान् वज्रसमस्थिरांशान्युष्माञ्जित्वा। रामरक्षोयुक्तानतिक्रम्येत्यर्थः। मेघो वज्रेण शैलादीनतिक्रम्य तालादीन्प्रहरति। तथा च भवद्भिः समुद्रेऽनुल्लङ्घिते जानकी प्राप्त्यभावेन मया गृहाय न गन्तव्यमथ भवन्तोऽपि न गमिष्यन्तीति चन्द्रः किरणवज्रपातेन विरहिणो युष्मानभिभूयातिवियोगिनं रामचन्द्रमभिभविष्यतीति सर्वतोऽनुचितमिति भावः। 'सारो बले स्थिरांशे च' इति कोषः॥

समुद्रस्य लङ्घने सत्यभीष्टमिति दर्शयन्नलङ्घने महदनिष्टमित्याह—

**बन्धवणेहब्भहिओ होइ परो वि विणएण सेविज्जन्तो।**
**किं उण कओवआरो णिक्कारणणिद्धबन्धवो दासरही॥ २८॥**

[बान्धवस्नेहाभ्यधिको भवति परोऽपि विनयेन सेव्यमानः।
किं पुनः कृतोपकारो निष्कारणस्निग्धबान्धवो दाशरथिः॥]

परोऽपि शत्रुरपि विनयेन सेव्यमानः सन्बान्धवादपि स्नेहेनाभ्यधिको भवति। बान्धवादप्यधिकं स्नेहमाचरतीत्यर्थः। कृतवालिवधरूपोपकारोऽत एव निरुपधिस्नेहविशिष्टो बान्धवो मित्रं दाशरथिः किं पुनः। तथा च स्वभावतो मित्रमेवार्य

सेव्यमानः सेव्यमानशत्रुकृतस्नेहादप्यधिकं स्नेहमाचरिष्यतीत्यभीष्टम् । अनभीष्टक्षेप तु बान्धवः सन्स्नेहाभ्यधिकोऽपि पुरुषो विगतनयेन दुर्नीत्या सेव्यमानः पर उदासीनो रिपुर्वा भवति । किं पुनरुक्तविशेषणविशिष्टो दाशरथिः । तथा च यत्र भ्रात्रादयोऽप्यन्यथा भवन्ति तत्र मित्रमयमन्यथा स्यादिति किमाश्चर्यम् । अतो महती क्षतिः स्यादित्यत्र वालिविरुद्धोऽहमेव निदर्शनमिति भावः । 'बान्धवो भ्रातृमित्रयोः' इति कोषः ॥

रामानुरागवैराग्ययोरस्माकं को लाभः का च क्षतिरित्यत आह—

**अइरपरूढ व्व लआ समरुच्छाहे उदुम्मि व विलम्बन्ते ।**
**अज्ज वि दाव मह इमा मउलेइ च्चिअ फलं ण दावेइ सिरी २९**

[अचिरप्ररूढेव लता समरोत्साहे ऋताविव विलम्बमाने ।
अद्यापि तावन्ममेयं मुकुलायत एव फलं न दर्शयति श्रीः ॥]

अचिरप्ररूढा लतेव ममेयं राज्यश्रीः ऋताविव भवतां समरोत्साहे विलम्बमाने सत्यद्यापि तावन्मुकुलायत एव संकुचत्येव । न तु विकाससाध्यं राज्यभोगरूपं फलं दर्शयति । जनयतीत्यर्थः । यथा वसन्तादावनागच्छति लता मुकुलायत एव मुद्रणमेव धत्ते तत्तत्समयजपुष्पसाध्यं फलं न दर्शयति तथा भवदुत्साहे शिथिलीभवति राज्यलक्ष्मीरपीत्यर्थः । अचिरप्ररूढेति लताविशेषणमुपमेयश्रियो नूतनत्वेनानुपभुक्तत्वं द्योतयति । तथा च मुकुलायत इति संकोचविकासोभयात्मकमुकुलनरूपमध्यमावस्थाकथनेन भवद्व्यवसायाधीनरामानुरागसंशयाद्राज्यश्रीरपि संशयदोलामारोहतीति फलतो ममैवोपकारापकाराविति भावः । लता नाम नायिकाविशेषस्तेनाचिरोढापि ऋतुविलम्बेन स्त्रीत्वव्यञ्जकशरीरविशेषे मुकुलायमाना सती गर्भात्मकं फलं न दर्शयतीति ध्वनिः ॥

धीरोदात्तो रामः कथमस्मासु क्रोधं करिष्यतीत्यत आह—

**केच्चिरमेत्तं व ठिई एअ विसंवाइआ ण मोच्छिहि रामम् ।**
**कमलम्मि समुप्पण्णा तं च्चिअ रअणीसु किं ण मुञ्चइ लच्छी ३०**

[कियच्चिरमात्रं वा स्थितिरेवं विसंवादिता न मोक्ष्यति रामम् ।
कमले समुत्पन्ना तदेव रजनीषु किं न मुञ्चति लक्ष्मीः ॥]

स्थितिर्धैर्यमेवं भवतामव्यवसायेन विसंवादिता विचालिता सती कियच्चिरमात्रं वा

कियदवधिककालं वा। अयमेवाधिकः कालो वृत्त इत्यर्थः। रामं न मोक्ष्यति। अतःपरं मोक्ष्यत्येव। निदर्शयति—कमलोत्पन्नापि लक्ष्मी रजनीषु तदेव कमलं किं न मुञ्चति अपि तु मुञ्चत्येव। तत एव निशि कमलमश्रीकं भवतीत्यर्थः। तथा च कलमवत्कोमलत्वेन प्रतीयमानो रामो लक्ष्मीवचञ्चलया स्वोत्पन्नयापि स्थित्या रजनीवद्रागजनकविसंवाददशायामवश्यं मोक्तव्यः। तथा सत्यधीरो भवन्वालिवधदृष्टसारः सर्वानपि नो निहनिष्यतीति भावः। संवादो विचलत्वम्॥

यद्येवं समर्थो रामस्तत्कथमित्थमप्रतिभो लक्ष्यत इत्यत आह—

**सअलुज्जोइअवसुहे समत्थजिअलोअवित्थरन्तपआवे।**
**ठाइ ण चिरं रविम्मि व विहाणपडिआ वि मइलदा सप्पुरिसे ३१**

[सकलोद्योतितवसुधे समस्तजीवलोकविस्तीर्यमाणप्रतापे।
तिष्ठति न चिरं रवाविव विधान(विभात)पतितापि मलिनता सत्पुरुषे]

सकला उद्योतिता अर्थात्कीर्त्या वसुधा येन। समस्तजीवलोके विस्तीर्यमाणः प्रतापश्च येन। तादृशे कीर्तिप्रतापशालिनि सत्पुरुषे विधानं प्रकृतकार्यानुकूलः प्रकारस्तच्चिन्तापतितापि मलिनता चिरं न तिष्ठति। रवाविव। अत्र पक्षे उद्योतः किरणस्तच्छालित्वमुद्योतितत्वम्। प्रताप औष्ण्यम्। विहाणशब्दो देश्यां प्रभातवाची। तथा च यथोक्तविशेषणद्वयवति रवौ विभातपतिता मलिनता प्रकाशविशेषाभावश्चिरं न तिष्ठति तथा सत्पुरुषेऽपि। तथा च विशेषणद्वयविशिष्टो रामः प्रकारं चिन्तयन्नित्थमास्ते। तत्स्फूर्तौ मालिन्यमपि जह्यात्स्वकार्यं च कुर्यादपकर्षमात्रमस्माकं स्यादिति भावः॥

उपकारिणामुपकारः कर्तव्य एवेत्याह—

**सप्पुरिसपाअडवहं पढमं जं राहवेण अम्हासु कअम्।**
**होज्ज व ण होज्ज व समं अम्हेहिँ कअं पि किं उण अकीरन्तम् ३२**

[सत्पुरुषप्रकटपथं प्रथमं यद्राघवेणास्मासु कृतम्।
भवेद्वा न भवेद्वा सममस्माभिः कृतमपि किं पुनरक्रियमाणम्॥]

राघवेण प्रथमं यदुपकारस्वरूपमस्मासु कृतं तदस्माभी राघवे कृतमपि तत्कृतेन समं भवेद्वा न वा भवेत्, किं पुनरक्रियमाणम्। तथा च राघवेण कृतो बालिवधरूप उपकारः कृतेनापि सीतोद्धारेणास्माभिः सदृशीकर्तुं न शक्यते, किं

पुनरुक्ततेनेत्यर्थः । यत्किंभूतम् । सत्पुरुष एव प्रकटः पन्था अवतरणमार्गो यस्य तत् । सत्पुरुषादेवोपकार आयातीत्यर्थः । यद्वा सत्पुरुषप्रकटपथ इत्यनुकरणीयम् । सत्पुरुषस्य प्रकटः पन्था यत्सत्पुरुषानुपकारस्वरूपेणैव पन्था चलतीत्यर्थः । प्राकृते लिङ्गवचनमतन्त्रमिति पथमिति नपुंसकनिर्देशः । राघवेण सत्पुरुषस्य वालिनः प्रकटो वधो यत्र तादृशं यत्कृतमित्यर्थो वा ॥

रावणवधार्थमयमुपायः स तु दुष्कर इत्यत आह—

राहवपत्थिज्जन्तो उद्धो दीसिहइ केच्चिरं व दहमुहो ।
दूरन्तपेच्छिअव्वो सिहरपडन्तविअडासणि व्व वणदुमो ॥३३॥

[राघवप्रार्थ्यमान ऊर्ध्वो द्रक्ष्यते कियच्चिरं वा दशमुखः ।
दूरान्तप्रेक्षितव्यः शिखरपतद्विकटाशनिरिव वनद्रुमः ॥]

राघवेण प्रार्थ्यमानोऽवरुध्यमानो दशमुखः कियच्चिरं वा ऊर्ध्वो वृद्धिशीलो द्रक्ष्यते नातः परं द्रष्टव्यः । क एव । दूरान्तमतिदूरं ततः प्रेक्षितव्यः । ऊर्ध्वत्वात् । एवं शिखरे शिरसि पतन्विकटाशनिर्यस्य तादृशो वनद्रुम इव । यथा द्रुमेषु सत्सु वज्रेणोर्ध्वो वृक्षः पात्यत एवं राक्षसेषु सत्स्वपि रामेण रावणः पातनीय इति भावः । 'प्रार्थितः शत्रुसंरुद्धे याचितेऽभिहितेऽपि च' इति विश्वः ॥

राक्षसास्तावदतिबला वानरानभिभवेयुर्दूरे रावण इत्यत आह—

बालाअवं व एत्तं धुअअम्बालाअवंसुणिवहच्छाअम् ।
कइसेण्णं रअणिअरा तमरअणिअर व्व पेच्छिउं पि अओग्गा ३४

[बालातपमिवायद्धुतातात्राम्रालातपांसुनिवहच्छायम् ।
कपिसैन्यं रजनिचरास्तमोरजोनिकरा इव प्रेक्षितुमप्ययोग्याः ॥]

तमसोऽन्धकारस्य रजो धूलिः । सूक्ष्मभाग इति यावत् । तत्समूहा इव रजनिचराः श्यामत्वात् बालातपमिव कपिसैन्यं कपि॰त्वादागच्छत्सत्प्रेक्षितुमप्ययोग्याः किं पुनर्योद्धुम् । तथा च यथा बालातपेनान्धकारो नाश्यते तथा कपिसैन्येन राक्षसा नाशनीया इति भावः । कीदृशं कपिसैन्यम्, बालतपं वा । धुतस्य कम्पितस्य ताम्रालातस्य ज्वलदङ्गारस्य ये पांसवः स्फुलिङ्गास्तच्छायं तत्तुल्यरूपं पिङ्गलत्वात् । कम्पने सत्यङ्गारात्स्फुलिङ्गा निर्गच्छन्ति । धुतस्फुलिङ्गसाम्येन कपीनां चाञ्चल्यं बाहुल्यं च सूचितम् ॥

राक्षसा यथा तथा सन्तु रावणस्तु गुरुः प्रतिपक्षस्तत्कथमिदमित्यत आह—

**गुरुअम्मि वि पडिवक्खे होन्ति भडा अहिअवारिअप्पडिऊला ।**
**पडिगअगन्धा इद्धा उद्धङ्कुसरुद्धमत्थअ व्व गइन्दा ॥ ३५ ॥**

[गुरावपि प्रतिपक्षे भवन्ति भटा अधिकवारितप्रतिकूलाः ।
प्रतिगजगन्धाविद्धा ऊर्ध्वाङ्कुशरुद्धमस्तका इव गजेन्द्राः ॥]

महत्यपि शत्रौ सति भटा अधिकं वारिताः प्रतिकूला विपक्षा यैस्तथा भवन्ति । यथा प्रतिगजगन्धेनाविद्धाः स्पृष्टा एवमूर्ध्वेनोत्थापितेनाङ्कुशेन रुद्धं मस्तकं येषां तादृशा गजेन्द्राः । तथा च यथा यथा निवर्तनायाधिकमङ्कुशप्रहारस्तथातथाधिकं प्रतिगजाभिभवाय चलन्तीत्यर्थः । तेन गजेन्द्रप्राया भवन्तो वीरा गुरुप्रतिपक्षरावणसत्त्वेऽपि प्रतिगजप्रायराक्षसबलोपमर्दका अधिकं भविष्यथेति भावः । अधिकं वारिता अपि प्रतिकूला विपक्षसंमुखा भवन्तीत्यर्थो वा ॥

अस्मदतिरिक्ताः कति न सन्ति त एव सहायकमाचरन्त्वित्यत आह—

**विसमम्मि वि अविसण्णो धारेइ धुरं धुरंधरो चिअ णवरम् ।**
**किं दिणअरोवराए दिणस्स होइ अवलम्बणं ससिबिम्बम् ॥३६॥**

[विषमेऽप्यविषण्णो धारयति धुरं धुरंधर एव केवलम् ।
किं दिनकरोपरागे दिनस्य भवत्यवलम्बनं शशिबिम्बम् ॥]

प्राणसंकटरूपविषमेऽप्यविषण्णः साध्यवसायो धुरंधर एव भारसमर्थ एव केवलं धुरं धारयति । तथा च प्रकृतकर्मणि भवन्त एव धुरंधरा नान्य इत्याशयः । एतदेव द्रढयति—दिनकरस्य ग्रासे दिनस्यावलम्बनं प्रकाशमयत्वादिसौभाग्यरक्षकं किं विद्यमानमपि विधुबिम्बं भवति । अपि तु न भवतीत्यर्थः । तथा च दिनकरप्रायाणां भवतामनध्यवसायच्छन्नत्वरूपे ग्रासे उज्वलत्वेन दिनप्रायस्य प्रकृतकार्यस्यावलम्बनं निष्पादकाः शीतलतेजस्त्वेन विधुबिम्बप्राया भवदन्ये न भवेयुः । तेन यथोद्ग्रासदशायां रविरेवावलम्बनं दिनस्य तथा प्रकृतेऽप्यनध्यवसायमपहाय भवन्त एव भवेयुरिति भावः ॥

यावदेव कार्यासिद्धिस्तावदेव गौरवमस्मद्भुजानां तत्सिद्धौ तु लघुत्वमेव स्यादित्यत आह—

**मुक्कसलिला जलहरा अहिणवदिण्णफला अ पाअवणिवहा ।**
**लहुआ वि होन्ति गरुआ समरमुहोहरिअमण्डलग्गा अ भुआ ॥३७**

[मुक्तसलिला जलधरा अभिनवदत्तफलाश्च पादपनिवहाः ।]
लघवोऽपि भवन्ति गुरवः समरमुखावहृतमण्डलाग्राश्च भुजाः ॥]

मुक्तं सलिलं यैस्तादृशा मेघाः, अभिनवानि दत्तानि फलानि यैः, अथवा तत्कालदत्तानि फलानि यैस्तादृशा वृक्षसमूहाः, समरमुखादवहृता अवपातिता मण्डलाग्राः खड्गा येभ्यस्तादृशा भुजा लघवोऽपि गुरवो भवन्ति । अयं भावः—मेघवृक्षभुजा जलखड्गसत्तादशायां गौरवयुक्ताः स्थिताः अथ जलादीनां मुक्तिदानत्यागदशायां लघुभूता अपि सन्तः सस्योत्पत्तितृप्तिशत्रुक्षयादिरूपकार्यकारित्वेनादरणीयतारूपगौरवयुक्ता एव भवन्ति । तथा च भवद्भुजा अपि कृतकार्या गुरू भवेयुः, अन्यथा तु लघव एव स्युरिति भावः । विरोधाभाससूचनायापिशब्दः ॥

अस्माकं युद्धसामर्थ्यमेव नास्तीत्यत आह—

**दप्पं ण सहन्ति भुआ पहरणकज्जसुलहा धरेन्ति महिहरा ।**
**वित्थिण्णो गअणवहो णिज्जइ कीस गुरुअत्तणं पडिवक्खो ॥३८**

[दर्पं न सहन्ते भुजाः प्रहरणकार्यसुलभा ध्रियन्ते महीधराः ।
विस्तीर्णो गगनपथो नीयते किमिति गुरुत्वं प्रतिपक्षः ॥]

युष्माकं भुजाः परेषां दर्पं न सहन्ते तथा च परानेत एव निघ्नन्ति न तु व्यापार्या इति शीघ्रकारिण इत्युक्तम् । एतद्व्यापार्यानाह—प्रहरणमस्त्रं प्रहारक्रिया वा तत्कार्ये सुखलभ्या उत्पाटनोद्वहनदुःखनिरपेक्षा महीधरा ध्रियन्ते तिष्ठन्ति । तथा च खड्गादिषु च्छेदभेदशङ्कापीति तच्छून्या इत्यर्थः । पर्वताहरणमार्गो नास्तीत्यत आह—विस्तीर्णो गगनमेव पन्थाः । गतागतसंकोचशून्य इति भावः । तथापि विपक्षः किमिति गुरुत्वं नीयते । स्वानध्यवसायेन सर्वेषामादरविषयीक्रियत इति भावः ॥

तर्हि रामलक्ष्मणावप्यपहाय समुद्रमुल्लङ्घ्य गृहीतमहीधरा लङ्कामिदानीमेवावरोत्स्याम इत्याशङ्क्य निवारयति—

**धीरं परिरक्खन्ता गरुअं पि भरं धरेन्ति णवर सुउरिसा ।**
**ठाणं च्चिअ अमुअन्ता णीसेसं तिहुअणं खवेन्ति रविअरा ॥३९॥**

[धैर्यं परिरक्षन्तो गुरुमपि भरं धारयन्ति केवलं सुपुरुषाः ।
स्थानमेवामुञ्चन्तो निःशेषं त्रिभुवनं क्षपयन्ति रविकराः ॥]

धैर्यं रक्षन्तः सुपुरुषा गुरुमपि भरं धारयन्ति निर्वाहयन्ति । अर्थान्तरं न्यस्यति—स्थानं रविमण्डलममुञ्चन्त एव रविकरास्त्रिभुवनं क्षपयन्ति निर्दहन्ति । तथा च यथा रविकरा रविमण्डलत्यागेनोष्मादिरूपतया निशि व्यवच्छिद्य वर्तमाना अकिंचित्करास्तथा भवन्तोऽपि रविकरप्राया रविमण्डलप्रायधैर्यत्यागेन रामलक्ष्मणरूपनायकानवष्टब्धा अकिंचित्करा एव स्युरिति धैर्यरक्षया तत्साचिव्येन सर्वं साधयन्त्विति भावः ॥

अत्रैतत्कार्यं केचिन्मन्यन्ते केचिन्नेति सकलसंमत्यभावान्न कुर्म इत्यत आह—

**काअरपडिमुक्कधुरं जिणन्ति पत्थाणलङ्घिअग्गक्खन्धा ।**
**पढमं ता णिअअबलं पच्छा पहरेहिँ सुउरिसा पडिवक्खम् ॥४०॥**

[कातरप्रतिमुक्तधुरं जयन्ति प्रस्थानलङ्घिताग्रस्कन्धाः ।
प्रथमं तावन्निजकबलं पश्चात्प्रहरणैः सुपुरुषाः प्रतिपक्षम् ॥]

प्रस्थानेन लङ्घिताग्रस्कन्धा अग्रस्कन्धं सैन्याग्रं तदप्युल्लङ्घ्य गच्छन्तः सुपुरुषाः कातरेण प्रतिमुक्ता धुरा यत्र तादृशं निजकं बलं तावत्प्रथमं जयन्ति । पृष्ठतः पुरोगमनरूपलङ्घनेनेत्यर्थः । पश्चात्प्रहरणैरस्त्रैः प्रतिपक्षं जयन्तीत्यनुषङ्गः । तथा च यथा विपक्षजयेन यशोलाभस्तथा सजातीयादप्युत्कर्षेणेति शूराणामितरनैरपेक्ष्यमेव सम्यगिति ये न मन्यन्ते ते कातरा इति भावः ॥

अस्माकं दृष्टसामग्रीसाचिव्येऽप्यदृष्टसामग्रीवैकल्यशङ्कया शैथिल्यमित्यत आह—

**अण्णेन्ति मङ्गलाइं अल्लिअइ सिरी जसो पवड्डइ पुरओ ।**
**पडिवण्णरणुच्छाहे पडिवक्खुद्धरणपत्थिअम्मि सुउरिसे ॥ ४१ ॥**

[अनुगच्छन्ति मङ्गलान्यालीयते श्रीर्यशः प्रवर्धते पुरतः ।
प्रतिपन्नरणोत्साहे प्रतिपक्षोद्धरणप्रस्थिते सुपुरुषे ॥]

प्रतिपक्षस्योद्धरणं विनाशस्तदर्थं प्रस्थिते सुपुरुषे शत्रुनाशजन्यानि मङ्गलान्यनुगच्छन्ति संबध्यन्ते जयश्रीरालीयते मिलति यशश्च खड्गादिजनितं प्रवर्धते । तथा च सत्पुरुष एष रामस्तदृष्टेनैव सर्वं संघटनीयमित्यर्थः । कुतो ज्ञायत इत्यत आह—कीदृशे । पुरतः प्रस्थानपूर्वं प्रतिपन्नः प्राप्तो रणोत्साहो येन, ज्ञातो रणोत्साहो यस्येति वा तादृशि । तथा च मनोविशुद्धिरूपयात्रासाद्गुण्यसूचकरणोत्साहेनैव सर्व-

मिदमुन्नीतमिति भावः । अथ वा पुरतो नगरतः । प्रस्थानस्थानादिति यावत् । अनुगच्छन्ति मङ्गलानीत्यादि योज्यम् । तथा च रामेण सीतामुद्दिश्य चलितेन सीतावार्तालाभनिरङ्कुशहनूमत्समागमादिरूपमङ्गलं वालिवधेन जयलक्ष्मीरत एव प्रौढं यशश्च लब्धमित एवाग्रिमकार्यसिद्धिरपि ज्ञातव्येति भावः । 'पुरतो यशो वर्धते' इति केचित् ॥

रावणेन समं रामस्य वैरमस्तीति स तथा कुर्यादस्माभिस्तु निर्बीजं तत्कृतः कर्तव्यमित्यत आह—

**वच्चन्ता अइभूमिं कड्ढिअसुहडासिवत्तवन्थावडिआ ।**
**णवर ण चलन्ति बीअं लुअवक्खा महिहर व्व वेराबन्धा ॥४२॥**

[व्रजतोऽतिभूमिं कृष्टसुभटासिपत्रपथापतिताः ।
केवलं न चलन्ति द्वितीयं लूनपक्षा महीधरा इव वैराबन्धाः ॥]

केवलमाबध्यमानवैराणि द्वितीयं पुरुषं न चलन्ति तत्र न संक्रामन्ति । अन्यदन्यत्र निमित्तवशात्संक्रामत्यपि वैरं तु स्वासाधारणसंबन्धिपुरुष एव तिष्ठतीति केवलपदार्थः । कीदृशा वैराबन्धाः । अतिभूमिं प्रकर्षकाष्ठां व्रजन्तः । यथायथा वैरनिमित्तस्मरणं तथातथा तद्वृद्धिः । तथा च तथा तद्वर्धते यदुपरि प्रकर्षो न संभवतीत्यतिगौरवमेकमचलननिमित्तमित्यभिप्रायः । एवं पूर्वनिपातानियमात्सुभटेन वैरिणा मारणाय कोषादाकृष्टं यदसिपत्रं तदेव पन्था मार्गस्तेनापतिता आगताः । खड्गादिकमुद्यम्य जिघांसुना पुरुषेण सहोत्पन्नस्य वैरस्य खड्गरूपवर्त्मागतत्वमुत्प्रेक्षितमनेन । तथा च खड्गेत्युपलक्षणम् । किं तु यदेव यत्र वैरनिमित्तं तदेव तत्र वैरपथ इति प्रकृते वधूहरणरूपं वैरवर्त्म रामसंबद्धमेवेति द्वितीयमचलनबीजमिति वैरं युष्मासु कथं गच्छेत्तथाप्येकस्य वैरे तदनुयायिनः सर्व एव परम्परासंबद्धवैरास्तत्प्रत्युद्धारमाचरन्तीति भवन्तोऽपि तथा कुर्वन्त्विति प्रघट्टकार्थः । अत्र दृष्टान्तमाह— महीधरा इव । यथा छिन्नपक्षाः शैला यत्र पतितास्ततो द्वितीयस्थानं न गच्छन्तीत्यर्थः । तेऽप्यतिशयितां बह्वीं भूमिमुड्डीय व्रजन्तः कृष्टसुभटासिपत्रेण पक्षच्छेदहेतुना पथ उड्डयनमार्गादापतिताः । भूमावित्यर्थात् । केचित्तु—'वैराबन्धा द्वितीयं न चलन्तीति प्रत्येकमेव वैरिणः प्रत्येकमेव तदुद्धारमाचरन्तीति रामसंबन्धेन रावणेन समं जातवैरा वयं सर्व एव तथा करवामेति भावः' इत्याहुः ॥

राघवेण यदि वैरं स्यात्तदा शोचनामपहाय कार्यमेव घटयेत्तत्कथमस्माभिरेव तथा कर्तव्यमित्यत आह—

ता सोअइ रहुतणओ ताव अ सीआ वि हत्थपल्हत्थमुही।
ताव अ धरइ दहमुहो जाव विसाएण वो तुलिज्जइ धीरम्॥ ४३॥

[तावच्छोचते रघुतनयस्तावच्च सीतापि हस्तपर्यस्तमुखी।
तावच्च ध्रियते दशमुखो यावद्विषादेन वस्तुल्यते धैर्यम्॥

रामस्तावदेव सीतानिमित्तं शोचते तावत्सीतापि चिन्तया हस्तविन्यस्तमुखी। विरहिणी हस्ते मुखमारोप्य चिन्तयतीति समाचारः। तावच्च रावणो ध्रियते जीवति यावद्युष्माकं धैर्यं सीतोद्धाराय स्थिरतारूपं विषादेनानध्यवसायमूलक्रमनस्तापेन तुल्यते सदृशीक्रियते। तथा च युष्मद्धैर्यविषादाविदानीं सत्प्रतिपक्षिताविति प्रवृत्तिनिवृत्त्योरेकमपि न जनयतः। यदेव त्वधिकबलं स्यात्तदेव स्वकार्यं जनयेत्। तथा सति यदि विषादं जित्वा धैर्यं वर्तेत तदा रामशोचनसीतासंतापरावणजीवितानामभावोऽपि भवेदिति भावः। तुल्यते उत्क्षिप्यते वा॥

प्रकृतकार्योन्मुखा अपि वयं यदि विषण्णत्वेन ज्ञातास्तदा तथैवास्तु दृश्यतामितरः कतरस्तत्कुर्यादित्यत आह—

अण्णो अण्णस्स मणो तुम्ह ण आणे अणाहिओ मह अप्पा।
णिव्वण्णन्तस्स इमं दररूढवणप्पसाहणं हणुमन्तम्॥ ४४॥

अन्यदन्यस्य मनो युष्माकं न जानेऽनाधिर्ममात्मा।
निर्वर्णयत इमं दररूढव्रणप्रसाधनं हनूमन्तम्॥]

अन्यस्य मनोऽन्यत् स्वमनसो भिन्नम्। अतो युष्माकं मनो न जाने। स्वचित्तसाक्षिकमेव स्वयं ज्ञायते। ततो युद्धादिकं कर्तुमकर्तुं वा युष्माकं चित्ते किमस्तीति न जानामि। किं तु भवन्त एव जानन्ति। मम पुनरात्मा अनाधिर्भवद्भिर्विना कार्यं कथं सिध्येदित्यन्तर्व्यथाशून्यः। कुत इत्यत आह—मम किंभूतस्य। दररूढः किंचित्संक्षुभितोऽक्षयुद्धकालीनो व्रण एव प्रसाधनमलंकरणं यस्य निर्जितविपक्षत्वात्। एतादृशं हनुमन्तं निर्वर्णयतः पश्यतः। तथा च भवतामौदास्येऽपि ज्ञातप्रकृतकार्यसामर्थ्यो वचनस्थो हनूमानेव साधयेदित्यध्यवसायवानस्मि। ततस्तमेव मानयि-

ष्यामीति भावः। भवन्तस्त्वकृतकार्यत्वादक्षतत्वाच्च निर्भूषणा एव स्युरिति तात्पर्यम्। यद्वा खड्गाद्यभिघातेन वपुरिदं वैक्लव्यमासादयेदित्यत आह—अण्णो अण्णस्सेति। अयमर्थः—युष्माकं मनो न जाने क्षतादिशङ्कया युद्धं प्रत्याधिविशिष्टमाधिशून्यं वेति विशिष्टं न जानामीत्यर्थः। अन्यदन्यस्य मनः। यतः मम पुनरात्मा युद्धं प्रत्यनाधिरन्तर्व्यथाशून्यः। किंभूतस्य। तथाभूतं हनूमन्तं निर्वर्णयतः। तथा च युद्धे शौर्यचिह्नं क्षतमदृष्टलभ्यमिति तदेवाकाङ्क्षामीति भावः॥

तर्ह्यस्माकमसंमानेन का क्षतिरित्यत आह—

पडिवक्खस्स अ लच्छिअं आसाएन्तएणं
णिअअकुलस्स अ कित्तिअं आसाएन्तएणम्।
मरणं पि वरं लद्धअं णअणिम्माणएणं
पुरिसेण चिरं जीविअं ण अ णिम्माणएणम्॥ ४५॥

[प्रतिपक्षस्य च लक्ष्मीमास्वादयता
निजककुलस्य च कीर्तिमासादयता।
मरणमपि वरं लब्धकं नयनिर्मापकेण
पुरुषेण चिरं जीवितं न च निर्मानकेन॥]

प्रतिपक्षस्य लक्ष्मीमास्वादयता हठादाच्छिद्योपभुञ्जानेन। एतेन बाहुबलमुक्तम्। एवं निजकुलक्रमागतां कीर्तिमासादयता लभमानेन। एतेनाभिजनशालित्वम्। एवं नयस्य नीतेर्निर्मापकेण। अनेनोत्पथगामित्वविरहः। एवंभूतबहुगुणेनापि पुरुषेण दैवान्निर्मानकेन प्रशस्तमानशून्येन सता लब्धम्। स्वार्थे कन्। मरणमपि वरं श्लाघनीयम्। चस्त्वर्थे। न तु चिरं व्याप्य लब्धं जीवितं वरम्। न श्लाघनीयमित्यर्थः। तथाच तथाविधस्य पुरुषस्य मानविरहे जीवितान्मरणमेव गरिष्ठमिति भवन्तोऽपि तथाविधा मानरक्षणाय यतन्तामिति भावः॥

भवदसंमानादनिष्टशङ्काशून्यैरस्माभिरुपेक्षयानर्पितचित्तैरतिगम्भीरं भवदुक्तं न बुध्यत इत्यत आह—

एअ वि सिरीअ दिट्ठआ के सरलच्छिआए
करकमलस्स अ छिक्कआ केसरलच्छिआए।
मुज्झन्ति सविण्णाणआ समरसंमाणअम्मि
एअ ममम्मि भणन्तए समरसामणअम्मि॥ ४६॥

[एवमपि श्रिया दृष्टकाः के सरलाक्ष्याः
करकमलस्य च स्पृष्टया केसरलक्ष्म्या ।
मुह्यन्ति सविज्ञानकाः समरसंमानदे
एवमपि भणति समरसमापके ॥]

एवमनेन प्रकारेण मयि भणति सति के सविज्ञानकाः । प्रशंसायां कन् । के प्रशस्तविज्ञानविशिष्टाः पुरुषा मुह्यन्ति मोहं गच्छन्ति उक्तमर्थं नावगच्छन्ति । अपि तु न केऽपीत्यर्थः । तथा च तथा मया स्फुटीकृत्योक्तं यथा सर्वे एवावगतवन्त इति भावः । सविज्ञानकाः कीदृशाः । सरले संमुखस्थे अक्षिणी यस्यास्तया सरलाक्ष्या श्रिया लक्ष्म्या दृष्टा अपि । कीदृश्या । कर एव कमलं तस्य केसरवल्लक्ष्मीर्यस्य तेन केसरलक्ष्म्या करतलभागेन स्पृष्टया । करतलवर्तिन्येत्यर्थः । एतावता लक्ष्म्यनुराग उक्तः । तथा च मोहकारणलक्ष्मीसत्त्वेऽपि ज्ञानवन्तस्तल्लक्ष्मीहरणमसत्तः शङ्कमाना नोपेक्षां कुर्युः । किं तु मदुक्तमाचरेयुरिति भावः । मयि कीदृशे । समरे संमानं ददातीति समरसंमानदस्तस्मिन् । तथा च न केवलं पूर्वलक्ष्मीरक्षामात्रमेतत्कर्मणा किं त्वग्रे लक्ष्मीलब्धिरपीत्याशयः । पुनः कीदृशे । समरस्य समापके निर्वाहके । तथा चाक्षमयता मया नोच्यते किं तु निर्दोषतासूचनाय । यद्वा समरसमानके समरे साहंकारे । यद्वा समौ युद्धे रसमानौ यस्य तस्मिन्समरसमानके । मानोऽहंकारः । यद्वा समरश्रमानते समरश्रमेण अनतेऽनाकुले । तथा चानुजीविषु सत्सु स्वामिना कार्यं क्रियत इत्यनौचित्येऽपि मयैव सर्वं निर्वाहणीयमथ च भवन्तः शासनीया इति भावः ॥

रावणरणे पराजय औत्सर्गिक इति मयैव सर्वं निर्वाह्यमिति कथमुच्यत इत्यत आह—

मा सोइज्जउ दुहिआ सीआ लोअएणं
णलिणि व समोलुग्गआ सीआलोअएणम् ।
दुहिए राहवहिअए कामइलन्तअम्मि
जीविअम्मि अहिलोहिआ का मइलन्तअम्मि ॥ ४७ ॥

[मा शोच्यतां दुःखिता सीता लोकेन
नलिनीव समवरुग्णा शीतालोकेन ।
दुःखिते राघवहृदये कामक्लाम्यमाने
जीवितकेऽभिलोभिका का मलिनायमाने ॥]

सीता लोकेन राक्षसवसतौ कथं स्थास्यति किं वा भविष्यतीति मा शोच्यताम्। रावणो मया मारणीय एवेति भावः। किंभूता। राघवहृदये दुःखिते सति दुःखिता। मद्विश्लेषेण रामहृदि दुःखं भवतीति कृत्वा दुःखवतीत्यर्थः। केव। शीत आलोकः किरणो यस्य तेन शीतालोकेन चन्द्रमसा। यद्वा शीतस्य हिमस्यालोको दर्शनं यस्मिंस्तेन हिमर्तुना समवरुग्णा म्लानीकृता नलिनीव। यथेत्थंभूता पद्मिनी लोकेन शोच्यते तथा सीतापि मा शोच्यतामिति व्यतिरेके दृष्टान्तः। यद्वा नलिनीव दुःखितेत्यन्वयः। अथाग्रिमगलितके दुहिए राहवहिअए इति प्रतीकेन सह योजना। तथा हि सीतोद्धारव्यग्रतया राघवहृदये दुःखिते सत्यस्माकं जीविते काभिलोभिकाभिलोभः। भावे ण्वुल्। तथा च यदि राघवहृदयं दुःखितं तदास्माभिर्जीवितव्यमेव न। रणे तु यदि मरणं तदा परार्थमिति यशो रामदुःखदर्शनाभावश्च। यदि तु जयस्तदा रामदुःखत्यागः प्रत्युपकारः स्वजीवनं च सिद्धमेवेति तदेव कर्तुमुचितमिति भावः। राघवहृदये किंभूते। सीताविश्लेषात्कामक्लाम्यमाने कामेन क्लान्तिं नीयमाने। अत एव मलिनायमाने प्रकाशाभावादिति भावः॥

चन्दअ व मेहमइलिए रअणीसारअम्मि
कमलअम्मि व हिमडड्ढए रअणीसारअम्मि ।
दुहिए राहवहिअए भमरोअत्तअम्मि
कुसुमम्मि व पव्वाअए भमरोअत्तअम्मि ॥ ४८ ॥

[चन्द्र इव मेघमलिनिते रजनीसारके
कमल इव हिमदग्धे रजोनिःसारके ।
दुःखिते राघवहृदये भ्रमरोदितव्ये
कुसुम इव प्रवाणे भ्रमरापवर्तितव्ये ॥]

राघवहृदये पुनः किंभूते । भ्रमरोदितव्ये धीरोदात्तत्वेन रोदनाभावनिश्चयेऽपि मोहदशायामाकस्मिकेन भ्रमेण सीते क्वासीत्यादि रोदितव्यं रोदनं यत्र तादृशे । संकटोत्तीर्णविश्लिष्टबन्धुप्राप्तिकालीनरोदनवद्भावनावशोपस्थापितसीताप्राप्तिभ्रमेण रोदितव्यं यत्रेति वा । हृदये कस्मिन्निव । मेघमलिनिते मेघच्छन्ने चन्द्र इव । सीतापहारचिन्ताकलङ्कितत्वात् । चन्द्रे कीदृशि । रजनीसारके रजनीं सारयति ज्योत्स्नया श्रेष्ठीकरोतीति रजनीसारकस्तस्मिन् । रजनीसारं सुरतं ददातीति रजनीसारदस्तस्मिन्वा । चन्द्रोदये सुरतोद्रेकात् । तथा च तथाविधोज्ज्वलं चन्द्रवन्निर्मलं राघवहृदयं सत्त्वप्रधानमपि मेघतुल्यचिन्तया तिरोहितमभूदिति भावः । एवं हिमेन दग्धे कमल इव सौरभादिवद्धैर्यादिगुणविरहाद्दिवसे यथाकथंचिल्लोकलज्जया प्रकृतकार्योद्योगेन च मनसः प्रकाशेऽपि निशि प्ररूढजानकीविरहेण निरुद्धवृत्तिकतया संकुचितत्वाच्च । कमले किंभूते । रजोनिःसारके रजः परागस्तन्निःसरणहेतौ । हिमदग्धतया पत्राद्यभावेन परागस्खलनात् । अथवा रजो धूलिस्तद्वन्निःसारेऽप्रयोजने । मकरन्दादिशून्यत्वात् । निन्दायां कन् । एवं च प्रवाणे शुष्के कुसुम इव नीरसत्वाद्दैन्येन म्लानत्वाच्च । किंभूते कुसुमे । भ्रमरापवर्तितव्ये भ्रमराणामपवर्तितव्यमपवर्तनं यस्मात्तत्र । भ्रमरत्यक्तव्य इत्यर्थः ॥ युग्मकम् ॥

यदि व्यवसायो न कर्तव्यस्तदा वीररताः स्त्रियोऽपि विरज्येयुरिति प्रवृत्तिहेतुत्वेन स्मारयितुं गृहगमनप्रस्तावेन भार्यावृत्तान्तमुपदर्शयन्प्रकृतमुपसंहरति—

कइआ णु विरहविरइअदोब्बल्लपसाहणुज्झिआहरणाइं ।
णीसासवसपहोलिरलम्बालअमलिअपम्हलकओलाइं ॥ ४९ ॥
पिहुलणिअम्बअलक्खलिअसिढिलवलअविवइण्णबाहुलआइं ।
दच्छाम परिअणत्थुअकअपेसणलज्जिआ पिअकलत्ताइं ॥ ५० ॥
(जुग्गअम्)

[कदा नु विरहविरचितदौर्बल्यप्रसाधनोज्झिताभरणानि ।
निःश्वासवशप्रघूर्णनशीललम्बालकमृदितपक्ष्मलकपोलानि ॥
पृथुलनितम्बतलस्खलितशिथिलवलयविप्रकीर्णबाहुलतानि ।
द्रक्ष्यामः परिजनस्तुतकृतप्रेषणलज्जिताः प्रियकलत्राणि ॥]
(युग्मकम्)

१. 'युग्मकम्' इति मूलपुस्तके नास्ति.

नु संबोधने । हे वानराः, यदि भवद्भिश्चिरमत्रैव विलम्बः क्रियते तदा वयं प्रियकलत्राणि कदा द्रक्ष्याम इत्युत्तरस्कन्धकेनान्वयः । कीदृशानि । विरहेण विरचितं यद्दौर्बल्यमङ्गकार्श्यं तद्रूपं यत्प्रसाधनमलंकारस्तेनोज्झितानि त्यक्तान्याभरणानि यैस्तानि । दौर्बल्यनिबन्धने आभरणत्यागे स्वस्त्रीणां कार्श्याद्यवस्थान्तरप्राप्त्या शोभाविशेषो जायत इति दौर्बल्यरूपालंकरणकृतपुनरुक्तिनिबन्धनत्वेनोत्प्रेक्षाव्यञ्जितानेन । एवं निःश्वासस्यास्मदादिहेतुकेन प्राक्कालीनदुःखानुभवनिबन्धनेनेदानीमप्येते दृष्टा इति मनःसंवेगविशेषणजनितस्य वशा आयत्ता अनुवर्तिनः अत एव प्रघूर्णनशीला दिशिदिशि गामिनोऽसंयतत्वेन लम्बा येऽलकाः कुन्तलास्तैर्मृदितौ स्पृष्टौ पक्ष्मलौ वल्लभागमनेन भावोदयाज्जातपुलकौ कपोलौ येषां तानीति साध्वीत्वमासामुक्तम् । पुनः किंभूतानि । नितम्बे बाहू विष्टभ्य तिष्ठतीति वानरजातिस्वाभाव्यम् । तथा च पृथुलनितम्बतलात्स्खलिते दौर्बल्यात्प्रशिथिला विरलीभूता वलया यत्र तथाभूते । परिरम्भणाय विप्रकीर्णे उत्क्षिप्ते बाहुलते लताकारौ बाहू यैस्तानि । वयं किंभूताः । परिजनैः स्तुतं तासामग्रे प्रकाशितं कृतमस्माभिर्निष्पादितं यत्प्रेषणमाज्ञा तेन लज्जिताः । स्वप्रकर्षस्तुतौ स्वस्य लज्जा भवतीति भावः ॥ युग्मकम् ॥

अथ सुग्रीवप्रतिज्ञावर्णनाय प्रस्तौति—

इअ जाहे भण्णन्तं ण चलइ चिन्ताभरोसिअन्तसरीरम् ।
आअड्ढणणिच्चेट्ठं पङ्कक्खुत्तं व गअकुलं कइसेण्णम् ॥ ५१ ॥
तो फुडसद्दुद्धाइअवणदवभरिअगिरिकंदराआरमुहो ।
रिउविक्कममसहन्तो जम्पइ वाणरवई पुणो वि हसन्तो ॥५२॥
(जुग्गअम्)

[इति यदा प्रभण्यमानं न चलति चिन्ताभरावसीदच्छरीरम् ।
आकर्षणनिश्चेष्टं पङ्कमग्नमिव गजकुलं कपिसैन्यम् ॥
ततः स्फुटशब्दोद्धावितवनदवभृतगिरिकंदराकारमुखः ।
रिपुविक्रममसहमानो जल्पति वानरपतिः पुनरपि हसन् ॥]
( युग्मकम् )

इत्यनेन प्रकारेण प्रभण्यमानं कपिसैन्यं यदा न चलति न स्पन्दतेऽपि तदा वान-

रपतिः सुग्रीवो हसन्नर्थात्क्रोधेन पुनरपि जल्पतीत्यग्रिमस्कन्धकेन समन्वयः । कपिसैन्यं कीदृक् । किं स्यादिति चिन्ताभरेणावसीदत्कृशीभवच्छरीरं यस्य तत् । एवमाकर्षणे समुद्रलङ्घनायाह्वाने निश्चेष्टं किंकर्तव्यविमूढम् । किमिव । गजकुलमिव । यथा पङ्कमग्नं गजकुलं न चलति तदपि चिन्तावसन्नवपुराकर्षणे सति निःस्पन्दं महाकायत्वादित्यर्थः । वानरपतिः कीदृक् । स्फुटः शब्दो यस्य तादृगुद्धावितः प्रसरणशीलो यो वनदवस्तेन भृता पूर्णा या गिरिकंदरा तदाकारमुखो मुखव्यादानाज्जल्पन् । पाकज(?)शब्दयोर्मुखाभ्यन्तरलौहित्यवनदवयोर्मुखकंदरयोश्च साम्यम् ॥ युग्मकम् ॥

अथैकादशभिः कपीनामुत्तेजकं सुग्रीवप्रतिज्ञावचनमाह—

इअ अत्थिरसामत्थे अण्णस्स वि परिअणम्मि को आसङ्गो ।
तत्थ विणाम दहमुहो तस्स ठिओ एस पडिहडो मज्झ भुओ ॥५३॥

[इत्यस्थिरसामर्थ्येऽन्यस्यापि परिजने कोऽध्यवसायः(आसङ्गः) ।
तत्रापिनाम दशमुखस्तस्य स्थित एष प्रतिभटो मम भुजः ॥]

इत्यनेन प्रकारेणास्थिरं सामर्थ्यं यस्य तस्मिन्परिजनेऽन्यस्यापि शत्रोरपि कोऽध्यवसायः । अपि तु न कोऽपि । यथा मम परिजनो गृहं गत्वा सामर्थ्यं प्रकाशयति युद्धभूमावनध्यवसायवांस्तथा रावणस्यापीत्यर्थः । तेन किं स्यादित्यत आह—तत्रापि शत्रोः परिजनेष्वनध्यवसायेऽपिनाम संभाव्यते शङ्क्यते । स रावणो मदान्धो दर्पशीलश्च तथा च परिजनानस्मद्दृष्टान्तेनाध्यवसायादुपेक्ष्यास्मानुपपतानवेत्य स्वयमागच्छेदतस्तस्य प्रतिभट एष मम भुज इति बाहुमुद्यम्य दर्शयति । तथा चातःपरं भवन्तो मयाप्युपेक्षिताः तेन तु समं भुजमात्रसहायेन मयैव योद्धव्यमिति भावः ॥

अथ च भवद्व्यवसायं विनापि मद्व्यवसायेनैव समुद्रलङ्घनं स्यादित्याह—

अवहोआसम्मि महं हत्थअलाहअदलन्तपत्थिअसलिलो ।
जा ण णिअत्तइ उअही बोलीणं ताव होइ वाणरसेण्णम् ॥५४॥

[उभयावकाशे मम हस्ततलाहतदलत्प्रस्थितसलिलः ।
यावन्न निवर्तते उदधिर्व्यतिक्रान्तं तावद्भवति वानरसैन्यम् ॥]

उभयावकाशे उभयपार्श्वे मम हस्ततलेन चपेटेनाहतं ताडितं सद्दलद्द्विधा भवत्

अत एव प्रस्थितं गतं सलिलं यस्य तादृश उदधिर्यावन्न निवर्तते भिन्नमुभयजलं न निमीलति तावद्वानरसैन्यं जलशून्यजलधिवर्त्मना व्यतिक्रान्तं पारमुत्तीर्णं भवतु । एतावता विलम्बसाध्यस्य पारगमनस्य द्विधाभूतजलमिलनपूर्वकालीनत्वोक्तिर्जलयोरतिदूरगमनं विना नोपपद्यत इति प्रहारप्रकर्षः किं वा कपीनामेव संचारशैघ्र्यमिति ध्येयम् ॥

प्रकारान्तरमाह—

अहिआणं तोसहरे धरिअं मलअगिरिणो हसन्तो सिहरे ।
गुरुभरविसअंसेणं णेज्जामि भुएण जोअणसअं सेणम् ॥ ५५ ॥
[अहितानां तोषहरे धृतां मलयगिरेर्हसञ्छिखरे ।
गुरुभरविषमांसेन नयामि भुजेन योजनशतं सेनाम् ॥]

अहं सेनां भुजेन योजनशतं नयामि । बाहुनैवोत्तोल्य समुद्रपारमुत्तारयामीत्यर्थः । भुजेन कीदृशेन । गुरुणा भरेण सेनोद्वहनगौरवेण विषम ईषन्नतोन्नतोंऽसो मूलं यस्य तेन । विषदो निर्मल इति विषदां सेनां वा । एतेन स्वबलाधिक्यमुक्तम् । सेनां कीदृशीम् । अहितानां रक्षसां तोषहरे भयहेतुवानरसद्भावात्संतोषहारिणि मलयगिरिशिखरे धृतां स्थापिताम् । अथवा मलयशिखरे धृतां पारनयनाय गृहीतामित्यर्थः ॥

स्वकार्यं स्वेनैव साधयितुमर्हमित्याह—

समुहमिलिएक्कमेक्के को इर आसण्णसंसअम्मि सहाओ ।
जाव ण दिज्जइ दिट्ठी काअव्वं दाव होइ चिरणिव्वूढम् ॥५६॥
[संमुखमिलितैकैकस्मिन्कः किलासन्नसंशये सहायः ।
यावन्न दीयते दृष्टिः कर्तव्यं तावद्भवति चिरनिर्व्यूढम् ॥]

भयेन संमुखं मिलितमेकैकं परस्परं यत्र तादृशि प्राणसंशये कः किल सहायो द्वितीयः अपि । तु न कोऽपि । तत्र सर्वमात्मनैव प्रतिकर्तव्यमित्यर्थः । अत्रोपपत्तिमाह—यावत्कार्ये आत्मना दृष्टिर्न दीयते तावत्कर्तव्यं कार्यं चिरं व्याप्य निर्व्यूढं निर्वृत्तं भवति । अपि तु न भवतीति काका लभ्यते । तथा च मत्कार्ये रावणवधे मयैव दृष्टिर्देया न भवन्तोऽभियोज्या इति भावः ॥

अथ प्रकारान्तरेण स्वपौरुषमाह—

**अह व महण्णवहुत्तं पत्थन्तस्स गअणं मह ण वहुत्तम् ।**
**रुहिरवसामिसवत्तं हन्तूण व णिव्वुओ वसामि सवत्तम् ॥५७॥**

[अथवा महार्णवाभिमुखं प्रतिष्ठमानस्य गगनं मम न प्रभूतम् ।
रुधिरवसामिषपात्रं हत्वेव निर्वृतो वसामि सपत्नम् ॥]

अथवा पक्षान्तरे । महार्णवः समुद्रस्तदभिमुखं प्रस्थितस्य मम गगनं न प्रभूतं न महत् । मत्संचारे तदपि स्वल्पमित्यर्थः । अथाहं सपत्नं रावणं हत्वा निर्वृत इव सुखित इव वसामि । कीदृशं रावणम् । रुधिरं च वसा चामिषं च तेषां पात्रमाश्रयम् । कोमलदेहं न तु वज्रदेहमित्यर्थः । यद्वा रुधिरवसामिषाणि पिबन्तीति रुधिरवसामिषपास्तांस्त्रायते रक्षति तं रुधिरवसामिषपात्रम् । केचित्तु—अथवा महार्णवाभिमुखं प्रार्थयतो गमनं मम न प्रभुत्वमिति संस्कृत्य अपि तु प्रभुत्वमेवेत्यर्थमाहुः ॥

अथ शरीरस्य लाघवमुक्त्वा गौरवमाह—

**णिसुढिज्जन्तभुअंगं मा मुज्झह मह सरोसचलणक्कन्तम् ।**
**जत्तो णमइ महिअलं तत्तो णाम सअलो पअट्टउ उअही ॥ ५८ ॥**

[निपात्यमानभुजंगं मा मुह्यत मम सरोषचरणाक्रान्तम् ।
यतो नमति महीतलं ततो नाम सकलः प्रवर्ततामुदधिः ॥]

हे वानराः, मा मुह्यत समुद्रः कथं संतरणीय इति मोहं मा गच्छत । यद्वा मदुक्तौ मोहं संशयं मा कुरुत । मयोच्यमानं सत्यमेवेति भावः । मम सरोषं यथा स्यादेवं चरणाभ्यां चलनेन संचारेण वा आक्रान्तं सत् यतो यत्र महीतलं नमत्यधो गच्छति । नाम संभावनायाम् । ततस्तत्र सकलः समुद्रः प्रवर्तताम् । नमने हेतुमाह—महीतलं कीदृक् । निपात्यमानो भुजंगः शेषो यस्मात्तम् । अयं भावः—मयि सक्रोधं चलति चरणभरादवनमन्त्यां भूमौ शेषो महीमपहायाधो गच्छेदथ मही तदुपरि पतेदेवमुत्तरोत्तरमिति वर्तमानार्थकशानच्प्रत्ययेन द्योत्यते । तथा च तथा पृथिवी नमेद्यथा निम्नतोत्कर्षेण सकलजलप्रवेशात्तत्रैव समुद्रः स्यात् । अथोन्नम्य तुच्छीभूतेन समुद्रखातेन कपयः पारमुत्तरन्त्विति भावः ॥

शरीरबलमुक्त्वा भुजाबलमाह—

**ओ जमलक्खम्भेहिँ व धरिएण भुहिएँ मह महोअहिमज्झे ।**
**उम्मूलिआइएणं समइक्कमउ विञ्झसंकमेण कइबलम् ॥ ५९ ॥**

[उत युगलस्तम्भाभ्यामिव धृतेन भुजाभ्यां मम महोदधिमध्ये ।
उन्मूलितानीतेन समतिक्रामतु विन्ध्यसंक्रमेण कपिबलम् ॥]

उत पक्षान्तरे । उन्मूलितेनोत्पाटितेन अथानीतेन विन्ध्यरूपसंक्रमेण कपिबलं समतिक्रामतु । समुद्रमित्यर्थात् । संक्रमघटनप्रकारमाह—कथंभूतेन संक्रमेण । युगलस्तम्भाभ्यामिव मम भुजाभ्यां महोदधिमध्ये धृतेन । तथा च जलमध्यनिखातस्तम्भद्वयाकारौ मद्बाहू भविष्यतस्तदुपरि जलयन्त्रविशेषप्रायो विन्ध्यस्तेन समुद्राधिक्रमानविन्ध्योत्पाटनधारणसमर्थत्वेन भुजयोरतिमहत्त्वमुक्तम् । 'महोदधिपृष्ठे (महोअहिवट्ठे)' इति पाठे मच्चरणद्वयावष्टब्धदक्षिणोत्तरतीरद्वयोपरि तिर्यक्पातितस्तम्भद्वयाकारौ मद्बाहू तदुपरि तिर्यक्पातितो विन्ध्यः संक्रम इत्यर्थः । 'संक्रमः क्रमणे सम्यग्वारिसंचारयन्त्रके' ॥

अथ फूत्कारप्रकर्षमाह—

**विवलाअन्तभुअंगं उव्वत्तिअजलअरं विहिण्णमहिहरम् ।**
**मुहमारुअविहुअजलं पेच्छह रअणाअरं करेमि थलवहम् ॥ ६० ॥**

[विपलायमानभुजंगमुद्वर्तितजलचरं विभिन्नमहीधरम् ।
मुखमारुतविधुतजलं पश्यत रत्नाकरं करोमि स्थलपथम् ॥]

हे कपयः, पश्यत । तथा च शब्दमात्रेणोच्यत इति न किं त्वर्थतोऽपीति भावः । मुखमारुतेन फूत्कारेण विधुतं जलं यस्मात्तथाभूतं रत्नाकरं स्थलपथं करोमि । जलस्य विक्षिप्तत्वेन तुच्छीभावात्ततः पारमुत्तरतेति भावः। फूत्कारकृतामवस्थामाह । किंभूतम् । कुतः किं वृत्तमिति संभ्रमेण विपलायमाना इतस्ततो गामिनः शेषादयो भुजंगा यत्र एवमुद्वर्तिता विपरीत्य स्थिताः । उपरिगतोदरभागा इति यावत् । तादृशा जलचरा मकरादयो यत्र । एवं विभिन्नाः खण्डखण्डीभूता महीधरा मैनाकादयो यत्र तम् ॥

अथ स्वस्य रावणविहारभूमिसुवेलातिक्रमसामर्थ्येन लङ्कोपमर्दसामर्थ्यं कटाक्षयन्नाह—

मज्झक्खुडिउम्मूलिअभुआभमाइअविमुक्कसेसद्धन्तम् ।
एत्तोहुत्तसुवेलं तत्तोहुत्तमलअं करेमि समुद्दम् ॥ ६१ ॥

[मध्यखण्डितोन्मूलितभुजाभ्रामितविमुक्तशेषार्धान्तम् ।
इतोऽभिमुखसुवेलं ततोऽभिमुखमलयं करोमि समुद्रम् ॥]

अहं समुद्रमीदृशं करोमि । एतदभिमुखः सुवेलो यत्रेत्युत्तराभिमुखसुवेलम् । तदभिमुखो मलयो यत्रेति सुवेलाभिमुखमलयमित्यर्थः । तथा च मलयसुवेलाभ्यां संक्रमं बध्नामि तेन पारं गच्छतेति भावः । संक्रमप्रकारमाह—मध्ये खण्डितौ उपरिश्टङ्गादिविषमभागापसारणेन समतासिद्ध्यर्थमुत्सेध एवोपरि दलितौ अथोन्मूलितावुत्पाटितौ ततश्च भुजाभ्यां भ्रामितौ पूर्वपश्चिमादृक्षिणोत्तरायतीकृतौ तथा विमुक्तौ त्यक्तौ शेषौ संक्रमोद्वृत्तभागौ ययोस्तौ । विमुक्तशेषावर्धान्तौ संक्रमघटकीभूतौ मूलार्धभागौ यत्र तमिति समुद्रविशेषणम्, तद्यथा स्यादिति क्रियाविशेषणं वा । तथा च द्वयोरुत्सेधेनोपरिभागं दैर्घ्येण शेषभागं च निरस्य संक्रमो घटनीय इत्यर्थः ॥

अथाशयस्थं लङ्कोपमर्दमुद्घाटयन्नाह—

अह व सुवेलालग्गं पेच्छह अज्जेअ भग्गरक्खसविडवम् ।
सीआकिसलअसेसं मज्झ भुआअड्ढिअं लअं विअ लङ्कम् ॥ ६२ ॥

[अथवा सुवेलालग्नां पश्यताद्यैव भग्नराक्षसविटपाम् ।
सीताकिसलयशेषां मम भुजाकृष्टां लतामिव लङ्काम् ॥]

अथवा सुवेलालग्नां लतामिव लङ्कामद्यैव मम भुजाकृष्टां पश्यत । यथा सुवेलसंबद्धा काचिल्लता आकृष्यते तथा तत्संबद्धा लङ्कापि मया भुजेनैवात्राकर्षणीया ततः पारगमनव्याप्टतिरपि न स्यादिति भावः । आकर्षणे सति लतायाः शाखापत्रभङ्गो भवतीत्याह—कीदृशीम् । भग्नाः पतिता राक्षसा एव विटपा यस्यास्ताम् । राक्षसा अपि हन्तव्या इत्यर्थः । एवं सीतारूपकिसलयावशेषाम् । पत्रान्तरप्रायराक्षसीनामपि निपातनादिति भावः । वस्तुतस्तु सुवेलमप्याकृष्यानयामि तदाकर्षणे तल्लग्नां लतामिव लङ्कामप्यानयामीति गूढो वाक्यार्थः ॥

अथाश्वासकविच्छित्तिमुखेन श्लिष्य रावणवधमाह—

ओभग्गरक्खसदुमं णिहअदसाणणमइन्दसुहसंचारम् ।
रामाणुराअमत्तो मलेमि लङ्कं वणत्थलिं व वणगओ ॥ ६३ ॥

इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे
महाकव्वे तइओ आसासओ परिसमत्तो ।

[उत भग्न ( 'अवभग्न'वा ) राक्षसद्रुमां निहतदशाननमृगेन्द्रसुख-
संचाराम् ।
रामानुरागमत्तो मृद्नामि लङ्कां वनस्थलीमिव वनगजः ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये
तृतीय आश्वासः परिसमाप्तः ॥

---

उत पक्षान्तरे । रामानुरागेण मत्तः साहंकारोऽहं लङ्कां मृद्नामि । तत्रैव गत्वा मर्दयामीत्यर्थः । क इव । वनस्थलीं वनभूमिं मत्तो वनगज इव । लङ्कां कीदृशीम् । भग्ना हतत्वात्पातिता अवभग्ना इति वा राक्षसा एव द्रुमा यत्र । एवं निहतो दशानन एव मृगेन्द्रस्तेन सुखसंचाराम् । वनभूमावपि गजेन्द्रप्रवेशाद्द्रुमभङ्गो मृगेन्द्रहननाच्च संचारसौख्यं भवतीत्यर्थः । अत्र वनगजेन मृगेन्द्रहनने जातिविरोधदोष इति न देश्यम् । कालवशेन कदाचित्तथाभावादिति केचित् । दशाननवधस्य रामकर्तृकत्वादन्यकर्तृको मृगेन्द्रवध इत्यपरे । वस्तुतस्तु मइन्द इत्यत्र मदी इति प्रकृतिः । तथा च मदविशिष्टो मदी मत्तगजस्तदिन्द्र इत्यर्थः । तेन मत्तगजयोः सङ्ग्रामे एकेनापरस्य हननं संभवत्येवेति न जातिविरोधः, न वा मृगेन्द्रापेक्षया वनगजस्य न्यूनजातित्वात्तस्य रावणादपकर्षः प्रतीयत इति दूषणमिति तु वयम् ॥

सुग्रीवप्रौढिदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य तृतीयाभूदियं शिखा ॥

---

चतुर्थ आश्वासः।

अथ वानराणामुत्तेजनादवस्थान्तरमाह—

**अह पढमवअणणिहुअं पच्छा उम्हइअलज्जिअं कइसेण्णम्।**
**ससिदंसणपासुत्तं कमलवणं व दिअसागमेण विबुद्धम्॥ १॥**

[अथ प्रथमवचननिभृतं पश्चादूष्मायितलज्जितं कपिसैन्यम्।
शशिदर्शनप्रसुप्तं कमलवनमिव दिवसागमेन विबुद्धम्॥]

अथ सुग्रीवस्याहंकारानन्तरं कपिसैन्यं विबुद्धं सचेष्टमासीत्। कीदृशम्। प्रथमवचनेन सुग्रीवस्य प्रबोधवाक्येन निभृतं निश्चेष्टम्। प्रेरणामधिगत्य सचिन्तत्वात्। पश्चाद्द्वितीयवचनेनोष्मायितं पराहंकारासहिष्णुतया सतेजः। तत एव ममानध्यवसायः परैरवसितः सजातीयस्य च सुग्रीवस्याध्यवसाय इति लज्जितम्। अत्रोपमामाह—कमलवनमिव। यथा कमलवनं दिवसागमेन बुध्यते विकसति। कीदृक्। शशिदर्शनेन रात्रौ प्रसुप्तं मुद्रितम्। अत्र शशिदर्शनप्रायं सुग्रीवस्य प्रथमवचनम्। प्रभातप्रायं द्वितीयवचनम्। कमलवनप्रायं कपिसैन्यम्। अन्यदपि सुप्तं जागर्तीति ध्वनिः॥

अथ कपीनामैकमत्यमाह—

**णवरि अ कइहिअआइं धुअन्धआरविअडाइँ गमणुच्छाहो।**
**एक्को बहुआइ समं गिरिसिहराइँ अरुणाअवो व विलग्गो॥२॥**

[अनन्तरं च कपिहृदयानि धुतान्धकारविकटानि गमनोत्साहः।
एको बहूनि समं गिरिशिखराण्यरुणातप इव विलग्नः॥]

प्रबोधानन्तरं च एक एकाकारो लङ्कां प्रति गमनोत्साहो बहूनि कपीनां हृदयानि सममेकदैव विलग्नः। सर्वेऽपि लङ्कागमनसाभिलाषा बभूवुरित्यर्थः। हृदयानि किंभूतानि। धुतेनान्धकारेणानध्यवसायसमुत्थेन मोहेन विकटानि व्यक्तानि। उत्साहप्रकाशादिति भावः। दृष्टान्तमाह—यथैको बालातपस्तिमिरविरहेण प्रकटानि बहूनि गिरिशिखराण्येकदैव लगति। अत्रोत्साहस्य तदानीमुत्पन्नमात्रत्वेन कोमलत्वादग्रे दुःसहीभविष्णुत्वाच्चारुणातपसाम्यम्॥

अथ तेषामुत्साहाधिक्यमाह—

तो दप्पमुहपसाओ आढत्तो ताण हिअअहसिउज्जोओ ।
रणविक्कमग्गहत्थो णिअअसहाओ व्व पहरिसो वित्थरिउम् ॥ ३ ॥

[ततो दर्पमुखप्रसाद आरब्धस्तेषां हृदयहसितोद्योतः ।
रणविक्रमाग्रहस्तो निजकस्वभाव इव प्रहर्षो विस्तरितुम् ॥]

तत उत्साहानन्तरं तेषां प्रहर्ष आनन्दो विस्तरितुं विस्तारं गन्तुमारब्धः । निजकस्वभाव इव प्रकृतिचाञ्चल्यमिवेति सहोपमा । चाञ्चल्यहर्षावुभावपि विस्तरितुमारब्धावित्यर्थः । प्रहर्षः कीदृक् । दर्पेण मुखस्य प्रसादो यस्मात्सः । पूर्वमप्रसादः स्थित इति भावः । एवं हृदयावच्छसितं तेनोद्योतः प्रकाशो यस्य । हास्यवैलक्षण्येन हर्षस्य पारमार्थिकत्वं ज्ञातमिति भावः । एवं रणविक्रमस्याग्रहस्तो हस्तालम्बः । हर्षेण विक्रमो वर्धित इति भावः । चाञ्चल्यमपि दर्पस्य बलस्य मुखप्रसादो मुखप्रसन्नता तद्रूप इति रूपकम् । यथा मुखप्रसादेन हृदयं ज्ञायते तथा चाञ्चल्येन दर्प इति भावः । एवं हृदयहास्यस्योद्द्योतो यस्मादिति हास्यप्रकाशकारणम् । रणविक्रमस्य हस्तालम्बो वृद्धिहेतुत्वादित्यर्थः । 'मनःप्रसादो हर्षः स्यादभीष्टाप्तिस्तवादिभिः' । 'दर्पोऽहंकारशौर्ययोः' इति विश्वः ॥

अथैकादशभिस्तेषां प्रत्येकमुत्साहचेष्टामाह—

बहुलुद्धअधाउरअं रिसहेण धुओज्झराहअकओलअलम् ।
भिण्णं वामभुअसिरे उम्मूलिअवलिअपण्णअं गिरिसिहरम् ॥४॥

[बहुलोद्धतधातुरज ऋषभेण धुतनिर्झराहतकपोलतलम् ।
भिन्नं वामभुजशिरस्युन्मूलितवलितपन्नगं गिरिशिखरम् ॥]

ऋषभनाम्ना वानरेण गिरिशिखरमेकं दक्षिणहस्तेनोत्पाट्य वामभुजस्य शिरस्यंसे भिन्नं विक्षिप्तं सञ्चूर्णितमित्यर्थः । सुग्रीवो मदग्रेऽप्यहंकारमाचरतीति क्रोधः । प्रभुत्वादस्य किमपि कर्तुं न शक्यते इति शिखरः प्रहारेण स्ववपुषि निपातित इति भावः । प्रकृतिचाञ्चल्यमेवेदमिति वा । कीदृक् शिखरम् । बहलान्युद्धतानि धातोर्गैरिकस्य रजांसि यस्मात् । लघुत्वाद्धूलिरुत्थिता गुरुत्वाच्छिला निपतिता इति भावः । एवं धुतेनोच्छलितेन निर्झरेणाहतं क्षालितं कपोलतलं येन । प्रहारसमये ग्रीवावलनेन वामकपोलस्य वामांसोपरिगतत्वादिति भावः । एवमुन्मूलिता

स्थानादुत्थापिता अत एव वलिता वक्रीभूय स्थिताः पन्नगा यत्र तदिति प्रहारप्रकर्ष उक्तः। 'भूवादिरसरक्तादिश्लेष्मादिवसुधादिषु। वर्तते धातुशब्दोऽयं विशेषाद्दृमगैरिके ॥'

नीलचेष्टामाह—

पुलउब्भेआअम्बं णीलो परिपुसइ विसमकसणच्छाअम् ॥
हिअअणिहित्तपहरिसं ससिपडिभिण्णघणसंणिहं वच्छअडम् ॥५॥

[पुलकोद्भेदाताम्रं नीलः परिप्रोञ्छति विषमकृष्णच्छायम्।
हृदयनिहितप्रहर्षं शशिप्रतिभिन्नघनसंनिभं वक्षस्तटम् ॥]

नीलो वक्षस्तटं परिप्रोञ्छति वारंवारं पाणिनामृशति। पूर्ववदेव सुग्रीवोक्त्या क्रोधादुत्साहाच्चेति भावः। वक्षः कीदृशम्। पुलकोद्भेदेन रणोत्साहसमुत्थरोमाञ्चेन किंचित्ताम्रम्। वालानां नीलत्वेऽप्यग्रे किंचिल्लौहित्यमेव तच्च पुलकोद्गमेन लक्ष्यते। तदुक्तम्—विषमं यथा स्यात्तथा कृष्णच्छायं श्यामम्। किंचिल्लौहित्यसत्त्वेन कृष्णतायां वैषम्यमिति केचित्। वस्तुतस्तु लोम्नां श्यामत्वेऽप्यन्तस्त्वगवच्छिन्नदेशस्य लौहित्यमेव तदुत्फुल्लतया पुलकेन लक्ष्यते। विषमं निम्नोन्नतं कृष्णच्छायं चेत्यर्थः। एवं हृदये मनसि निहितः प्रहर्षो यत्र तत्। तदधिष्ठानत्वात्तस्य। तत एव वक्षोमर्शनम्। यथा मनसि वर्तते तथा करिष्याम्येवेति भावः। दृष्टान्तमाह—पुनः कीदृक्। शशिना प्रतिभिन्नः संबद्धो यो घनस्तत्तुल्यम्। हृदयस्थप्रहर्षस्य सत्त्वसमुत्थत्वेन श्वेतत्वाच्चन्द्रतौल्यम्। वक्षसः कृष्णत्वान्मेघतौल्यम्। अन्योऽपि क्रुद्धो हृदयं मृशतीति ध्वनिः ॥

कुमुदस्य चेष्टामाह—

विहडन्तोट्ठउडदलं फुरन्तदन्तअरबहलकेसरवअरम्।
पहरिसचन्दालोए हसिअं कुमुएण सुरहिगन्धुग्गारम् ॥ ६ ॥

[विघटमानौष्ठपुटदलं स्फुरद्दन्तकरबहलकेसरप्रकरम्।
प्रहर्षचन्द्रालोके हसितं कुमुदेन सुरभिगन्धोद्गारम् ॥]

सुग्रीवोक्त्या क्रोधाचाञ्चल्याच्च कुमुदेन हसितं हास्यं कृतम्। विघटमानौ विभिन्नावोष्ठपुटौ दलं यत्र तद्यथा स्यात्तथा स्फुरन्तो दन्तकरा एव केसरप्रकरो यत्र तद्यथा स्यात्तथा सुरभिगन्धस्योद्गारो यस्मात्तद्यथा स्यादिति च क्रियाविशेषणम्।

तस्मिन्सति प्रहर्ष एव चन्द्रस्तस्यालोके प्रकाशे सति । तथा च प्रहर्षोद्गमेन कुमुदस्यापि हास्योद्गमादोष्ठपुटयोर्विभागो दन्तकान्तिप्रकाशो मुखात्ताम्बूलादिसौरभनिर्गमश्च बभूवेति वाक्यार्थः । ध्वन्यर्थस्तु—प्रकृष्टो हर्षो यस्मादेतादृशस्य चन्द्रस्यालोके तेजसि सति कुमुदं हसति विकसति । तेन तस्यौष्ठपुटप्रायदलानां विभागो दन्तरुचिप्रायकेसराणां स्फुरणं सौरभस्य चोद्गमो भवतीति सारम् ॥

मैन्दस्य चेष्टामाह—

विहडन्तधरणिबन्धो उहअभुअक्खेवमुहलवेविरविडवो ।
विसमपडन्तविसहरो वेलाचन्दणदुमो मइन्देण धुओ ॥ ७ ॥

[विघटमानधरणिबन्ध उभयभुजक्षेपमुखरवेपनशीलविटपः ।
विषमपतद्विषधरो वेलाचन्दनद्रुमो मैन्देन धुतः ॥]

मैन्देन वेला समुद्रतीरं तद्वर्ती चन्दनवृक्षो धुतः कम्पितः । कीदृक् । विघटमानो धरणिबन्धो यस्य । आन्दोलनेन मूलशैथिल्यात् । एवमुभयभुजाभ्यां क्षेप उत्पाटनोद्यमनं तेन मुखराः परस्परसंघट्टेन शब्दायमाना अथ च वेपमानाः शाखा यस्य एवं कम्पनेन विषमाः स्थाने स्थाने पतन्तो विषधरा यस्मात्तादृक् । क्रोधेन प्रहारायोत्पाटितुमारब्धोऽपि तरुः प्रहर्तव्याभावात्पुनरान्दोलित एव न तूत्पाटित इति भावः । चाञ्चल्येन वोत्पाट्यैवान्दोलित इति केचित् ॥

द्विविदस्य चेष्टामाह—

दिप्पन्तदुरालोआ दिविअस्स सधूमसिहिसिहावत्तणिहा ।
सोम्मत्तणं ण पत्ता हरिसभरेन्ती वि विसहरस्स व दिट्ठी ॥८॥

[दीप्यमानदुरालोका द्विविदस्य सधूमशिखिशिखावर्तनिभा ।
सौम्यत्वं न प्राप्ता हर्षभ्रियमाणापि विषधरस्येव दृष्टिः ॥]

द्विविदस्य दृष्टिर्हर्षेण भ्रियमाणापि सौम्यतासामग्रीसत्त्वेऽपि सौम्यत्वं न प्राप्ता । सुग्रीवोक्त्या रोषेण दुर्निरीक्ष्यत्वात् । तदुक्तम्—दीप्यमाना रोषोद्धततेजोविशेषमयी अत एव दुरालोका दुर्निरीक्ष्या । पुनः कीदृशी । सधूमशिखिनो यः शिखावर्तस्तन्निभा तत्तुल्या । अत्र वह्निप्राया दीप्ता दृष्टिर्धूमप्रायस्त्वसौम्यताहेतूद्वृत्ततारकादिच्छविविशेषः । केव । विषधरस्य दृष्टिरिव । यथा सर्पस्य दृष्टिः सौम्यत्वं न प्राप्नोति । अत्रापि दीप्यमानेत्यादि पूर्ववदेव योज्यम् । श्यामारुणयोर्विषतज्ज्वाल-

योर्दृष्टौ संक्रमात्सधूमवह्नितुल्यत्वम्। यथा सापराधं द्रष्टुमुद्यतः कालसर्पः प्रतिबन्धकसद्भावे दूरादपि सक्रोधमालोकते तथायमपि सुग्रीवं प्रभुरिति किमप्यजल्पन्नुद्धतं ददर्शेति भावः। उत्साहादेव दृष्टेरियं चेष्टेति केचित्॥

शरभचेष्टामाह—

सरहो वि दरिमुहग्गअपडिसद्दप्फुडिअमलअअडपब्भारम्।
मुञ्चइ विसअं णाअं मलेइ अङ्गं च रोसविसअण्णाअम्॥ ९॥

[शरभोऽपि दरीमुखोद्गतप्रतिशब्दस्फुटितमलयतटप्राग्भारम्।
मुञ्चति विशदं नादं मृद्गात्यङ्गं च रोषविषार्द्रम्॥]

शरभोऽपि विशदं नादं मुञ्चति। उच्चैर्ननादेत्यर्थः। अङ्गं च मृद्गाति। पाणिना दृढं ममर्देत्यर्थः। नादं कीदृशम्। दरीमुखादुद्गत उत्थितो यः प्रतिशब्दस्तेन स्फुटितो भिन्नो मलयतटस्य प्राग्भार एकदेशो यस्मात्। प्रतिशब्दः कुहरगर्भे प्रविश्यावकाशेनोर्ध्वमुच्छलतीति मलयस्फुटनेन शब्दोत्कर्ष उक्तः। अङ्गं च कीदृक्। रोष एव विषं व्याकुलीकारसमर्थत्वात्तेनार्द्रं तदानीमेव व्याप्तम्। अन्योऽपि विषस्पृष्टं वपुः कण्डूयमानो मृद्गातीति प्रकृते सुग्रीवोक्त्या रोषात्कृतस्याङ्गमर्दनस्य रोषरूपविषस्पर्शजन्यकण्डूयाकृतत्वमुत्प्रेक्षितम्॥

निषधस्य चेष्टामाह—

अरुणाअम्बच्छाए तक्खणमेत्तपडिबुद्धपङ्कअसोहे।
फुरइ णिसढस्स वि फुडं दिअसस्स मुहम्मि दिणअरो व अमरिसो १०

[अरुणाताम्रच्छाये तत्क्षणमात्रप्रतिबुद्धपङ्कजशोभे।
स्फुरति निषधस्यापि स्फुटं दिवसस्य मुखे दिनकर इवामर्षः॥]

निषधस्यापि मुखे स्फुटममर्षः स्फुरति प्रकाशते। दिवसस्य मुखे प्रातर्दिनकर इव। कथंभूते। अरुणः सूर्यसारथिस्तद्वदाताम्रा छाया कान्तिर्यस्य तत्र। पक्षे अरुणोद्गमेनाताम्रा छाया यस्य तादृशि। एवं तत्क्षणमात्रे प्रतिबुद्धं विकासि यत्पङ्कजं तत्तुल्यशोभे। तदानीमेव निश्चेष्टतापगमे सति प्रकाशोदयात्। पक्षे तत्कालप्रतिबुद्धा पङ्कजानां शोभा यत्रेत्यमर्षस्य प्रातः सूर्यसाम्येनोत्तरकाले दुःसहत्वं सूच्यते॥

सुषेणस्य चेष्टामाह—

**विअडाहरन्तरालं कअं सुसेणस्स रोसहसिएण फुडम् ।**
**उप्पाअरुहिरअम्बं मज्झप्फुडिअरइमण्डलं विअ वअणम् ॥११॥**

[विकटाधरान्तरालं कृतं सुषेणस्य रोषहसितेन स्फुटम् ।
उत्पातरुधिराताम्रं मध्यस्फुटितरविमण्डलमिव वदनम् ॥]

रोषहसितेन सुषेणस्य मुखं स्फुटं विकासि कृतम् । अत्युद्भटं जातमित्यर्थः । कीदृक् । विकटो भयानकोऽधरोष्ठस्यान्तरालो मध्यभागो यत्र । हास्यकृतविभागात् । एवमुत्पातरुधिरमाकाशादाकस्माद्दृश्यते तद्वदाताम्रं क्रोधात् । किमिव । मध्ये स्फुटितं द्विधाभूतं यद्रविमण्डलं तदिव । तदप्युत्पातरुधिरेणाताम्रम् । कदाचित्तत्रापि तद्दर्शनात् । उत्पातरूपरविमण्डलखण्डद्वयसाम्येनाधरौष्ठस्योत्पातरुधिरोपमया लौहित्यस्य च भयानकत्वेन दर्शकानामतिदुःखदत्वं सूचितम् ॥

अङ्गदस्य चेष्टामाह—

**हरिसपरिअम्भिएण अ अद्धुल्लसिअरइबिम्बअम्बच्छविणा ।**
**पुरओहुत्तारम्भो मुहेण दिअसो व पाअडो वालिसुओ ॥ १२ ॥**

[हर्षपरिजृम्भितेन चार्धोल्लसितरविबिम्बताम्रच्छविना ।
पुरतोऽभिमुखारम्भो मुखेन दिवस इव प्रकटो वालिसुतः ॥]

वालिसुतोऽङ्गदो मुखेन प्रकटो व्यञ्जितहृदय आसीत् । न तु चाञ्चल्येनेत्यर्थः । किंभूतेन । हर्षेणोत्साहेन परिजृम्भितेन प्रौढिमागतेन । एवमर्धोल्लसितमर्धोदितं यद्रविमण्डलं तद्वत्ताम्रच्छविना । क्रोधजन्यारुण्यप्रकर्षात् । तदेवाह—कीदृक् । पुरतोऽभिमुखोऽग्रतोवर्ती आरम्भ उद्यमो यस्य सः । तथा च पितृव्यस्य गुरोः सुग्रीवस्य वचसि किमपि कर्तुं न युज्यत इत्यनुद्धत एव यन्मया कर्तव्यं तदग्रे द्रष्टव्यमेव सर्वैरिति मुखारुण्येनैव प्रकाशितवानिति भावः । क इव । दिवस इव । यथा दिवसो मुखेन प्रभातेन तिमिरमपास्य प्रकटो भवति तद्वत् । मुखेनापि कीदृशेन । लोकानां हर्षाय जृम्भितेनार्धोदितसूर्येण ताम्रच्छविना च । दिवसश्च कीदृक् । पुरतोऽभिमुखः प्राच्यभिमुख आरम्भ उपक्रमो यस्य तादृश इति । इदानीं कोमलत्वेऽप्यग्रे दिवसवद्दुःसहत्वं वालिसुतत्वेन रावणोपमर्दक्षमत्वं च तस्य सूचितम् ॥

हनूमदवस्थामाह—

णेच्छइ णिव्वूढभरो लहुअं दप्पुद्धअत्तणं पवणसुओ ।
कअपेसणस्स सोहइ धीरं चिअ महइ रक्खिउं वअणिज्जम् ॥१३॥

[नेच्छति निर्व्यूढभरो लघुकं दर्पोद्धतत्वं पवनसुतः ।
कृतप्रेषणस्य शोभते धैर्यमेव महति रक्षितुं वचनीयम् ॥]

पवनसुतो दर्पेणौद्धत्यं नेच्छति । लघुकं यतः । अन्यवानरवच्चाञ्चल्यं न चकार किंतु यथास्थित एव तस्थावित्यर्थः । कीदृक् । निर्व्यूढभरः । निर्वाहितकार्य इत्यर्थः । मया समुद्रलङ्घनादिगुरुकार्यं कृतं सर्वे जानन्त्येव लघु हास्यादिकं किमिति कर्तव्यमित्याशयः । कृतकार्योऽपि तदानीं पुनः स्वबलाविष्कारं कुतो न कृतवानित्यत आह—कृतं प्रेषणमीश्वराज्ञा येन तस्य धैर्यमेव शोभते । तद्धैर्यं तस्य पुरुषस्य वचनीयं वाच्यतामयं स्वगुणाविष्कारं करोतीति लोकापवादरूपं रक्षितुमेतत्पुरुषं प्रत्यनागन्तुं महति वाञ्छति । धैर्ये सति सा वाच्यता नायात्यधैर्ये सत्यायातीति भावः ॥

सुग्रीवस्य चेष्टामाह—

णिब्भच्छिओअहिरवं फुडिआहरणिवडन्तदाढाहीरम् ।
हसइ कइदप्पपसमिअरोसविरज्जन्तलोअणो सुग्गीवो ॥ १४ ॥

[निर्भर्त्सितोदधिरवं स्फुरिताधरनिर्वलद्दंष्ट्राहीरम् ।
हसति कपिदर्पप्रशमितरोषविरज्यमानलोचनः सुग्रीवः ॥]

सुग्रीवो हसति । कपिचेष्टादर्शनेनोत्साहात् । एतदर्थमेव मयोक्तमिति सिद्धकार्यत्वादिति भावः । किमित्यकृतकार्यैरास्फोटः क्रियत इत्याशयाद्वा । एतेषां कोपेन मम किं स्यादित्याशयाद्वा । निर्भर्त्सितो हास्यशब्देन तिरोहितः समुद्ररवो येन तद्यथा स्यात् । एवं स्फुरिताधरौष्ठान्निर्वलत्पृथग्भवद्दंष्ट्राहीरकं दंष्ट्राग्रं यत्र तद्यथा स्यादिति च क्रियाविशेषणम् । सुग्रीवः कीदृक् । कपिदर्पेण प्रशमितो यो रोषस्तेन विरज्यमाने विशब्दस्याभाववाचकत्वेन रागो लौहित्यं तच्छून्ये लोचने यस्य तथाभूतः । 'सूच्यग्रसदृशं श्लक्ष्णं दंष्ट्राग्रं हीरकं विदुः' । दंष्ट्रारूपं हीरं रत्नविशेषो यत्रेति वा ॥

अथ लक्ष्मणस्यावस्थामाह—

**णवरि सुमित्तातणओ आसङ्घन्तो गुरुस्स णिअअं च बलम् ।**
**ण अ चिन्तेइ ण जम्पइ उअहिं सदसाणणं तणं व गणेन्तो ॥१५॥**

[अनन्तरं सुमित्रातनयोऽध्यवस्यन्गुरोर्निजकं च बलम् ।
न च चिन्तयति न जल्पत्युदधिं सदशाननं तृणमिव गणयन् ॥]

अनन्तरं सुमित्रातनयो लक्ष्मणो न च चिन्तयति न च जल्पति । किं कुर्वन् । दशाननसहितमुदधिं तृणमिव गणयन् । यथा तृणभङ्गे न श्रमस्तथा समुद्रतरण-रावणवधयोरपीति मन्यमान इत्यर्थः । एवं गुरो रामस्य निजकं च बलमध्यवस्यन् । न तु वानराणामिति भावः । तथा च पराधीनकार्ये चिन्ता जल्पनव्यावृत्तिर्भवति स्वाधीनकार्ये स्वायत्तिरेवेति तात्पर्यम् ॥

अथ रामस्य चेष्टामाह—

**रहुणाहस्स वि दिट्ठी वाणरवइणो फुरन्तविद्दुमअम्बम् ।**
**वअणं वअणाहि चला कमलं कमलाहि भमरपन्ति व गआ ॥१६॥**

[रघुनाथस्यापि दृष्टिर्वानरपतेः स्फुरद्विद्रुमताम्रम् ।
वदनं वदनाच्चला कमलं कमलाद्भमरपङ्क्तिरिव गता ॥]

रघुनाथस्यापि मुखाद्दृष्टिर्वानरपतेः सुग्रीवस्य मुखं गता । कपिचेष्टां दृष्ट्वा कीदृशी मुखश्रीरस्येति जिज्ञासया रामेण सुग्रीवमुखं दृष्टमित्यर्थः । मुखं किंभूतम् । स्फुर-द्विद्रुमवदाताम्रम् । स्वभावात्कोपाच्च । दृष्टिः कीदृशी । चला चञ्चला । केव । भ्रमरपङ्क्तिरिव । यथैकस्मात्कमलादपरं विद्रुमवत्ताम्रं कमलं भ्रमरपङ्क्तिश्चपला सती गच्छतीति पङ्क्तिपदेन वारंवारं गतेत्यर्थो गम्यते । रामस्य मुखमेकं कमलमपरं सुग्रीवस्येत्यर्थः ॥

अथान्यकुलकीकृतस्कन्धकत्रयेण जाम्बवद्वचनं प्रस्तौति—

**तो वअपरिणामोणअभुमआवलिरुब्भमाणदिट्ठिच्छेहो ।**
**आसण्णधवलमिहिआपरिक्खलन्तोसहिप्पहो व्व महिहरो ॥१७॥**
**करवारिअकइलोओ सुग्गीवविइण्णभासुरच्छिच्छेहो ।**
**जालाहअदुमणिवहो फुलिङ्गपिङ्गलिअमहिहरो व वणदवो ॥१८॥**

जम्पइ रिच्छाहिवई उण्णामेऊण महिअलद्धन्तणिहम्।
खलिअवलिभङ्गदाविअवित्थअबहलवणकंदरं वच्छअडम् ॥१९॥
(अन्त्यकुलअम्)

[ततो वयःपरिणामावनतभ्रूवल्लिरुध्यमानदृष्टिक्षेपः।
आसन्नधवलमेघिकापरिस्खलदोषधिप्रभ इव महीधरः॥]
[करवारितकपिलोकः सुग्रीववितीर्णभास्वराक्षिक्षेपः।
ज्वालाहतद्रुमनिवहः स्फुलिङ्गपिङ्गलितमहीधर इव वनदवः॥]
[जल्पति ऋक्षाधिपतिरुन्नमय्य महीतलार्धान्तनिभम्।
स्खलितवलिभङ्गदर्शितविस्तृतबहलव्रणकंदरं वक्षस्तटम्॥]
(अन्त्यकुलकम्)

ततस्तदनन्तरमृक्षाधिपतिर्जाम्बवान् जल्पतीति तृतीयस्कन्धकेन सह योज्यम्। कीदृक्। वयःपरिणामेन वार्धकेनावनताभ्यां भ्रूवल्लिभ्यां रुध्यमानो दृष्टिक्षेपो यस्य सः। वार्धकान्मांसलया भ्रुवा प्रच्छन्नदृष्टिपातः। तमुत्प्रेक्षते—क इव। महीधर इव। सोऽपि कीदृक्। आसन्नया निकटवर्तिन्या मेघिकया स्वल्पमेघेन परिस्खलन्ती छन्नतया यथावदप्रकाशमाना ओषधिप्रभा यत्र सः। वार्धकाल्लोमपाकेन धवलमेघिकासाम्यं भ्रुवोः, ओषधिप्रभासाम्यं पिङ्गतया दृशोः, उच्चत्वेन श्यामत्वेन चाचलसाम्यं जाम्बवतः॥ पुनः कीदृक्। कराभ्यां वारिता औद्धत्यान्निवर्तिताः कपिलोका येन। एवं सुग्रीवे वितीर्णोऽर्पितो भास्वरयोरक्ष्णोः क्षेपो येन तादृक्। तमेवंभूतं पुनरुत्प्रेक्षते—ज्वालया आहतः स्पृष्टो द्रुमनिवहो एवं स्फुलिङ्गैः पिङ्गलीकृतो महीधरो येन। एवंभूतो वनदव इव। ज्वालाप्रायौ हस्तौ, वृक्षप्रायाः कपयः, स्फुलिङ्गप्राया दृष्टिक्षेपाः, महीधरप्रायः सुग्रीवः, क्रोधजन्यकरमुखाद्यारुण्येन वृक्षादिसंबन्धनिबन्धनश्यामरक्तदावानलप्रायो जाम्बवान्। किं कृत्वा। महीतलस्यार्धान्त एकदेशस्तन्निभम्। महत्त्वात्। एवं स्खलिता उन्नमनेन विगलिता वलिभङ्गा वार्धकादधोलम्बिनो मांसभङ्गा यत्र एवंभूतम्। अत एव वलिभङ्गापगमेन दर्शिता नयनगोचरीकृता विस्तृता व्यापका बहला घनाः। निरन्तरा इति यावत्। व्रणा एव गभीरत्वात्कंदरा यत्र तादृशं वृक्षस्तटमुन्नमय्य। तथा च हृदयोन्नत्या तादृशहृदयव्रणोद्घाटनेन स्वस्य बाहुयुद्धकारित्वं शूरत्वं च प्रकाशितमग्रे वक्तव्योपयोगित्वेनेति भावः॥

वक्ष्यमाणोपयोगित्वेन बहुदर्शित्वमात्मनः प्रकाशयन्नाह—

सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं महुमहस्स उरम् ।
सुमिरामि महणपुरओ अमुद्धअन्दं च हरजडापब्भारम् ॥ २० ॥

[स्वर्गमपारिजातं कौस्तुभलक्ष्मीरहितं मधुमथनस्योरः ।
स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥]

अहं समुद्रमथनपूर्वं पारिजातशून्यं स्वर्गम् । कौस्तुभेन लक्ष्म्या च कौस्तुभस्य लक्ष्म्या वा रहितं मधुमथनस्योरः । मुग्धो बालः । तथा च चन्द्रखण्डशून्यं च हरजटायाः प्राग्भारमुपरिभागं समूहं वा स्मरामि । तथा च पारिजाताद्युत्पादकसमुद्रमथनसंभ्रमेऽप्यहं स्थित इति भावः ॥

अथ नरसिंहावतारमपि दृष्टवानस्मीत्याह—

महुमहहत्थम्मि मए णक्खुक्खुडिअसरसं महासुरहिअअम् ।
दिट्ठा अणुधावन्ती अक्खित्तं णिअअहत्थकमलं व सिरी ॥ २१ ॥

[मधुमथनहस्ते मया नखोत्खण्डितसरसं महासुरहृदयम् ।
दृष्टा अनुधावती आक्षिप्तं निजकहस्तकमलमिव श्रीः ॥]

मधुमथनस्य हस्ते मया श्रीर्दृष्टा । हिरण्यकशिपोरित्यर्थात् । किंभूता । नखैरुत्खण्डितमतः सरसं लोहितं महासुरस्य तस्यैव हृदयं बुक्करूपं मांसखण्डमनुधावती । हृदयमुत्प्रेक्षते—आक्षिप्तं परमेश्वरेणाक्रम्य गृहीतं निजकहस्तकमलमिव । तथा च यथा कोऽपि करात्केनापि गृहीतं किमप्याहर्तुं पृष्ठलग्न एवानुगच्छति तथा हिरण्यकशिपोर्हृत्पुण्डरीकरूपं क्रव्यखण्डं हृदयस्थायास्तल्लक्ष्म्या लोहितं हस्तकमलमेव तन्नरसिंहो नखेनोत्खायाकृष्टवानिति तत्प्रत्याहर्तुमनुगम्य संबद्धा दैत्यलक्ष्मीरेव तात्कालिकनृसिंहकरलक्ष्मीरित्युत्प्रेक्षालभ्यम् । तत्सर्वमपि मया दृष्टमिति स्वस्य तत्पूर्वकालीनत्वमुक्तम् । 'हृदयं मानसे बुक्के' इति विश्वः ॥

अथ सृष्ट्युपक्रममपि जानामीत्याह—

तं च हिरण्णक्खस्स वि सुमिरामि महावराहदाढाभिण्णम् ।
महिमण्डलं व तुलिअं उक्खअहिअअगिरिबन्धणं वच्छअडम् ॥ २२ ॥

[तच्च हिरण्याक्षस्यापि स्मरामि महावराहदंष्ट्राभिन्नम् ।
महीमण्डलमिव तुलितमुत्खातहृदयगिरिबन्धनं वक्षस्तटम् ॥]

अहं तच्च हिरण्याक्षस्यापि दैत्यस्य वक्षस्तटं महावराहदंष्ट्राभिन्नं विदारितं सत्तुलितमुत्तोलितं स्मरामि। महीमण्डलमिवेति सहोपमा। यथा तद्दंष्ट्रया तुलितं महीमण्डलं स्मरामि तथेदमपीति। द्वयमपि मदग्रे वृत्तमिति भावः। वक्षस्तटं कीदृशम्। उत्खातमुन्मूलितं हृदयं वुक्करूपं वक्षोवर्ति मांसखण्डं तदेव महत्त्वाद्गिरिस्तस्य बन्धनमवष्टम्भो यत्र। तद्वक्षसि दंष्ट्राभिन्ने हृत्पुण्डरीकखण्डमपि बहिर्गतमित्यर्थः। महीमण्डलमपि दंष्ट्रयोत्थापनदशायां गिरीणामितस्ततो विशीर्य पतितत्वादुत्खातगिरिबन्धनमभूदिति साम्यम्॥

वृद्धोक्तं परिणामसुरसमतस्तदेवाचरणीयमित्याह—

धीरं हरइ विसाओ विणअं जोव्वणमओ अणङ्गो लज्जम्।
एक्कन्तगहिअवक्खो किं सीसउ जं ठवेइ वअपरिणामो॥ २३॥

[धैर्यं हरति विषादो विनयं यौवनमदोऽनङ्गो लज्जाम्।
एकान्तगृहीतपक्षः किं शिष्यतां यत्स्थापयति वयःपरिणामः॥]

एकान्ततस्तत्त्वतो गृहीतः पक्षः सिद्धान्त इदमित्थमेवेति निर्णयरूपो येन तादृशो वयःपरिणामो वार्धकं कर्तृ विषादो धैर्यं, यौवनमदो विनयमनङ्गो लज्जां हरतीत्येवमादिप्रकारेण यत्स्थापयति स्थिरीकरोति। निर्धारयतीति यावत्। तत्किं शिष्यतां कथ्यताम्। एतावदेवेत्यवशिष्यतां परिशिष्यतां वा। वार्धके बहुविषयज्ञानेन बहुषु परिच्छेद इति बहुतरत्वादुपदेष्टुमशक्यत्वाच्चेति भावः। तथा च मम सर्वत्र परिच्छेदात्मकं ज्ञानमिति गच्छंस्तृणस्पर्शन्यायेन विषादस्य धैर्यनाशकत्वं परिशिंषन्भवतां विषादेन धैर्यं नास्तीति कटाक्षयामास। केचित्तु—एकान्ततोऽसाधारण्येन गृहीतः पक्षो येनेति विषादादित्रयविशेषणं किमपि न तिष्ठतीत्येवंरूपेण वयःपरिणामविशेषणं वा। तथा च विषादो धैर्यमेव यौवनमदो विनयमेवानङ्गो लज्जामेव हरति वयःपरिणामस्तेषु यत्स्थापयति तत्किं शिष्यतां परिशिष्यतां वा। अपि तु न किमपि स्थापयति। तथा च विषादादित्रयमेकैकमेव धैर्यादिकं हरति वयःपरिणामस्तु त्रितयमपि हरतीति गूढाभिसंधिरयमित्यर्थमाहुः॥

वृद्धोपहासः कर्तुं न युज्यत इत्याह—

अणुहूअमुणेअव्व विहडिअविसमक्खरे वि संघडिअत्थे।
जोव्वणमूढपहसिए मा अवमण्णह जरापरिणउल्लाणे॥ २४॥

[अनुभूतज्ञातव्यान्विघटितविषमाक्षरानपि संघटितार्थान् ।
यौवनमूढप्रहसितान्मावमन्यध्वं जरापरिणतोल्लापान् ॥]

जरया परिणतान् गलद्रूपत्वेनादृढान्। उपहसनीयताप्रयोजकं रूपमिदम्। अथ च परिणतानूहापोहसमर्थानुल्लापान्मा अवमन्यध्वं मा अनास्थाविषयीकुरुत । जरापरिणतस्योल्लापानिति वा। कीदृशान् । अनुभूतो ज्ञातव्यभागो येषु तान् । मया सर्वमिदमनुभूयोच्यत इति भावः । अथ चानुभूते सति ज्ञातव्यान् । वृद्धवचनमनुभवानन्तरं ज्ञायत इति भवद्भिरप्यनुभूय ज्ञातव्यं यन्मयोक्तमिति तात्पर्यम् । एवं विघटितानि विषमाक्षराण्यपसिद्धान्तवचनानि येषु । सिद्धान्तसहितानीत्यर्थः । एवं संघटितोऽर्थो वाच्यो येषां तान् । यद्वा विघटितमेकदेशरहितमनभिव्यक्तं विषमाक्षरं कठिनाक्षरं येषु तथाभूतानपि संघटितार्थान् संघटितवक्तव्यान् । तथा च दन्तादिवैकल्येन विषमवर्णानां सम्यगुच्चारणाभावेऽपि वक्तव्यार्थसुश्लेषादवमानना कर्तुं न युज्यत इत्यर्थः । अत एव यौवनमूढैरुपहसितान् । वृद्धवचनं वर्णविकलत्वेन युवान एवोपहसन्तीत्यर्थः ॥

वानराणां जिगीषावृद्धये सुग्रीवोत्कर्षमुखेन तदपकर्षमाह—

तुज्झ भुआसु णिसण्णो हरिसत्थो पब्बलो सुराण वि समरे ।
मारुअलद्धत्थामो ओवग्गइ महिरओ वि ता दिअसअरम् ॥ २५ ॥

[तव भुजयोर्निषण्णो हरिसार्थः प्रबलः सुराणामपि समरे ।
मारुतलब्धस्थामोऽवक्रामति महीरजोऽपि तावद्दिवसकरम् ॥]

तव भुजयोर्निषण्णः कृताश्रयो हरिसार्थः सुराणामपि समरे प्रबलः । सुरानपि जेतुं समर्थ इत्यर्थः । अर्थान्तरं न्यस्यति—मारुताल्लब्धं स्थानं स्थैर्यं येन तथाभूतं महीरजो धूलिरपि दिवसकरमवक्रामत्याच्छादयति । समर्थावलम्बेनासमर्था अप्यतिसमर्थानभिभवन्तीत्यर्थः । प्रकृते मारुतप्रायो भवान् धूलिप्रायाः कपयः रविप्रायो रावणः । तथा चेत्थं चाञ्चल्यमाचरन्तु कपयः कार्यं तु भवदवष्टम्भाधीनमेवेति भावः ॥

येन प्रकारेण कार्यं भवद्भिः कर्तुमारभ्यते तेन किमपि न सेत्स्यतीत्याह—

**किं उण दुप्परिअह्ला मज्जाआइक्कमुप्पहवलिज्जन्ता।**
**उअहि व्व सारगरुआ घडिआ वि विसंघडन्ति कज्जालावा॥ २६॥**

[किं पुनर्दुष्परिकलनीया मर्यादातिक्रमोत्पथवल्यमानाः।
उदधय इव सारगुरवो घटिता अपि विसंघटन्ते कार्यालापाः॥]

किं पुनः। किमधिकं वाच्यमित्यर्थः। मर्यादातिक्रमेणासत्प्रकारेणोत्पथेन अवर्त्मना वल्यमानाः साध्यमानाः कार्यालापा घटिता अपि सिद्धा अपि विसंघटन्ते असिद्धा भवन्ति। तथा चासिद्धाः सेत्स्यन्तीति का प्रत्याशेति भावः। किंभूताः। दुष्परिकलनीयाः विसंघटनानन्तरं दुर्घटनीयाः इत्थंकर्तव्यतया दुरवधारणीया वा। एवं सारेण प्रयोजनेन गुरवः। दृष्टान्तयति—उदधय इव। यथा समुद्रा मर्यादातिक्रमेण वेलालङ्घनेनोत्पथे वल्यमानाः प्राप्यमाणाः सन्तो घटिता ऋजुप्रवाहप्रवृत्ता अपि विसंघटन्ते इतस्ततश्चारिणो भवन्ति तेऽपि दुष्परिकलनीया दुरवगाहनीयाः। सारेण रत्नादिना गुरवः। तथा च 'सुचिन्त्य चोक्तं सुविचार्य यत्कृतं' इत्यनुसारेण व्यवहर्तव्यम्॥

युष्माकं ज्ञानान्मदीयं ज्ञानमधिकमिति मत्परामर्षेण व्यवहर्तव्यमित्याह—

**पच्चक्खा हि परोक्खं कह वि तुलग्गघडिआहि आगमसुद्धम्।**
**संचालिअणिक्कम्पं अणुहूआहि वि मह सुअं चिअ गरुअम्॥२७॥**

[प्रत्यक्षात्परोक्षं कथमपि तुलाग्रघटितादागमशुद्धम्।
संचालितनिष्कम्पमनुभूतादपि मम श्रुतमेव गुरु॥]

युष्माकमनुभूतादनुभवादपि। भावे क्तः। मम श्रुतमेव श्रुतमध्ययनं शास्त्रं वा तज्जन्यज्ञानमेव गुरु अधिकम्। अनुभूतात्कीदृशात्। प्रत्यक्षात् इन्द्रियप्रत्यासत्तिजन्यात्। श्रुतं कीदृशम्। परोक्षं इन्द्रियप्रत्यासत्त्यजन्यम्। एवं कथमपि कादाचित्कतया तुलाग्रं काकतालीयसंवादस्तेन तन्न्यायेन घटितादुत्पन्नसंवादात्। आगमेन वेदपुराणादिना शुद्धमविसंवादिनिर्धारणरूपम्। तथा च संचालितम्। अहार्याप्रामाण्यशङ्कादोलायितमपि निष्कम्पमसकृत्संवादेन गृहीतप्रामाण्यमिति यथायोग्यमुभयविशेषणम्। तथा च तादृशानुभवस्यानुमानादिजन्यपरोक्षज्ञानापेक्षयान्तरङ्गेन्द्रिय-

प्रत्यासत्तिजन्यत्वेनौत्सर्गिकगौरवसामग्रीसत्त्वेऽपि सदोषपुरुषसंबन्धित्वेनौत्सर्गिकभ्रमत्वेन कादाचित्कसंवादित्वम् अतस्तदपेक्षया मदीयश्रुतजन्यज्ञानस्य परोक्षरूपत्वेऽपि निर्दोषपुरुषप्रणीतागमसाक्षेपत्वेन सर्वथासंवादित्वमिति मदुक्त्यनुसारेण व्यवहर्तव्यमिति समस्ताखण्डलकार्थः ॥

दशकंधरे वैरिणि परस्परनिरपेक्षं सामर्थ्यमप्रयोजकमिति 'संहतिः कार्यसाधिका' इति मदीयश्रुतानुसारेण सर्वे मिलित्वा व्यवहरन्तु न पृथक्पृथगित्याह—

**जं साहेन्ति समत्था समसारपरक्कमा ण तं णिव्वडिआ ।**

**एक्को पअवेज्ज दृढं मिलिआ उण दिणअरा खवेन्ति तिहुअणम् २८**

[यत्साधयन्ति समस्ताः समसारपराक्रमा न तं निर्वलिताः ।

एकः प्रतपेद्दृढं मिलिताः पुनर्दिनकराः क्षपयन्ति त्रिभुवनम् ॥]

समौ तुल्यौ बलपराक्रमौ येषां ते समस्ता मिलिताः सन्तो यत्कार्यं साधयन्ति निर्वाहयन्ति अत एव निर्वलिताः परस्परं पृथक्पृथग्भूता एकाकिनः सन्तस्तदेव कार्यं न साधयन्ति । न साधयितुं शक्नुवन्तीत्यर्थः । अत्र दृष्टान्तमाह—एको दिनकरस्त्रिभुवनं दृढं प्रतपेत् प्रतापयेत् परं मिलिताः पुनः समानशीला द्वादशदिनकराः प्रलये त्रैलोक्यमपि क्षपयन्ति भस्मसात्कुर्वन्ति । तथा चैकस्मात्संतापमात्रं मिलितेभ्यस्तु भस्मीभाव एवेत्येकाकिनैव मया साध्यमिति सुग्रीवोक्तमनुषङ्गेण दूषितवान् ॥

उत्साहोऽपि देशकालानुसारी फलं जनयतीत्याह—

**ओवग्गइ अहिमाणं पडिवक्खस्स वि ण तारिसं देइ भअम् ।**

**अमरिसगहिओ व्व सरो विद्दाइ अभाअसंधिओ उच्छाहो ॥२९॥**

[अवक्रामत्यभिमानं प्रतिपक्षस्यापि न तादृशं ददाति भयम् ।

अमर्षगृहीत इव शरो विद्रात्यभागसंहित उत्साहः ॥]

अभागे अस्थाने संहितो नियोजित उत्साहो विद्राति कुत्सितो भवति । 'द्रा कुत्सायाम्' धातुः । एवमभिमानं गर्वमास्कन्दति । शत्रोरपि तादृशं भयं न जनयति । तथा च स्वाहंकारवर्धकः शत्रुभयजनकश्च फलाविसंवादी उत्साहो विधातव्य इत्यर्थः । क इव । शर इव । यथामर्षेण गृहीतः शरोऽभागेऽनर्पणीयस्थाने संहितः सन्विद्राति । लक्ष्यं न विध्यतीत्यर्थः । सोऽपि लक्ष्यमविध्यन्प्रहर्तुरभिमानास्कन्दी शत्रुभयाजनकश्च भवति । अत एव निष्फल इति भावः ॥

अतःपरं स्फुटीकृत्य सुग्रीवं प्रत्याशयमुद्धाटयति—

**णेअ तुमे मोत्तव्वं सुट्ठु वि तुरिएण धीर पत्थिवचरिअम् ।**
**तुरवन्तस्स रविस्स वि मउइज्जइ दक्खिणाअणम्मि पआओ ॥३०॥**

[नैव त्वया मोक्तव्यं सुष्ठ्वपि त्वरितेन धीर पार्थिवचरितम् ।
त्वरमाणस्य रवेरपि मृदूयते दक्षिणायने प्रतापः ॥]

हे धीर सुग्रीव, इतरजनवत्त्वरितेन त्वया सुष्ठु अपि शोभनमपि पार्थिवचरितं नैव मोक्तव्यम् । राजानः प्रकृत्या धीरा भवन्तीति राजनीतिर्न त्याज्या । त्वरामहं चेत्करोमि तदा किं स्यादित्याशङ्क्याह—दक्षिणायने त्वरमाणस्य त्वरितगमनस्य रवेरपि प्रतापस्तेजो मृदूयते मार्दवं याति । सहिष्णुताविषयो भवतीति यावत् । तथा च यत्र सत्वरतया भवत्पितुरेव गतिरीदृशी तत्र का वार्ता तवेति धीरतामवलम्बस्वेति भावः ॥

शत्रुजिगीषया केवलमियमधीरतावलम्ब्यत इत्याशङ्क्य निराकरोति—

**किं अइराएण इमा अमग्गसमरसुहचिन्तिअकहाहि कआ ।**
**पहरिसपणामिअमुही गोत्तक्खलणविमण व्व दे जअलच्छी ॥३१॥**

[किमतिरागेणेयममार्गसमरसुखचिन्तितकथाभिः कृता ।
प्रहर्षप्रणामितमुखी गोत्रस्खलनविमना इव ते जयलक्ष्मीः ॥]

किं वितर्के । राग इच्छा द्वेषो वा । तथा च ते त्वया इयं जयलक्ष्मीरतिरागेणात्यन्तयुद्धेच्छया शत्रावतिद्वेषेण वा निमित्तेन अमार्गेणावर्त्मना यदा यत्कर्तुं न युज्यते तदा तदौद्धत्यकरणरूपेण समरसुखाय चिन्तिताभिर्बुद्धिविषयीकृताभिरिदानीमाचरिताहंकारप्रकाशरूपाभिः कथाभिः करणभूताभिर्गोत्रस्खलनेन विमना विमनस्का या कामिनी तादृशीव कृता सा यथा समीपमागच्छन्त्यपि नायकस्य प्रतीपनायिकायामत्यनुरागेणामार्गे आगन्तुकनायिकासांनिध्यादस्थाने सुरतसङ्ग्रामसुखात् पूर्वोत्पन्नाच्चिन्तिताभिस्तत्कथाभिः यद्वा अमार्गेण परस्त्रीविषयकत्वादवर्त्मना यत्सुरतसुखं तेन चिन्तितकथाभिर्जातं गोत्रस्खलनं श्रुत्वा नायकदर्शनात्प्रणामितमुखी व्रीडया मुखनमनात् पुनर्नायाति तथेयमपि प्रहर्षेण भवदौद्धत्योत्साहरूपेण प्रणामितमवनतीकृतं मुखमुपक्रमो यस्यास्तथाभूता स्वल्पदिनसाध्यतया निकटवर्तिन्यपि नागमिष्यतीत्यर्थः । तस्माद्यदि जयश्रीरुद्देश्या तदासामेकमौद्धत्यं नाचरणीयमिति भावः ॥

औद्धत्यमात्रैकरसता संप्रति न युज्यत इत्याह—

**मा रज्जह रहस चिअ चन्दस्स वि दाव कुमुअवणणिप्फण्णो ।**
**दूरं णिव्वलिअगुणो एक्करसस्स कमलेसु विद्दाइ जसो ॥ ३२ ॥**

[मा रज्यत रभस एव चन्द्रस्यापि तावत्कुमुदवननिष्पन्नम् ।
दूरं निर्वलितगुणो एकरसस्य कमलेषु विद्राति यशः ॥]

हे वानराः, रभस एव सङ्ग्रामोत्कलिकायामेव मानुरक्ता भवत तदुत्थामौद्धत्यैकरसतामपहाय विचारपरा भवतेति भावः । एकरसतया को दोष इत्यत आह—चन्द्रस्याप्येकरसस्य कुमुदमात्रप्रकाशतैकस्वभावस्य तावत्कुमुदवनेषु निष्पन्नं तत्प्रकाशकत्वेनाखण्डितम्, एवं दूरं व्याप्य निर्वलितः पृथग्भूय प्रकाशितः शैत्यश्वैत्यसुधामयत्वादिगुणो यत्र तथाभूतं यशो जगदाह्लादत्वादिख्यातिः कमलेषु विद्राति कुत्सितं भवति । तदप्रकाशकत्वेन लोकनिन्दाविषयो भवतीत्यर्थः । तथा च भवतामप्यौद्धत्यैकरसताया अपरित्यागेऽविमृश्यकारितया रावणरणे यशो विद्रास्यतीति भावः ॥

रावणस्य परिजना बलीयांस इति स्वयमेव योद्धुमयमुपक्रमः क्रियत इति सुग्रीववचनमाशङ्क्याह—

**किं अप्पणा परिअणो परस्स ओ परिअणेण दे पडिवक्खो ।**
**सोहइ पत्थिज्जन्तो जिआहिमाणस्स किं जअम्मि वि गहणम् ॥ ३३ ॥**

[किमात्मना परिजनः परस्य उत परिजनेन ते प्रतिपक्षः ।
शोभते प्रार्थ्यमानो जिताभिमानस्य किं जयेऽपि ग्रहणम् ॥]

आत्मना स्वेन परस्य शत्रोः परिजनः प्रार्थ्यमानोऽवरुध्यमानः किं शोभते । उत पक्षान्तरे । तव परिजनेनानुचरेण प्रार्थ्यमानोऽवरुध्यमानः प्रतिपक्षः शोभते । यदि शत्रुपरिजनो मयावरुद्धस्तदा को दोष इत्यत आह—जिताभिमानस्य असमेन समं साम्येनाधःकृताहंकारस्य पुरुषस्य जयेऽपि जाते किं ग्रहणं परेषां क आदरः । न्यूनकक्षजयेन प्रकर्षाभावात् । यद्वा जयेऽपि वस्तुनि क आदरः श्लाघा । स्वस्य यथाहंकारे उपेक्षा तथा जयेऽपीति जयोत्पत्तिर्न स्यादेवेति भावः । तथा च स्वेन शत्रुपरिजनावरोधे तेन जिते स्वस्य क्षतिरपकर्षश्च । स्वेन तु जिते उत्कर्षाभावः स्वप्रभुसत्त्वे लाभाभावश्च । स्वपरिजने तु शत्रुसंरोधे शत्रुणा जिते परिजनभङ्गे-

नापकर्षाभावः स्वसत्तया क्षत्यभावश्च । परिजनैस्तु जिते तैरेव प्रतिपक्षो जित इति महानुत्कर्षो लाभश्चेति स्वयमहंकारमवलम्ब्य स्थीयताम् परिजना एव सर्वं करिष्यन्तीति समस्तखण्डलकार्थः । 'प्रार्थितः शत्रुसंरुद्धे याचितेऽभिहितेऽपि च ।' 'ग्रहणं त्रयमिच्छन्ति ज्ञानमादानमादरम् ॥'

उत्कर्षमुखेनापकर्षं प्रदर्शयन्सुग्रीवं निवर्तयन्नाह—

**हणुमन्ताइसएणं हणुमन्तमुहाण वाणराण अ वइणा ।**
**धीर अणिव्वलिअजसं काअव्वं किं तुमे वि मारुइसरिसम् ॥३४॥**

[हनुमदतिशयितेन हनुमन्मुखानां वानराणां च पत्या ।
धीर अनिर्वलितयशः कर्तव्यं किं त्वयापि मारुतिसदृशम् ॥]

हे धीर पण्डित धैर्यशीलवन्, त्वयापि किं मारुतिसदृशं कर्तव्यं समुद्रलङ्घनादि । हनुमत्सदृशं त्वया कर्तुं न युज्यत इत्यर्थः । कथं न युज्यत इत्यत आह—त्वया कीदृशेन । हनूमतोऽधिकेन । कुत इत्यत आह—हनूमत्प्रमुखानां कपीनामीश्वरेण । मारुतिसदृशं कीदृक् । अनिर्वलितमपृथग्भूतं यशो यस्मात् । तथा च प्रभोः परिजनकृतस्य करणे प्रकर्षाभावः । प्रत्युताकरणेऽपकर्ष एव । अत एव त्वया मारुतिसदृशं किं कर्तव्यम् । अपि तु न कर्तुं शकनीयम् अपृथग्भूतं यशो यस्मादिति । यतस्तत्कृतसमुद्रलङ्घनाद्यपेक्षया किमपि न प्रकर्षहेतुरिति समुद्रलङ्घनं त्वत्कृतमेव कर्मान्तरं तत्सदृशमेव नेति गूढोऽभिसंधिरिति सर्वथा स्वयमौद्धत्यान्निवर्तस्वेति भावः ॥

कार्यं तथा व्यवसीयते यथा सिध्यत्येवेत्याह—

**कह तम्मि वि लाइज्जइ जम्मि अइण्णप्फला अदूरपसरिआ ।**
**पडिअम्मि दुमे व्व लआ स च्चिअ अण्णं पुणो वि लग्गइ आणा ३५**

[कथं तस्मिन्नपि लाग्यते यस्मिन्नदत्तफला अदूरप्रसृता ।
पतिते द्रुम इव लता सैवान्यं पुनरपि लगत्याज्ञा ('पुनर्विलगति' वा)]

तस्मिन्नपि विषये आज्ञा कथं लाग्यते नियुज्यते । नियोजयितुं न युक्तेत्यर्थः । यस्मिन्नधिकरणे न दत्तं फलं कार्यसिद्धिर्यया तथाभूता सती न दूरं व्याप्य प्रसृता ख्यातिमुपागता । एवं सति सैव पुनरन्यं पुरुषं लगति । केव । लतेव । यथा लता प्रथमाश्रयीभूतद्रुमे पतिते सति यस्मिन्द्रुमे आरोपिता अदत्तफला अदूरप्रसृता च

सती पुनरन्यद्रुमे आरोपणीया भवति । तस्मिन्द्रुमे प्रथमत एव नारोप्यते । यद्वा यथा प्रथमं यस्मिन्नारोपिता अथ पतिते तस्मिन्नदत्तफला अप्रसरणशीला च भवति तथा सति पुनरन्यत्रारोपणीया भवतीत्यर्थः । तथा च यत्पुरुषेऽर्पिताज्ञा कार्यप्रसरणाद्यभावेन पुनरन्यत्रार्पणीया भवति तत्पुरुषे नार्प्यत एवेति । त्वय्यप्येवमविमृश्यकारितया रामाज्ञा तथैव स्यादिति भावः ॥

रावणवधं प्रति निजसामर्थ्यसंदेहमपाकरिष्णुः पुनरयमौद्धत्यमाचरेदित्याशङ्क्य प्रकारान्तरेण निवर्तयति—

हन्तुं विमग्गमाणो हन्तुं तुरिअस्स अप्पणा दहवअणम् ।
किं इच्छसि काउं जे पवअवइ पिअं ति विप्पिअं रहुवइणो ॥३६॥

[हन्तुं विमृग्यन् हन्तुं त्वरितस्यात्मना दशवदनम् ।
किमिच्छसि कर्तुं यत्प्लवगपते प्रियमिति विप्रियं रघुपतेः ॥]

हे प्लवगपते, रघुपतेः प्रियमिदमिति कृत्वा विप्रियं कर्तुं किमिच्छसि । किं कुर्वन् । दशवदनं हन्तुं विमृग्यन्निच्छन् । रघुपतेः कीदृशस्य । आत्मना स्वयमेव दशवदनं हन्तुं सत्वरस्य । तथा च त्वत्कर्तृकरावणवधस्य प्रियत्वेऽपि मयैव रावणो हन्तव्य इति प्रतिज्ञाभङ्गरूपत्वेन विप्रियत्वम् । एवं च तव रावणवधे सामर्थ्यमेव किं तु रामप्रतिज्ञाभङ्गरूपत्वेनाकर्तव्यमिति भावः ॥

अथ रामं प्रति जाम्बवद्व्यापारेण प्रकृतमुपसंहरति—

इअ णिअमिअसुग्गीवो रामन्तेण वलिओ पिआमहतणओ ।
परिमट्ठमेरुसिहरो सूराहिमुहो व पलअधूमुप्पीडो ॥ ३७ ॥

[इति नियमितसुग्रीवो रामान्तेन वलितः पितामहतनयः ।
परिमृष्टमेरुशिखरः सूर्याभिमुख इव प्रलयधूमोत्पीडः ॥]

इत्यनेन प्रकारेण नियमितो नियन्त्रितः सुग्रीवो येन स पितामहतनयो ब्रह्मणः पुत्रो जाम्बवान् रामान्तेन वलितः । रामपार्श्वेन वक्रीभूयाभिमुखीभूत इत्यर्थः । प्रलयधूमोत्पीड इव यथा प्रलयधूमसमूहः परिमृष्टमास्फालितं मेरुशिखरं येन तथाभूतः सन्सूर्यस्याभिमुखो भवति । स्थिरत्वादुत्तुङ्गत्वात्कपिलत्वाच्च शिखरप्रायः सुग्रीवः । तेजोमयत्वात्सूर्यप्रायो रामः । श्यामत्वादुत्थितत्वाच्च धूमप्रायो जाम्बवान् ॥

अथ रामं प्रति जाम्बवद्वाक्यमाह—

**जम्पइ अ किरणपम्हलफुरन्तदन्तप्पहाणिहाओत्थइअम् ।**
**विणअपणअं वहन्तो समुहागअधवलकेसरसडं व मुहम् ॥ ३८ ॥**

[जल्पति च किरणपक्ष्मलस्फुरद्दन्तप्रभानिघातावस्तृतम् ।
विनयप्रणतं वहन्संमुखागतधवलकेसरसटमिव मुखम् ॥]

जाम्बवान् जल्पति च । रामं प्रतीत्यर्थात् । मुखं वहन् । कीदृशम् । किरणेन तेजसा पक्ष्मला जातपक्ष्मेव पुष्टा अत एव स्फुरन्ती या दन्तप्रभा तस्या निघातेन समूहेन व्याप्तम् । जल्पनसमये दन्तकान्तीनां प्रसरणादिति निःक्षोभत्वमुक्तम् । पुनः कीदृक् । विनयेन प्रणतं नम्रम् । अनुजीवित्वात् । संमुखागता वलनसमये विपर्यस्य पतिता धवला केसरसटा यत्र तादृशमिव । दन्तप्रभाणां शौक्ल्यात्केसरसटात्वेनोत्प्रेक्षणम् ॥

अथ त्रिभिर्वाक्यस्वरूपमाह—

**रक्खिज्जइ तेल्लोक्कं पलअसमुद्दविहुरा धरिज्जइ वसुहा ।**
**उअरद्धन्तपहुत्ते विमुहज्जइ साअरे त्ति विम्हअणिज्जम् ॥ ३९ ॥**

[रक्ष्यते त्रैलोक्यं प्रलयसमुद्रविधुरा ध्रियते वसुधा ।
उदरार्धान्तप्रभूते विमुह्यते सागर इति विस्मयनीयम् ॥]

हे राम, त्वया त्रैलोक्यं रक्ष्यते । वराहमूर्त्या प्रलयोद्वेलसमुद्रमग्ना वसुधापि ध्रियते । विश्वंभरमूर्तेः स्वस्योदरैकदेश एव प्रभूते सावकाशं स्थिते समुद्रे पारगमनं कथं स्यादिति मोहः प्राप्यत इति विस्मयविषयः । तथा च स्वापकृष्टपरिमाणस्य समुद्रस्य पारगमनमीषत्करमेव भवता किं त्वात्मा परं न स्मर्यत इति भावः ॥

ईषत्करत्वमेव स्फुटयति—

**धणुवावारस्स रणे कुविअकअन्तणिमिसन्तरणिहस्स तुहम् ।**
**फुडविज्जुविलसिअस्स व आरम्भो च्चिअ ण होइ किं अवसाणम् ४०**

[धनुर्व्यापारस्य रणे कुपितकृतान्तनिमेषान्तरनिभस्य तव ।
स्फुटविद्युद्विलसितस्येवारम्भ एव न भवति किमवसानम् ॥]

तव धनुर्व्यापारस्य रणे आरम्भ उद्यम एव न भवति । प्रतिपक्षाभावात् । तदभ्यन्तर एव शत्रुक्षयाद्वा । किं पुनरवसानं समाप्तिः । कीदृशस्य तव । क्रुद्धस्य

थमस्य निमेषान्तरं द्वितीयनिमेषस्तत्तुल्यस्य । एकनिमेषान्तरं यावत्परो निमेषो भवति तावदभ्यन्तर एव सकलशत्रुनाशादिकार्यनिर्वाहकत्वात् । शत्रुनाशावश्यंभावलाभाय कुपितपदम् । कस्येव । स्फुटं यद्विद्युद्विलसितं तस्येव । शत्रुसाधने स्वल्पकाले व्याप्यत्वात् । देवानां निमेषाभावात् । समाधिरलंकारः ॥

अध्यवसायमुत्पादयति—

णिव्वुब्भइ पलअभरो तीरइ वडवामुहाणलो वि विसहिउम् ।
दिण्णं जेणेअ तुमे कह काहिइ साअरो तहिं चिअ धीरम् ॥४१॥

[निरुह्यते प्रलयभरस्तीर्यते वडवामुखानलोऽपि विसोढुम् ।
दत्तं येनैव त्वया कथं करिष्यति सागरस्तस्मिन्नेव धैर्यम् ॥]

यतो धैर्यात्सागरेण प्रलयभरो निःशेष उह्यते संपाद्यते । एवं वडवावह्निरपि विसोढुं शक्यते तद्धैर्यं येनैव त्वया सागराय दत्तं तस्मिन्नेव त्वयि रामे सागरः कथं करिष्यति येनागाधतया लङ्घितुं न शक्यते । तथा च यथा तुष्टेन त्वया धैर्यं दत्तमिति सागरस्यैते गुणा वृत्तास्तथा धैर्यधारणतुष्टेन तदपहारोऽपि कर्तुं शक्यत इति विपरीता दोषाः स्युरिति सर्वथा धैर्यमपहास्यतीति भावः ॥

अथ रामस्य कार्यानुकूलं विनयवचनमाह—

तो पाअडदोव्वल्लं पम्हट्ठपिआपहोहरप्फरिससुहम् ।
वच्छं तमालणीलं पुणो पुणो वामकरअलेन मलेन्तो ॥ ४२ ॥
उअहिस्स जसेण जसं धीरं धीरेण गरुअआइ गरुअअम् ।
रामो वि थिईअ ठिइं भणइ रवेण अ रवं समुप्फुन्दन्तो ॥४३॥
(जुग्गअम्)

[ततः प्रकटदौर्बल्यं प्रस्मृतप्रियापयोधरस्पर्शसुखम् ।
वक्षस्तमालनीलं पुनः पुनर्वामकरतलेन मृद्नन् ॥]
[उदधेर्यशसा यशो धैर्यं धैर्येण गुरुतया गुरुताम् ।
रामोऽपि स्थित्या स्थितिं भणति रवेण च रवं समाक्रामन्]
(युग्मकम्)

ततो रामोऽपि भणतीत्युत्तरस्कन्धकेन समन्वयः । किं कुर्वन् । वारंवारं वाम-

करतलेन वक्षो मृद्नन्मृषन्। वक्षः कीदृशम्। प्रकटं दौर्बल्यं यत्र तत्। चिरविरहात्। एवं प्रस्मृतं विस्मृतं प्रभ्रष्टं वा प्रियापयोधरयोः स्पर्शसुखं यत्र तादृक्। एवं तमालवन्नीलम् परिष्काराभावात्। तथा च हे हृदय, समाश्वसिहि जातप्रायस्तवापि दुःखोच्छेद इत्यामर्शने तात्पर्यम्। पुनः किं कुर्वन्। स्वीयेन धीरोदात्तत्वादिगुणप्रसूतेन यशसा उदधेस्तथाविधमेव यशः, स्वीयेन च मर्यादानतिक्रमलक्षणेन धैर्येण तथाविधमेव तस्य धैर्यम्, परानतिक्रमणीयतालक्षणया च निजया गुरुतया तादृशीमेव तस्य गुरुताम्, उच्चावचत्वशून्यतारूपयावस्थित्या तद्रूपामेव तस्य स्थितिं समाक्रामंल्लघूकुर्वन्नित्यर्थः। तथा चातीव धैर्यादिगुणसंवलितमुक्तवानिति भावः॥ युग्मकम्॥

किं तद्वाक्यं तदाह—

**दुत्तारम्मि समुद्दे कइलोए विमुहिए ममम्मि विसण्णे।**
**हरिवइ तुमे च्चिअ इमा दुव्वोज्झा वि अवलम्बिआ कज्जधुरा ४४**

[दुस्तारे समुद्रे कपिलोके विमुग्धे मयि विषण्णे।
हरिपते त्वय्येवेयं दुर्वाह्याप्यवलम्बिता कार्यधुरा ॥]

हे हरिपते सुग्रीव, इयं समुद्रलङ्घनरूपा कार्यधुरा दुर्वाह्यापि वोढुमशक्यापि त्वय्येवावलम्बिता त्वत्साध्यैव। तदुद्यमः क्रियतामित्यर्थः। तदुपपादकमाह—कस्मिन्सति। समुद्रे दुस्तरे दुस्तरणीये सति। अत एव कपिलोके विमुग्धे पारगमनं कथं स्यादिति मोहमापन्ने सति। तत एव च मयि विषण्णे कपिसाध्यमिदं कार्यं कथं स्यादिति विषण्णे सतीत्यर्थः॥

अथ पुनरपि जाम्बवानुक्तवानित्याह—

**धीराहि सारगरुअं अलङ्घणिज्जाहि सासअसमुज्जोअम्।**
**रिच्छाहिवाहि वअणं रअणं रअणाअराहि व समुच्छलिअम्॥४५॥**

[धीरात्सागरगुरुकमलङ्घनीयाच्छाश्वतिकयश उद्योतम्।
ऋक्षाधिपाद्वचनं रत्नं रत्नाकरादिव समुच्छलितम्॥]

ऋक्षाधिपाज्जाम्बवतो वचनं समुच्छलितमाविर्भूतम्। कीदृशात्। धीराद्धैर्यशालिनः। एवमलङ्घनीयात्परानतिक्रमणीयात्। वचनं कीदृक्। सारेणार्थेन गुरु अतिशयितम्। एवं शाश्वतिकः सार्वदिको यशस उद्योतः प्रकाशो यस्मात्। कस्मात्किमिव। रत्नाकराद्रत्नमिव। यथा समुद्राद्रत्नमुच्छलतीत्यर्थः। रत्नाकरा-

दपि कीदृशात् । धीरादलङ्घनीयाच्च । रत्नमपि कीदृशम् । सारेभ्यो धनान्तरेभ्यो गुरुकं महत् । विशेषणान्तरं पूर्ववत् रत्नानामपि यशःप्रकाशकत्वात् । उपादेयत्वमहाशयत्वाभ्यां वचनजाम्बवतो रत्नसागराभ्यां साम्यम् ॥

अथ पञ्चभिरुच्छलितवचनस्वरूपमाह—

जत्थ परमत्थगरुआ ण होन्ति तुम्हारिसा थिरववट्ठम्भा।
महिहरमुक्क व्व मही अत्थाअइ तत्थ वित्थरा कज्जधुरा ॥४६॥

[यत्र परमार्थगुरवो न भवन्ति युष्मादृशाः स्थिरव्यवष्टम्भाः ।
महीधरमुक्तेव मही अस्तायते तत्र विस्तृता कार्यधुरा ॥]

परमार्थतः स्वरूपतो गुरवो महान्तो युष्मादृशा यत्र स्थले स्थिरव्यवष्टम्भाः स्थिराश्रया न भवन्ति तत्र विस्तीर्णा कार्यधुरा अस्तायते । कार्यभारो नश्यतीत्युचितमित्यर्थः । महीव महीधरमुक्ता यथा महीधरेण मुक्ता त्यक्ता विस्तृता मही अस्तायते । वासुकिप्रभृतिनिःश्वासनिर्धूता दिग्गजचरणसंक्रमणतिर्यङ्नता च क्वचिद्गच्छतीत्यर्थः । तथा च तथा यतनीयं यथा कार्यं न नश्यति । प्रकृते भवन्तः स्थिरव्यवष्टम्भा एवेति भावः ॥

कार्यस्य सुखसाध्यतामाह—

पडिवत्तिमेत्तसारं कज्जं थोआवसेसिअं मारुइणा ।
संपइ जो च्चेअ उरं देइ पवङ्गाण पिअइ सो च्चेअ जसम् ॥४७॥

[प्रतिपत्तिमात्रसारं कार्यं स्तोकावशेषितं मारुतिना ।
संप्रति य एव उरो ददाति प्लवगानां पिबति स एव यशः ॥]

मारुतिना कार्यं स्तोकेनाल्पेनावशेषितमीषत्समाप्तव्यं कृतम् । कीदृशम् । प्रतिपत्तिः सीतावार्ताज्ञानं तन्मात्रं सारं मुख्यं प्रयोजनं यत्र । संप्रति वार्ताज्ञाने सति प्लवगानां मध्ये य एव उरो हृदयं ददाति कर्तव्यमिदमिति प्रतिसंधत्ते स एव यशः पिबत्यास्वादयति । यशोभाजनं भवतीत्यर्थः । तथा च वार्ताज्ञानमेव दुःशकमासीत् तत्प्रकृते हनूमता निष्पादितमेव । अतःपरं वानराणां चिकीर्षामात्रमपेक्षितमिति भावः । य इत्यनिर्धारितविशेषनिर्देशेन सर्वेषामेव सामर्थ्यमुक्तम् । हृदयं भूमौ दत्त्वा जलं पीयत इति कपिस्वाभाव्यमुक्तम् । 'प्रतिपत्तिः पदप्राप्तौ स्वीकारे गौरवेऽपि च । प्रारम्भे च प्रबोधे च प्रतिपत्तिः प्रयुज्यते ।।' इति विश्वः ॥

इतिकर्तव्यमाह—

ता सव्वे च्चिअ समअं दुत्तारं पि हणुमन्तसुहवोलीणम् ।
अब्भत्थेम्ह सुरासुरणिव्वूढब्भत्थणाअरं मअरहरम् ॥ ४८ ॥

[तावत्सर्व एव समं दुस्तारमपि हनूमत्सुखव्यतिक्रान्तम् ।
अभ्यर्थयामः सुरासुरनिर्व्यूढाभ्यर्थनादरं मकरगृहम् ॥]

सर्व एव वयं सममेकदैव तावन्मकरगृहं समुद्रमभ्यर्थयामः । पारगमनोपायमर्थात् । नन्वलङ्घनीय एवायमिति कथमिदमित्यत आह—दुस्तारमपि हनूमता सुखेन व्यतिक्रान्तं लङ्घितम् । तथा चास्मज्जातिलङ्घ्यः स्यादेवेति भावः । नन्वस्माभिर्महद्भिः समुद्रस्याभ्यर्थना कर्तव्येत्ययुक्तमत आह—पुनः कीदृशम् । सुरासुराभ्यां निर्व्यूढो निष्पादितस्तत्तत्कार्यनिमित्तमभ्यर्थनारूप आदरो यस्य तम् । तथा चास्मदपेक्षयापि महत्तरैः कृतमिदमिति भावः । यद्वास्माभिरभ्यर्थितोऽपि कथं कुर्यादित्यत आह—सुरासुरयोर्निर्व्यूढो निष्पादितोऽभ्यर्थनाया आदरो येन तत् । तत्कार्यनिष्पादनात् । इदमपि तथैवेति भावः ॥

एतद्वैपरीत्ये वैपरीत्यमेव स्यादित्याह—

अह णिक्कारणगहिअं मए वि अब्भत्थिओ ण मोच्छिहि धीरम् ।
ता पेच्छह वोलीणं विहुओअहिजन्तणं थलेण कइवलम् ॥४९॥

[अथ निष्कारणगृहीतं मयाप्यभ्यर्थितो न मोक्ष्यति धैर्यम् ।
तत्पश्यत व्यतिक्रान्तं विधुतोदधियन्त्रणं स्थलेन कपिबलम् ॥]

अथ पक्षान्तरे । मयाप्यभ्यर्थितः समुद्रो निष्कारणं गृहीतं धैर्यं पारगमनव्यलीकरूपं न मोक्ष्यति ततः स्थलेन व्यतिक्रान्तं समुद्रमुत्तीर्णं कपिबलं पश्यत । कीदृशम् । विधुतमुदधिरूपं यन्त्रणं प्रतिरोधकं यस्य तत् । तथा च सत्यस्माभिरेव समुद्रः शोषणीयः क्षेपणीयो वेति भावः ॥

अवन्ध्यकोपतां दर्शयति—

जत्थ महं पडिउत्थो वसिहिइ अण्णस्स कह तहिं चिअ रोसो ।
दिट्ठिं पाडेइ जहिं दिट्ठिविसो तं पुणो ण पेच्छइ बिइओ ॥५०॥

[यत्र मम पर्युषितो वत्स्यत्यन्यस्य कथं तस्मिन्नेव रोषः ।
दृष्टिं पातयति यत्र दृष्टिविषस्तं पुनर्न पश्यति द्वितीयः ॥]

यत्र विषये मम रोषः परि सर्वतोभावेनोषितोऽवस्थितस्तत्रैवान्यस्य जनस्य रोषः कथं वत्स्यति । अपि तु न वत्स्यतीत्यर्थः । मयैव तस्य नाशनीयत्वादिति भावः । अर्थान्तरं न्यस्यति—यत्र जने दृष्टिविषो दृष्ट्यैव विषं यस्य तादृक्सर्पो दृष्टिं पातयति तं जनं पुनर्द्वितीयो दृष्टिविषो न पश्यति । प्रथमेनैव प्रथमदर्शनात्तस्य भस्मीकृतत्वादित्यर्थः । तथा च प्रतिकूलमाचरन्समुद्रो ममैव क्रोधान्नङ्क्ष्यतीति रामादिरोषापेक्षापि न स्यात् । तथा सति सुखेन पारमुत्तरिष्याम इति भावः ॥

अथ विभीषणागमनेन प्रकृतमुपसंहरन्नाह—

**ताव अ सहसुप्पण्णा णवाअवालिद्धकसणमेहिआअम्बा ।**
**मउलप्पहाणुविद्धा आढत्ता दीसिउं णिसिअरच्छाया ॥ ५१ ॥**

[तावच्च सहसोत्पन्ना नवातपाश्लिष्टकृष्णमेघिकाताम्रा ।
मुकुटप्रभानुविद्धा आरब्धा द्रष्टुं निशिचरच्छाया ॥]

तावदभ्यन्तरे सहसा अतर्कितमुत्पन्ना निशिचराणां विभीषणादीनां छाया नभःस्थितानामेव कान्तिविशेषस्तैर्द्रष्टुमारब्धा । यद्वा छाया समुद्रे प्रतिबिम्बो भूमावातपाभावो वा किमेतदिति जिज्ञासावशादित्यर्थः । छाया कीदृशी । मुकुटस्य प्रभाभिरनुविद्धा संबद्धा । अत एव नवातपेन प्रातःकालीनरविकान्त्या आश्लिष्टा संबद्धा या कृष्णमेघिका नीलमेघखण्डस्तद्वदाताम्रा। तथा च निशाचरच्छायायाः श्यामत्वेन पद्मरागादिविशिष्टमुकुटसंबन्धाल्लौहित्येन च बालातपसंबद्धनीलमेघतौल्यं प्रतिबिम्बातपाभावयोरपि तत एव मुकुटप्रभासंपर्कादिति भावः । 'छाया स्यादातपाभावे प्रतिबिम्बेऽर्कयोषिति ॥'

अथ तेषामेव दर्शनमाह—

**तो गमणवेअमारुअमुहलपडद्धन्तणहणिराइअजलए ।**
**पेच्छन्ति रविअरन्तरघोलाविअपिहुलविज्जुले रअणिअरे ॥ ५२ ॥**

[ततो गमनवेगमारुतमुखरपटार्धान्तनभोनिरायतजलदान् ।
प्रेक्षन्ते रविकरान्तरघूर्णितपृथुलविद्युतो रजनीचरान् ॥]

ततस्ते वानरा रजनीचरान्प्रेक्षन्ते । कीदृशान् । गमनवेगमारुतेन मुखरैः सशब्दैः पटार्धान्तैर्नभसि निरायता दीर्घीकृता जलदा यैस्तान् । मेघानामकठिनद्रव्यतया पवनदीर्घीकृतपटार्धान्तानुस्यूतगतिकत्वादिति भावः । यद्वा तादृशैः पटा-

र्धान्तैर्नभसि निराकृता बहिःस्फोटिता जलदा येभ्यस्तान् । वस्त्रैरेव मेघानामपाकृतत्वादित्यर्थः । पुनः कीदृशान् । रविकरान्तरे रविकिरणमध्ये घूर्णिताः सजातीयसंवलनेन संसर्गिद्रव्यतया मिथो विमिश्रीकृताः पृथुला विद्युतो यैस्तान् । पटार्धान्तप्रेरितजलदपृथग्भावेन विद्युतां रविकिरणमिश्रणमित्यर्थः ॥

अथ वानराणां संभ्रममाह—

**तो णहअलावडन्ते पलउप्पाअ व्व णिसिअरे अहिलेउम् ।**
**उण्णामिअगिरिसिहरं चलिअं महिमण्डलं व वाणरसेण्णम् ॥५३॥**

[ततो नभस्तलावपततः प्रलयोत्पातानिव निशिचरानभिलवितुम् ।
उन्नामितगिरिशिखरं चलितं महीमण्डलमिव वानरसैन्यम् ॥]

ततो निशाचरदर्शनानन्तरं निशाचरानभिलवितुं च्छेत्तुं उन्नामितमुत्तोलितं गिरिशिखरं येन तद्वानरसैन्यं चलितमुत्थितम् । किंभूतान् । नभस्तलादापततः । कानिव । प्रलयकालोत्पातानाकस्मिकधूमकेत्वादीनिव । तेऽपि नभस्तलादेवापतन्ति । प्रकृते चोत्पातायमानविभीषणादिभ्यो राक्षसक्षयः स्यादिति भावः । किमिव । महीमण्डलमिव । यथा कुतश्चित्कारणान्महीमण्डलं स्वचलनादुन्नामितगिरिशिखरं सच्चलतीत्यर्थः ॥

अथ विभीषणादीनामवतरणमाह—

**ओसुम्मन्तजलहरं विसमट्ठिअकइबलवलन्तालोअम् ।**
**दीसइ भमन्तविहडं थाणप्फिडिअसिढिलं पडन्तं व णहम् ॥५४॥**

[अवपात्यमानजलधरं विषमस्थितकपिबलवलदालोकम् ।
दृश्यते भ्रमद्विह्वलं स्थानस्फेटितशिथिलं पतदिव नभः ॥]

तदानीं नभः पतदिव दृश्यते । तैरित्यर्थात् । कीदृशम् । अवपात्यमाना निशिचरावतरणानुसारेणाधःक्रियमाणा जलधरा यस्मात् । तथा चावपततोर्निशाचरमेघयोः श्यामत्वेन बाहुल्येन च नभःपतनमिव लक्ष्यत इति भावः । एवं विषमस्थितमुपरिपतनभिया बहिर्बहिरवस्थितं यत्कपिबलं तस्य वलन्नालोको दर्शनं यत्र । एवं स्थानादवस्थितिप्रदेशात्स्फेटितमवक्षिप्तं सच्छिथिलमदृढमूलम् अत एव भ्रमत्सद्विह्वलं विपर्यस्तम् । सर्वमिदमौत्प्रेक्षिकम् । अन्यदपि स्थानात्प्रेरितं शिथिलमूलतया भ्रमित्वा पततीति ध्वनिः ॥

अथ हनूमद्व्यापारमाह—

णवरि अ लङ्कादिट्ठो दिट्ठसहाओ विहीसणो मारुइणा ।
णिअमेऊण कइबलं बीओदन्तो व राहवस्स उवणिओ ॥ ५५ ॥

[अनन्तरं च लङ्कादृष्टो दृष्टस्वभावो विभीषणो मारुतिना ।
नियम्य कपिबलं द्वितीयोदन्त इव राघवस्योपनीतः ॥]

तेषामागमनोत्तरं मारुतिना विभीषणो राघवस्योपनीतश्च । कुलं नाम च निरुच्य साधुरयं भवदीय इत्युक्त्वा निकटं प्रापित इत्यर्थः । कीदृक् लङ्कायां दृष्टः । एवं दृष्टः स्वभावः प्रकृतिः स्वीयताभावो वा यस्य तथाभूतश्च । एतेन सम्यक् ज्ञातरामभक्तिरित्युक्तम् । किं कृत्वा । राक्षस इति हन्तुमुद्यतं कपिबलं निवार्य । क इव । सीताया द्वितीय उदन्त इव । एक उदन्तः पूर्वं प्रापितस्तस्मिन्नधिगते यथानन्दोऽभूत्तथास्मिन्नप्यधिगत इति भावः ॥

अथ विभीषणस्य रामचरणप्रणाममाह—

चलणोणअणिहुअस्स अ माणेण व करअलेन से रहुवइणा ।
उण्णामिअं णणु सिरं जाअं रक्खसउलाहि दूरब्भहिअम् ॥ ५६ ॥

[चरणावनतनिभृतस्य च मानेनेव करतलेनास्य रघुपतिना ।
उन्नामितं ननु शिरो जातं राक्षसकुलाद्दूराभ्यधिकम् ॥]

चरणावनतस्य निभृतस्य विनयशीलतयानुद्धतस्यास्य विभीषणस्य शिरो रघुपतिना मानेन संमानेनेव करतलेनोन्नामितं चरणद्वयादुत्थापितं सद्राक्षसकुलाद्दूराभ्यधिकं महोन्नतं जातम् । यद्वा मानेनाहंकारेणेव । तथा च यथा मानेनोन्नामितं तथा करतलेनापीति सहोपमा । सर्वराक्षसापेक्षया तस्यैव तथाविधरामादरविषयत्वादिति भावः । ननुशब्दोऽवधारणे । अन्यदपि परिमाणेनोन्नामितमभ्यधिकमेव भवतीति ध्वनिः ॥

अथ सुग्रीवस्य विभीषणालिङ्गनमाह—

ववसिअणिवेइअत्थो सो मारुइलद्धपच्चआगअहरिसम् ।
सुग्गीवेण उरत्थलवणमालामलिअमहुअरं उवऊढो ॥ ५७ ॥

[व्यवसितनिवेदितार्थः स मारुतिलब्धप्रत्ययागतहर्षम् ।
सुग्रीवेणोरःस्थलवनमालामृदितमधुकरमुपगूढः ॥]

स विभीषणः सुग्रीवेण मारुतेर्हनूमत्तो लब्धो यः प्रत्ययो रावणात्पृथग्भूतः स्वीयोऽयमिति विश्वासस्तेनागतहर्षं यथा स्यादेवमुपगूढ आलिङ्गितः। शत्रुगृहभेदेन कार्यसिद्धिनिर्णयादिति भावः। उरःस्थलवनमालायां मिथो वपुर्मिलनान्मृदिताः पीडिता मधुकरा यत्र तद्यथा स्यादित्यपि क्रियाविशेषणम्। विभीषणः किंभूतः। व्यवसितेनागमनेन निवेदितोऽर्थः प्रयोजनं येन। यद्वा व्यवसितस्य रामागमनरूपस्य निवेदितोऽर्थो लङ्काग्रहणोपायो येन तथाभूतः॥

अथ वाचिकं प्रसादमाह—

तो जम्पइ रहुतणओ समअं दससु वि दिसामुहेसु किरन्तो।
पअइसुकअस्स धवलं णीसन्दं व हिअअस्स दन्तुज्जोअम्॥ ५८॥

[ततो जल्पति रघुतनयः समकं दशस्वपि दिङ्मुखेषु किरन्।
प्रकृतिसुकृतस्य धवलं निःस्यन्दमिव हृदयस्य दन्तोद्योतम्॥]

ततस्तदनन्तरं रघुतनयो जल्पति। किं कुर्वन्। समकमेकदैव दशस्वपि दिङ्मुखेषु दन्तानामुद्द्योतं किरणं किरन्प्रसारयन्। किंभूतमिव। प्रकृतिशुद्धस्य हृदयस्य धवलं निःस्यन्दमभिप्रायप्रवाहमिव। हृदयस्य शुद्धतया तदुद्भवाभिप्रायस्याप्युज्ज्वलत्वेन धवलत्वम्। कारणगुणाः कार्यगुणानारभन्त इत्यभिप्रायः॥

अथ तद्वचनस्वरूपमाह—

ठावं दवग्गिभीआ वणम्मि वणहत्थिणि व्व परिमग्गन्ती।
पेच्छह लद्धासाआ मोत्तुं रक्खसउलं ण इच्छइ लच्छी॥ ५९॥

[स्थानं दवाग्निभीता वने वनहस्तिनीव परिमृग्यन्ती।
पश्यत लब्धास्वादा मोक्तुं राक्षसकुलं नेच्छति लक्ष्मीः॥]

हे लोकाः, पश्यत। राजलक्ष्मी राक्षसवंशं मोक्तुं नेच्छति। अत्र हेतुमाह—कीदृशी। लब्धः प्राप्त आस्वादो वाससुखानुभवो यया। तथा च विभीषणश्चेदिहागतस्तदा रावणं हत्वा राज्यमस्मै समर्पणीयमिति भावः। केव। वनहस्तिनीव। वने दवानलभीता वनहस्तिनी दावानतिक्रमणीयं स्थानं परिमृग्यन्ती वनं मोक्तुं नेच्छति किं तु वन एव तथाभूतस्थाने तिष्ठति तथेयमपीत्यर्थः। वनहस्तिनी कीदृशी। लब्धः स्वेच्छालभ्यतृणाद्याहारजन्य आस्वादो यया सा। तथा च दावाभिप्रायो रावणो

लोकतापकत्वात् तद्भीता वनहस्तिनीप्राया लक्ष्मीर्वनप्राये राक्षसकुले सुखहेतुस्थानान्तरप्रायं विभीषणमाश्रयिष्यतीत्याशयः ॥

अथ विभीषणाश्वासनमाह—

**णज्जइ विहीसण तुह सोम्मसहावपरिवड्ढिअं विण्णाणम् ।**
**दिट्ठिविसेहि व अमअं उअहिस्स णिसाअरेहि वि अविद्दविअम् ६०**

[ज्ञायते विभीषण तव सौम्यस्वभावपरिवर्धितं विज्ञानम् ।
दृष्टिविषैरिवामृतमुदधेर्निशाचरैरप्यविद्रावितम् ॥]

हे विभीषण, तव सौम्यस्वभावेन सत्त्वप्रकृत्या परिवर्धितं विज्ञानं विशिष्टज्ञानं निशाचरैस्तमोगुणप्रधानैरप्यविद्रावितं सहवासादिनापि न विप्लावितमिति विज्ञायते । तथा च नाम्ना जात्या च विभीषणः स्वभावेन सौम्यो यन्मामुपागतोऽसीति भावः । किमिव । उदधेरमृतमिव । यथा सौम्यस्वभावपरिवर्धितमुदधेरमृतं दृष्टिविषैः सर्पैर्न विद्राव्यते सहस्थित्यापि न कालकूटीक्रियते न वा दह्यते किं त्वमृतमेव तिष्ठतीत्यर्थः । तथा चामृतप्रायं तव ज्ञानमतः सुखमवाप्स्यसि दृष्टिविषप्राया अन्ये राक्षसा धर्मद्वेषाद्दुःखं लप्स्यन्त इति भावः ॥

विभीषणस्तुतिमाह—

**सुद्धसहावेण फुडं फुरन्तपज्जत्तगुणमऊहेण तुमे ।**
**चन्देण व णिअअमओ कलुसो वि पसाहिओ णिसाअरवंसो ॥६१॥**

[शुद्धस्वभावेन स्फुटं स्फुरत्पर्याप्तगुणमयूखेन त्वया ।
चन्द्रेणेव निजकमृगः कलुषोऽपि प्रसाधितो निशाचरवंशः ॥]

हे विभीषण, त्वया कलुषोऽपि कालुष्ययुक्तोऽपि निशाचरवंशः स्फुटं व्यक्तं प्रसाधितोऽलंकृतः चन्द्रेण निजकमृग इव । यथा चन्द्रेण कलुषोऽपि कलङ्करूपोऽपि निजको मृगः प्रसाध्यते । आश्रयसौन्दर्येण मृगस्यैव शोभा भवतीत्यर्थः । तथा राक्षसकुले भवानुत्पन्न इति भवदुत्कर्षेण तस्योत्कर्ष इति भावः । त्वया चन्द्रेण वा किंभूतेन । शुद्धो निर्मलः स्वभावः प्रकृतिर्यस्य । पक्षे शुद्धः श्वेतः स्वभावः स्वरूपं यस्य तेन । एवं स्फुरन्तः पर्याप्ता बहवो गुणाः शौर्यादयस्त एव मयूखा यस्य प्रकाशकत्वात् । तेन । मयूखः प्रलापो वा । पक्षे स्फुरन्तो बहवः शैत्यादयो गुणा येषामेतादृशा मयूखा यस्य तेन ॥

अथ विभीषणस्य कृत्यकौशलमाह—

**कह इर सकज्जकुसला कज्जगइं मइगुणेहि अवलम्बन्ता ।**
**कुलमाणववट्टम्भा ण होन्ति राअसिरिभाअणं सप्पुरिसा ॥ ६२ ॥**

[कथं किल स्वकार्यकुशलाः कार्यगतिं मतिगुणैरवलम्बमानाः ।
कुलमानव्यवष्टम्भा न भवन्ति राजश्रीभाजनं सत्पुरुषाः ॥]

किल निर्णये । सत्पुरुषाः कथं राजश्रियो भाजनं न भवन्ति अपि तु भवन्त्येव । स्वकार्ये कुशला दक्षाः । मतिर्बुद्धिस्तद्गुणैः शुश्रूषादिभिः कार्यगतिं कर्तव्यकर्मप्रकारमवलम्बमानाः । बुद्ध्या कार्यसौष्ठवं चिन्तयन्त इत्यर्थः । एवं कुलमभिजनो मानोऽहंकारस्तौ व्यवष्टम्भ आश्रयो येषां ते । तदनुसारेण व्यवहरन्त इत्यर्थः । तथा च पुलस्त्यसंततिस्तव कुलं तदनुसारेण वर्तसे भ्रातरमपि मुक्तवानसीति मानी च मन्निकटमागतोऽसीति कार्यानुकूलबुद्धिरसीत्युचितमेव राजश्रीभाजनं भवसि । रावणस्तु पुलस्त्यकुलविरुद्धचरित्र इति विनङ्क्ष्यतीति भावः । 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं षड्गुणा धीः प्रकीर्तिता' ॥

रावणानिष्टं व्यञ्जयति—

**लद्धासाएणं चिरं सुरबन्दिपरिग्गहे णिसाअरवइणा ।**
**सीआ रक्खसवसहिं दिट्ठिविसधरं विसोसहि व्व उवणिआ ॥६३॥**

[लब्धास्वादेन चिरं सुरबन्दिपरिग्रहे निशाचरपतिना ।
सीता राक्षसवसतिं दृष्टिविषगृहं विषौषधिरिवोपनीता ॥]

निशाचरपतिना रावणेन दृष्टिविषाः सर्पास्तेषां गृहं पातालं विवरं वा विषौषधिरिव विषनाशकमौषधमिव सीता राक्षसवसतिं लङ्कामुपनीता । यथा सर्पगृहे गव्य-(?)रूपविषौषधनिधानेन सर्पा विनश्यन्ति तथा लङ्कायां सीतोपनयनेन राक्षसा विनङ्क्ष्यन्तीति भावः । रावणेन कीदृशेन । चिरं व्याप्य बन्दीकृतदेवस्त्रीणां परिग्रहे लब्धास्वादेन । तथा च कामोन्मत्तचित्ततया सीतामप्यपहृतवानतो न स्थास्यतीति भावः ॥

दुष्फलयोगेनोपसंहरन्नाह—

**फिडिआ सुरसंखोहा बन्दिअणक्कन्दिअं गअं परिणामम् ।**
**जाआ दहमुहगहिआ तिहुवणडिम्बस्स जाणई अवसाणम् ॥६४॥**

[स्फेटिताः सुरसंक्षोभा बन्दीजनाक्रन्दितं गतं परिणामम् ।
जाता दशमुखगृहीता त्रिभुवनडिम्बस्य जानकी अवसानम् ॥]

अतः परं सुराणां संक्षोभाः स्फेटिता अपगताः । सुरबन्दीजनानामाक्रन्दितमपि परिणाममन्त्यदशां गतं प्राप्तम् । अतः परं न भविष्यति । दशमुखेन गृहीता अपहृता जानकी त्रिभुवनडिम्बस्य त्रैलोक्यत्रासस्यावसानमन्तभागो विरामो वा जाता । यतः सीताया रावणावरोध एव त्रिभुवनडिम्बस्यावधिरित्यर्थः । रावणनाशस्य सिद्धप्रायत्वादिति भावः । 'डिम्बो भये कलकले पुप्फुसेऽपि च कीर्त्यते' ॥

अथ विभीषणस्याभिषेकमाह—

**अह णअणेसु पहरिसं कण्णेसु पवङ्गवड्ढिअं जअसद्दम् ।**
**सीसम्मि अ अहिसेअं पल्हत्थइ अ हिअअम्मि से अणुराअम् ६५**

**इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे**
**चउट्ठो आसासओ परिसमत्तो ।**

[अथ नयनयोः प्रहर्षं कर्णयोः प्लवंगवर्धितं जयशब्दम् ।
शीर्षे चाभिषेकं पर्यस्यति च हृदयेऽस्यानुरागम् ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये चतुर्थ आश्वासः परिसमाप्तः ।

---

अथ पूर्वोक्तानन्तरं रामोऽस्य विभीषणस्य नयनयोः प्रहर्षमानन्दं पर्यस्यति विस्तारयति । अभिषेकसामग्रीदर्शनात् । अथ कर्णयोः प्लवंगैर्वर्धितं जयशब्दम् । ततश्च शीर्षे शिरस्यभिषेकं पश्चाद्धृदयेऽनुरागं प्रेम पर्यस्यतीति सर्वत्र संबन्धात्क्रियादीपकमिदम् । विभीषणोऽत्यन्तमनुरक्तोऽभूदिति वाक्यार्थः ॥

रामषाड्गुण्यदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य तुरीयाभूदियं शिखा ॥

---

पञ्चम आश्वासः ।

अथ रामस्य विप्रलम्भावस्थां प्रस्तौति—

अह जलणिहिम्मि अहिअं मअणे अ मिअङ्कदंसणविअम्भन्ते ।
विरहविहुरस्स णज्जइ णिसा वि रामस्स वड्ढिउं आढत्ता ॥ १ ॥

[अथ जलनिधावधिकं मदने च मृगाङ्कदर्शनविजृम्भमाणे ।
विरहविधुरस्य ज्ञायते निशापि रामस्य वर्धितुमारब्धा ॥]

अथ विभीषणाभिषेकोत्तरं सीताविरहेण विधुरः क्लेशो यस्य तस्य रामस्य निशापि वर्धितुमारब्धा इति ज्ञायते । कस्मिन्सति । जलनिधौ मदने चाधिकं यथा स्यादेवं विजृम्भमाणे वर्धमाने सति । तथा च मृगाङ्कोदयेन स्वभावतः समुद्रवृद्धिर्मादकत्वेन रामस्य कामवृद्धिरित्युभयथापि वेदनानुभवादुज्जागरेण रजनिवृद्धिराभासत इत्यर्थः । यद्वा चन्द्रोदयेन समुद्रवृद्धिस्तया च सर्वथा पारगमनव्यतिरेकज्ञानं तेन च विरहिणस्तस्य कामवृद्धिस्तया च वेदनाधिक्यं तस्मादुज्जागरणं तेन च रजनिवृद्धिभ्रम इति हेतुपरम्परालंकारः । निद्राच्छेदः कामावस्था । तदुक्तम्—'निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः' इति । अथ च शरदवसाने निशावृद्ध्युपक्रम इत्यप्युक्तम् ॥

अथ रामस्य प्रायोपवेशनमाह—

उइअमिअङ्कं च णहं णिअमट्ठिअराहवं च साअरपुलिणम् ।
णेन्ति परं परिवड्ढिं आलिङ्गिअचन्दिअं महोअहिसलिलम् ॥ २ ॥

[उदितमृगाङ्कं च नभो नियमस्थितराघवं च सागरपुलिनम् ।
नयतः परां परिवृद्धिमालिङ्गितचन्द्रिकं महोदधिसलिलम् ॥]

उदितश्चन्द्रो यत्र तन्नभः, नियमे प्रायोपवेशने स्थितो राघवो यत्र तच्च सागरपुलिनं द्वावप्याश्लिष्टचन्द्रिकं महोदधिसलिलं परां परिवृद्धिं महत्त्वं नयतः प्रापयतः । गगनस्योदितमृगाङ्कत्वेन स्वभावादेव वृद्धिजनकत्वाज्जलस्य महत्त्वे हेतुत्वम्, पुलिनस्य तु नियमस्थितराघवत्वेन । एतावज्जलस्य महत्त्वं यदुद्दिश्य राघवोऽपि प्रायोपवेशनमाचरतीत्यर्थापत्त्या गौरवप्रयोजकत्वात्, कल्ये रामः किं करिष्यतीति क्षोभजन्यान्दोलनतो वृद्धिमेव प्रति निदानत्वाद्वेत्यर्थः । 'चन्द्रिकायां मः' ॥

अथ रामस्योत्कण्ठामाह—

**तो से विओअसुलहा णिअमविइण्णहिअअक्खिवणसोडीरा ।**
**खउरेन्ति धिइग्गहणं जाअं जाअं विसूरणाविक्खेवा ॥ ३ ॥**

[ततस्तस्य वियोगसुलभा नियमवितीर्णहृदयक्षेपणशौटीर्याः ।
कलुषयन्ति धृतिग्रहणं जातं जातं खेदविक्षेपाः ॥]

तदनन्तरं तस्य रामस्य खेदैर्विरहजन्यदुःखैर्ये विक्षेपा उच्चाटनास्ते जातं जातं धीरोदात्तत्वादुत्पन्नमुत्पन्नं धृतिग्रहणं धैर्यादानं कलुषयन्ति । मध्ये मध्ये विच्छेदादनुज्वलयन्तीत्यर्थः । कीदृशाः । नियमे प्रायोपवेशने वितीर्णस्यार्पितस्य हृदयस्य क्षेपणे इतस्ततः संचारणे शौटीर्यं गर्वो बलवत्त्वं वा येषां ते । एवं वियोगे सति सुलभा निरन्तरमुत्पद्यमाना इति विषयनिवृत्तिरूपा कामावस्था । 'ग्रहणं त्रयमिच्छन्ति ज्ञानमादानमादरम्' । 'खिदेर्जूरविसूरौ' ॥

अथ रामस्य चिन्तावस्थामाह—

**काहिइ पिअं समुद्दो गलिहिइ चन्दाअवो समप्पिहिइ णिसा ।**
**अवि णाम धरेज्ज पिआ ओ णे विरहेज्ज जीविअं ति विसण्णो ॥४॥**

[करिष्यति प्रियं समुद्रो गलिष्यति चन्द्रातपः समाप्स्यति निशा ।
अपि नाम ध्रियेत प्रिया उत नो विरहयेज्जीवितमिति विषण्णः ॥]

अपिः प्रश्ने । हनूमन्तं प्रतीत्यर्थात् । नाम संभावनायाम् । समुद्रः पारगमनानुकूलं मे मम प्रियं करिष्यति । संतापकश्चन्द्रातपो गलिष्यति । विरहवेदनाहेतुर्निशा च समाप्स्यति समाप्तिं गमिष्यति । प्रिया सीता ध्रियेत जीवेत । उत पक्षान्तरे । प्रियैव नोऽस्मान् जीवितं विरहयेत्त्याजयेत् । चन्द्रातपादिव्यतिकरे विरहवैक्लव्येन तज्जीवनत्यागे सति मज्जीवनत्यागादि नानावितर्कमाचरन् रामो विषण्णः । इतिशब्दो हेतौ । सीताजीवनत्यागस्तु साक्षादमङ्गलत्वान्नोक्तः किं तु स्वजीवनत्याजनप्रश्नमुखेनेति भावः । 'अपिः संभावनाप्रश्नगर्हाशङ्कासमुच्चये' इति विश्वः ॥

अथ रामस्योन्मादावस्थामाह—

**णिन्दइ मिअङ्ककिरणे खिज्जइ कुसुमाउहे जुउच्छइ रअणिम् ।**
**झीणो वि णवर झिज्जइ जीवेज्ज पिअ त्ति मारुइं पुच्छन्तो ॥ ५ ॥**

[निन्दति मृगाङ्ककिरणान्खिद्यते कुसुमायुधे जुगुप्सते रजनीम् ।
क्षीणोऽपि केवलं क्षीयते जीवेत् प्रियेति मारुतिं पृच्छन् ॥]

रामो मृगाङ्ककिरणान् कलङ्किसंबन्धितया निन्दति । कुसुमायुधे खिद्यते कुसुमबाणोऽपि कुलिशेनेव निहन्तीति मनोदुःखं लभते । रागजनिकेयमिति रजनीं जुगुप्सते निन्दति । अथ प्रिया सीता जीवेदिति मारुतिं पृच्छन् विरहजन्यवैक्लव्येन सहजतः क्षीणोऽपि केवलमत्यर्थेन क्षीयते । सीताजीवनसंदेहादिति भावः । अत्राप्यमङ्गलपरिहाराय जीवेदिति भावमुखेन प्रश्नः । 'झीणो णवर धरिज्जइ' इति पाठे क्षीणोऽपि केवलं ध्रियते जीवति । प्रिया जीवेदिति मारुतिं पृच्छन् । तथा च प्रिया यदि जीवेत्तदा मम जीवनत्यागस्तद्दुःखाय स्यादिति जीवतीत्यभिप्रायः ॥

पुनस्तामेवावस्थामाह—

**एत्तो वसइ त्ति दिसा एणं सा णूण णिन्दइ त्ति मिअङ्को ।**
**एत्त णिसण्णेत्ति मही एएण णिअ त्ति से णहं पि बहुमअम् ॥ ६ ॥**

[इतो वसतीति दिक् एनं सा नूनं निन्दतीति मृगाङ्कः ।
अत्र निषण्णेति मही एतेन नीतेत्यस्य नभोऽपि बहुमतम् ॥]

अस्य रामस्य इतः सीता वसतीति दिशां मध्ये दक्षिणा दिक् बहुमता सीताधिष्ठानतया धन्या त्वमसीत्यादृता । तामेव भूयो रामः पश्यतीति भावः । एवं सा दुःखहेतुमेनं निन्दतीति मृगाङ्को बहुमतः । धन्योऽयं यः सीतानिन्दाया अपि विषय इति निन्दाकालीनतदृष्टिविषयं चन्द्रं स्वदृष्टेस्तदृष्टिसामानाधिकरण्याय पुनःपुनरीक्षते । अत्र सीता निषण्णेति मही धन्या त्वमसीति बहुमता । तथा च तत्र परम्परासंबन्धविशेषाय शतशः परामर्शमाचरति । एतेन सा नीतेति नभोऽपि बहुमतम् । गगन, धन्यमसि येन त्वया सीताशरीरस्पर्शो लब्ध इति नभः समालिङ्गतीति भावः । बहुमतमिति यथायोग्यं लिङ्गविपरिणामः । वस्तुतस्तु 'नपुंसकमनपुंसकेन' इति नानालिङ्गैकशेषेणैकवद्भाव इति सारम् ॥

अथोद्वेगावस्थामाह—

**धीरेण णिसाआमा हिअएण समं अणिट्ठिआ उवएसा ।**
**उच्छाहेण सह भुआ बाहेण समं गलन्ति से उल्लावा ॥ ७ ॥**

[धैर्येण निशायामा हृदयेन सममनिष्ठिता उपदेशाः ।
उत्साहेन सह भुजौ बाष्पेण समं गलन्त्यस्योल्लापाः ॥]

अस्य रामस्य धैर्येण समं निशायामा गलन्ति । धैर्यमपि व्यतिक्रामति निशायामा अपि व्यतिक्रामन्तीत्यर्थः । एवमनिष्ठिता अस्थिरा उपदेशा बन्धुजनवचांसि हृदयेन समं गलन्ति । हृदयोपदेशयोः स्थैर्यं न भवतीत्यर्थः । उत्साहेन सह भुजौ गलतः । उत्साहो ह्रसते भुजावपि दिशिदिशि स्खलतः । बाष्पेण समं उल्लापा गलन्ति प्रलापा अपि मुखाद्बहिर्भवन्तीत्यर्थः । सहोक्तिरलंकारः ॥

अथ स्मृतिगुणकथनतनुतारूपमवस्थात्रयमाह—

**धीरेत्ति संठविज्जइ मुच्छिज्जइ मअणपेलवेत्ति गणेन्तो ।**
**धरइ पिअ त्ति धरिज्जइ बिओअतणुए त्ति आमुअइ अङ्गाइं ॥ ८ ॥**

[धीरेति संस्थाप्यते मूर्च्छते मदनपेलवेति गणयन् ।
ध्रियते प्रियेति ध्रियते वियोगतनुकेत्यामुञ्चत्यङ्गानि ॥]

सीता धीरा मदागमं जानती नाकस्माज्जीवितं त्यजेदिति गणयन्रामः संस्थाप्यते । स्वयमित्यर्थात् । आत्मनैवाश्वास्यत इत्यर्थः । एवं मदने सति पेलवा मृद्वीति मदनवेदनां सोढुं न शक्नुयादिति गणयन् विनाशमाशङ्कमानः स्वयमेव पुनर्मूर्च्छते । मूर्च्छितश्चेत्तदा कथं जीवतीत्यत आह—प्रिया ध्रियते यदि मृता स्यात्तदा रामोऽपि प्राणांस्त्यजेदिति जीवति । यदि न जीवति तदा मम प्राणाः स्वयमेव गच्छेयुरिति गणयन्ध्रियते जीवति । स्वयं प्राणान्न त्यजति । मत्प्राणत्यागे सीतायाः प्राणत्यागः स्यादित्यनिष्टशङ्कित्वादित्यर्थः । प्रिया वियोगेन तनुका दुर्बलेति गणयन्नङ्गान्यामुञ्चति दुर्बलो भवतीत्यर्थः । तथा च संगीतसारे—'अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंलापाः । उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः' ॥

अथ प्रभातकालोपक्रममाह—

**उब्भडहरिणकलङ्को मलअलआपल्लवुव्वमन्तमऊहो ।**
**अरुणाहअविच्छाओ जाओ सुहदंसणो णवर तस्स ससी ॥ ९ ॥**

[उद्भटहरिणकलङ्को मलयलतापल्लवोद्वमन्मयूखः ।
अरुणाहतविच्छायो जातः सुखदर्शनः केवलं तस्य शशी ॥]

तस्य रामस्य केवलं शशी चन्द्र एव सुखदर्शनो जातः । विरहिणां शत्रुश्चन्द्रस्तस्य विपद्दर्शनं सुखहेतुरभूदन्येषां तु मादकत्वमेव स्थितमिति भावः । चन्द्रविपत्तिमेव प्रकटयति—कीदृक् । उद्भटो हरिणरूपः कलङ्को यस्य । प्रातःकालोपक-

मेण कान्तीनामभावात्। तर्हि कान्तयः क्व गता इत्यत आह—मलयलतापल्लवेषूद्भ्रमन्नुद्भ्रान्तो भवन्मयूखो यस्य स तथा। प्रभाते विधुरोषधीषु कान्तिमर्पयतीति प्रसिद्धिः। वस्तुतस्तु मलयलतापल्लवेषूद्भ्रम्यमाण उद्गीर्यमाणो मयूखो येन स तथेत्यर्थः। केचित्तु निस्तेजस्त्वेन रात्रिनाशकालीनतया च मादकत्वाभावात्सुखदर्शनोऽभूदित्यर्थमाहुः॥

अथ प्रभातोपक्रमेण समुद्रक्षोभमाह—

जइ जइ णिसा समप्पइ तह तह वेविरतरङ्गपडिमावडिअम्।
किंकाअव्वविमूढं घोडइ हिअअं व्व उअहिणो ससिबिम्बम्॥१०॥

[यथा यथा निशा समाप्यते तथा तथा वेपमानतरङ्गप्रतिमापतितम्।
किंकर्तव्यविमूढं घूर्णते हृदयमिवोदधेः शशिबिम्बम्॥]

वेपमानेषु तरङ्गेषु प्रतिमया प्रतिबिम्बेन पतितं संक्रान्तं शशिबिम्बं घूर्णते वेपते। समुद्रे चन्द्रबिम्बस्तरङ्गकम्पेन कम्पित इव भासते। किमिव। उदधेर्हृदयमिव। चन्द्रस्य प्रतिबिम्बो न भवति किं तु समुद्रस्य हृदयं तत्कम्पत इत्यर्थः। कम्पे हेतुमाह—हृदयं कीदृक्। यथा यथा निशा समाप्यते समाप्तिं गच्छति तथा तथा अनिष्टकालसांनिध्येन किंकर्तव्यविमूढं उपोषितो रामः क्रुध्यन् प्रातः किं करिष्यतीति क्षोभादेकतो रामप्रायोपवेशनमात्मोपमर्दः परतो लाघवं तन्मया किं कर्तव्यमिति कर्तव्यतामूढमित्युत्प्रेक्षा॥

अथ प्राभातिकं पवनमाह—

णवरि अ मलअगुहामुहभरिउव्वरिअफुडणीहरन्तपडिरवम्।
पवणेण उअहिसलिलं पहाअतूरं व आहअं रहुवइणो॥११॥

[अनन्तरं च मलयगुहामुखभृतोद्वृत्तस्फुटनिर्ह्रदत्प्रतिरवम्।
पवनेनोदधिसलिलं प्रभाततूर्यमिवाहतं रघुपतेः॥]

पवनेन उदधिसलिलमाहतं रघुपतेः प्रातःकालीनवाद्यरूपतूर्यमिव। राज्ञः प्रभाते वाद्यं ध्वनतीति प्रकृते रामस्य तदभावात्पवनाहतसमुद्रसलिलशब्द एव प्रभातसूचकस्तूर्यध्वनिरासीदित्युत्प्रेक्षा। उदधिसलिलं तूर्यं वा कीदृक्। मलयगुहामुखभृतात्सदन्तःसंमितात्प्रतिरवादुद्वृत्तो बहिर्भूय स्थितः स्फुटस्तारोऽत एव निर्ह्रदन् शब्दान्तरोत्पादी प्रतिरवो यस्य तादृक्। यथा च प्रतिरवस्यापि प्रतिरवजनकत्वेन मूलशब्दस्यातिगभीरत्वमुक्तम्॥

अथ प्रभातकालमाह—

हंसउलसद्दमुहलं उग्घाडिज्जन्तदसदिसावित्थारम् ।
ओसरिअतिमिरसलिलं जाअं पुलिणं व पाअडं दिअसमुहम् ॥१२॥
[हंसकुलशब्दमुखरमुद्घाट्यमानदशदिग्विस्तारम् ।
अपसृततिमिरसलिलं जातं पुलिनमिव प्रकटं दिवसमुखम् ॥]

दिवसमुखं प्रभातं पुलिनमिव प्रकटं जातमिति सहोपमा । प्रभातं पुलिनं च द्वयमपि व्यक्तं जातमित्यर्थः । प्रकटत्वे हेतुमाह—पुलिनं कीदृक् । अपसृतं तिमिरमिव सलिलं यस्मात् । चन्द्रज्योत्स्नाविरहेण समुद्रजलानां प्रतिनिवृत्त्य गतत्वात् । प्रभातपक्षे तु तिमिरं सलिलमिव तिमिरसलिलं तदपसृतं यत्रेत्यर्थः । यद्वा अपसृतं तिमिरमेव सलिलं यत्र । समुद्रजलस्य श्यामत्वादिति भावः । एवं हंसकुलस्य मरालसमूहस्य स्तोत्रादिपाठशीलसिद्धासुसंन्यासिकुलस्य वा शब्देन मुखरमित्युभयत्र प्रातः पुलिने च सशब्दहंसभ्रमणात् । एवमुद्घाट्यमानो व्यक्तीक्रियमाणो दशदिग्विस्तारो यत्रेत्युभयत्र तुल्यम् ॥

अथ रामस्य रोषमाह—

अह गमिअणिसासमअं गम्भीरत्तणदढट्ठिअम्मि समुद्दे ।
रोसो राहववअणं उप्पाओ चन्दमण्डलं व विलग्गो ॥ १३ ॥
[अथ गमितनिशासमयं गम्भीरत्वदृढस्थिते समुद्रे ।
रोषो राघववदनमुत्पातश्चन्द्रमण्डलमिव विलग्नः ॥]

अथ प्रभातानन्तरं गमितः समापितो निशैव समयोऽवधिर्यत्रेति क्रियाविशेषणं गमितनिशाकालं वा । समुद्रे गम्भीरत्वे दृढस्थिते गाधतामनागच्छति सति रोषो राघववदनं विलग्नः । एतन्निशायामप्यगाध एव समुद्रः स्थित इति क्रोधसूचकविच्छायत्वादिधर्मविशिष्टं राघवमुखमासीदित्यर्थः । क इव । चन्द्रमण्डलमुत्पातो राहुरिव । यथोत्पातश्चन्द्रमण्डलं लगति । राक्षसनाशसूचकत्वेन रोषस्य प्रजानाशसूचकचन्द्रोत्पाततुल्यत्वम् ॥

अथ रोषस्य प्रादुर्भावमाह—

तो से तमालणीलं णिडालवट्टं पलोट्टसेअजललअम् ।
भिउडी थिरवित्थिण्णं कडअं विञ्झस्स विसलअ व्व विलग्गा १४

[ततोऽस्य तमालनीलं ललाटपट्टं प्रलुठितखेदजललवम्।
भ्रुकुटी स्थिरविस्तीर्णं कटकं विन्ध्यस्य विषलतेव विलग्ना॥]

ततः क्रोधानन्तरं रामस्य तमालवन्नीलं ललाटपट्टं भ्रुकुटी लग्ना। रामललाटे भ्रुकुटिरासीदित्यर्थः। कीदृशम्। प्रलुठितं संचारि खेदजलं यत्र। एवं स्थिरं च तद्विस्तीर्णं च। क्रोधेन स्तम्भितत्वात्। दृष्टान्तयति—विषलतेव। यथा विन्ध्यस्य कटकं मूलदेशं विषलता लगति। राक्षसनाशकत्वेन विषलतासाम्यं भ्रुकुट्याः। विन्ध्यकटकमपि तमालेन नीलं प्रलुठितखेदप्रायनिर्झरादिजललवं स्थिरं विस्तीर्णं च भवति॥

अथ रामस्य धनुर्दर्शनमाह—

**अह जणिअभिउडिभङ्गं जाअं धणुहुत्तवलिअलोअणजुअलम्।**
**अमरिसविइण्णकम्पं सिढिलजडाभारबंधणं तस्स मुहम्॥ १५॥**

[अथ जनितभ्रुकुटीभङ्गं जातं धनुरभिमुखवलितलोचनयुगलम्।
अमर्षवितीर्णकम्पं शिथिलजटाभारबन्धनं तस्य मुखम्॥]

अथानन्तरं जनितो भ्रुकुटीभङ्गो यत्र तादृशं रामस्य मुखं धनुरभिमुखं वलितं वक्रीभूय वलितं लोचनयुगलं यत्र तथा जातम्। समुद्रजिघांसया रामेण धनुर्दृष्टमित्यर्थः। मुखं कीदृक्। अमर्षेण वितीर्णो दत्तः कम्पो यस्मै। सकम्पमित्यर्थः। अत एव शिथिलं जटाभारस्य बन्धनं यत्र। शरसंधानाय कृतेऽपि नियमनिर्मुक्तजटाबन्धने कम्पाद्दार्ढ्यं नाभूदित्यर्थः॥

अथ रामस्य दुर्निरीक्ष्यतामाह—

**पणअपडिभङ्गविमणो थोअत्थोअपडिवड्ढिआमरिसरसो।**
**तह सोम्मो वि रहुसुओ जाओ पलअरइमण्डलदुरालोओ॥ १६॥**

[प्रणयप्रतिभङ्गविमनाः स्तोकस्तोकप्रतिवर्धितामर्षरसः।
तथा सौम्योऽपि रघुसुतो जातः प्रलयरविमण्डलदुरालोकः॥]

ततो जटाबन्धनोत्तरं प्रणयस्य प्रतिभङ्गेन समुद्रकृतेन विमना विरुद्धचित्तः स्तोकस्तोकं धीरोदात्तत्वेन समुद्रस्य गाधताशङ्कया लघुलघुपरिवर्धितः क्रोधरसो यस्य। तथा सौम्योऽपि शीतलप्रकृतिरपि रामः प्रलयरविमण्डलवद्दुर्निरीक्ष्यो जातः। समुद्रोपप्लावितत्वेन रामस्य प्रलयरवितौल्यम्॥

अथ धनुर्ग्रहणमाह—

**तो साहसणिम्माणं अमित्तदीसन्तलच्छिसंकेअहरम् ।**
**संठिअरोसालाणं गेण्हइ भुअदप्पबीअलक्खं चावम् ॥ १७ ॥**

[ततः साहसनिर्माणममित्रदृश्यमानलक्ष्मीसंकेतगृहम् ।
संस्थितरोषालानं गृह्णाति भुजदर्पद्वितीयलक्ष्यं चापम् ॥]

ततः । राम इत्यर्थात् । चापं गृह्णाति । कीदृशम् । साहसस्य प्राणानपेक्षकर्मणो निर्माणं यस्मात् । निर्मीयते अनेनेति साहसस्य निर्माणं करणमिति वा । तद्धनुरध्यवसायेन साहसमपि क्रियत इत्यर्थः । एवममित्रेण शत्रुणा दृश्यमाना या खलक्ष्मीस्तस्याः संकेतगृहम् । रिपोरध्यक्ष एव तल्लक्ष्म्या नायिकाया रामस्य च नायकस्य समागमस्थानकत्वात् । एवं संस्थितस्य रोषस्यालानमवष्टम्भस्तम्भः । एवं भुजदर्पस्य द्वितीयं लक्ष्यम् । लक्ष्यतेऽनेनेति लक्ष्यं लक्षणं प्रकाशकम् । एको भुज एव द्वितीयं धनुरित्यर्थः ॥

अथ धनुषि ज्यारोपणमाह—

**अक्कन्तधणुभरोणअधरणिअलत्थलपलोट्टजलपब्भारो ।**
**थोअं पि अणारूढे उअही चावम्मि संसअं आरूढो ॥ १८ ॥**

[आक्रान्तधनुर्भरावनतधरणितलस्थलप्रवृत्तजलप्राग्भारः ।
स्तोकमप्यनारूढे उदधिश्चापे संशयमारूढः ॥]

स्तोकमपि किंचिदप्यनारूढेऽसज्जीकृते चापे । सज्जीकर्तुमारब्ध एव सतीत्यर्थः । उदधिः संशयमारूढः रामः किं करिष्यतीति दोलायितचित्तोऽभूत् । अथवा स्थास्यति नवेति लोकानां संशयविषयोऽभूदित्यर्थः । कीदृक् । आक्रान्तं सज्जीकर्तुमवष्टब्धमर्थाद्भूमौ यद्धनुस्तस्य भरेणावनतं यद्धरणितलं तस्य यत्स्थलं फलभूमिस्तत्र प्रवृत्तः संगतः प्रलुठितो वा जलप्राग्भारो जलार्धं यस्य धनुरवष्टम्भेन भूमेरवनतौ तिर्यगुन्नतखातस्य कियज्जलानां स्थलभूमिप्रसृतत्वात् । अत एवारम्भ एवेयमवस्था पर्याप्तौ किं स्यादिति संशय इत्यर्थः ॥

अथ धनुषि सधूमानलोद्गममाह—

**धूमाइ धूमकलुसे जलइ जलन्तारुहन्तजीआबन्धे ।**
**पडिरवपडिउण्णदिसं रसइ रसन्तसिहरे धणुम्मि णहअलम् ॥ १९॥**

[धूमायते धूमकलुषे ज्वलति ज्वलन्नारोहज्जीवाबन्धे ।
प्रतिरवप्रतिपूर्णदिग्रसति रसच्छिखरे धनुषि नभस्तलम् ॥]

धनुषि अर्थाद्रामस्य धूमेन कलुषे धूम्रे सति नभस्तलं धूमायते। एवं ज्वलन्नारोहज्जीवाबन्धो यत्र तथाभूते वह्निमयपतञ्जिकारोपणशालिनि सति ज्वलति। तथा रसच्छब्दायमानं शिखरं यस्य तथाभूते सति प्रतिरवेण प्रतिपूर्णा दिशो यत्र तथाभूतं सद्रसति शब्दायते। तथा च त्यक्ताग्नेयशरोपकरणत्वेन धनुरप्याग्नेयमिति ततो गगनव्यापिनी धूमधोरणिरुदतिष्ठत्। पतञ्जिकाप्याग्नेयीति तदुत्थितो वह्निर्व्योमाजिज्वलत्पराटनौ ज्याप्रान्तनिवेशनादुत्तिष्ठन्पाकजः शब्दो विश्वं व्यानश इत्यर्थः। केचित्तु भविष्यत्समुद्रोपमर्दसूचको रामरोषाग्निजन्मायमुत्पात एव जात इत्यभिप्रायमाहुः॥

अथ धनुर्धारणमाह—

**भिज्जउ महि त्ति व फुडं णत्थि समुद्दो त्ति दारुणं व पइण्णम् ।**
**णासउ जअं ति व मणे चिरं तुलेऊण विलइअं णेण धणुम् ॥ २० ॥**

[भिद्यतां मही इतीव स्फुटं नास्ति समुद्र इति दारुणामिव प्रतिज्ञाम् ।
नश्यतु जगदितीव मनसि चिरं तुलयित्वा विगलितमनेन धनुः ॥]

अनेन रामेण धनुर्विगलितमुत्तोल्य धृतम्। किं कृत्वा। सर्वाधारभूतापि महीभिद्यतामितीव, नास्ति समुद्र इतीव, जगन्नश्यत्वितीव दारुणां प्रतिज्ञां मनसि चिरं तुलयित्वा सदृशीकृत्य। तथा च मनसि प्रतिज्ञा करे धनुरुभयमपि तुल्यतया विगलितमित्यर्थः। तेन क्रोधान्निखिलनिरपेक्षता कृतेति भावः। अन्यत्र लोटादिनिर्देशादाशंसामात्रम् समुद्रे तु क्रोधप्रतियोगितया नास्तीति सिद्धवदभावनिर्देशादवश्यनाश्यत्वमभिप्रेतमित्यवधेयम्। यद्वा मन्ये स्फुटं तर्कयामि। मही भिद्यतामिति वा तुलयित्वा विचार्य नास्ति समुद्र इति वा दारुणं प्रकीर्णं विश्वव्यापि जातमिति वा जगन्नश्यत्विति वा विचार्य रामेण धनुर्विगलितम्। रामधनुरारोहणे सर्वमिदं संभावितमित्यभिप्रायादिति कश्चिदर्थमाह॥

अथ वीररसाविर्भावमाह—

**तो चिरविओअतणुओ सइ बाहोमट्ठमउअजीआघाओ ।**
**जाओ अण्णो च्चिअ से विलइअधणुमेत्तवावडो वामभुओ ॥२१॥**

[ततश्चिरवियोगतनुकः सदा बाष्पावमृष्टमृदुकजीवाघातः ।
जातोऽन्य एवास्य विगलितधनुर्मात्रव्यापृतो वामभुजः ॥]

ततस्तदनन्तरमस्य रामस्य विगलितं धृतं यद्धनुस्तन्मात्रे व्यापृतः कृतमुष्टिपीडनादिव्यापारो वामभुजोऽन्य एव जातः । स्वाभाविकरूपातिरिक्तरौद्ररूपोदयात् । कीदृक् । चिरवियोगेण तनुकः कृशः । एवं सदा बाष्पेणावमृष्टस्तत एव मृदुकः कोमलो जीवा ज्या तदाघातस्तद्धर्षणकिणो यत्र । धीरोदात्तत्वाद्रात्रौ वामपार्श्वेन शयानस्य रामस्योपधानाभावादुष्णसंतापाश्रुसंबन्धान्मृदूकृतज्याकिण इत्यर्थः । तथा च तनुत्वमृदुत्वाभ्यामनुकम्पनीयोऽपि वीररसोद्रेकादुत्पुलकत्वेन पुष्टः कठिनश्च वृत्त इति भावः ॥

अथ धनुरास्फालनमाह—

**अह वामभुअप्फालणपडिरवपडिउण्णदसदिसावित्थारम् ।**
**संभरइ जाअसङ्कं पलअघणब्भहिअपेल्लणं तेल्लोक्कम् ॥ २२ ॥**

[अथ वामभुजास्फालनप्रतिरवप्रतिपूर्णदशदिग्विस्तारम् ।
संस्मरति जातशङ्कं प्रलयघनाभ्यधिकप्रेरणं त्रैलोक्यम् ॥]

अथ धनुर्ग्रहणानन्तरं त्रैलोक्यं कर्तृ जातशङ्कं सत्प्रलयघनानामर्थाद्गर्जतामभ्यधिकं यत्प्रेरणं संघट्टस्तत्संस्मरति । कथंभूतं त्रैलोक्यम् । वामभुजेन यदास्फालनमितस्ततश्चालनं तेन यः प्रतिरवोऽर्थाट्टंकारस्तेन प्रतिपूर्णो दशदिग्विस्तारो यत्र । तथा चास्फालनध्वनौ घनगर्जिबुद्ध्या सर्वेषां प्रलयशङ्का जातेत्यर्थः ॥

अथ शरग्रहणमाह—

**गेण्हइ अ सो अणाअरपरम्मुहपसारिअग्गहत्थावडिअम् ।**
**खअसूरमऊहाण व एक्कं उअहिपरिवत्तणसहं बाणम् ॥ २३ ॥**

[गृह्णाति च सोऽनादरपराङ्मुखप्रसारिताग्रहस्तापतितम् ।
क्षयसूर्यमयूखानामिवैकमुदधिपरिवर्तनसहं बाणम् ॥]

स रामो बाणं गृह्णाति च । किंभूतम् । अनादरेणानास्थया पराङ्मुखप्रसारितः शरग्रहणाय पश्चात्कृतो योऽग्रहस्तो हस्ताग्रमङ्गुल्यौ तत्रापतितम् । उत्प्रेक्षते—क्षयसूर्यमयूखानामेकमिव । समुद्रदाहकत्वात् । अत एवोदधेः परिवर्तने पार्श्वशयने सहं योग्यम् । शराघातेन जलानामुच्छलनेनावशिष्टजलेन पार्श्वायितत्वात् । अत्र सर्व एव शरा उदधिपरिवर्तनसहाः । अथवाधमोऽपि हस्ते यः पतिष्यति स एव समुद्रं परिवर्तयेदिति विशेषजिज्ञासां विनैव य एवाग्रहस्ते पतितः स एव गृहीत इत्यनादरपदद्योत्यं वस्तु । 'सहः शक्ते क्षमायुक्ते तुल्यार्थे च सहाव्ययम्' ॥

अथ लक्ष्यसमुद्रप्रेक्षणमाह—

**तो संधन्तेण सरं रसन्तरोलुग्गभिउडिभङ्गेण चिरम् ।**
**णीससिऊण पुलइओ अणुअम्पादूमिआणणेण समुद्दो ॥ २४ ॥**

[ततः संदधता शरं रसान्तरावरुग्णभ्रुकुटिभङ्गेन चिरम् ।
निःश्वस्य प्रलोकितोऽनुकम्पादुःखिताननेन समुद्रः ॥]

ततो बाणग्रहणोत्तरं मम शरत्यागेन समुद्रस्य महती दुरवस्था स्यादथ च दुर्यशः प्रसरेदिति कृत्वा चिरं निःश्वस्य समुद्रः प्रलोकितः । रामेणेत्यर्थात् । महानयं किं वा क्रियतामित्याशयात्तदुक्तम् । अनुकम्पया दुःखितमप्रसादमानीतमाननं यस्य तेन । एकत्र समुद्रोपप्लवः परत्र स्वकार्यहानिरित्युभयथापि क्षतिरिति परामर्शात् । किंभूतेन । धनुषि शरं संदधता । एवं रसान्तरेणानुकम्पासमुत्थेनावरुग्णो निवर्तनोन्मुखीकृतो भ्रुकुटिभङ्गो यस्येति धृत्यमर्शभावयोः संधिः ॥

अथ धनुराकर्षणमाह—

**अह कड्ढिउं पउत्तो णिक्कम्पणिराअदिट्ठिसच्चविअसरम् ।**
**वलिअभुअरुद्धमज्झं दढणिप्पीडिअगुणं धणुं रहुणाहो ॥ २५ ॥**

[अथ क्रष्टुं प्रवृत्तो निष्कम्पनिरायतदृष्टिसत्यापितशरम् ।
वलितभुजरुद्धमध्यं दृढनिष्पीडितगुणं धनू रघुनाथः ॥]

अथ लक्ष्यदर्शनानन्तरं सीतास्मरणोद्दीप्तरोषो रघुनाथो धनुः क्रष्टुं प्रवृत्तः । कीदृशम् । निष्कम्पा स्थिरा निरायता शरानुसारेण दीर्घीकृता या दृष्टिस्तया सत्यापितो लक्ष्याभिमुख्येन स्थिरीकृतः शरो यत्र तत् । तादृशसंधानस्य लक्ष्याव्यभिचारित्वादिति भावः । एवं वलितेन किंचित्तिर्यक्कृतेन भुजेन रुद्धं मध्यं यस्य ।

एवम् दृढं निष्पीडितो दक्षिणहस्ताङ्गुलिभ्यां यन्त्रितो गुणः पतञ्जी यस्येति विशेषणाभ्यां प्रहारदार्ढ्यं सूचितम् ॥

अथ शराकर्षणमाह—

**सरमुहविसमप्फलिआ णमन्तधणुकोडिविप्फुरन्तच्छाआ ।**
**णज्जइ कड्ढिज्जन्ता जीआसद्दगहिरं रसन्ति रविअरा ॥ २६ ॥**

[शरमुखविषमफलिता नमद्धनुःकोटिविस्फुरच्छायाः ।
ज्ञायते कृष्यमाणा जीवाशब्दगभीरं रसन्ति रविकराः ॥]

शराकर्षणे वह्निमयशरज्याशब्दोऽभूत् । तदुत्प्रेक्ष्यते—ज्याशब्दवद्गभीरं यथा स्यादेवं कृष्यमाणा रविकरा इव रसन्ति शब्दायन्ते इति ज्ञायते । किंभूताः । शरमुखे फलभागे विषमं दुर्निरीक्ष्यं यथा स्यादेवं फलिताः प्रतिबिम्बिताः । एवं नमन्त्यो धनुष्कोट्योर्विस्फुरन्त्यश्छायाः कान्तयो येषां ते । अयं भावः—फलभागप्रतिबिम्बेन शराकर्षणेऽटनिद्वयसंक्रान्तकान्तितया च ज्यासमानाकारत्वेन ज्याकर्षणे रविकराकर्षणमिव प्रतीयते । अतः शब्दोऽपि तेषामयमिति प्रतीतिः ॥

अथाकर्ण धनुःकर्षणमाह—

**फुडजीआरवमुहलं तज्जेइ व बाणमुहजलन्तग्गिसिहम् ।**
**जलणिहिवहपडिउद्धं आअण्णाअड्ढिअं विअम्भइ व धणुम् ॥२७॥**

[स्फुटजीवारवमुखरं तर्जयतीव बाणमुखज्वलदग्निशिखम् ।
जलनिधिवधप्रतिबुद्धमाकर्णाकृष्टं विजृम्भत इव धनुः ॥]

आ कर्णमाकृष्टं तद्धनुर्जलनिधिवधाय प्रतिबुद्धं सप्रकाशं सद्विजृम्भत इव जृम्भां करोतीव । आकर्षणे सति ज्याया धनुषश्च व्यवहितविश्लेषान्मुखव्यादानमिव प्रतीयत इत्यर्थः । अन्योऽपि प्रतिबुद्धो जाग्रज्जृम्भां करोतीति ध्वनिः । एवं स्फुटज्यारवेण मुखरं सत्तर्जयतीव त्रासयतीव । अत्र हेतुमाह—बाणमुखे ज्वलन्ती अग्निशिखा यत्र । तदाग्नेयशरसंधानात् । अन्योऽपि तर्जनकाले विभीषिकावचनमाचरतीति ध्वनिः । प्रकृते तु समुद्र, तिष्ठ क्व गमिष्यसीत्यादि तर्जनशब्दो ज्यारव एवेत्युभयत्रोत्प्रेक्षा ॥

अथ शरविस्फूर्तिमाह—

खुहिअजलसिट्ठसारो मुहणिद्धाविअपसारिउक्काणिवहो ।
आअड्ढिज्जन्तो च्चिअ णज्जइ पडिओ त्ति साअरे रामसरो ॥२८॥
[क्षुभितजलशिष्टसारो मुखनिर्धावितप्रसारितोल्कानिवहः ।
आकृष्यमाण एव ज्ञायते पतित इति सागरे रामशरः ॥]

आकृष्यमाण एव रामशरः सागरे पतित इति ज्ञायते । अत्र हेतुमाह—कीदृक् । मुखात्फलान्निर्धावितो बहिःप्रसृत उल्कानिवहो यस्मात् । तथा च शिखानिवहनिर्गमद्वारा समुद्रसंबन्धाद्बाणः सागरे पतित इति प्रतीतिरिति भावः । एवं पतनपूर्वमेव क्षुभितेन जलेन शिष्टः सारो बलं यस्य । तथा च महाशयस्यापि समुद्रस्य क्षोभोऽस्मादेवेत्यर्थापत्त्यापीति भावः ॥

अथ शराग्निप्रसरणमाह—

धुअविज्जुपिङ्गलाइं सरमुहणिग्गिण्णहुअवहपलित्ताइं ।
उप्पाअलोअणाइँ व फुट्टन्ति दिसामुहाण घणविन्दाइं ॥ २९ ॥
[धुतविद्युत्पिङ्गलानि शरमुखनिगीर्णहुतवहप्रदीप्तानि ।
उत्पातलोचनानीव स्फुटन्ति दिङ्मुखानां घनवृन्दानि ॥]

दिङ्मुखानां मेघवृन्दानि शरमुखेण रामशराग्रेण निगीर्णा उद्वान्ता ये हुतवहास्तैः प्रदीप्तानि ज्वलितानि सन्ति स्फुटन्ति उत्पातलोचनानीव । यथा राहुप्रभृतीनामुत्पातानां लोचनानि वह्निसंबन्धात्स्फुटन्तीत्युपमा । वस्तुतस्तु मुखे लोचनं भवति उत्पाता दिक्षु दृश्यन्त इति दिङ्मुखानि तेषां मुखान्येव । तत्रत्यानि घनवृन्दान्येव लोचनानि । तानि स्फुटन्तीत्युत्प्रेक्षा । तथा चोत्पातनयनस्फुटनमप्युत्पात एवेति भाविसमुद्रोपमर्दः सूचितः । घनवृन्दानि किंभूतानि । धुता उदरस्फुटनाच्चञ्चलीभूता या विद्युत्तया पिङ्गलानि । उत्पातलोचनान्यपि स्वभावादेव धुतविद्युत्तुल्यपिङ्गलानीति साम्यम् ॥

अथ शरत्यागमाह—

तो भुअरहसाअड्ढिअधणुवट्ठप्फुलिअबहलधूमुप्पीडम् ।
मुअइ मुहणिग्गआणलसिहासमोलुग्गसूरकिरणं बाणम् ॥ ३० ॥
[ततो भुजरभसाकृष्टधनुःपृष्ठस्फुटितबहलधूमोत्पीडम् ।
मुञ्चति मुखनिर्गतानलशिखासमवरुग्णसूरकिरणं बाणम् ॥]

ततो बाणं मुञ्चति । राम इत्यर्थात् । कीदृशम् । भुजरभसेनाकृष्टं यद्धनुः । अनायासकृष्टमित्यर्थः । तत्पृष्ठात्स्फुटितो व्यक्तीकृतः । 'स्फिडिअ' इति पाठे स्फोटितो निष्कासितो बहुलो घनो धूमोत्पीडो येन तम् । एवं मुखान्निर्गता या अनलशिखा तया समवरुणा निस्तेजसः कृताः सूरकिरणा येन तथाभूतम् । तथा च प्रथमं धूमायितस्तदनु ज्वलित इति दहनस्वभाव उक्तः । सूरकिरणाभिभावकत्वेन व्यापकत्वमतिदारुणत्वं च सूचितम् ॥

अथ शरपतनमाह—

**सो जलिऊण णहअले सलिलद्धत्थमिअहुअवहाअम्बमुहो ।**
**पढमोइण्णदिणअरो दीहो दिहओ व्व साअरम्मि णिवडिओ ३१**

[स ज्वलित्वा नभस्तले सलिलार्धास्तमितहुतवहाताम्रमुखः ।
प्रथमावतीर्णदिनकरो दीर्घो दिवस इव सागरे निपतितः ॥]

स रामशरो नभसस्तले ज्वलित्वा सागरे निपतितः । ऊर्ध्वं गत्वाधोमुखीभूय पततीति शरस्वभावः । तदेव स्फुटयति—कीदृक् । सलिलार्धेऽस्तमितं हुतवहेनाताम्रं मुखं यस्य तथाभूतः । तेनातिगभीरसमुद्रसलिलार्धनिष्पाद्यास्तमनतया उल्कामयस्य शरमुखस्य महत्त्वं लभ्यते । यद्वा सलिलेऽर्धास्तमितोऽर्धमग्न इति महत्त्वमुक्तम् । हुतवहेनाताम्रमुखश्चेत्यर्थः । दीर्घो दिवस इव । यथा ऋज्वाकारो दिवसो नभसि ज्वलित्वा सागरे पतति । शरसाम्यलाभाय दिवसे दीर्घत्वमुक्तम् । दिवसः कीदृक् । प्रथममवतीर्णः पातितो दिनकरो येन । तथा आकाशात्प्रथमं सूर्यः पतति पश्चाद्दिवसो यथा तथा । प्रथमं शरमुखं पतितं पश्चाच्छर इत्यरुणमण्डलाकारत्वेन शरमुखसूर्ययोः, तेजोमयत्वेन शरदिवयोश्च तौल्यम् ॥

अथ शरस्य त्रैलोक्यव्यापकत्वमाह—

**गअणे विज्जुणिहाओ खअन्तकालाणलो समुद्दुच्छङ्गे ।**
**महिअम्पो पाआले होइ पडन्तपडिअ ट्ठिओ रामसरो ॥ ३२ ॥**

[गगने विद्युन्निघातः क्षयान्तकालानलः समुद्रोत्सङ्गे ।
महीकम्पः पाताले भवति पतन्पतितः स्थितो रामशरः ॥]

स रामशरो गगने पतन्नवतरन्विद्युन्निघातो विद्युत्समूहो वा भवति । व्यापकतेजोमयत्वात् । समुद्रोत्सङ्गे पतितः सन् क्षयः प्रलयस्तद्रूपोऽन्तकालो नाशकालस्त-

दीयोऽनलः कालानलः । शोषकत्वात् । यद्वा क्षयो नाशोऽन्तः पर्यन्तोऽवसानं यस्य तादृशः कालः । प्रलय इत्यर्थः । क्षयान्तः क्षयावधिः कालः प्रलयकाल इत्यर्थो वा । एवं पाताले स्थितः सन् महीकम्पो भवति । तस्य तत्रैवोत्पत्तेः । इत्युत्पातरूपत्वेन तत्तल्लोकवर्तितत्तल्लोकानां क्षोभजनकतया स्थानत्रयेऽपि प्रतिभानत्रयमुक्तम् ॥

अथ शरे शरान्तरनिर्गमनमाह—

**तस्स अ मग्गालग्गा अइन्ति णिद्धूमजलणअम्बच्छाआ ।**
**उअहिं बाणणिहाआ अद्धत्थमिअस्स दिणअरस्स व किरणा ३३**

[तस्य च मार्गालग्ना आयान्ति निर्धूमज्वलनाताम्रच्छायाः ।
उदधिं बाणनिघाता अर्धास्तमितस्य दिनकरस्येव किरणाः ॥]

समुद्रेऽर्धास्तमितस्य रामशरस्य । मार्गालग्नाः पश्चादालग्ना बाणानां निघाता उदधिमायान्ति च । समुद्रे प्रविशन्तीत्यर्थः । मार्गशब्दः पश्चादर्थे निपातितः । कीदृशाः । निर्धूमेन ज्वलनेनाताम्रा छाया कान्तिर्येषां ते । दिनकरस्य किरणा इव । यथार्धास्तमितस्य दिनकरस्य किरणास्तत्पश्चाल्लग्नाः सन्तः समुद्रमायान्ति । तेऽपि सायं निर्धूमज्वलनवत्ताम्रद्युतयः । तथा च समुद्रे पतन्रविरिव रामशरः । किरणा इव तदनुवर्तिनः शराः ॥

अथ समुद्रस्य शराभिघातमाह—

**णवरि अ सरणिब्भिण्णो वलआमुहविहुअकेसरसड्डुग्घाओ ।**
**उद्धाइओ रसन्तो वीसत्थपसुत्तकेसरि व्व समुद्दो ॥ ३४ ॥**

[अनन्तरं शरनिर्भिन्नो वडवामुखविधुतकेसरसटोद्घातः ।
उद्धावितो रसन् विश्वस्तप्रसुप्तकेसरीव समुद्रः ॥]

शरपातादनन्तरं च रामशरेण निर्भिन्नो विद्धः समुद्रो रसन् शब्दायमानः सन्नुद्धावितः । शराभिघातेन समुद्रजलमूर्ध्वमुच्छलितमित्यर्थः । केसरीव । यथा विश्वस्तः प्रसुप्तः केसरी कस्यचिच्छरेण निर्भिन्नस्ताडितः सन्नुद्भूतकेसरसटोद्घातो रसन्नुद्धावति सिंहनादं कुर्वन्नुत्फालमाचरति तथेत्यर्थः । समुद्रः कीदृक् । वडवामुखं वडवानलस्तदेव विधुतः कम्पितः केसरसटासमूहो यस्य तथा । तथा च प्रथमं समुद्रस्य निश्चलत्वात्प्रसुप्तसिंहेन, शराभिहत्या विपर्यस्तस्य वडवानलस्योत्फालकालीनकम्पविशिष्टसटोद्घातेन, जलक्षोभजन्यशब्दस्य च सिंहनादेन साम्यम् ॥

अथ समुद्रैकदेशस्योच्छलनमाह—

**दूराइद्धणिअत्ते समुहागअबहलसरणिहाअक्खुडिए ।**
**दोहाइज्जइ व णहं टङ्कच्छेअरहसुट्ठिअम्मि समुद्दे ॥ ३५ ॥**

[दूराविद्धनिवृत्ते संमुखागतबहलशरनिघातोत्खण्डिते ।
द्विधा क्रियत इव नभष्टङ्कच्छेदरभसोत्थिते समुद्रे ॥]

संमुखागतेन बहलेन शरनिघातेनोत्खण्डिते । मध्य इत्यर्थात् । अत एव टङ्कच्छेदरभसेन टङ्कच्छिन्नस्य वेगेनोत्थिते यथा टङ्कादिच्छिन्नं काष्ठादि हठादूर्ध्वं गच्छति तथैवोच्छलिते । टङ्कः पाषाणदारणः । यद्वा टङ्कः कुठारः । तस्मिन्निव च्छेदाय खण्डनाय रभसेनोत्थिते । यथा छेदनाय कुठार ऊर्ध्वमुत्तिष्ठतीत्यर्थः । तेन समुद्रजलमेव कुठारप्रायमभूदित्यर्थो लभ्यते । एवंभूते समुद्रे दूरं व्याप्याविद्धे प्रेरिते दूरमूर्ध्वं गतेऽप्यनिवृत्ते पुनः खातमागच्छति सति नभो द्विधा क्रियत इव । समुद्रेणैवेत्यर्थात् । यद्वा नभो द्विधायत इव द्विखण्डायत इव । शराभिघातोच्छलितजलस्य निवृत्त्या तिरोहितमध्यभागस्य गगनस्य प्रान्तभागद्वयं खण्डद्वयमिव लक्ष्यत इत्यर्थः । तथा च पतनदशायां जलस्य लक्ष्यमाणत्वेन गगनस्य द्विधाभावः प्रतीयते न तूच्छलनदशायामिति । नभस्तिरोधायकमहत्त्वोत्कर्षसहचरस्य गुरुत्वोत्कर्षस्य वैपरीत्यहेतोः सत्त्वेऽपि पतनादप्युच्छलने शैघ्र्यमभूदिति प्रहारप्रकर्ष उक्तः । कुठारोऽपि दूरप्रेरितनिवृत्तो भवतीत्याशयः ॥

अनुत्थितजलावस्थामाह—

**रअणाअरपरभाए मज्झच्छिण्णम्मि बाणघाउक्खित्ते ।**
**णिवडइ वीअद्धन्तो फुडिओसरिओ व मलअअडपब्भारो ॥३६॥**

[रत्नाकरपरभागे मध्यच्छिन्ने बाणघातोत्क्षिप्ते ।
निपतति द्वितीयार्धान्तः स्फुटितापसृत इव मलयतटप्राग्भारः ॥]

रत्नाकरस्य परभागे दक्षिणतटसंनिहितार्धे मध्यच्छिन्ने बाणघातेनोत्क्षिप्ते ऊर्ध्वं नीते सति द्वितीयार्धान्त उत्तरतटसंनिहितार्धभागजलं निपतति । अयं भावः—यथा खनित्रादिना तिर्यग्दार्यमाणा भूमिरुत्तरभागेणोत्तिष्ठति न तु पूर्वभागेण तथा रामशरेण मध्यच्छिन्नस्य समुद्रस्य द्वितीयार्धभागजलं तिर्यक्प्रहारातिशयादूर्ध्वमुच्छलितम् । अथ निःशेषशून्ये तज्जलस्थाने पूर्वार्धभागजलं वर्तुलीभूय हठात्प्रविशतीत्यर्थः । क इव ।

प्रथमं स्फुटितस्ततो गुरुत्वादपसृतः पतितो मलयतटस्य प्राग्भार एकदेश इव। एतज्जलार्धस्य मलयसंनिहितत्वान्मलयखण्डस्त्रुटित्वा पततीति प्रतिभानमित्युत्प्रेक्षा ॥

समुद्रोपमर्दमाह—

भिण्णगिरिधाउअम्बा विसमच्छिण्णप्पवन्तमहिहरवक्खा ।
खुब्भन्ति खुहिअमअरा आवाआलगहिरा समुद्दुद्देसा ॥ ३७ ॥

[भिन्नगिरिधात्वाताम्रा विषमच्छिन्नप्लवमानमहीधरपक्षाः ।
क्षुभ्यन्ति क्षुभितमकरा आपातालगभीराः समुद्रोद्देशाः ॥]

आपातालगभीरा अपि समुद्रप्रदेशाः क्षुभ्यन्ति । कीदृशाः । शरेण भिन्नैर्गिरिधातुभिरुदरवर्तिगिरीणां गैरिकैराताम्राः । एवम् । विषमं तिर्यग्यथा भवति तथा छिन्ना अत एव प्लवमाना महीधराणां पक्षा यत्र । तथा च शरच्छेदेन गुरूणामप्युच्छलतां गिरिपक्षाणां निजाभिघातोच्छलितजलावर्तपतितानामुपर्येव परिभ्रमणादावर्तप्रकर्षेण प्रहारदार्ढ्यमुक्तम् । पुनः कीदृशाः । क्षुभिता मकरा येषु ते तथा तेषामप्युच्छलनादिति भावः ॥

शङ्खानां स्फुटनमाह—

आअम्बरविअराहअदरविहडिअधवलकमलमउलच्छाअम् ।
भमइ सरपूरिअमुहं उग्घाडिअपण्डुरोअरं सङ्खउलम् ॥ ३८ ॥

[आताम्ररविकराहतदरविघटितधवलकमलमुकुलच्छायम् ।
भ्रमति शरपूरितमुखमुद्घाटितपाण्डुरोदरं शङ्खकुलम् ॥]

शङ्खकुलं भ्रमति सर्वत्र शरानलदर्शनादितस्ततो गच्छति । कीदृक् । शरैः पूरितं मुखं यस्य । अत एवोद्घाटितं ज्वालाभिरन्तः स्फुटित्वा बहिर्भूय प्रकाशितम् । अत एव पाण्डुरमुदरं यस्य । सतुषलाजवदित्यर्थः । उपमामाह—पुनः कीदृक् । प्रातःकालीनत्वादाताम्रै रविकरैराहतं स्पृष्टम् । अत एव दरविघटितं लब्धद्वित्रपत्रविकासं यद्धवलकमलमुकुलं तद्वच्छाया शोभा यस्य तथाभूतम् । अत्र कमलमुकुलप्रायं शङ्खकुलं ताम्ररविकरप्रायाः सानलाः शरा विघटितपत्रप्रायं बहिर्भूतमुदरम् ॥

सर्पाणां फणत्रुटिमाह—

वेवन्ति विहुअमच्छा सरघाउक्खुडिअमअरदाढाधवला ।
मणिभरविसमोणामिअलुअविसहरघोलिरप्फणा जलणिवहा ॥ ३९ ॥

[वेपन्ते विधुतमत्स्याः शरघातोत्खण्डितमकरदंष्ट्राधवलाः ।
मणिभरविषमावनामितलूनविषधरघूर्णितफणा जलनिवहाः ॥]

जलनिवहा वेपन्ते । शरवेगादावर्तमाना भवन्तीत्यर्थः । कीदृशाः । विधुताः स्वावर्तपातादिघूर्णिता मत्स्या यैस्ते । एवं शरघातेनोत्खण्डिता या मकरदंष्ट्रास्ताभिर्धवलाः उत्क्षेपणात् । एवं मणिभरेण विषममवनामितास्तिर्यक्पातिता लूनाः कृत्ता विषधराणां घूर्णमानाः फणा येषु ते । तथा च शरनिकृत्तजलमूलवर्तिमकरभुजंगदंष्ट्राफणानां स्वाभिघातोच्छलितजलावर्तपतितानामुपरि परिभ्रमणात्प्रहारप्रकर्षः । अथवा जलनिवहाः शरानलसंबन्धादावर्तमाना भवन्ति । आवर्त्यमानदुग्धादिवदित्यर्थः । तथा च निजनिजस्थान एव त्रुटितानां मत्स्य(भुजंग)दंष्ट्राफणानां जलावर्तानुसारेणोपर्यधस्तिर्यग्भ्रमणाज्जलावर्तनहेतुशरानलप्रकर्षः ॥

क्वाथप्रकर्षमाह—

फुट्टन्तविहुमवणं संखोहुव्वत्तणिन्तरअणमऊहम् ।
घोलइ वेलावडिअं फेणणिहुच्छलिअमोत्तिअं उवहिजलम् ॥ ४० ॥

[स्फुटद्विद्रुमवनं संक्षोभोद्वृत्तनिर्यद्रत्नमयूखम् ।
घूर्णते वेलापतितं फेननिभोच्छलितमौक्तिकमुदधिजलम् ॥]

उदधिजलं वेलापतितं वेलामतिक्रम्य गतं सद्घूर्णते । समविषमभूमौ दिशि दिशि गच्छतीत्यर्थः । कीदृशम् । स्फुटद्विद्रयमानं विद्रुमवनं यस्मात् । एतेन जलानामौष्ण्यप्रकर्षः । एवम् संक्षोभात्प्रहारवेगादुद्वृत्तानामुपरिकृतभूमिष्ठभागानां निर्यतां मूलस्थानाज्जलोपरि गच्छतां रत्नानां मयूखा दीप्तयो येषु । जलान्तर्वर्तिवस्तूनामुपरि मालिन्यमापततीति तलभागस्योज्ज्वलत्वादुद्वृत्ततया मयूखोद्गम इत्यर्थः । एतेन शराणामतिदूरवेधेऽपि वेगप्रकर्ष उक्तः । संक्षोभोद्वृत्तरत्नानां निर्यन्तो मयूखा यस्मादिति वा । एवम् फेननिभानि फेनतुल्यान्युच्छलितान्युपरिस्थितानि मौक्तिकानि यत्र तथाभूतम् । यथा फेना उपरि तिष्ठन्ति तथा मौक्तिकान्यपीत्यर्थः । उच्छलितमौक्तिकान्येव फेनायन्त इत्यर्थ इति केचित् ॥

आवर्तानामवस्थामाह—

जलपव्वाडिअमुक्का खणमेत्तत्थइअपाअडिअवित्थारा ।
होन्ति पसण्णक्खुहिआ मूअलइअमुहला समुद्दावत्ता ॥ ४१ ॥

[जलप्लावितमुक्ताः क्षणमात्रस्थगितप्रकटितविस्ताराः।
भवन्ति प्रसन्नक्षुभिता मूकायितमुखराः समुद्रावर्ताः॥]

समुद्रावर्ताः कंदराकारभ्रमत्समुद्रसलिलोत्पीडाः शराभिघातोच्छलितेन प्लाविता अतिक्रान्ता अथ मुक्ताः पुनरन्यत्रगतेन तेन त्यक्ता भवन्ति। अत एव क्षणमात्रं स्थगिताः प्लावनदशायां छन्ना लुप्ता अथ प्रकटितविस्तारास्त्यागदशायां यथापूर्वं प्रवृत्ताः। प्राचीनसंस्कारवशादित्यर्थः। एवं प्रथमं प्रसन्ना जलान्तरसमानाकारत्वादथ क्षुभिताः। निम्नोन्नतीभूय भ्रमणशीलत्वात्। एवं च प्रथमं मूकायिता जलान्तरेणावर्तगर्तपूरणे निःशब्दा अथ तदपगमे भ्रमणप्रवृत्तौ मुखराः सशब्दाः। कल्लोलबाहुल्यात्। यद्वा मूकायिताः सन्तो मुखराः। यथा मूको वक्तुमुद्यतो गुंगुंकरोति तथा निम्नप्रदेशे जलान्तरप्रवेशात्कुम्भादिवदव्यक्तं ध्वनन्तीत्यर्थः। एतेनावर्तानां क्षणादेव पूर्ववत्प्रवृत्तौ प्लावकजलवेगोत्कर्षेण प्रवाहोत्कर्ष उक्तः॥

समुद्रपरिवर्तनमाह—

**वलमाणुव्वत्तन्तो एक्कं चिरआलपीडिअं सिढिलेन्तो।**
**बीएण व पाआले पासेण णिसम्मिउं पउत्तो उवही॥ ४२॥**

[वलमानोद्वर्तमान एकं चिरकालपीडितं शिथिलयन्।
द्वितीयेनेव पाताले पार्श्वेन निषत्तुं प्रवृत्त उदधिः॥]

शराभिघातेन समुद्रस्य तलवर्ति जलमुपरिगतम् उपरिष्टं च तले निविष्टम्। अत्रोत्प्रेक्षते—उदधिः पाताऽर्थाच्छयनीकृते द्वितीयेन पार्श्वेन निषत्तुं शयितुमिव प्रवृत्तः। किं कुर्वन्। एकं पार्श्वं चिरकालपीडितमिव शिथिलयन् विश्रामं प्रापयन्। उपरिकुर्वन्निति यावत्। उपरिकरोतीति कुतो ज्ञायते तत्राह—वलमानो वक्रीभूतः सन्नुद्वर्तमानः। अन्योऽपि चिरं शयानः पार्श्वान्तरेण शयितुं परिवर्तत इति ध्वनिः॥

समुद्रस्य सुवेलसंघट्टमाह—

**सरवेअगलत्थल्लिअसुवेलरुब्भन्तसाअरद्धत्थइअम्।**
**ओसरिअदाहिणदिसं दीसइ उक्खण्डिएक्कपासं व णहम्॥४३॥**

[शरवेगगलहस्तितसुवेलरुध्यमानसागरार्धस्थगितम्।
अपसृतदक्षिणदिग्दृश्यते उत्खण्डितैकपार्श्वमिव नभः॥]

शरवेगेण गलहस्तितं प्रेरितमथ सुवेलेन रुध्यमानं यत्सागरार्धं तेन स्थगितं छन्नं यद्वा तथाभूतसागरेणार्धावच्छेदेन स्थगितं छन्नम् । अतएवापसृता दूरीकृता दक्षिणा दिग्यत्र एतादृशं नभ उत्खण्डितमेकं पार्श्वं यस्य तथाभूतमिव दृश्यते । अयमाशयः—उत्तरतटस्थितरामशरप्रहारात्समुद्रस्य दक्षिणभागजलं वेलामतिक्रम्य गच्छत्सुवेलसंघट्टेनोर्ध्वमुच्छलितं गगनमाचक्रामेति दक्षिणाशातिरोधानात्खण्डित-दक्षिणपार्श्वताप्रतीतिरित्युत्प्रेक्षा ॥

समुद्रमूलोपमर्दमाह—

**आइवराहेण वि जे अदिट्ठा मन्दरेण वि अणालिद्धा ।**
**खुहिआ ते वि भअअरा आवाआलगहिरा समुद्दुद्देसा ॥ ४४ ॥**

[आदिवराहेणापि येऽदृष्टा मन्दरेणाप्यनाश्लिष्टाः ।
क्षुभितास्तेऽपि भयकरा आपातालगभीराः समुद्रोद्देशाः ॥]

आदिवराहेणापि ये भयकरत्वेनादृष्टा इति विकटत्वमुक्तम् । एवमापातालग-भीरत्वेन मन्दरेणाप्यस्पृष्टा इति देवप्रेरणयाप्यगम्यत्वम् । एवंभूता अपि ते समुद्रप्रदेशाः क्षुभिताः । रामशरैरित्यर्थात् । इति विदूरवेधित्वमुक्तम् ॥

अथ पातालवेधमाह—

**एक्केक्कम्मि वलन्तो बाणप्पहरविवरे णहणिरालम्बे ।**
**खअकालाणलभीओ पडइ रसन्तो रसाअले व्व समुद्दो ॥४५॥**

[एकैकस्मिन्वलन्बाणप्रहारविवरे नभोनिरालम्बे ।
क्षयकालानलभीतः पतति रसन्रसातल इव समुद्रः ॥]

समुद्रस्य तलभूमौ यत्रयत्र रामशरा निपतन्ति तत्रतत्रैवाकाशतुल्यानि विव-राणि भवन्ति निम्नप्रवेशवशाच्छब्दं कुर्वाणानि तेनतेनैव जलानि गलन्ति । तत्रो-त्प्रेक्षा—क्षयकालानलाद्भीत इव समुद्रो रसन् शब्दायमानो रसातले पतति । शरानलेषु प्रलयाग्निभ्रमादित्यर्थः । किंभूते । नभोवन्निरालम्बे शून्ये । एकैक-स्मिन्बाणप्रहारविवरे वलन् वक्रीभूय पतन्नित्यर्थः । अन्योऽप्यग्रतो भयमा-लोक्य रसित्वा वक्रीभूय पश्चादपसरतीति ध्वनिः । इति विवरोत्कर्षेण शरोत्कर्षः ॥

मत्स्यानां विप्लवमाह—

दीसन्ति दिट्ठमहणा पुट्ठिपडिट्ठिअपलोट्टमन्दरसिहरा ।
आसाइआमअरसा बाणदढप्पहरमुच्छिआ तिमिमच्छा ॥ ४६ ॥

[दृश्यन्ते दृष्टमथनाः पृष्ठपरिस्थितप्रलुठितमन्दरशिखराः ।
आस्वादितामृतरसा बाणदृढप्रहारमूर्च्छितास्तिमिमत्स्याः ॥]

तिमिनामानो मत्स्या बाणस्य दृढप्रहारेण मूर्च्छिता दृश्यन्ते । किंभूताः । दृष्टं मथनमर्थात्समुद्रस्य यैः । तदानींतनसंभ्रमेऽपि न भीता इत्यर्थः । एवं पृष्ठोपरिस्थितानि प्रलुठितानि मन्दरशिखराणि येषामिति । महान्तो बलवन्तश्चेत्यर्थः । एवं चास्वादितोऽमृतरसो यैस्ते । तथा चामृतनिर्गमपूर्वकालीनाः । अथवा आस्वादितामृतरसत्वेन मूर्च्छिता न तु मृता इति भावः ॥

भुजंगानां श्वासमाह—

उक्खित्तमहावत्ता दरदड्ढविवण्णविद्दुमरअक्खउरा ।
आवाआलवलन्ता दीसन्ति महाभुअंगणीसासवहा ॥ ४७ ॥

[उत्क्षिप्तमहावर्ता दरदग्धविवर्णविद्रुमरजःकलुषाः ।
आपातालवलमाना दृश्यन्ते महाभुजंगनिःश्वासपथाः ॥]

महाभुजंगानां निःश्वासपथा दृश्यन्ते । किंभूताः । आपातालाद्वलमाना उत्पद्यमानाः । अत एवोत्क्षिप्ता जलमूलतो नभःपर्यन्तमुत्थापिता महावर्ता यैस्ते । एवं प्रथमतस्तप्तजलसंबन्धादीषद्दग्धा अत एव विवर्णा ये विद्रुमास्तेषां रजोभिः कलुषा धूम्राः । पश्चात्सविषसर्पनिःश्वसितसंबन्धेन भस्मीभावादित्यर्थः । तथा च पातालावधि नभःपर्यन्तावर्तप्रकर्षेण जलप्रकर्षः । तेन निःश्वासप्रकर्षः । तेन भुजंगप्रकर्षः । तेन श्वासहेतुदाहदुःखप्रकर्षः । तेनानलप्रकर्षः । तेन रामशरप्रकर्ष इत्यवधेयम् ॥

सर्पमिथुनवैक्लव्यमाह—

वेवइ पेम्मणिअलिअं सरसंदट्ठधणिओवऊहणसुहिअम् ।
जीएण एक्कमेक्कं परिरक्खन्तवलिअं भुअंगममिहुणम् ॥ ४८ ॥

[वेपते प्रेमनिगलितं शरसंदष्टधन्योपगूहनसुखितम् ।
जीवेनैकैकं परिरक्षद्वलितं भुजंगममिथुनम् ॥]

एकेनैव शरेण विद्धं भुजंगममिथुनं भोगाभ्यां मिथो मिलदुत्प्रेक्ष्यते—भुजंगममिथुनं वेपते । कीदृशम् । प्रेमरूपनिगडविशिष्टम् । अत एव विश्लिष्य गन्तुमपारयत् । एवं शरेण संदष्टं सद्धन्योपगूहनेन दृढालिङ्गनेन सुखितम् । अलब्धपूर्वमालिङ्गनं लब्धं मरणमपि सहैव स्यादिति वेधदुःखमप्यगणयत् । एवं जीवेनैकैकं परिरक्षद्वलितं मिथो वेष्टयत् । स्वस्वजीवितं दत्त्वापि स्वस्वदेहेन प्रहारान्तरवारणाय परस्परवपुर्व्यवधानं कुर्वत् । यद्वा परस्परं मरणमाशङ्क्य तत्तद्वपुषि स्वस्वदेहसमर्पणेन स्वस्वजीवनसमर्पणं कुर्वदिति भावः ॥

शराणां प्रसरणमाह—

**मोडिअविद्दुमविडवा धावन्ति जलम्मि मणिणिहंसणणिसिआ ।**
**सिप्पिउडमज्झणिग्गअमुहलग्गत्थोरमुत्तिआ रामसरा ॥ ४९ ॥**

[मोटितविद्रुमविटपा धावन्ति जले मणिनिघर्षणनिशिताः ।
शुक्तिपुटमध्यनिर्गतमुखलग्नस्थूलमौक्तिका रामशराः ॥]

रामशरा जले धावन्ति । निष्प्रत्यूहं संचरन्तीत्यर्थः । किंभूताः । मोटितानि विद्रुमविटपानि यैः । अग्निसंबन्धात् । एवं मणिषु निघर्षणेन निशिताः शिताग्राः । अतएव शुक्तिपुटमध्यनिर्गताः सन्तो मुखे लग्नं विद्धत्वात्संबद्धं स्थूलं मौक्तिकं येषां ते ॥

जलसंबन्धादुत्पन्नो धूमः प्रवालेषु लग्नस्तमुत्प्रेक्षते—

**विसवेओ व्व पसरिओ जं जं अहिलेइ वहलधूमुप्पीडो ।**
**कज्जलइज्जइ तं तं रुहिरं व महोअहिस्स विद्दुमवेढम् ॥ ५० ॥**

[विषवेग इव प्रसृतो यं यमभिलीयते बहलधूमोत्पीडः ।
कज्जलयति तं तं रुधिरमिव महोदधेर्विद्रुमवेष्टम् ॥]

विषवेग इव प्रसृतो बहलो धूमोत्पीडो यं यं महोदधे रुधिरमिव विद्रुमवेष्टं प्रवालमण्डलमभिलीयते मीलति तं तमेव कज्जलयति कज्जलमिव करोति । श्यामलयतीत्यर्थः । तथा च धूमो न भवति किं तु श्यामत्वाद्दुःखहेतुत्वाच्च विषम् । विद्रुममण्डलं न भवति किं तु रक्तत्वात्समुद्रस्य रुधिरमित्याशयः । अन्यत्रापि सर्पादिविषं वपुषि प्रविशद्रुधिरं व्याप्य श्यामीकरोतीति ध्वनिः ॥

पर्वतानां दौःस्थ्यमाह—

**खुहिअसमुद्दुप्पइआ बाणुक्कित्तपडिएक्कवित्थअवक्खा।**
**विसमभरोणअसिहरा णहद्धवन्थवलिआ पडन्ति महिहरा॥५१॥**

[क्षुभितसमुद्रोत्पतिता बाणोत्कृत्तपतितैकविस्तृतपक्षाः।
विषमभरावनतशिखरा नभोर्धपथवलिताः पतन्ति महीधराः॥]

महीधरा नभोर्धपथाद्वलिता वक्रीभूताः सन्तः पतन्ति। अर्थात्समुद्र एव। पतने हेतुमाह—कीदृशाः। क्षुभितात्समुद्रादुत्पतिता उड्डीनाः। अथ बाणेनोत्कृत्तः सन्पतित एको विस्तृतः पक्षो येषां ते। एवं विषमभरेणाधिकगौरवेण विषमं वक्रं सद्भरेण चावनतमेकं शिखरं येषां ते। अयमर्थः—समुद्रे हौताशनीं विपत्तिमधिगम्य गगनमुड्डीय गतानां महीधराणां विस्तीर्यमाण एवैकस्मिन्पक्षे रामशरेणोत्कृत्य पतिते विद्यमानतदपरपक्षगौरवेण तत्संनिहितशिखरावनतावर्धनमस्त एव ते निपेतुरिति नभस्यपि शरप्रसरणमिति सूचितम्॥

सर्पाणां विपत्तिमाह—

**छिण्णविवइण्णभोआ कण्ठपडिट्ठविअजीविआगअरोसा।**
**दिट्ठीहि बाणणिवहे डहिऊण मुअन्ति जीविआइँ भुअंगा॥५२॥**

[छिन्नविप्रकीर्णभोगाः कण्ठपरिस्थापितजीवितागतरोषाः।
दृष्टिभ्यां बाणनिवहान्दग्ध्वा मुञ्चन्ति जीवितानि भुजंगाः॥]

भुजंगा जीवितानि मुञ्चन्ति। अत्र प्रकारमाह—कीदृशाः। छिन्ना अथ विप्रकीर्णा दिशि दिशि विक्षिप्ता भोगा येषाम्। एवं भोगानां छिन्नत्वादवस्थानाभावात्कण्ठ एव परिस्थापितजीविता अत एव केनेदं वपुः कृत्तमित्यागतक्रोधाः। अथ किं कृत्वा। दृष्टिभ्यां बाणनिवहान्दग्ध्वा प्रदीप्य। दृष्टिविषज्वालाशरज्वालयोः संबन्धात्। संकटपतिताः सर्पा दृग्भ्यां विषज्वालामुद्वमन्तीति प्रसिद्धिः। तथा च यथायथा दृग्भ्यां विषज्वालामुज्झन्ति तथा तथा शरानलोपचयान्मृता इति भावः। दृष्टिभ्यां बाणनिवहान्दग्ध्वा मृता इत्यर्थ इति केचित्। 'उहिऊण' इति पाठे दृष्टिभ्यां शरनिवहानूहित्वा तर्कयित्वा। तथा च शरज्ञानानन्तरं मृता इत्यर्थः॥

गर्ते शरानलोपचयमाह—

**आऊरेइ रसन्तो उक्खडिअभुअंगभोअपब्भाराइं।**
**सरमुहगलत्थणुक्खअसेलट्ठाणविवरोअराइ हुअवहो॥ ५३॥**

[आपूरयति रसन्त्रुत्खण्डितभुजंगभोगप्राग्भाराणि ।
शरमुखगलहस्तोत्खातशैलस्थानविवरोदराणि हुतवहः ॥]

हुतवहः शराणां मुखं शराग्रं तस्य गलहस्तः प्रेरणं तेनोत्खाता उत्थापिता ये शैलास्तेषां स्थानान्येव शून्यत्वाद्विवराणि तेषामुदराणि पूरयति । उत्खातसमुद्रमध्यस्थशैलस्थानानि यावत्परितोवर्तीनि जलानि पूरयन्ति तावच्छराग्निभिरेव पूरितानीति जलवेगापेक्षयानलवेगप्रकर्षः । तदुत्तरमपि शराग्नेः प्रौढत्वाज्जलप्रवेशो न वृत्त इति भावः । अत एवोक्तं रसन् । प्रान्तावच्छेदेन तज्जलदाहजन्यशब्दवानित्यर्थः । स्वभावतो वा । तानि किंभूतानि । उत्खण्डिता भुजंगानां भोगप्राग्भारा यत्र तानि । फणावष्टब्धपर्वतरक्षणाय पुच्छावष्टब्धभूमित्वेन बलरोषप्रकर्षादनुत्थितपुच्छत्वेन च शैलोत्थापनेन मध्य एव त्रुटिता भुजंगा इत्यर्थः ।

करिमकरदन्तानाह—

भिण्णुव्वूढजलअरा दरदिण्णमहातरंगगिरिअडघाआ ।
छिण्णपडिउद्धविद्धा फुडन्ति माअङ्गमअरदन्तप्फडिहा ॥ ५४ ॥

[भिन्नोद्व्यूढजलचरा दरदत्तमहातरङ्गगिरितटघाताः ।
छिन्नपतितोर्ध्वविद्धाः स्फुटन्ति मातङ्गमकरदन्तपरिघाः ॥]

मातङ्गमकराणां दन्ता एव परिघास्तदाकारत्वात् । ते रामशरेण च्छिन्नाः सन्तः पतिताः । अथोर्ध्वविद्धाः शरानलज्वालासंबन्धादूर्ध्वं गतास्तत्रैव स्फुटन्ति । द्विधा भवन्तीत्यर्थः । यथा गृहादिदाहे वंशादयो नभो गत्वा स्फुटन्ति । किंभूताः । भिन्नाः स्यूता अथोद्व्यूढा ऊर्ध्वं नीता जलचराः करिमकरादयो यैः । स्वशिखाप्रोतजलचरसहिता एवोच्छलिता इत्यर्थः । एवं दरदत्तो महातरङ्गेण गिरितटाघातो यैस्ते । तथा च मलयसुवेलाभिघातक्षमतरङ्गोत्थापकतया नक्रभेदकतया च दन्तानां प्रकर्षः । तेन च तदुच्छलनसमर्थशरानलस्य करिमकराणां चेत्यवधेयम् । दरदत्तो महातरङ्गा एव गिरयस्तेषां तटघातो यैरिति वा ॥

मीनानां संभ्रममाह—

जालालोअविमुहिअं सलिलतरङ्गपरिसक्कणपरिक्खलिअम् ।
परिहरइ विदुमवणं धूमाहअअम्बलोअणं मीणउलम् ॥ ५५ ॥

[ज्वालालोकविमुग्धं सलिलतरङ्गपरिसर्पणपरिस्खलितम् ।
परिहरति विद्रुमवनं धूमाहतताम्रलोचनं मीनकुलम् ॥]

मीनकुलं कर्तृ विद्रुमवनं परिहरति त्यजति । किंभूतम् । ज्वालानामालोकेन विमुग्धं मोहमापन्नम् । एवं सलिलतरङ्गेषु परिसर्पणेन परिभ्रमणेन परिस्खलितं स्थानान्तरं गतम् । एवं च धूमेनाहते स्पृष्टे अत एवाताम्रे लोचने यस्य । तथा च मीनाः समुद्रमध्ये शरानलज्वालामवलोक्य भयात्क्वचिदन्यत्र गताः । तत्रापि धूमाकुलदृष्टितया सम्यगनिभालयन्तो ज्वालाबुद्ध्या विद्रुमवनमपि त्यजन्तीति भयप्रकर्षः । भ्रान्तिमानलंकारः ॥

सर्पाणां वैक्लव्यमाह—

**उब्बत्तोअरधवला दरणिग्गअडड्ढजमलजीहाणिवहा ।**
**संधेन्ति उप्पअन्ता थोरतरङ्गविअडन्तराइ भुअंगा ॥ ५६ ॥**

[उद्वृत्तोदरधवला दरनिर्गतदग्धयमलजिह्वानिवहाः ।
संदधत्युत्प्लवमानाः स्थूलतरङ्गविकटान्तराणि भुजंगाः ॥]

भुजंगाः स्थूलानां समुद्रक्षोभेण महतां तरङ्गाणां विकटानि महान्ति अन्तराणि अन्तरालप्रदेशान्संदधति । स्वशरीरेण पूरयित्वा समीकुर्वन्तीत्यर्थः । अत्र हेतुमाह—उत्प्लवमाना उपरि संचरन्तः । एवं उद्वृत्तं शरानलदाहतो विपरीत्य स्थितं यदुदरं तेन धवलाः । तेन वीचीनां श्वैत्येन संधानयोग्यत्वमुक्तम् । पुनः कीदृशाः । दग्धा अत एव दरनिर्गताः किंचिद्बहिर्भूता जिह्वायुगलनिवहा येषाम् । यमलं युगलपर्यायः । तथा च समुद्रस्य क्षोभप्रकर्षेण तरङ्गस्थौल्यप्रकर्षः । तेन तदन्तरालप्रकर्षः । तेन तत्पूरकसर्पप्रकर्षः । तेन तदुद्वर्तनसमर्थतया दाहप्रकर्षः । तेन च शरानलप्रकर्षः । इत्यवधेयम् ॥

करिमकराणां दौस्थ्यमाह—

**दीसन्ति दरुत्तिण्णा हुआसणुत्तत्तवाअमअणीसन्दा ।**
**पक्कग्गाहणहङ्कुसविसमसमक्कन्तमत्थआ करिमअरा ॥ ५७ ॥**

[दृश्यन्ते दरोत्तीर्णाहुताशनोत्तप्तवानमदनिःस्यन्दाः ।
प्रग्राहनखाङ्कुशविषमसमाक्रान्तमस्तकाः करिमकराः ॥]

करिमकरा जलहस्तिनो दरोत्तीर्णाः समुद्रादर्धनिर्गताः सन्तः प्रग्राहो जलसिंहस्तस्याङ्कुशाकारनखैर्विषमं यथा स्यादेवं समाक्रान्तं मस्तकं येषामेवंभूता दृश्यन्ते । किंभूताः । हुताशनेनोत्तप्ता अत एव वानाः शुष्का मदनिःस्यन्दा येषां ते । बहिर्भावे-

जलसिंहातिक्रमं जानन्तोऽपि करिमकरा बहिर्भूता इति ज्वालाप्रकर्षः । किंचिन्निर्गतानामेव तेषामतिक्रमेण तज्ज्वालाविह्वलानामपि जलसिंहानां तेजःप्रकर्ष इत्युन्नेयम् । पक्कग्गाहो जलसिंहे देशी वा । वान इति 'ओ वै शोषणे' धातुः ॥

शङ्खानां वैक्लव्यमाह—

घोलइ गओणिअत्तं विसमट्ठिअमणिसिलाअलपलोट्टन्तम् ।
झिज्जन्तसलिलविहलं वेलापुलिणगमणूसुअं सङ्खउलम् ॥ ५८ ॥

[घूर्णते गतापनिवृत्तं विषमस्थितमणिशिलातलप्रलुठत् ।
क्षीयमाणसलिलविह्वलं वेलापुलिनगमनोत्सुकं शङ्खकुलम् ॥]

शङ्खकुलं घूर्णते । कीदृक् । क्षीयमाणे ज्वालया शोष्यमाणे सलिले विह्वलं व्याकुलमौष्ण्यातिशयात् । अत एव वेला च पुलिनं च तत्र गमने उत्सुकं जलशून्यत्वात् । एवं प्रस्थानोत्तरं विषमस्थितेषु नीचोच्चतया व्यवस्थितेषु मणिशिलातलेषु प्रलुठत् । अत एव जले तापोदयाद्गतम् । अथ मणिशिलानां वैषम्यादृजुमार्गालाभेन पतदुत्पतत् । अपनिवृत्तं परावृत्तम् । एवमन्यत्रापीति । दिशि दिशि भ्रमतीत्यर्थः ॥

पर्वतानामुत्पतनमाह—

मुक्कसमुद्दुच्छङ्गा पक्खक्खेवेहिँ संभमसमुप्पइआ ।
अब्भुत्तेन्ति महिहरा एक्कक्कमसिहरसंठिअं सिहिणिवहम् ॥५९॥

[मुक्तसमुद्रोत्सङ्गाः पक्षक्षेपैः संभ्रमसमुत्पतिताः ।
अभ्युत्तेजयन्ति महीधरा एकैकशिखरसंस्थितं शिखिनिवहम् ॥]

महीधराः परस्परशिखरसंस्थितमग्निसमूहं पक्षक्षेपैरुड्डयनकालीनपक्षचालनैरभ्युत्तेजयन्ति उद्दीपयन्ति । वायुसंबन्धादित्यर्थः । किंभूताः । संभ्रमेण शराग्निजन्यक्षोभेणोत्पतिताः । अत एव मुक्तः समुद्रोत्सङ्गो यैरेवंभूताः । तथा च दाहभिया समुद्रादुड्डीय गगनं गताः । तत्रापि परस्परपक्षपवनेनोत्तेजितशिखरानलाद्वैक्लव्यमेव प्रापुरिति विपदि क्वापि न सौमनस्यमिति भावः । अन्यत्रापि वनादिदाहे पक्षिभिरुड्डीय गगनमाश्रीयत इति ध्वनिः ॥

पातालजलोत्थानमाह—

विहलुव्वत्तभुअंगा छिण्णमहासुरसिरुप्पअणगम्भीरा ।
मूलुत्थङ्घिअरअणा णेन्ति रसन्ता रसाअलजलुप्पीडा ॥ ६० ॥

[विह्वलोद्वृत्तभुजंगाश्छिन्नमहासुरशिरउत्प्लवगम्भीराः ।
मूलोत्तम्भितरत्ना निर्यन्ति रसन्तो रसातलजलोत्पीडाः ॥]

रसातलस्य जलोत्पीडा निर्यन्ति । रामशरेण पातालपर्यन्तभेदनात्तेनैव रन्ध्रेण तत्रत्यजलानि बहिर्भवन्तीत्यर्थः । वह्निसंबन्धात्पातालभूमेरार्द्रत्वेन वा । कीदृशाः । रसन्तः शब्दायमानाः जलानामाकस्मिकोद्गमने शब्दो जायत इति स्वभावात् । एवं विह्वलाः सन्त उद्वृत्ता उत्ताना भुजंगा येषु ते एवं छिन्नानि यानि महासुराणां मधुकैटभप्रभृतीनां शिरांसि तेषामुत्प्लवनेन गम्भीरा भयानकाः । एवं मूलादुत्तम्भितान्युत्थापितानि रत्नानि यैः । तथा च जलवेगपतितानां पातालसर्पमहासुरमस्तकरत्नानामागच्छतामाकुलीकरणेन जलानामाधिक्यं तेन च विवराणां तेन च शराणां शरानलानां वा ॥

कल्लोलानां शोषणमाह—

बाणणिहाउच्छित्ता हुअवहजालाहउप्पवन्तप्फेणा ।
अट्टन्ति णहअले च्चिअ मारुअभिण्णलहुआ सलिलकल्लोला ॥ ६१ ॥

[बाणनिघातोत्क्षिप्ता हुतवहज्वालाहतोत्प्लवमानफेनाः ।
शुष्यन्ति नभस्तल एव मारुतभिन्नलघुकाः सलिलकल्लोलाः ॥]

बाणनिघातेनोत्क्षिप्ता उत्थापिताः सलिलकल्लोला नभस्तल एव शुष्यन्ति । अत्र हेतुमाह—हुतवहज्वालाभिराहताः स्पृष्टाः । अत एवोद्गतफेना एवं मारुतेन भिन्ना अत एव लघुकाः कणीभूताः । अत्र गगन एवोच्छलितजलशोषकत्वेन ज्वालानामाधिक्यम् ॥

पुनः सर्पाणां वैक्लव्यमाह—

णिव्वूढविसत्थवआ भोआअड्ढणगलन्तगमणुच्छाहा ।
तुङ्गतरङ्गक्खलिआ विसमुव्वत्तोअरा वलन्ति भुअंगा ॥ ६२ ॥

[निर्व्यूढविषस्तवका भोगाकर्षणगलद्गमनोत्साहाः ।
तुङ्गतरङ्गस्खलिता विषमोद्वृत्तोदरा वलन्ति भुजंगाः ॥]

रामशरोत्थापितत्वेन तुङ्गैस्तरङ्गैः स्खलिताः समुद्रात्प्रच्याविताः । तीरभूमावानीता इति यावत् । एवंभूता भुजङ्गा वलन्ति संचाराय वक्रीभवन्ति । किंभूताः । विषमं

यथा स्यादेवमुद्वृत्तान्युत्तानानि उदराणि येषाम् । तरङ्गाभिघातादेव । एवं निर्व्यूढो वान्तो विषस्तबको यैः । क्रोधहेतूनालोक्य विषमुद्वमन्तीति सर्पस्वभावः । प्रकृते ज्वालमेव दृष्ट्वा तदुपरि विषं त्यक्तवन्त इत्यर्थः । ज्वालाजन्याभिभवेन वा । एवं भोगाकर्षणे शरीरसंचारणे गलन् गमनोत्साहो येषां ते । निर्विषतया बलाभावात् । तथा च रामशरोत्थकल्लोलसंस्कारेण तीरे पतिता भुजंगा निजमपि वपुराक्रष्टुं न पारयन्तीति भुजंगाभिभवाधिक्येन क्षुब्धतरङ्गाधिक्यं तेन शरवेगसमुद्रयोः तेन संधानस्य तेन च रघुनाथबलस्येत्युक्तम् ॥

नदीनामवस्थामाह—

**वेवन्ति णिण्णआणं सरणिवहच्छिण्णसङ्खविहडिअवलआ ।**
**हत्थ व्व उअहिणिमिआ मुक्करवक्कन्दणिवडिआण तरङ्गा ॥ ६३ ॥**

[विपन्ते निम्नगानां शरनिवहच्छिन्नशङ्खविघटितवलयाः ।
हस्ता इवोदधिनियोजिता मुक्तरवाक्रन्दनिपतितानां तरङ्गाः ॥]

निम्नगानां तरङ्गा वेपन्ते । समुद्रक्षोभेण तत्र प्रवेशे दिशिदिशि गच्छन्तीत्यर्थः । उत्प्रेक्षते—हस्ता इव । नदीनामेते तरङ्गा न भवन्ति किं तूदधौ नियोजिताः समासोक्त्या स्वामिनस्तस्य रामशराभिघातवारणार्थमन्तरायीकर्तुमुपरि समर्पिताः समुद्रवधूनाममूषां हस्ता भवन्तीत्यर्थः । किंभूतानाम् । मुक्तस्त्यक्तः । उच्चैरित्यर्थः । तथाभूतो यो रवस्तरङ्गसंघट्टशब्दः स एवाक्रन्दो रोदनं तेन निपतितानाम् । समुद्रोपरि सशब्दं पतितानामित्यर्थः । अन्या अपि स्त्रियः स्वामिनस्ताडनवारणाय हस्तौ प्रसार्य साक्रन्दमुपरि पतन्तीति ध्वनिः । तरङ्गाः कीदृशाः । शरनिवहेन च्छिन्नाः खण्डखण्डीकृताः शङ्खा एव विघटिता विपर्यस्ता वलया येषु ते । हस्तेष्वपि तदानीं शङ्खवलया विपर्यस्य दिशिदिशि चलन्तीत्याशयः ॥

पुनः पर्वतानामुत्पतनमाह—

**हुअवहभरिअणिअम्बा जलअरसंदट्ठवक्खउडपब्भारा ।**
**चिरसंणिरोहमसिणा दुक्खेण णहं समुप्पअन्ति महिहरा ॥ ६४ ॥**

[हुतवहभृतनितम्बा जलचरसंदष्टपक्षपुटप्राग्भाराः ।
चिरसंनिरोधमसृणा दुःखेन नभः समुत्पतन्ति महीधराः ॥]

महीधरा दुःखेन नभः समुत्पतन्ति दुःखेनोड्डीयन्ते । उत्पतने हेतुमाह—हुतवहेन भृतः पूर्णो नितम्बो येषां ते । तथा च दाहदुःखासहिष्णुतया उत्पतिता

इत्यर्थः। दुःखेनेत्यत्र हेतुमाह—चिरसंनिरोधेन चिरं व्याप्य संचारनिरोधेन मसृणा मन्दगतयः। सत्वरसंचारेऽनभ्यासात्। अत एव वपुःकर्षणे क्लेशः। एवं जलचरैः संदष्टौ पक्षपुटयोः प्राग्भारौ येषां ते। दाहवारणाय मकरादयः पक्षपुटेषु निलीना इत्यर्थः। एतावता पर्वतानां महत्त्वम्। इदमपि देहगौरवहेतुत्वेनोत्पतनदुःखे बीजम्॥

समुद्रस्योपमर्दप्रकर्षमाह—

**जलइ जलन्तजलअरं भमइ भमन्तमणिविद्दुमलआजालम्।**
**रसइ रसन्तावत्तं भिज्जइ भिज्जन्तपव्वअं उअहिजलम्॥ ६५॥**

[ज्वलति ज्वलज्जलचरं भ्रमति भ्रमन्मणिविद्रुमलताजालम्।
रसति रसदावर्तं भिद्यते भिद्यमानपर्वतमुदधिजलम्॥]

उदधिजलं ज्वलन्तो जलचरा मकरादयो यत्र तथाभूतं सज्ज्वलति। एवं भ्रमन्मणिविद्रुमलतयोर्जालं यत्र तथा सद्भ्रमति। रसन्नावर्तो यत्र तथा सद्रसति शब्दायते। भिद्यमानाः पर्वता यत्र तथा सद्भिद्येत द्विधा भवति। उच्छलितपर्वतखण्डेनाभिघातात्। अत्र सर्वत्र जलजलचरदाहयोर्जलमणिविद्रुमभ्रमणयोर्जलशब्दावर्तशब्दयोर्जलपर्वतभेदयोः कार्यकारणयोरेककालत्वं शतृप्रत्ययेन बोध्यते। तेन च वह्निप्रकर्षाधीनक्काथप्रकर्षो गम्यते॥

पुनस्तदेवाह—

**आवत्तविवरभमिरो मलअमणिसिलाअलक्खलिअसंचारो।**
**घोलिरतरङ्गविसमो जह दीसइ साअरो तहेअ हुअवहो॥ ६६॥**

[आवर्तविवरभ्रमणशीलो मलयमणिशिलातलस्खलितसंचारः।
घूर्णमानतरङ्गविषमो यथा दृश्यते सागरस्तथैव हुतवहः॥]

आवर्तविवरेषु भ्रमणशील आवर्तगत्यनुसारित्वात्। एवं मलयमणिशिलातलेषु स्खलितसंचारः। भूमिवैषम्यानुसारित्वात्। एवं घूर्णमानतरङ्गेषु विषमस्तिर्यगूर्ध्वगतिः तदनुसारित्वात्। समुद्रो हुतवहोऽपीति। यथा सागरस्तथा हुतवहोऽपि दृश्यत इति सागरतुल्यसत्ताकत्वेन हुतवहस्य निखिलजलात्मकत्वमुक्तम्॥

मलयवनविप्लवमाह—

रहसपलित्तुच्छलिओ जे च्चिअ पडिवेइ मलअवणवित्थारे ।
विज्झाअणिअत्तन्तो ते च्चेअ पुणो वि विज्झवेइ समुद्दो ॥ ६७ ॥

[रभसप्रदीप्तोच्छलितो यानेव प्रदीपयति मलयवनविस्तारान् ।
विध्मातनिवर्तमानस्तानेव पुनरपि विध्मापयति समुद्रः ॥]

रभसेन वेगेन प्रदीप्तो ज्वलितः सन्नुच्छलितः शराभिघातात् । एवंभूतः समुद्रो यानेव मलयवनसमूहान्प्रदीपयति स्वनिष्ठवह्निना ज्वलयति । विध्मातो वह्निशून्यः । शीतल इति यावत् । तथाभूतः सन्निवर्तमानस्तेनैव पथा समागच्छन् । तानेव पुनरपि विध्मापयति । स्वजलैरग्निशून्यान्करोतीत्यर्थः । तथा च जलस्योच्छलनदशायामियान्वेगो यद्वनेषु स्थितिः क्षणमपि नाभूत् । वनस्य तु स्पर्शमात्रेणैव ज्वलनमिति वह्निप्रकर्षः । पुनरावृत्तिदशायां तदग्निनिर्वापकत्वेन तथाविधपावकानुच्छेद्यतया च बाहुल्यं तथाविधजलस्य । तथाविधवेगजनकत्वेन शराभिघातप्रकर्षस्तेन च संधानप्रकर्षस्तेन च रामस्य बलप्रकर्षः सूचितः । स्वविपत्तावपि परोपकारित्वेन समुद्रस्य च महाशयत्वमुक्तम् ॥

ज्वालाधिक्यमाह—

उत्थम्भिअमअरहरो मअरवसामिसविसङ्खलसिहाणिवहो ।
णिवहणिसुद्धमहिहरो महिहरकूडविअडो विअम्भइ जलणो ॥ ६८ ॥

[उत्तम्भितमकरगृहो मकरवसामिषविशृङ्खलशिखानिवहः ।
निवहनिपातितमहीधरो महीधरकूटविकटो विजृम्भते ज्वलनः ॥]

एवंभूतो ज्वलनो विजृम्भते वर्धते । कीदृक् । उत्तम्भित उत्थापितो मकराणां गृहं यत्र स मकरगृहः समुद्रो येन । ज्वालाप्रकर्षेण जलोत्फुल्लीभावात् । मकराणां वसाभिरामिषैश्च विशृङ्खलो वर्धमानः शिखानिवहो यस्य । घृतादिवत्स्नेहाधिक्यात् । निवहेन समूहेन निपातिता नाशिता महीधरा येन । इन्धनानामिव तेषामपि ज्वलनात् । निपातितमहीधरनिवहो वा । महीधराणां कूटेषु विकटस्तेषामुच्चत्वादयमप्युच्चः । महीधरकूटवद्विकट उच्चत्वाद्गिरिशृङ्गाकार इति वा ॥

जलस्योद्धतिमाह—

**जलणुत्थङ्घिअमूला बाणुक्खित्तपडिअत्तणणिसुम्भन्ता ।**
**णिवडन्ति जलुप्पीडा पडिलोमागअपडन्तविअडावत्ता ॥ ६९ ॥**

[ज्वलनोत्तम्भितमूला बाणोत्क्षिप्तपरिवर्तननिपात्यमानाः ।
निपतन्ति जलोत्पीडाः प्रतिलोमागतपतद्विकटावर्ताः ॥]

जलोत्पीडा निपतन्ति । आकाशादित्यर्थात् । किंभूताः । ज्वलनेनोत्तम्भितमुत्थापितं मूलं येषां ते । दहनप्रेरितमूर्ध्वं गच्छतीति वनदाहादौ दृष्टत्वादिति वह्निप्रकर्षः । एवं बाणेनोत्क्षिप्ताः सन्तः परिवर्तनेनाधोमुखीभावेन निपात्यमानाः । प्रथमं वह्निभिरुत्थापितमूलाः पश्चाद्बाणेनोर्ध्वं नीताः । अनन्तरं यथोर्ध्वक्षिप्तं काण्डादि फलभागेनाधः पतति गुरुद्रव्यस्वाभाव्यात्तथा तद्बाणस्यामीभिर्मुखलग्नतया फलस्थानीयत्वेन परिवर्तने कृते स्वयमप्यधोमुखीभूय पतन्तीत्यर्थः । अत एव प्रतिलोमागता विपरीतक्रमेणागताः । अधोमुखा इति यावत् । एवंभूताः पतन्तो विकटावर्ता यत्र । तथा च जलस्योच्छलनकाले आवर्तस्तथैव स्थित इति शरवेगप्रकर्षः । पतनकालेऽपि तथैव स्थित इति जलबाहुल्यम् । पातालं गता अपि शरा उत्थिता इति रामप्रभावप्रकर्षः । शरेणोत्क्षिप्ताः शरं विनैव नभो गत्वा पतन्तीति केचित् ॥

सागरस्य महत्त्वमाह—

**धूमाइ जलइ विहडइ ठाणं सिढिलेइ मलइ मलउच्छङ्गम् ।**
**धीरस्स पढमइण्हं तह वि हु रअणाअरो ण भञ्जइ पसरम् ॥ ७० ॥**

[धूमायते ज्वलति विघटते स्थानं शिथिलयति मृद्नाति मलयोत्सङ्गम् ।
धैर्यस्य प्रथमचिह्नं तथापि हि रत्नाकरो न भिनत्ति प्रसरम् ॥]

रत्नाकरः प्रथमं शरानलसंबन्धाद्धूमायते धूममुद्वमति । अथ ज्वलति । अथ विघटते कोटिधा स्फुटति । अथ स्थानं मूलं शिथिलयति त्यजति । जलस्योच्छलनाज्ज्वलनाद्वा । अथ मलयक्रोडं मृद्नात्याक्रामति । दाहस्वभावोक्तिरियम् । एवं यद्यपि भवति तथापि धैर्यस्य प्रथमज्ञापकं प्रसरं जलविस्तारगाम्भीर्यलक्षणं न भिनत्ति । न त्यजतीत्यर्थ इति मर्यादाधिक्यमुक्तम् ॥

पाकजशब्दप्रागल्भ्यमाह—

भुवइन्दलोअणाणं फुट्टन्ताण अ तिमीण साअरमज्झे ।
संवत्तजलहराण व रामसराणलहआण णीहरइ रओ ॥ ७१ ॥

[भुजगेन्द्रलोचनानां स्फुटतां च तिमीनां सागरमध्ये ।
संवर्तजलधराणामिव रामशरानलहतानां च निर्ह्रदति रवः ॥]

रामशरानलेनाहतानामत एव सागरमध्ये स्फुटतां भुजगेन्द्रलोचनानां तिमीनां च रवः स्फुटनजन्यः शब्दो निर्ह्रदति त्रैलोक्येऽपि प्रतिशब्दं जनयति । यथा संवर्तः प्रलयस्तत्कालीनमेघानां रवो निर्ह्रादी भवतीत्यर्थः । अत्र सागरे स्फुटनमतिदूरे प्रतिरव इति तत्प्रकर्षेण मूलशब्दप्रकर्षस्तेन लोचनप्रकर्षस्तेन भुजंगप्रकर्षस्तेन तद्दाहकशरानलप्रकर्षः ॥

नदीप्रवाहानाह—

मुहपुञ्जिअग्गिणिवहा धूमसिहाणिहणिराअअड्ढिअसलिला ।
णिवडन्ति णहुक्खित्ता पलउक्कादण्डसंणिहा णइसोत्ता ॥ ७२ ॥

[मुखपुञ्जिताग्निनिवहानि धूमशिखानिभनिरायतकृष्टसलिलानि ।
निपतन्ति नभ उत्क्षिप्तानि प्रलयोल्कादण्डसंनिभानि नदीस्रोतांसि ॥]

नभस्युत्क्षिप्तानि रामशरेण प्रेरितानि नदीस्रोतांसि निपतन्ति । आकाशात्समुद्र इत्यर्थात् । कीदृशानि । मुखे पुञ्जितो वर्तुलीभूतोऽग्निनिवहो येषु तानि । एवं धूमशिखातुल्यानि निरायतानि दीर्घाण्याकृष्टानि सलिलानि यैः । अत एव प्रलयकालीना ये उल्कादण्डास्तत्संनिभानि । उल्कादण्डा मुखप्रज्वलिताग्नयः सधूमा नभसः पतन्ति । अत्रोल्काप्रायो वह्निः ऊर्ध्वगतिर्धूमप्राया वह्निपृष्ठलग्ना विपर्यस्ता जलधरा दण्डप्रायाः शराभिघातोत्था नदीप्रवाहा इत्युपमा ॥

जलानां ह्रासमाह—

अट्टन्तसलिलणिवहो थोअत्थोअपडिमुक्कपुलिणुच्छङ्गो ।
दीसइ ओसक्कन्तो मग्गाहुत्तो पअं पअं व समुद्दो ॥ ७३ ॥

[शुष्यत्सलिलनिवहः स्तोकस्तोकप्रतिमुक्तपुलिनोत्सङ्गः ।
दृश्यतेऽपसरन्मार्गाभिमुखः पदं पदमिव समुद्रः ॥]

मार्गशब्दः पश्चादर्थवाची। शुष्यन् सलिलनिवहो यस्य तादृक्। अत एव स्तोकस्तोकं जलशोषक्रमेण किंचित्प्रतिमुक्तस्त्यक्तः पुलिनोत्सङ्गो येन तथाभूतश्च समुद्रः पश्चादभिमुखः पदं पदमपसरन्निव दृश्यते। यथा कश्चित्कंचिद्भयहेतुमवलोक्य पदं पदं पश्चादपसरति तथा रामाद्भीतः समुद्रस्तत्संनिधानं त्यक्तुकामः किंचित्किंचित्पश्चादपसरतीति जलशोषणाद्युत्प्रेक्षा॥

वह्नेरुद्दामतामाह—

जलणणिवहम्मि सलिलं साणलणिवहुच्छलन्तसलिलम्मि णहम्।
सलिलणिवहोत्थअम्मि अ अत्थाअइ णहअले दसदिसाअक्कम्॥७४॥

[ज्वलननिवहे सलिलं सानलनिवहोच्छलत्सलिले नभः।
सलिलनिवहावस्तृते चास्तायते नभस्तले दशदिक्चक्रम्॥]

अग्निनिवहे सलिलमस्तायतेऽस्तं गच्छति। अलक्ष्यं भवतीत्यर्थः। एवं सानलनिवहेऽग्निसमूहसहिते उच्छलत्सलिले नभोऽस्तायते। एवं सलिलनिवहेनावस्तृते व्याप्ते नभस्तले सति दशदिक्चक्रमस्तायते। अग्निप्रेरितानां जलानां नभसोऽपि दिशि दिशि गमनात्। तथा च प्रथमं खात एव जलमग्नौ मग्नम्। ततस्तत्प्रेरितं वियद्यानशे। ततश्च दिक्चक्रमाचक्रामेति विश्वव्यापकत्वमुक्तम्। अन्यदपि दुग्धाद्यावर्तनादुत्थितं सच्चतुर्दिशि पततीति। क्रियादीपकम्॥

आवर्तमाह—

सिहिणा पअविज्जन्ते आअट्टन्तम्मि वित्थए जलणिवहे।
जाआ गिम्हविलम्बिअरविरहचक्कमसिणा समुद्दावत्ता॥७५॥

[शिखिना प्रताप्यमाने आवर्त्यमाने विस्तृते जलनिवहे।
जाता ग्रीष्मविलम्बितरविरथचक्रमसृणाः समुद्रावर्ताः॥]

समुद्रावर्ता ग्रीष्मेण विलम्बितं विलम्बितगतीकृतं यद्रविरथचक्रं तद्वन्मसृणा मन्दगतयो जाताः। ग्रीष्मे रविरथो मन्दं चलतीति लोकप्रतिपत्तिः। तस्मिन्सति शिखिना प्रथमं प्रताप्यमानेऽप्यावर्त्यमाने भ्राम्यमाणे जलनिवहे पश्चाद्विस्तृते सति। तथा च यथा यथा जलस्य ज्वालया वेलातिक्रमो जनितस्तथा तथा पूर्वप्रवृत्तानामेवावर्तानां विस्तारे सति बहुदेशव्यापकत्वाद्गतिमान्द्यमिव प्रतिपन्नमासीदित्यर्थः। क्षुद्रस्त्वावर्तस्त्वरया चलतीति वस्तुस्थितिः। आवर्तस्य वर्तुलत्वादुष्णत्वाच्च रविरथचक्रसाम्यम्॥

मणिसंवलितमग्निमाह—

णिव्वडिअधूमणिवहो उद्धाइअमरगअप्पहामिलिअसिहो ।
वित्थिण्णम्मि समुद्दे सेआलोमइलिओ व्व घोलइ जलणो ॥७६॥

[निर्वलितधूमनिवह उद्धावितमरकतप्रभामिलितशिखः ।
विस्तीर्णे समुद्रे शेवालावमलिन इव घूर्णते ज्वलनः ॥]

ज्वलनः शेवालैरवमलिनः सर्वतः संवलित इव घूर्णते । कुत्र समुद्रे । कीदृशि । विस्तीर्णे । अग्नेरधिकव्यापकत्वलाभायेदमुक्तम् । शेवालच्छन्नत्वे हेतुमाह—ज्वलनः कीदृक् । निर्वलितः पृथग्भूतो धूमनिवहो यस्मात्तादृक् । एवमुद्धाविताभिर्मरकतप्रभाभिर्मिलिताः शिखा यस्य । तथा च बहिः संगते धूमेऽन्तःसंगतासु मरकतकान्तिषु वर्णसाम्येन शेवालत्वेनोत्प्रेक्षा ॥

समुद्रक्षोभातिशयमाह—

जलइ वलवाणलो विअ फुट्टइ सेलो व्व रामबाणाहिहओ ।
रसइ जलओ व्व उअही खुहिओ लङ्घेइ मारुओ व्व णहअलम् ॥७७॥

[ज्वलति वडवानल इव स्फुटति शैल इव रामबाणाभिहतः ।
रसति जलद इवोदधिः क्षुभितो लङ्घयति मारुत इव नभस्तलम् ॥]

रामबाणेनाभिहतो यथा वडवानलो ज्वलति अग्निसंबन्धादधिकं वर्धते तथोदधिरपि ज्वलति । एवं तत एव यथा तत्रत्यशैलः स्फुटति तथोदधिरपि स्फुटति । वह्निसंबन्धात् । एवं रामशराभिहतो यथा जलपानार्थमागतो जलदः पीडया रसति शब्दायते तथोदधिरपि रसति । शरानलसंघट्टात् । रामबाणेनाभिहतः समुद्रोपरि संचारी मारुतो यथा तीरं लङ्घयति तदतिक्रम्य गच्छति तथोदधिरपि तीरमतिक्रामतीति सहोपमा । रामबाणाभिहत उदधिर्वडवानल इव ज्वलतीति साधर्म्योपमेति केचित् ॥

जलानलयोस्तुल्यरूपतामाह—

होइ थिमिअम्मि थिमिओ वलइ वलन्तम्मि विहडइ विसंघडिए ।
परिवड्ढिअम्मि वड्ढइ सलिले झीणम्मि णवरं झिज्जइ जलणो ॥७८॥

[भवति स्तिमिते स्तिमितो वलति वलमाने विघटते विसंघटिते ।
परिवर्धिते वर्धते सलिले क्षीणे केवलं क्षीयते ज्वलनः ॥]

ज्वलनः सलिले स्तिमिते निश्चले सति स्तिमितो निश्चलो भवति। वलमाने आवर्तरूपतामापन्ने वलति तदनुसारेण वर्तते। विसंघटिते खण्डखण्डीभूते विघटते परिवर्धिते उत्फुल्लतामुपगते वर्धते। आश्रयानुवर्तनात्। क्षीणे सति केवलं क्षीयते नश्यति। आश्रयनाशादिति भावः। 'णवरि' इति पाठेऽनन्तरमित्यर्थः॥

अन्तर्द्वीपानाह—

रामसराणलपअविअझिज्जन्तोअहिविहत्ततडविच्छेआ।
ते च्चिअ तहवित्थारा तुङ्गा दीसन्ति दीवमण्डलिबन्धा॥ ७९॥

[रामशरानलप्रतापितक्षीयमाणोदधिविभक्ततटविच्छेदाः।
त एव तथाविस्तारास्तुङ्गा दृश्यन्ते द्वीपमण्डलीबन्धाः॥]

त एव दाहपूर्वकालीना एव द्वीपमण्डलीबन्धाः पङ्क्तिक्रमेण स्थिता द्वीपा जलसमतादशायां यथाविस्तारः स्थितस्तथाविस्ताराः सन्तस्तुङ्गा उच्चा दृश्यन्ते। तुङ्गत्वे हेतुमाह—कीदृशाः। रामशरानलेन प्रतापिते अत एव क्षीयमाणे शोष्यमाणजले उदधौ विभक्तः प्रव्यक्तस्तटविच्छेदस्तटविभागो येषां ते। तथा च पूर्वक्रमेण कृता अपि द्वीपा दाहेन ह्रसमानजलतया दृश्यमानतटत्वेन तुङ्गा ज्ञाता इत्याशयः॥

अष्टभिरादिकुलकेन समुद्रदाहमुपसंहरति—

इअ दाविअपाआलं जलणसिहावट्टमाणजलसंघाअम्।
रामो दलिअमहिहरं खविअभुअंगणिवहं खवेइ समुद्दम्॥ ८०॥

[इति दर्शितपातालं ज्वलनशिखावर्त्यमानजलसंघातम्।
रामो दलितमहीधरं क्षपितभुजंगनिवहं क्षपयति समुद्रम्॥]

इत्यनेन प्रकारेण रामः समुद्रं क्षपयति नाशयति। प्रकारमेवाह—दर्शितं व्यक्तीकृतं पातालं यत्र। जलनाशाज्ज्वलनशिखाभिरावर्त्यमानो दह्यमानो जलसंघातो यत्र। दलिताः शतखण्डीकृता महीधरा यत्र। क्षपितो नाशितो भुजंगानां निवहो यत्र तमिति समुद्रविशेषणम्, तद्यथा स्यादिति क्रियाविशेषणं वा॥

जलपब्भारपलोट्टिअभमन्तसङ्खउलविहलमुक्कक्कन्दम्।
फुडिअवडवामुहाणलपलित्तदरदड्ढसंचरन्तविसहरम्॥ ८१॥

[जलप्राग्भारप्रलुठितभ्रमच्छङ्खकुलविह्वलमुक्ताक्रन्दम्।
स्फुटितवडवामुखानलप्रदीप्तदरदग्धसंचरद्विषधरम्॥]

किंभूतं समुद्रम् । जलप्राग्भारे प्रलुठितं दाहेनापटुशरीरतया विपर्यस्य पतितं सञ्चरदनुष्णस्थानप्रत्याशया इतस्ततो गच्छच्छङ्खकुलं तेन मुक्त आक्रन्दो यत्र । अनुष्णस्थानालाभेन दाहजन्यपीडाधिक्यात् । अन्योऽपि दह्यमानो विह्वलशरीरो भूमौ निपत्य लुठन्नाक्रन्दतीति ध्वनिः । एवं स्फुटितः शरानलसंबन्धात्स्फुटीभूतो यो वडवानलस्तेन प्रदीप्ता ज्वलिताः प्रथमत एव दरदग्धाः सन्तः संचरन्तो विषधरा यत्र तम् । प्रथमं शरानलेन दग्धा अत एव लुप्ततया संचरन्तो विषधरा अकस्माद्रामशरानलमिलनवर्धमानेन वडवानलेन दूरादपि ज्वलिता इत्यर्थः ॥

झिज्जन्तजलालोइअकिरणमुणिज्जन्तरअणपव्वअसिहरम् ।
थोरतरङ्गकराहअदिसालआभग्गपडिअजलहरविडवम् ॥८२॥

[क्षीयमाणजलालोकितकिरणज्ञायमानरत्नपर्वतशिखरम् ।
स्थूलतरङ्गकराहतदिग्लताभग्नपतितजलधरविटपम् ॥]

एवं क्षीयमाणे जले आलोकितैः किरणैर्ज्ञायमानानि तर्क्यमाणानि रत्नपर्वतानां मेनाकादीनां शिखराणि यत्र तमिति गाम्भीर्यमुक्तम् । एवं स्थूलतरङ्गरूपेण करेणाहतास्ताडिता दिश एव लतास्ताभ्यो भग्नाः सन्तः पतिता जलधरा एव विटपा यत्र तम् । क्षुभितसमुद्रतरङ्गाहता उपरितनमेघाः समुद्र एव पतिता इत्यर्थः । अन्यत्रापि हस्तताडितानां लतानां पत्राणि त्रुटित्वा भूमौ पतन्तीति ध्वनिः ॥

साणलसरणिद्दारिअसकेसरुज्जलिअसीहमअरक्खन्धम् ।
आसण्णभीअविसहरवेढिअकरिमअरधवलदन्तप्फलिहम् ॥८३॥

[सानलशरनिर्दारितसकेसरोज्ज्वलितसिंहमकरस्कन्धम् ।
आसन्नभीतविषधरवेष्टितकरिमकरधवलदन्तपरिघम् ॥]

एवं सानलेन शरेण निर्दारितः खण्डितोऽत एव केसरसहितः सन्नूर्ध्वं ज्वलितः सिंहमकरस्य जलसिंहस्य स्कन्धो यत्र तम् । स्कन्धे शरसंबन्धेन केसराणामपि दाहात् । एवमासन्नैर्निकटवर्तिभिर्भीतैः शरानलात् विषधरैर्वेष्टिताः करिमकराणां जलहस्तिनां धवला दन्ता एव परिघा यत्र तम् । दाहपीडिताः सर्पाः किंचिदवष्टम्भेन वक्रीभवन्तीति लोके दृष्टम् । स्तम्भाकृतिरायुधविशेषः परिघः ॥

धुअपव्वअसिहरपडन्तमणिसिलाभग्गविद्दुमलआवेढम् ।
दरडड्ढविसहरुज्झिअविसपङ्कक्खुत्तविहलकरिमअरउलम् ॥ ८४ ॥

[धुतपर्वतशिखरपतन्मणिशिलाभग्नविद्रुमलतावेष्टम् ।
दरदग्धविषधरोज्झितविषपङ्कमग्नविह्वलकरिमकरकुलम् ॥]

एवं धुताभिः शरानलसंबन्धात्स्वस्थानाच्च्युताभिरत एव पर्वतशिखरात्पतन्तीभिर्मणिशिलाभिर्भग्नानि विद्रुमलतानामावेष्टान्याभोगा यत्र तम् । रामशरानलेनापि दग्धुं ये न पारितास्ते एताभिर्भग्ना इति समुद्रस्य गाम्भीर्यमुक्तम् । एवं दरदग्धेन विषधरेणोज्झितास्त्यक्ता ये विषपङ्कास्तेषु मग्नान्यत एव विह्वलानि उत्तरीतुमक्षमाणि करिमकरकुलानि यत्र तम् । तथा च किंचिद्दग्धेनैव सर्पेण तथा विषपङ्कान्युज्झितानि यथा तत्र करिमकरा मग्ना इति विषपङ्कस्य प्रकर्षस्तस्य च किंचिद्दाहजन्यत्वेन सर्पस्य प्रकर्षः ॥

रुन्दावत्तपहोलिरवेलावडिएक्कमेक्कभिण्णमहिहरम् ।
णहअरुविलग्गवेविरधूमलआविसमलङ्घिअदिसाआलम् ॥ ८५ ॥

[स्थूलावर्तप्रघूर्णमानवेलापतितैकैकभिन्नमहीधरम् ।
नभस्तरुविलग्नवेपनशीलधूमलताविषमलङ्घितदिग्जालम् ॥]

एवं स्थूले महत्यावर्ते प्रघूर्णमाना अत एव क्रमेण वेलायामापतिता अत एवैकैकं परस्परं भिन्ना दलिता महीधरा यत्र तम् । आवर्तेन वेलायां सह पतिताः पर्वता जलस्याल्पतया भूमिसंबन्धात्परस्परसंघट्टेन शतखण्डा बभूवुरित्यर्थः । एकेनैवावर्तेन शतशः पर्वता नीता इति समुद्रस्य, तादृशावर्तोत्थापकतया रामशरस्य च प्रकर्षः । एवं नभ एव तरुस्तत्र विलग्नाः संबद्धा वेपमाना धूमरूपा या लतास्ताभिर्गतिकौटिल्याद्विषमं यथा स्यादेवं लङ्घितं दिग्जालं यस्मात्तम् । तथा च धूमाक्रान्तं गगनमभूदित्यर्थः । अन्यापि लता तरुमवलम्ब्य वर्धमाना दिक्चक्रमाक्रामतीति ध्वनिः ॥

पक्खपरिरक्खणुट्ठिअसरणिवहाहअदिसापइण्णमहिहरम् ।
फुडिअजलमज्झणिग्गअफुडरअणुज्जोअसंघिउब्भडविवरम् ॥८६॥

[पक्षपरिरक्षणोत्थितशरनिवहाहतदिक्प्रकीर्णमहीधरम् ।
स्फुटितजलमध्यनिर्गतस्फुटरत्नोद्योतसंहितोद्भटविवरम् ॥]

एवमनलात्पक्षयोः परिरक्षणायोत्थिता ऊर्ध्वमुड्डीनास्तदवस्थायामेव शरनिवहेनाहताः खण्डखण्डीकृता अत एव दिक्षु प्रकीर्णा विक्षिप्ता महीधरा यस्य तम् । अन्योऽप्युड्डयमानः पक्षी शरेण खण्डितो दिक्षु पततीति ध्वनिः । एवं स्फुटितात्

शरप्रवेशपर्वताद्युत्थानेन सरन्ध्रीकृताज्जलमध्यान्निर्गतो बहिर्भूतो यो रत्नोद्द्योतस्तेन संहितं पूरितमुद्भटं विवरं येन तम् । खातावच्छिन्नो जलक्षयेण शून्यीकृतो विद्यमानजलस्योपरि नभोभागो विवरं तदन्तर्वर्तिमणिकिरणैरकस्मादुत्थितैरम्बुभिरिव पूर्यत इति मणीनां तद्द्युतीनां च महत्त्वमुक्तम् ॥

हुअवहपडित्तगोविअणिअणअणुम्हाविसण्ठुलमहग्गाहम् ।
परिवड्ढिएक्कमेक्काणुराअसरपहरणिव्वलिअसङ्खउलम् ॥ ८७ ॥

**इअ सिरिपवरसेणविरइए कालिदासकए दसमुहवहे महाकव्वे पञ्चमो आसासओ परिसमत्तो ॥**

[हुतवहप्रदीप्तगोपितनिजनयनोष्मविसंष्ठुलमहाग्राहम् ।
परिवर्धितैकैकानुरागशरप्रहारनिर्वलितशङ्खकुलम् ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये पञ्चम आश्वासः परिसमाप्तः ।

एवं हुतवहेन प्रदीप्तयोर्दग्धुमारब्धयोरत एव गोपितयोर्मुद्रितयोर्निजनयनयोरूष्मणा औष्ण्येन विसंष्ठुला दिशि दिशि घूर्णमाना महाग्राहा जलसिंहादयो यत्र तम् । नयनमुद्रणात्तज्ज्वालासंबन्धादूष्मेति भावः । एवं परिवर्धित एकैकस्य परस्परस्यानुरागो येषामेतादृशानि सन्ति शरप्रहारेण निर्वलितानि दिशि दिशि विच्छिन्नानि शङ्खकुलानि यत्र तम् । शङ्खानां शरप्रहारेण विच्छिन्नानां मिथोऽनुरागोपचय इति भावः ॥ कुलकम् ॥

समुद्रक्राथदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णाभूत्पञ्चमी शिखा ॥

---

षष्ठ आश्वासः ।

अथ समुद्रस्य निष्क्रमणमाह—

अह णिग्गओ जलन्तं दरडड्ढमहाभुअंगपाअवणिवहम् ।
मोत्तूण धूमभरिअं पाआलवणं दिसागओ व्व समुद्दो ॥ १ ॥

[अथ निर्गतो ज्वलद्दरदग्धमहाभुजंगपादपनिवहम् ।
मुक्त्वा धूमभृतं पातालवनं दिग्गज इव समुद्रः ॥]

अथ विमर्दानन्तरं समुद्रो निर्गतो जलादुत्थितः। किं कृत्वा। धूमैर्भृतं व्याप्तं पातालमेव वनं त्यक्त्वा। कीदृशम्। ज्वलत्। रामशरानलेनेत्यर्थात्। एवं दग्धा महाभुजंगा एव पादपाः। महाभुजंगाश्च पादपाश्चेति द्वन्द्वो वा। समुद्रे वृक्षाणामपि सत्त्वात्। तेषां निवहः समूहो यत्र तथाभूतम्। क इव। दिग्गज इव। यथा हस्ती दग्धसर्पवृक्षनिवहं धूमाक्रान्तं ज्वलद्वनं तापासहिष्णुतया त्यक्त्वा क्वचिन्निर्गच्छतीत्युपमा। दिग्गजस्योपमानत्वेन समुद्रस्य क्षोभेऽपि साहंकारत्वं सूचितम्। प्रायोपविष्टेऽपि रामेऽवधीरणया मत्तत्वं वा॥

समुद्रस्य दौःस्थ्यमाह—

मन्दरदढपरिमट्ठं पलअविअम्भिअवराहदाढुल्लिहिअम्।
विसमं समुव्वहन्तो रामसराघाअदूमिअं वच्छअडम्॥ २॥

[मन्दरदृढपरिमृष्टं प्रलयविजृम्भितवराहदंष्ट्रोल्लिखितम्।
विषमं समुद्वहन्रामशराघातदुःखितं वक्षस्तटम्॥]

इतः स्कन्धकचतुष्टयं 'आलीनश्च रघुपतिं' इति पञ्चमस्कन्धकेनान्त्यकुलकम्। 'अथ निर्गतः' इति प्रथमस्कन्धकेनादिकुलकं वा। किं कुर्वन्। मन्दरेण मथनसमये दृढं यथा स्यादेवं परिमृष्टं निघृष्टम्। एतावता विस्तारबलवत्त्वे सूचिते। एवं प्रलये विजृम्भिते भूम्युद्धाराय कृतनमनोन्नमनव्यापारे ये वराहदंष्ट्रे ताभ्यामुल्लिखितं न तु खण्डितम्। इयता दार्ढ्यम्। एतादृशं वक्षस्तटं विषमं तिर्यग् नमितं समुद्वहन् सन्। तिर्यक्करणे हेतुमाह—कीदृशम्। रामशराघातेन दुःखितम्। तथा च तथाविधोपमर्दनिर्भरमपि वक्ष इदानीं व्रणपीडितमभूदिति रामशराघातप्रकर्षः॥

समुद्रस्य भुजावाह—

गम्भीरवणाहोए दीहे देहसरिसे भुए वहमाणो।
अहिणवचन्दणगन्धे अणहुक्खित्ते व मलअसरिआसोत्ते॥ ३॥

[गम्भीरव्रणाभोगौ दीर्घौ देहसदृशौ भुजौ वहमानः।
अभिनवचन्दनगन्धावनघोत्क्षिप्ताविव मलयसरित्स्रोतसी॥]

पक्षे सर्वमपि नपुंसकद्विवचनान्तम्। समुद्रः कीदृक्। भुजौ वहमानः। किंभूतौ। गम्भीराणां व्रणानामाभोगो विस्तारो ययोस्तौ। एवं दीर्घौ प्रलम्बौ।

देहसदृशौ देहानुमानेन पुष्टौ । अभिनवश्चन्दनस्य गन्धः सौरभं ययोस्तौ । अनघौ निर्दोषौ उत्क्षिप्तौ वेदनावशात्क्षणं क्षणमुत्तोलितौ । के इव । मलयसरित्स्रोतसी इव । ते अपि किंभूते । गम्भीरो वनानामर्थात्तटवर्तिनामाभोगो ययोः । दीर्घे । देहसदृशे मलयाकारयोग्यविस्तारवती । अभिनवानि चन्दनानि गन्धे एकदेशे ययोः । अनभस्यनाकाशेऽर्थाद्भूमौ उत्क्षिप्ते पर्वतात्त्रिपत्योच्छलिते । तथा च ते अपि मलयात्समुद्रे पतत इति । यथा ते वहमानस्तथा भुजावपीति सहोपमा । यथोक्तगुणयोगात्साधर्म्योपमेयमित्यन्ये । देहसदृशौ दीर्घाविति समानाधिकरणं वा । यथा देहस्तदनुसारेण दीर्घावित्यर्थः । एवं पक्षेऽपि 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति कोषः । सान्ततान्तनान्ता भिन्नलिङ्गा अपि प्राकृते पुंलिङ्गाः ॥

समुद्रस्य हारमाह—

लहुइअकोत्थुहविरहं मन्दरगिरिमहणसंभमे वि अमुक्कम् ।
तारेक्कावलिरअणं ससिमइरामअसहोअरं वहमाणो ॥ ४ ॥

[लघूकृतकौस्तुभविरहं मन्दरगिरिमथनसंभ्रमेऽप्यमुक्तम् ।
तारैकावलिरत्नं शशिमदिरामृतसहोदरं वहमानः ॥]

पुनः कीदृक् । तारमुद्भटमेकावलीरत्नं हारस्वरूपं वहमानः । अस्योपादेयतामाह— लघूकृतः कौस्तुभस्य विरहो येन तम् । ततोऽप्युत्तमत्वात् । अत एव मन्दरगिरिणा यन्मथनं तत्संभ्रमेऽप्यमुक्तम् । कौस्तुभादिसर्वं दत्तमेव एतत्परं रक्षितमित्यर्थः । पुनः कीदृशम् । शशिमदिरामृतानां सहोदरम् । शशिवन्निर्मलमाह्लादकं शीतलं च, मदिरावन्मदाहंकारहेतुः, अमृतवन्निर्वृतिजनकं व्याधिहरं चेति सहोदरपदगम्यम् । तथा च त्रयाणामप्यन्यथासिद्धिरस्मादितीदं रक्षितम् । अमृतकार्यकारित्वेन च तदवस्थायां धारणाज्जीवनमभूदिति भावः । 'एकावल्येकयष्टिका' इति हारावली ॥

वामबाहुमस्याह—

गरुअं उव्वहमाणो हत्थप्फरिसपडिसिद्धवणवेअल्लम् ।
रुहिरारुणरोमञ्चं खलन्तगङ्गावलम्बिअं वामभुअम् ॥ ५ ॥
(आइकुलअम्)

[गुरुकमुद्वहमानो हस्तस्पर्शप्रतिषिद्धव्रणवैकल्यम् ।
रुधिरारुणरोमाञ्चं स्खलद्गङ्गावलम्बितं वामभुजम् ॥] (आदिकुलकम्)

पुनः किंभूतः। वामभुजं वहमानः। कीदृशम्। गुरुकं व्रणितत्वाद्गुरुभूतम्। एवं हस्तस्पर्शेन दक्षिणकरपरामर्शेन प्रतिषिद्धं व्रणवैकल्यं यत्र तम्। व्रणपार्श्वसंदर्शनेन पीडाशान्तेरित्यर्थः। एवं भुजभारेण रामसंमुखगमनव्रीडया वा स्खलन्त्या वक्रीभवन्त्या गङ्गयावलम्बितं स्कन्धे समारोपितम्। एवं रुधिरेणारुणो रोमाञ्चो यत्र तथाभूतम्। तदवस्थायामपि रोमाञ्चोद्गमेन गङ्गायाः सौभाग्यं सूचितम्। रामस्य कारुण्योत्पत्तये गङ्गायाः सहागमने तात्पर्यम्॥

अथ रामनिकटागमनमाह—

आलीणो अ रहुवइं णिअअच्छाआणुलित्तमलअमणिसिलम्।
संसिअसुहोअइबं दुमं लआए व जाणईअ विरहिअम्॥ ६॥

[आलीनश्च रघुपतिं निजकच्छायानुलिप्तमलयमणिशिलम्।
संश्रितसुखोपजीव्यं द्रुमं लतयेव जानक्या विरहितम्॥]

रघुपतिमालीनः संगतश्च। समुद्र इत्यर्थात्। किंभूतम्। निजकच्छायया निजकान्त्या निजप्रतिबिम्बेन वानुलिप्ता व्याप्ता मलयमणिशिला येन तम्। समुद्रागमनजन्यानन्देन शोभाधिक्यात्। तथा च विलक्षणकान्तिभिरेव समुद्रेणापि हठात्परिचित इति भावः। एवं संश्रितैराश्रितैः सुखेनोपजीव्यं सेव्यम्। कमिव। जानक्या लतया विरहितं द्रुममिव। सीताविश्लिष्टतया लताशून्यद्रुमसाम्यम्। द्रुममपि कीदृशम्। निजातपाभावरूपच्छायानुलिप्तमलयमणिशिलम्। संशितं प्रशंसितं यत्सुखं फलदानादिना तेनोपजीव्यमादरणीयम्। वृक्षतौल्येन रामस्योन्नतिः फलदत्वं च व्यज्यते॥

अथ रामप्रणाममाह—

सरघाअरुहिरकुसुमो तिवहअवल्लीपिणद्धमणिरअणफलो।
रामचरणेसु उअही दढपवणाइद्धपाअओ व णिवडिओ॥ ७॥

[शरघातरुधिरकुसुमस्त्रिपथगावल्लीपिनद्धमणिरत्नफलः।
रामचरणयोरुदधिर्दृढपवनाविद्धपादप इव निपतितः॥]

रामचरणयोरुदधिर्निपतितः। दृढपवनेनाविद्धः प्रेरितः पादप इव। यथा वृक्षो निपततीत्यर्थः। उदधिः कीदृक्। शरघातरुधिराण्येव कुसुमानि यत्र सः। त्रिपथगारूपा या वल्ली तया पिनद्धानि मणिरत्नानि मणिश्रेष्ठान्येव फलानि यत्र तादृक्।

गङ्गाया मणिमयालंकारसत्त्वात् । रामोपहाराय वा । वृक्षोऽपि कुसुमवान् लतासंगतफलश्च भवति । पवनपातितवृक्षतौल्येन समुद्रस्य पीडाधिक्यमुक्तम् ॥

अथ गङ्गाया रामप्रणाममाह—

पच्छा अ हित्थहिअआ जत्तो च्चिअ णिग्गआ विवल्हत्थमुही ।
हरिचरणम्मि तहिं चिअ कमलाअम्बम्मि तिवहआ वि णिवडिआ ८

[पश्चाच्च त्रस्तहृदया यत एव निर्गता विपर्यस्तमुखी ।
हरिचरणे तत्रैव कमलाताम्रे त्रिपथगापि निपतिता ॥]

च पुनः पश्चात्समुद्रकृतप्रणामोत्तरं त्रिपथगापि तत्रैव हरिचरणे निपतिता । रामप्रणामं कृतवतीत्यर्थः । तत्र कुत्र । यत एव निर्गता जाता । एतेन परस्त्रिया अपि गङ्गाया रामचरणपतने धाष्ट्र्यशङ्का निराकृता । उत्पत्तिस्थानत्वात् । किंभूता । त्रस्तं हृदयं यस्याः सा । रामः किं कुर्यादित्याशयात् । एवं विपर्यस्तमुखी तिर्यङ्मुखी । त्रासेन लज्जया वा । हरिचरणे कीदृशि कमलवदाताम्रे ॥

अथ समुद्रस्य वचनमाह—

अह मउअं पि भरसहं जम्पइ थोअं पि अत्थसारब्भहिअम् ।
पणअं पि धीरगरुअं थुइसंबद्धं पि अणलिअं सलिलणिही ॥९॥

[अथ मृदुमपि भरसहं जल्पति स्तोकमप्यर्थसाराभ्यधिकम् ।
प्रणतमपि धैर्यगुरुकं स्तुतिसंबद्धमप्यनलीकं सलिलनिधिः ॥]

अथ प्रणामोत्तरं सलिलनिधिर्जल्पति । वचनमिति शेष इति कश्चित् । तेन विशेषणान्वयो भवतीत्याशयात् । तथाहि वचनं कीदृक् । समुद्रस्यावसादेन मृदुकमपि ध्वनेर्मार्दवेऽपि भरः कार्यगौरवं तत्सहम् । प्रयोजनस्य महत्त्वात् । एवं महाशयत्वेन वाक्यस्य स्तोकत्वेऽप्यर्थो वाच्यभागस्तद्रूपसारेणाभ्यधिकम् । वाच्यार्थस्य निष्पन्नत्वात् । विनयात्प्रणतत्वेऽपि धैर्येण गुरुकम् । कातरत्वाभावात् । माननीयविषयतया स्तुतियुक्तत्वेऽप्यनलीकम् । भगवद्विषयकत्वात् । वस्तुतस्तु मृदुकमपि भरसहं यथा स्यादिति सर्वं जल्पनरूपक्रियाविशेषणम् । मृदु भरसहं न भवति, स्तोकमभ्यधिकं न भवति, प्रणतं गुरु न भवति, स्तुतिसंबद्धमनलीकं न भवतीति विरोधानामाभासत्वमपि शब्दगम्यम् । अन्यस्तु वक्ष्यमाणस्कन्धकचतुष्टयेषु क्रमेण मृदुकमित्यादि विशेषणचतुष्टययोजनमाह—

अथाष्टभिस्तद्वचनस्वरूपमाह—

**दुत्तारत्तणगरुइं थिरधीरपरिग्गहं तुमे च्चिअ ठविअम् ।**

**अणुवालन्तेण ठिइं पिअं ति तुह विप्पिअं मए कह वि कअम्॥१०॥**

[दुस्तारत्वगुर्वीं स्थिरधैर्यपरिग्रहां त्वयैव स्थापिताम् ।

अनुपालयता स्थितिं प्रियमिति तव विप्रियं मया कथमपि कृतम् ॥]

हे राम, तव प्रियमिदमिति कृत्वा मया कथमपि विप्रियमसमीहितं कृतम्। मया किंभूतेन। त्वयैव स्थापितां दत्तां स्थितिं स्थैर्यमनुपालयता रक्षता। कीदृशीम्। दुस्तारत्वेन गुर्वीमतिशयिताम्। दुस्तारोऽहमिति कृत्वा व्यवस्थितामित्यर्थः। अत एव स्थिरेण धैर्येण परिग्रहो धारणं यस्यास्ताम्। तथा च भवद्दत्तामेव स्थितिमनुपालयामीति भवदाज्ञापालनेन प्रियम्, तां स्थितिं न त्यजामीति प्रकृतकार्यविरोधित्वेन विप्रियमिति स्वमार्दवप्रकाशेन मृदुकमपि स्वगाम्भीर्यस्थापनरूपत्वेन भरसहम्॥

स्थितिस्तदानीं मयैव दत्ता इदानीमपि मयैव ह्रियते को दोष इत्याशङ्क्याह—

**विअसन्तरअक्खउरं मअरन्दरसुद्धुमाअमुहलमहुअरम् ।**

**उदुणा दुमाण दिज्जइ हीरइ ण उणो तमप्पण च्चिअ कुसुमम्॥११॥**

[विकसद्रजःकलुषं मकरन्दरसाध्मातमुखरमधुकरम् ।

ऋतुना द्रुमाणां दीयते ह्रियते न पुनस्तदात्मनैव कुसुमम् ॥]

ऋतुना वसन्तादिना द्रुमाणां द्रुमेभ्यः सहकारादिभ्यः। चतुर्थ्यर्थे षष्ठी। कुसुमं दीयत उत्पाद्यते तत्पुनरात्मनैव न ह्रियते। न नाश्यत इत्यर्थः। कीदृक् कुसुमम्। विकसत्। रजोभिः परागैः कलुषं व्याप्तम्। एवं मकरन्दरूपेण रसेनाध्माता उन्मत्ता मधुकरा यत्र तत्। तथा च न केवलं पुष्पदानमात्रं किंतु तस्य विकासादिसकलसाम्राज्यसंपत्तिरपि ऋतुनैव क्रियत इति भावः। तथा च ऋतुवृक्षयोरिवावयोरपि भूष्यभूषकभाव इति। यत्राचेतनेनापि दत्तं न ह्रियते तत्र भवतैव दत्ता मर्यादा स्वयमेव हर्तुं न युज्यत इति तात्पर्यम्। स्वस्य वृक्षसाम्येन स्थावरत्वं रामस्य ऋतुसाम्येनासाधारणोपकारित्वं मर्यादायाः कुसुमसाम्येनातिकोमलत्वमिति भवत्कोपे क्षणमपि न स्थास्यतीति स्तोकमप्यर्थसारं वचनम्॥

मर्यादा मद्दत्तैव किं त्विदानीं त्वया न स्मर्यत इत्यत आह—

**किं पम्हट्ठ म्हि अहं तुह चलणुप्पण्णतिवहआपडिउण्णम् ।**

**खअकालाणलखविअं धरणिअलुद्धरणविलुलिअं अप्पाणम्॥१२॥**

[किं प्रस्मृतवानस्म्यहं तव चरणोत्पन्नत्रिपथगाप्रतिपूर्णम् ।
क्षयकालानलक्षपितं धरणितलोद्धरणविलुलितमात्मानम् ॥]

हे राम, अहमात्मानं किं विस्मृतवानस्मि, अपि तु न। किं तु स्मरामीत्यर्थः। कीदृशम्। प्रथमं प्रलयानलेन क्षपितं शोषितम्। अथ सृष्ट्युपक्रमे वराहमूर्तिना भवतैव धरणितलोद्धरणे चरणक्षेपादिना विलुलितमुपमर्दितम्। तदनु वामनमूर्तेस्तव चरणोत्पन्नया गङ्गया प्रतिपूर्णमतिसंनद्धम्। तथा च पूर्ववदपकारोपकारसमर्थेनेदानीमपि तथा कर्तुं शक्यत इति जानन्नपि मर्यादां न त्यजामीति प्रणतिरूपमप्यकातरतया धैर्यगुरुकम् ॥

इदानीं युगमाहात्म्येन मम पूर्ववत्सामर्थ्यं नास्तीति जानन्मर्यादां न त्यजसीत्याशङ्क्याह—

चलणेहिँ महुविरोहे दाढाघाएहिँ धरणिवेढुद्धरणे ।
सोअकिलिन्तेण तुमे इण्हि दहमुहवहे सरेहिँ विलुलिओ ॥१३॥

[चरणाभ्यां(चलनैर्वा) मधुविरोधे दंष्ट्राघातैर्धरणिवेष्टोद्धरणे ।
शोकक्लान्तेन त्वया इदानीं दशमुखवधे शरैर्विलुलितः ॥]

हे राम, पूर्वं मधोर्दैत्यस्य विरोधो नाशस्तन्निमित्तं पञ्चसहस्रवर्षपर्यन्तं चरणाभ्यां संचरद्भ्यामित्यर्थात् चलनैर्वा। तदनु धरणिवेष्टोद्धरणनिमित्तं वराहमूर्तिना दंष्ट्राघातैः। एतत्कार्यद्वयस्य समुद्र एव वृत्तत्वात्। इदानीं सीताविश्लेषसमये शोकक्लान्तेन त्वया दशमुखवधनिमित्तं शरैरहं विलुलितो विमर्दितोऽस्मि। सर्वत्र निमित्तसप्तमी। तथा च तदानीमनुषङ्गेण यथातथा वृत्तमिदानीं तु क्रोधपात्रमेवेति निरपेक्षं सीताविरहविह्वलो भवानिति दृढतरं शरप्रहारेण पूर्वापेक्षयाप्यधिकं कदर्थितोऽस्मीति भावः। एवमियद्भिः कर्मभिर्न त्वं मानुष इति स्तुतिसंबद्धमप्युपालम्भवचनं प्रत्यक्षत एवावधृतार्थमित्यनलीकम् ॥

अथ सामवचनमाह—

णिअआवत्थाहि वि मे एअं धीरेण विप्पिअं धीर कअम् ।
जं णेण पअइसोम्मा कह वि विसंवाइआ तुह मुहच्छाआ ॥१४॥

[निजकावस्थाया अपि मे एकं धैर्येण विप्रियं धीर कृतम् ।
यदनेन प्रकृतिसौम्या कथमपि विसंवादिता तव मुखच्छाया ॥]

हे धीर, मम निजकावस्थाया अपि विप्रियमेकं धैर्येण कृतम्। किं तदित्याह—यत्प्रकृत्या स्वभावेन सौम्या तव मुखश्रीरनेन धैर्येण विसंवादितान्यथा कृता। क्रोधवशादसौम्येत्यर्थः। तथा च शरानलदाहदौस्थ्यरूपमेकमप्रियं मम धैर्येण कृतम्, एतदपेक्षयापि तव चित्तं क्रोधात्क्राम्यतीति विप्रियतरं कृतम्। यदहं निजदुःखादपि भवद्दुःखेन महद्दुःखमासादयामीति भावः। सदा भर्तव्ये प्रणते च मयि किमित्येवं रोषरौद्रस्त्वमसीति तात्पर्यम्॥

अथ प्रणतिवचनमाह—

**एअं तुह एआरिससुरकज्जसहस्सखेअवीसामसहम्।**

**जअपव्वालणजोग्गं परिरक्खसु पलअरक्खिअं जलणिवहम्॥१५॥**

[एवं (एतं वा) तवैतादृशसुरकार्यसहस्रखेदविश्रामसहम्।

जगत्प्लावनयोग्यं परिरक्षस्व प्रलयरक्षितं जलनिवहम्॥]

एवमनेन प्रकारेण एतं वा जलनिवहं परिरक्षस्व। बाणमुपसंहरेत्यर्थः। रक्षणप्रयोजनमाह—तवैतादृशं रावणवधादिरूपं यत्सुरकार्यसहस्रं तेन यः खेदस्तस्मिन्सति विश्रामसहं विश्रामक्षमम्। तथाच पूर्वं मधुकैटभादीन्हत्वा इहैव सुप्तवानसीति पुनरपि रावणं हत्वा शयिष्यस इति भावः। ननु रावणवध एव जलशोषणात्स्यादित्याशङ्क्य प्रयोजनान्तरमप्यस्तीत्याह—जगत्प्लावनयोग्यं अत एव प्रलयार्थं रक्षितम्। तथा चास्मिन्नाशिते तवैव तत्तत्कार्यं व्याहतं स्यादित्येकं संधित्सतोऽपरं प्रच्यवत इति भावः॥

जलदाहेन शुष्के खातवर्त्मनि पातालेन पारगमनमप्यनुपपन्नमित्याह—

**अपरिट्ठिअमूलअलं जत्तो गम्मइ तहिं दलन्तमहिअलम्।**

**ण हु सलिलणिब्भरं चिअ खविए वि ममम्मि दुग्गमं पाआलम्॥१६॥**

[अपरिस्थितमूलतलं यतो गम्यते तत्र दलन्महीतलम्।

न खलु सलिलनिर्भरमेव क्षयितेऽपि मयि दुर्गमं पातालम्॥]

सलिलनिर्भरं सलिलपूर्णमेव पातालं दुर्गममिति न खलु। येन संचाराय जलानि दहसि। अपि तु क्षपिते शोषितेऽपि मयि दुर्गमम्। जलशोषेऽपि पारगमनमशक्यमित्यर्थः। 'सलिलणिब्भरचिअ' इति पाठे सलिलनिर्भर एव मयि पातालं दुर्गममिति न किं तु। क्षपितेऽपीत्यर्थः। अत्र हेतुमाह—पातालं कीदृक्। अपरि-

श्रितं न परि सर्वतोभावेन स्थितम् । अदृढमित्यर्थः । एवंभूतं मूलतलं यस्य । जलार्द्रत्वात् । अत एव यतो यत्र गम्यते चरणन्यासः क्रियते तत्रैव दलद्विधाभवन्महीतलं यत्र तथाभूतम् । तथा च जलशोषेऽपि खाताभ्यन्तरपाताले यत्रैव पदन्यासः कर्तव्यस्तत्रैव प्रशिथिलत्वात्संचारो न स्यादिति प्रकारान्तरमनुसरणीयमिति भावः ॥

अथ सेतुरूपप्रकारोपन्यासमुखेन प्रकृतमुपसंहरति—

तं कालस्स णिसम्मउ कह वि दरुक्खित्तदसमकण्ठक्खलिअम् ।
घडिअगिरिसेउबन्धं चिरआलाउञ्चिअं दहमुहम्मि पअम् ॥ १७ ॥

[तत्कालस्य निषीदतु कथमपि दरोत्क्षिप्तदशमकण्ठस्खलितम् ।
घटितगिरिसेतुबन्धं चिरकालाकुञ्चितं दशमुखे पदम् ॥]

यतो जलशोषादपि पारगमनं नास्ति ततो हेतोर्घटितो निर्मितो गिरिभिः सेतुबन्धः सेतुयोजनं यस्मै तद्यथा भवति तथा कालस्य यमस्य पदं दशमुखे कथमपि येन तेन प्रकारेण निषीदतु । रामस्य पारगमने सति दशमुखनाशः स्यादिति रावणशिरसि यमपदन्यासे सेतुबन्धस्य प्रयोजकत्वमिति तादर्थ्येन क्रियाविशेषणत्वम् । किंभूतं पदम् । ईषत्खण्डिताद्दशमकण्ठात्स्खलितमपव्यस्तम् । अत एव चिरकालं व्याप्याकुञ्चितमुत्तोल्य धृतं न तु स्थापितम् । अयमाशयः—नवसु निकृत्तेषु दशमं कण्ठमुत्खण्डयितुं प्रवृत्तो रावणः शिवेन वरं दत्त्वा न्यवर्त्यत इति तत्कर्तने रावणमृत्युस्तदकर्तने नेति यमः किंचिन्निकृत्ते कण्ठे पदमर्पयितुमुपक्रमते पश्चान्महेशवरप्रदानेन पूर्वावस्थामुपेयुषि जीवितनिश्चयान्निवर्तयतीति स्खलितपदार्थः । प्रकारान्तरं लब्धमित्याशयाकुञ्च्य धारणम् । तथा च स प्रकारो नास्त्येवेत्यन्य एव सेतुबन्धनरूपः प्रकारोऽयमास्तामिति समुद्रमन्त्रणा ॥

अथ सेतुबन्धनाज्ञामाह—

अह जअदुप्परिअल्ले दहमुहकुविएण पवअवइपच्चक्खम् ।
रहुणाहेण समुद्दे वालिम्मि व बाणणिअमिअम्मि पसन्ते ॥ १८ ॥

[अथ जगद्दुष्परिकलनीये दशमुखकुपितेन प्लवगपतिप्रत्यक्षम् ॥]
रघुनाथेन समुद्रे वालिनीव बाणनियमिते प्रशान्ते ॥]

अथ सेतुबन्धमन्त्रणोत्तरं रामस्याज्ञप्तिराज्ञा प्लवंगमेषु विलग्नेत्युत्तरस्कन्धकेनान्वयः । सेतुबन्धाय रामाज्ञा बभूवेत्यर्थः । कस्मिन्सति । प्लवगपतेः प्रत्यक्षं सुग्रीवस्याग्र इत्युभयत्र दशमुखे कुपितेन रघुनाथेन वालिनीव समुद्रे बाणेन नियमिते आयत्तीकृते प्रशान्ते सति । यथा बाणनियमितो वाली प्रशान्तस्तथा समुद्रोऽपि । सेतुबन्धग्रहणोन्मुखत्वेन संप्राप्तवानित्यर्थः । समुद्रे वालिनि वा कथंभूते । जगता दुष्परिकलनीये दुस्तरणीये, पक्षे दुर्जये ॥

पवआहिवइविइण्णा रामाणन्ती पवंगमेसु विलग्गा ।
सेसफणाविच्छूढा तिहुअणसारगरुई महि व्व भुअंगे ॥ १९ ॥
( जुग्गअम् )

[प्लवगाधिपतिवितीर्णा रामाज्ञप्तिः प्लवंगमेषु विलग्ना ।
शेषफणाविक्षिप्ता त्रिभुवनसारगुर्वी महीव भुजंगेषु ॥]
( युग्मकम् )

रामाज्ञप्तिः कीदृशी । प्लवगाधिपतिना वितीर्णा दत्ता । सर्वत्र प्रकाशितेत्यर्थः । महीव । यथा शेषफणेन विक्षिप्तावतारिता मही भुजंगेषु विलगति । यदा शेषो महीमवतारयति तदा भुजंगा एव धारयन्तीत्यर्थः । पुना रामाज्ञप्तिर्मही वा किंभूता । त्रिभुवनस्य यत्सारं प्रयोजनं रावणवधरूपं तेन गुर्वी आदरणीया । पक्षे त्रिभुवनस्य सारेण बलेन धनेन वा गौरवयुक्ता । त्रैलोक्यस्यैव भारो धनानि च भूमावेव तिष्ठन्तीत्यर्थः । महाराष्ट्रभाषायां बहुवचनेऽप्येकवचनप्रयोगाद्भुअंग इत्युक्तम् ॥ युग्मकम् ॥

कपीनां प्रस्थानमाह—

तो हरिसपढमतुलिए चलिआ फुट्टन्तपम्हविसमूससिए ।
वेउक्खअसीमन्ते पवआ धुणिऊण केसरसडुग्घाए ॥ २० ॥

[ततो हर्षप्रथमतुलितांश्चलिता स्फुटत्पक्ष्मविषमोच्छ्वसितान् ।
वेगोत्खातसीमन्तान्प्लवगा धूत्वा केसरसटोद्घातान् ॥]

ततो रामाज्ञानन्तरं प्लवगाश्चलिताः । पर्वतानयनायेत्यर्थात् । किं कृत्वा । समुद्रेण सेतुः स्वीकृत इति हर्षेण प्रथमं तुलितानुत्थापितान्केसरसटानामुद्घातान्समूहान्धूत्वा कम्पयित्वा । आनन्देन मस्तकोन्नतौ सटानामुन्नतिः, अथ जातिस्वाभाव्या-

त्कम्पनमित्यर्थः । कीदृशान् । स्फुटद्भिर्मिथः पृथग्भवद्भिः पक्ष्मभिर्विषमं यथा स्यादेवमुच्छ्वसितानुत्फुल्लान् । कम्पने सति परस्परविभागादित्यर्थः । एवं वेगेनोत्खातः प्रकटीकृतः सीमन्तो येषु तान् । धावनेन सटानां पार्श्वद्वये पातान्मध्ये रेखाभिव्यक्तिरिति भावः । केशाग्रं पक्ष्म ॥

अथ कपिचलनात्समुद्रक्षोभमाह—

**पवअक्खोहिअमहिअलधुअमलअपडन्तसिहरमुक्ककलअलो ।**
**उद्धाइओ अणागअघडन्तधरणिहरसंकमो व्व समुद्दो ॥ २१ ॥**

[प्लवगक्षोभितमहीतलधूतमलयपतच्छिखरमुक्तकलकलः ।
उद्धावितोऽनागतघटमानधरणिधरसंक्रम इव समुद्रः ॥]

समुद्र उद्धावित उच्छलितः । कीदृक् । प्लवगैः क्षोभिते महीतले धुतस्य मलयस्य पतद्भिः शिखरैर्मुक्तः प्रकाशितः कलकलः कोलाहलो यत्र तादृक् । कपिचलने भूचलनं तेन मलयकम्पस्तेन तच्छिखरपतनं तदभिघातेन च समुद्रे कोलाहलाकारः शब्दो जलानामुच्छलनं च वृत्तम् । अत्रोत्प्रेक्षते—अनागते भविष्यत्सेतुबन्धपूर्वकाल एव घटमानः संपद्यमानो धरणिधरैः संक्रमो जलयन्त्रपथो यत्र तथाभूत इव । सेतुबन्धसमये पर्वतानामभिघातेन यः शब्दो यच्च वा जलोच्छलनादिकं भविष्यति तदिदानीमेव मलयशिखरपतनाज्जायत इत्यर्थात् । अथवा मलयशिखरपतनं न भवति किं तु सेतुसंक्रमघटनमित्युत्प्रेक्ष्य पुनस्तज्जन्योपमर्दत्रासेन कलकलं कृत्वा क्वचिदन्यत्र गन्तुं धावित्वा चलित इत्युद्धावितपदेन सशब्दजलोच्छलनं पलायनत्वेनोत्प्रेक्षितम् । अन्योऽप्यकस्माद्भयहेतुमवलोक्य कोलाहलं कृत्वा धावित्वा गच्छतीति ध्वनिः । अनागतो भविष्यन्नेव घटमानो धरणीधरसंक्रमः स इवेति वा ॥

अथ कपिचलने भूपर्वतयोः क्षोभमाह—

**कम्पइ महेन्दसेलो हरिसंखोहेण दलइ मेइणिवेढम् ।**
**सइदुद्दिण्णतणाओ णवर ण उद्धाइ मलअवणकुसुमरओ ॥२२॥**

[कम्पते महेन्द्रशैलो हरिसंक्षोभेण दलति मेदिनीवेष्टम् (पृष्ठं वा) ।
सदादुर्दिनार्द्र केवलं नोद्धावति मलयवनकुसुमरजः ॥]

हरयो वानरास्तेषां संक्षोभेण पर्वताहरणोद्योगेनेतस्ततो गत्वा तेभ्यः संक्षोभेण वा महेन्द्रप्रभृतीनां शैलानां कम्पो मेदिनीमण्डलस्य च दलनं सर्वमेव जायते। केवलं मलयवनकुसुमानां रजः परागो नोद्धावति नोर्ध्वं गच्छतीत्यर्थः । तत्र हेतुमाह—कीदृशम् । सदा दुर्दिनेन मेघच्छन्नतया तज्जलसंबन्धादार्द्रम् । अतो लघुत्वाभावादित्याशयः । तथा च महतां संभ्रमे महान्त एव खिद्यन्ते लघूनां किमपि नेति ध्वनिः । यद्वा मलयवनकुसुमरजस्तूर्ध्वं न गच्छति किं तु केवलं दुर्दिनार्द्रमतो गुरुत्वादधः पततीत्यर्थः । तेन मलयोऽपि कम्पित इति ध्वनितम् ॥

अथ कपीनामुत्फालमाह—

तो संचालिअसेलं कह वि तुलग्गेण समघडन्तकम्पम् ।
दूरं पवंगमबलं णहमुहलग्गवसुहं णह उप्पइअम् ॥ २३ ॥

[ततः संचालितशैलं कथमपि तुलाग्रेण समघटमानकम्पम् ।
दूरं प्लवंगमबलं नखमुखलग्नवसुधं नभ उत्पतितम् ॥]

ततस्तदुद्योगानन्तरं नखानां मुखेषु लग्ना वसुधा यस्य । उल्लवनसमये करचरणेन भूम्यवष्टम्भनात् । तथाभूतं सत्कपिबलं दूरं व्याप्य नभ उत्पतितमूर्ध्वमुत्प्लुत्य गतम् । कीदृक् । संचालिताः शैला येन । भूमेर्यन्त्रणत्यागाभ्यां नमनोन्नमनात् । एवं कथमपि येन तेन प्रकारेण तुलाग्रं काकतालीयसंवादस्तेन सममेकदैव घटमानः कम्पः स्पन्दो यस्य । आज्ञानन्तरं परस्परमनपेक्ष्यैव सर्वे उत्पतितुमारब्धा दैवादेकदैवोत्पतिता इत्युद्योगप्रकर्षः । संचालिताः शैला यत्र तथा यथा स्यादिति क्रमेण व्याख्याने त्रितयमपि क्रियाविशेषणं वा ॥

अथ कपीनां भूमेरवनतिमाह—

उप्पअणोणअमहिअलणइमुहपडिसोत्तपत्थिओ सलिलणिही ।
जलणिवहाहअसिढिले पवउच्छेवणसहे करेइ महिहरे ॥ २४ ॥

[उत्पतनावनतमहीतलनदीमुखप्रतिस्रोतःप्रस्थितः सलिलनिधिः ।
जलनिवहाहतशिथिलान्प्लवगोत्क्षेपणसहान्करोति महीधरान् ॥]

उत्पतनादवनतं यन्त्रणादधोनीतं यन्महीतलं तत्र नदीमुखेन नदीसंगमस्थानेन प्रतिस्रोतसा स्रोतःप्रतिलोमेन विपरीतक्रमेण प्रस्थितः सलिलनिधिर्महीधरान् प्लवगानामुत्क्षेपणसहानुत्थापनयोग्यान्करोति । अत्र हेतुमाह—कीदृशान् । जल-

निवहेनाहतान् ताडितान् अथ शिथिलानदृढमूलान् । अयमर्थः—पर्वतानाहर्तुमुत्तरामाशामाश्रित्य प्लवगैरुत्प्लवनाय चरणरोपणे कृते यन्त्रणात्तद्दिग्भूमेरवनतौ समुद्रस्य चोन्नतौ तज्जलं निम्नीभवत्तत्प्रविष्टनदीमार्गेण निम्नीभवत्सु पर्वतेषु पतितं तत्संबन्धेन च पर्वतमूलमृत्तिकानां पङ्कीभवनेन पर्वतोत्थापनसाद्गुण्यमासीदिति यात्रासाद्गुण्यसूचनम् । अन्यत्रापि दृढनिखातस्तम्भादिकं मूले जलं दत्त्वोद्ध्रियत इति ध्वनिः ॥

अथ कपिभिराक्रान्तं गगनमाह—

**फुरमाणजलणपिङ्गलणिरन्तरुप्पइअपवअ(बल)पेल्लिज्जन्तो ।**
**जत्तो दीसइ तत्तो णज्जइ धूमणिवहो त्ति गअणुद्देसो ॥ २५ ॥**

[स्फुरज्ज्वलनपिङ्गलनिरन्तरोत्पतितप्लवग(बल)प्रेर्यमाणः ।
यतो दृश्यते ततो ज्ञायते धूमनिवह इति गगनोद्देशः ॥]

स्फुरज्ज्वलनवत्पिङ्गलं कपिशं निरन्तरमन्तरशून्यं घनमुत्पतितं यत्प्लवगबलं तेन प्रेर्यमाण ऊर्ध्वं नीयमानः । यथा यथा प्लवगबलमूर्ध्वं गच्छति तथा तथा गगनमप्यूर्ध्वं गच्छतीति बुद्धिविषयत्वात्पूर्यमाण इति वा। एवंभूतो गगनोद्देशो यत्र दृश्यते तत्र धूमनिवह इति ज्ञायते । धूमत्वेन प्रतीयत इत्यर्थः । अत्र पिङ्गलत्वात्तत्वर्तित्वाच्च कपीनामग्निना श्यामत्वादूर्ध्ववर्तित्वाच्च गगनस्य च धूमेन साम्यम् । प्लवगानामुत्प्लवने गगनमुपर्येव दृष्टं परत्र सर्वत्र प्लवगा एवेति भावः ॥

अथ कपीनामब्धौ प्रतिबिम्बमाह—

**दीसइ दूरुप्पइअं उअहिम्मि अहोमुहोसरन्तच्छाअम् ।**
**पाआलं व अइन्तं धरणिहरुद्धरणकङ्खिअं कइसेणम् ॥ २६ ॥**

[दृश्यते दूरोत्पतितमुदधावधोमुखापसरच्छायम् ।
पातालमिवायमानं धरणिधरोद्धरणकाङ्क्षितं कपिसैन्यम् ॥]

दूरं व्याप्योत्पतितमतिदूरमूर्ध्वं गतं कपिसैन्यं दृश्यते । किंभूतम् । उदधौ समुद्रे अधोमुखी पातालाभिमुखी सती अपसरन्ती अधो गच्छन्ती छाया प्रतिबिम्बो यस्य तथाभूतम् । अयमर्थः—सिन्धोरसंमुखेऽपि तीरे करचरणावष्टब्धभूमीनामपि कपीनामुद्देश्योर्ध्वदेशत्वेनोर्ध्वमुखीभूय कृतोत्फालानां यथायथातिदूरमूर्ध्वगमनं तथातथा सिन्धुपयसि प्रकटीभूतस्याधोमुखस्य प्रतिबिम्बस्यातिदूरमधोगमनं प्रतिभासते तदेतदुत्प्रेक्ष्यते। पुनः किंभूतम्। धरणीधराणामर्थात्पातालवर्तिनामुद्धरणमूर्ध्वमाहरणं

काङ्क्षितं यस्य तत्। काङ्क्षितधरणीधरोद्धरणमिति वा। प्राकृतत्वात्। एवंभूतं सपातालमिवायमानं गच्छत्। तथा च प्रतिबिम्बव्यूहः पातालं न गच्छति किं तु तत्रत्यपर्वतानाहर्तुं कपिव्यूह एवेत्याशयः। प्रतिबिम्बाधिकरणस्याधोवर्तित्वे ऊर्ध्वमुखस्याधोमुख एव प्रतिबिम्बो भवति प्रतिबिम्बप्रतियोगिनश्च व्यवहितत्वेऽप्यतिदूरमूर्ध्वगमने प्रतिबिम्बः प्रकटीभवति अतिदूरं चाधो गच्छतीत्युक्तं दूरोत्पतितमित्यवधेयम्। 'णज्जइ' इति पाठे पातालमिवायमानमिति ज्ञायत इत्यर्थः॥

अथ कपीनामाकाशव्यापकत्वमाह—

**अदिट्ठदिसाणिवहं जाअं पवअबलसंणिरुद्धालोअम्।**
**विच्छिण्णाअवकसणं दिअसमुहे वि दिअसावसाणे व णहम्॥२७॥**

[अदृष्टदिङ्निवहं जातं प्लवगबलसंनिरुद्धालोकम्।
विच्छिन्नातपकृष्णं दिवसमुखेऽपि दिवसावसान इव नभः॥]

नभो दिवसावसान इव दिवसमुखेऽपि विच्छिन्नातपकृष्णं जातं विच्छिन्न आतपो यत्र तद्विच्छिन्नातपं अत एवातपाभावात्कृष्णं श्यामम्। यथा आतपाभावेन नभः श्यामं भवति तथा प्रातरप्यातपाभावात्कृष्णं जातमित्यर्थः। अत्र हेतुमाह— कीदृक्। अदृष्टो दिङ्निवहो यत्र तथा। एवं प्लवगबलेन संनिरुद्धो व्यवहित आलोकः सूरतेजो यत्र तत्। तथा च सौरालोकनिरोधात्तत्सत्त्वकालेऽपि नीलमभूदित्याशयः॥

अथ कपीनामवपतनमाह—

**ओवइआ अ सरहसं तंसट्ठिअपुट्ठिणीसरन्तरविअरा।**
**सेलेसु मुक्ककलअलपडिरवभरिअकुहरोअरेसु पवंगा॥२८॥**

[अवपतिताश्च सरभसं तिर्यक्स्थितपृष्ठनिःसरद्रविकराः।
शैलेषु मुक्तकलकलप्रतिरवभरितकुहरोदरेषु प्लवंगाः॥]

प्लवंगाः शैलेषु सरभसं यथा स्यात्तथा अवपतिताश्च। अवतीर्णा इत्यर्थः। किंभूताः। तिर्यक्स्थितं यत्पृष्ठं तस्मान्निःसरन्तो रविकरा येभ्यस्ते। पृष्ठस्य तिर्यग्भावेनावकाशलाभात्। शैलेषु कीदृशेषु। मुक्तोऽप्रतिरुद्धः प्रकटीकृतो यः कलकलः पर्वतलाभानन्दजन्मा तत्प्रतिरवेण भृतानि पूर्णानि कुहराणां कंदराणामुदराणि येषां तेषु। तावत्तादृशवानरकोलाहलप्रतिरवपूरणीयत्वेन कंदरोत्कर्षात्पर्वतोत्कर्षः।

बस्तुतस्तु मुक्त इति क्तप्रत्ययेन पूर्वमेव प्रस्थानसमये समुद्रतीरे कृतो यः कलकलस्तत्प्रतिरवेण भृतानि पूर्णानीत्यर्थे पूर्णत्वस्य विद्यमानत्वेन प्रतिरवशान्तिर्यावन्नाभूत्तावदेवावपतिता इति वेगस्यातिशयः सूचितः । भृत इत्यस्यादिकर्मक्तान्तत्वे भ्रियमाणानीत्यर्थेन समुद्रतीरमुक्तकलकलप्रतिरवेण कंदराभरणस्य वानरावपतनस्य च तुल्यकालत्वे ततोऽप्यतिशयो लभ्यते वेगस्येति मदुन्नीतः पन्थाः ॥

अथ वानराणां पर्वतप्रवेशेऽपि कार्यसिद्धिसाद्गुण्यमाह—

**वेओवइआण अ सिं जाअं दलिअमहिसंधिबन्धणमुक्कम् ।**
**उक्खलिअतुलेअव्वं कह वि भुअंगधरिअट्ठिअं गिरिआलम् ॥२९॥**

[वेगावपतितानां चैषां जातं दलितमहीसंधिबन्धनमुक्तम् ।
उत्खण्डिततुलयितव्यं कथमपि भुजंगधृतस्थितं गिरिजालम् ॥]

गिरिजालं वेगेनावपतितानामधः समागत्य शिखरस्थितानामेषां कपीनामुत्खण्डितं सत्तुलयितव्यमुत्तोलनयोग्यं जातम् । अत्र हेतुमाह—कीदृक् । दलितं यन्मह्या समं संधिबन्धनं तेन मुक्तमुद्गीर्णम् । दलितया मह्या संधिबन्धनेन मुक्तमिति वा । उद्गीर्णं चेत्कुतो न पतितमित्यत आह—कथमपि कष्टसृष्ट्या भुजंगेन मूलवर्तिना धृतं सत्स्थितम् । शिरसि वेगोपगतवानराभिघातेन मूले विशीर्णभूमिकतया भूमिपर्वतसंधिबन्धशैथिल्येन कपीनामुत्तोलनमात्रापेक्षि जातमित्यर्थः । एतेन वानराणां बलवत्त्वं तथाभूतवानरसहितनिरवलम्बपर्वतधारणेन भुजंगानां च महत्त्वं सूचितम् ॥

अथ पर्वतोत्पाटनारम्भमाह—

**आढत्ता अ तुलेउं उरपडिअविसट्टगण्डसेलद्धन्ते ।**
**कुविअमइन्दोवग्गिअसंखोहप्फिडिअवणगए धरणिहरे ॥ ३० ॥**

[आरब्धाश्च तुलयितुमुरःपतितविशीर्णगण्डशैलार्धान्तान् ।
कुपितमृगेन्द्रावगृहीतसंक्षोभस्फेटितवनगजान्धरणीधरान् ॥]

धरणीधरान् तुलयितुमारब्धाश्च । प्लवंगा इत्यर्थात् । कीदृशान् । उरसि कपीनामित्यर्थात् । पतिताः सन्तो विशीर्णाः खण्डखण्डीभूता गण्डशैलैकदेशा येषां तान् । शिखरादवतीर्य कपिभिरुत्पाटनाय तिर्यक्कृतानां गिरीणामूर्ध्वतः पततामवपतनदलितगण्डशैलखण्डानां शतखण्डीकरणेन वक्षसो विस्तीर्णत्वं बलवत्त्वं दृढत्वं च सूचितम् । एवं कुपितमृगेन्द्रैरवगृहीता अवस्कन्दिताः सन्तः संक्षोभेण वानरागमनज-

न्यसंभ्रमेण स्फेटिताः खरक्षाकुलचित्ततया त्यक्तत्वेन बहिष्कृता वनगजा येषु तान् । सिंहानामवगृहीतवनगजवहिर्गमने संक्षोभस्याधिक्यमुक्तम् ॥

अथ शैलेषूत्पाटनाय कपीनां हृदयावष्टम्भनमाह—

वच्छुत्थङ्घिअकडआ तो ते कडअपडिअट्टलिअवच्छअडा ।
सेलेसु सेलगरुआ पवआ पवएसु महिहरा अ पहुत्ता ॥ ३१ ॥

[वक्षउत्तम्भितकटकास्ततस्ते कटकप्रतिघृष्टवक्षस्तटाः ।
शैलेषु शैलगुरवः प्लवगाः प्लवगेषु महीधराश्च प्रभूताः ॥]

ततः शैलानां तिर्यक्करणानन्तरं प्लवगाः शैलेषु प्रभूताः संमिता जाताः । परिमाणतौल्याच्च पुनः प्लवगेषु महीधराः प्रभूताः सदृशा जाताः । अत्र हेतुमाह—कीदृशाः प्लवगा महीधरा वा । शैलवद्गुरवो बृहदाकाराः । पक्षे शैलं शिलासमूहस्तेन गुरवो महान्तः । तथा च द्वयोरपि तुल्याकारत्वेन संपुटवत्संमितिर्जातेत्यर्थः । तदेव तुल्यतयोपपादयति—वक्षसा उत्तम्भितमुत्थापितं कटकं नितम्बः पर्वतानां यैस्ते प्लवगाः । कटकेन प्रतिघृष्टमुत्तम्भनानन्तरं घृष्टं वक्षस्तटं कपीनां यैस्ते महीधराः । तथा च वक्षःकटकयोरपि तुल्याकारत्वं तुल्यव्यापारत्वं चेत्येका मामकी व्याख्यासरणिः । शैलेषु प्लवगाः प्लवगेषु शैलाः प्रभूताः सदृशा वृत्ताः । तेन यावन्तः पर्वतास्तावन्तः कपयो यावन्तश्च कपयस्तावन्तश्च पर्वता इत्युक्तिवैचित्र्येण प्रत्येकमेकैकेन संबद्धा इत्यन्यूनातिरिक्तता जातेत्यर्थः । इत्युत्तरार्धेन द्वयेषामपि संख्यासाम्यम् । पूर्वार्धेन तु वक्षःकटकयोस्तुल्यताप्रतिपादनमुखेन परिमाणसाम्यमिति श्लिष्टं प्रभूतपदमित्यपरा । सांप्रदायिकास्तु प्लवगा इत्यस्यैव विशेषणत्रयमित्यर्थादाकारसाम्यमिति व्याचक्षते ॥

अथ कपीनां शैलोत्पाटनप्रकारमाह—

पवअभुअणोल्लिआणिअमहिहरपडिपेल्लणोणउण्णअविसमा ।
जाआ पलोट्टिओअहिवारंवारभरिआ महिअलद्धन्ता ॥ ३२ ॥

[प्लवगभुजनोदितानीतमहीधरप्रतिप्रेरणावनतोन्नतविषमाः ।
जाता प्रलुठितोदधिवारंवारभृता महीतलार्धान्ताः ॥]

महीतलैकदेशाः प्रलुठितेन । भूमावित्यर्थात् । उच्छलितेनेत्यर्थः । तथाभूतेनो-

दधिना वारंवारं भृताः पूर्णा जाताः । कीदृशाः । प्लवगभुजाभ्यां नोदितः प्रेरितोऽथानीत आकृष्टो यो महीधरस्तेन यत्प्रतिप्रेरणं भूयोभूयः प्रेरणं तेन नता नम्रा अथोन्नता उन्नम्राः सन्तो विषमाः समताशून्याः । तथा च कपिभिर्यदा हृदयावष्टम्भेन भुजाभ्यां पर्वतानामुत्तरदिगभिमुखप्रेरणालक्षणं नोदनं क्रियते तदा प्लवगावष्टब्धपर्वतभरावभुग्नस्तदुत्तरभूमिभागः समुन्नतदक्षिणभूमिभागस्थसमुद्रवारिभिरुच्छलद्भिः पूर्यते यदा पुनर्दक्षिणदिगभिमुखाकर्षणलक्षणमानयनं क्रियते तदा पर्वतावष्टब्धप्लवगभरावभुग्ने दक्षिणभूमिभागे तानि जलानि पुनः समुद्र एव प्रविशन्तीति शैलानां दृढमूलत्वं कपीनामुद्योगशीलत्वं च वारंवारपदेन व्यज्यते । यद्वा ऊर्ध्वाधःक्रमेण पर्वतोत्पाटनप्रयत्ने यदा पर्वतानामधोयन्त्रलक्षणं नोदनं तदा तद्भरादवनता भूमिरुन्नतसमुद्रजलेन परितः पूर्यते । यदा तूत्थापनलक्षणमानयनं तदा तदवष्टब्धभूमेरुन्नतत्वात्तज्जलमवनते समुद्र एव प्रविशतीति तात्पर्यम् । न चार्धान्तपदासंगतिः । समुद्रानवच्छिन्नस्य द्वीपान्तरस्य व्यावर्त्यत्वादिति भावः । अन्यदपि स्तम्भादि तिर्यक्क्रमेणोर्ध्वाधःक्रमेण वा संचार्योत्पाट्यत इति ध्वनिः । पर्वतानां नोदनाकर्षणाभ्यां दक्षिणभूमिभाग एव नमन्नुन्नमन्समुद्रजलेन पूर्यते परिह्रियते चेति ऋजवः । वारंवारशब्दोऽपि पौनःपुन्यवाचीत्यवधेयम् । तथाहि—'वारंवारेण लब्धो जगदुपरि मया देवपादप्रसादः' ॥

अथ कपीनामतिमहत्पर्वतोत्पाटनमाह—

**विसहिअवज्जप्पहरा उक्खम्भन्ति खअमारुअडिक्खम्भा ।**
**अगणिअवराहणिहसा पलअजलुत्थङ्घपब्बला धरणिहरा ॥ ३३ ॥**

[विसोढवज्रप्रहारा उत्खायन्ते क्षयमारुतप्रतिस्तम्भाः ।
अगणितवराहनिघर्षाः प्रलयजलोत्तम्भप्रबला धरणीधराः ॥]

धरणीधरा उत्खायन्ते उत्पाट्यन्ते । कीदृशाः । विसोढा वज्रप्रहारा अर्थादिन्द्रकृता यैस्ते । एवं प्रलयमारुतानां प्रतिस्तम्भाः प्रतिरोधार्गलाः । अर्गलया प्रतिरोधः क्रियत इति वस्तुगतिः । एवमगणिता वराहस्य भगवतो निघर्षाः कायकण्डूयनादिव्यापारा यैः । एवं प्रलयजलानामुत्तम्भ ऊर्ध्वप्रसरणं तत्र प्रबलाः समर्थाः । दृढतरद्रव्यप्रतिहतं जलमूर्ध्वमुत्तिष्ठतीति विशेषणचतुष्टयेन पर्वतानां दृढमूलत्वविस्तृतत्वतुङ्गत्वचिरकालीनत्वानि व्यज्यन्ते ॥

अथ पर्वतानामुत्तोलने विशीर्णतामाह—

**जलओवट्टविमुक्का अणन्तरोइण्णसरअवन्थावडिआ ।**
**एक्कक्खेवुग्गाहिअदरवसुआअविसआ विसट्टन्ति गिरी ॥ ३४ ॥**

[जलदाववृष्टविमुक्ता अनन्तरावतीर्णशरत्पथावपतिताः ।
एकक्षेपोद्ग्राहितदरशुष्कविशदा विशीर्यन्ति गिरयः ॥]

गिरयो विशीर्यन्ति । शतखण्डा भवन्तीत्यर्थः । किंभूताः । एकक्षेपेणैकप्रयत्नेन । एकदैवेत्यर्थः । उद्ग्राहिता उत्तोलिताः । कपिभिरित्यर्थात् । एवं किंचिच्छुष्काः सन्तो विशदा निर्मलाः । आर्द्रत्वेन कोमला इति यावत् । कर्मधारयः । तथा च सर्वैः परस्परजिगीषया स्वस्वप्राथम्यमपेक्ष्य हठादुत्थापिता गिरयः कोमलत्वेन विशीर्णा इत्यर्थः । एतेन प्लवगानां भुजबलाधिक्यम् । ईषदार्द्रत्वे हेतुमाह—किंभूताः । जलदेनाववृष्टाः कृतवर्षणाः अथ विमुक्तास्त्यक्ताः । अनन्तरमवतीर्णो या शरत्तत्पथे तद्गोचरे आपतिताः । तथा च वर्षाशरत्संबन्धेन जलातपसंबन्धादीषदार्द्रत्वम् ॥

अथ शैलोत्पाटने भूमिक्षोभमाह—

**विहुणन्ति विहुव्वन्ता वलेन्ति सेला पवंगमवलिज्जन्ता ।**
**णामेन्ति णमिज्जन्ता उक्खिप्पन्ता अ उक्खिवेन्ति महिअलम् ॥ ३५ ॥**

[विधूनयन्ति विधूयमाना वलयन्ति शैलाः प्लवंगमवल्यमानाः ।
नमयन्ति नाम्यमाना उत्क्षिप्यमाणाश्चोत्क्षेपयन्ति महीतलम् ॥]

शैलाः प्लवंगमैर्विधूयमानाश्चाल्यमानाः सन्तो महीतलं विधूनयन्ति चालयन्ति । एवं वल्यमाना वक्रीक्रियमाणाः सन्तो वलयन्ति वक्रयन्ति । यत्पार्श्वेन पर्वतानयनं तत्पार्श्वेन भूमेरपि वक्रीभवनमित्यर्थः । एवं नाम्यमाना अधःप्रेर्यमाणाः सन्तो नमयन्ति । स्वभरेणाधः प्रेरयन्तीत्यर्थः । उत्क्षिप्यमाणा उत्तोल्यमानाः सन्त उत्क्षेपयन्ति । स्वावष्टम्भेनोत्तोलयन्तीत्यर्थः । तथा च यां यामवस्थां पर्वताः प्राप्नुवन्ति तां तामवनिरपीति पर्वतानां दृढमूलत्वं महत्त्वं च सूचितम् । 'नभस्तलं' इति पाठे बुद्धिपरत्वेन सर्वमित्थमेव योज्यम् । 'उक्खिवन्ति' इति पाठे उत्क्षिपन्तीत्यर्थः ॥

अथ पर्वतानामुत्तोलने सर्पैराकर्षणमाह—

**दलिअमहिवेढसिढिला मूलालग्गभुअइन्दकड्डिज्जन्ता ।**
**संचालिज्जन्त च्चिअ अइन्ति गरुआ रसाअलं धरणिहरा ॥ ३६ ॥**

[दलितमहीवेष्टशिथिला मूलालग्नभुजगेन्द्रकृष्यमाणाः ।
संचाल्यमाना एवायान्ति गुरवो रसातलं धरणिधराः ॥]

धरणिधराः संचाल्यमानाः एवं प्लवगैरालोड्यमाना एव रसातलमायान्ति । गच्छन्तीत्यर्थः । किंभूताः । संचारेण दलितमहीवेष्टाः सन्तः शिथिलाः शिथिलमूलाः । एवं मूलालग्नेन भुजगेन्द्रेण कृष्यमाणाः । अथ च गुरुत्वयुक्ताः । तथा च दलितमूलभूमित्वेनाहर्तुं सुकरत्वेऽपि कपिकरधृता अप्यालोडनसमकालमेव मदावासः केनायमाकृष्यत इति रोषाविष्टभुजंगेन फणसंदंशकेनावष्टभ्य कृष्यमाणाः पातालमेव प्रविष्टा गिरय इति कपिभ्योऽपि सर्पाणां महत्त्वमुक्तम् ॥

अथ मलयातिक्रममाह—

**णवपल्लवसच्छाआ जलओअरसिसिरमारुअविइज्जन्ता ।**
**वाअन्ति तक्खणुक्खअहरिहत्थुक्खित्तभेम्मला मलअदुमा ॥ ३७ ॥**

[नवपल्लवसच्छाया जलदोदरशिशिरमारुतवीज्यमानाः ।
वायन्ति तत्क्षणोत्खातहरिहस्तोत्क्षिप्तविह्वला मलयद्रुमाः ॥]

मलयद्रुमा वायन्ति शुष्यन्ति । किंभूताः । नवपल्लवैः सच्छायाः छाया कान्तिरातपाभावो वा तत्सहिताः । एवं जलदोदरस्य ये शिशिरा मारुतास्तैर्वीज्यमानाः । एवं तत्क्षणे उत्खाता अथ हरिहस्तेनोत्क्षिप्ता उत्तोलिताः सन्तो विह्वला व्याकुलाः । परस्पराभिघातिशाखापत्रकत्वात् । तथा च नवदलमयत्वसजलजलदोदरपवनवीजितत्वतत्क्षणोत्खातत्वरूपशोषणाभावसामग्रीसत्त्वेऽपि हठादेव मलयतरुशोषणं कपिकरकृतोत्क्षेपणनिबन्धनमिथःशाखाद्यभिघातमूलकत्वेन कपीनां बलवत्त्वमूर्ध्वक्षेपणहेतुकरविमण्डलसांनिध्यनिबन्धनत्वेन वा महदाकारत्वं गमयति । मलयोत्पाटनसौकर्याय वृक्षोत्पाटनम् ॥

अथ पर्वतोत्पाटने तदाश्रितानां वैकल्यमाह—

**कम्पिज्जन्तधराहरसिहरसमाइद्धजलहररवुव्विग्गा।**
**गअसुहवत्तणिसण्णा वेवइ हंसी सहस्सवत्तणिसण्णा॥ ३८॥**

[कम्प्यमानधराधरशिखरसमाविद्धजलधररवोद्विग्ना।
गतसुखवर्त्मनिषण्णा वेपते हंसी सहस्रपत्रनिषण्णा॥]

हंसी मराली वेपते कम्पते। कम्पने हेतुमाह—कीदृशी। कम्प्यमानानां चाल्यमानानां कपिभिरर्थात् धराधराणां शिखरैः समाविद्धानां वेधं नीतानां जलधराणामर्थात्तदुपरि तिष्ठतां रवैर्वेधव्यथाजनितशब्दैरुद्विग्ना विषण्णचित्ता। वर्षासमयभ्रमाद्रवस्य भैरवत्वेन क्षोभातिशयाच्च। अत एव हेतोर्गतं प्रथमत एवोड्डीय पलायितं यत्सुखपात्रं हंसस्तेन निःसंज्ञा निश्चेष्टा। मुग्धेति यावत्। यद्वा गतसुखवार्तेनिःसंज्ञा गता सुखस्य वार्ता यस्याः सा गतसुखवार्ता सा चासौ निःसंज्ञा चेति कर्मधारयात्पुंवद्भावः। एवं सहस्रपत्रे कमले तत्रत्यसरोवरस्थे निषण्णा उपविष्टा। तथा च गिरिकम्पनस्य जलधरभेदहंसोद्वेगहेतुत्वप्रतिपादनमुखेन विश्वक्षोभकत्वमुक्तम्। अथ वा हंसः परमात्मा तस्य स्त्री हंसी। 'पुंयोगात्–' इति ङीष्। सा पृथिवी वेपते। किंभूता। कम्प्यमानस्य धराधरस्य शिखरेण। पतितेनेत्यर्थात्। समाविद्धस्य प्रेरितस्य जलगृहस्य समुद्रस्य रवेण तटाभिघातजन्यशब्देन उद्विग्ना आकुला। एवं गता सुखस्य शुभस्य वा वर्तनी पदवी तस्याः संज्ञा नाम यस्याः। शिखराभिहतसमुद्राघातनिर्घातव्याकुलाया यस्याः सुखस्य नामापि नास्तीत्यर्थः। एवं सहस्रवक्त्रनिषण्णा सहस्रवक्त्रः शेषस्तत्र स्थिता। तदुपरीत्यर्थः। अथ च हंसी बलाकाप्रभृतिषु विशिष्टनायिकाजातिर्वेपते। कीदृशी। कं सुखं यथा स्यादेवं कं सुखं तेन वा पीयमानोऽधरो यस्याः। नायकेनेत्यर्थात्। सा कंपीयमानाधरा। कंशब्दस्याव्ययत्वमपि। एवं धरशिखरसमारूढजलभररतोद्विग्ना धरस्य पर्वतस्य शिखरेण समाः कर्कशत्वाद्येऽरूढास्तरुणा जल(ड)भरा मूर्खसमूहास्तेषां रतेन सुरतेनोद्विग्ना। कठिनत्वात्तरुणत्वान्मूर्खत्वाच्च तेषामुद्वेगजनकत्वात्। रवेण सुरतकालीनप्रौढिव्यञ्जकशब्दविशेषेणोद्विग्ना त्रस्ता वा। जलं जाड्यं धारयतीति जलधरो नायकस्तस्य रतेनेति वा। एवं गतसुखवर्त्मनिशज्ञा गतं सुखस्य वर्त्म द्वारं यस्यां तथा सा च निशा चेति कर्मधारयः। तद्गतसुखवर्त्मनिशाम्। 'विभाषा सेनासुराच्छायाशालासभानिशानाम्' इत्येकवद्भावात्। तज्जानाति ताम्। रात्रिं सुखशून्यां मन्यत इति तथानर्थसंदेहा-

दिति भावः । गतसुखवार्तेति पूर्ववद्वा । एवं सहस्रपात्रनिषण्णा सहस्रं दातुं समर्थ इति सहस्रपात्रं धनिको नायकस्तत्र निषण्णा आसक्ता । गणिकेत्यर्थः । इति ध्वनिः । हंसो विहंगभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदे च परमात्मनि मेषजे ॥'

अथ कपीनां वक्षसा गिरिनदीनां निरोधमाह—

**पवओवऊढकड्ढिअसेलब्भन्तरभमन्तविसमक्खलिआ ।**
**गहिरं रसन्ति वित्थअवच्छत्थलरुद्धणिग्गमा णइसोत्ता ॥ ३९ ॥**

[प्लवगोपगूढकृष्टशैलाभ्यन्तरभ्रमद्विषमस्खलितानि ।
गम्भीरं रसन्ति विस्तृतवक्षःस्थलरुद्धनिर्गमानि नदीस्रोतांसि ॥]

विस्तृतं यद्वक्षःस्थलं कपीनामेव तेन रुद्धो निर्गमो बहिःप्रसरणं येषां तानि नदीस्रोतांसि गम्भीरं रसन्ति शब्दायन्ते । कीदृशानि । प्लवगेनोपगूढ आलिङ्गितस्ततः कृष्ट आलिङ्ग्योत्पाटित इत्यर्थः । तथाभूतशैलस्याभ्यन्तरे निम्ननदीखातकंदरादिदेशे भ्रमन्ति सन्ति विषममुन्नतं यथा स्यादेवं स्खलितानि परावृत्तानि । अयमर्थः—प्लवगैरालिङ्ग्याकृष्टानां पर्वतानां सरित्प्रवाहे वक्षःस्थलेन मुद्रितत्वात्प्रतिरुद्धे तज्जलं वर्त्मालाभेन तत्रैव बभ्राम । ततः कियदाधिक्ये उच्छलितमथ ततोऽप्याधिक्ये परावृत्तं सन्निम्नकंदरादिप्रदेशे पतत्तत्पूरणाभिघाताभ्यां दध्वान । अन्यत्रापि नद्यादिजलं पर्वतादिप्रतिरोधाद्भ्रमत्युत्तिष्ठति परावर्तते ध्वनति चेति ध्वनिरिति नदीजलप्रतिरोधकत्वेन कपिवक्षसां विकटत्वं दृढत्वं दृढालिङ्गनवत्त्वं नदीजलानां तु चिरनिर्गमाभावेन पूरणानन्तरं शब्दानुत्पत्तेरिति शब्दायमानत्वेन च हठात्तजलापूरणीयकंदरादिशालित्वेन गिरीणां च महत्त्वं सूचितम् ॥

अथ सर्पाकृष्टपर्वतोद्धरणमाह—

**अद्धुक्खित्तपसिढिले अद्धवहभुअंगकड्ढिअद्धत्थमिए ।**
**उम्मूलेन्ति रसाअलपङ्कक्खुत्तसरिआमुहे धरणिहरे ॥ ४० ॥**

[अर्धोत्क्षिप्तप्रशिथिलानर्धपथभुजंगकृष्टार्धास्तमितान् ।
उन्मूलयन्ति रसातलपङ्कमग्नसरिन्मुखान्धरणीधरान् ॥]

प्लवगा धरणीधरानुन्मूलयन्त्युत्पाटयन्ति । किंभूतान् । अर्धेन । भूमिस्थमूलभागस्येत्यर्थात् । उत्क्षिप्तास्ततः प्रशिथिलानदृढभूमिसंबन्धान् । एतेन सुखोत्पाटनीयानित्यर्थः । अत एवार्धपथादुत्थितमूलार्धभागावच्छिन्नोपरिदेशाद्भुजंगेन कृष्टा-

रसतः अर्धेन मूलभागोपरिभागार्धेनास्तमितान्भूम्यन्तःप्रविष्टान्। अर्धमग्नानित्यर्थः। एवं रसातलपङ्के मग्नानि सरिन्मुखानि येषु तान्। अयमभिप्रायः—कपिभिः प्रथममुत्क्षिप्ता गिरयो भूमिष्ठमूलभागार्धभागेनोत्थिता यावत्तावन्मूलवर्तिना भुजंगेनाकृष्टाः कपिहस्तादप्युपरिभागार्धभागेन रसातलं प्रविष्टा अथ पुनः कपिभिरुत्थाप्यन्ते। तथा च कपिहस्तादाकर्षणाद्भुजंगानां महत्त्वं, उपरिभागार्धभागस्योपरिस्थत्वेऽप्युपरिभागस्थनदीनां रसातलपङ्कमग्नत्वेन तावद्दूरव्यापकोपरिभागार्धकतया गिरीणामुच्चत्वं च सूचितम्॥

अथ पर्वतानामुत्पाटनप्रकारमाह—

उव्वेल्लइ व णिराअं पासल्लन्तेसु सिहरपडिमुच्चन्तम्।
उक्खिप्पन्तेसु पुणो संवेल्लिज्जइ व महिहरेसु णहअलम्॥ ४१॥

[उद्वेल्लयत इव निरायतं पार्श्वायितेषु शिखरप्रतिमुच्यमानम्।
उत्क्षिप्यमाणेषु पुनः संव्रियत इव महीधरेषु नभस्तलम्॥]

महीधरेषु पार्श्वायमानेषु नमयितुं पार्श्वेन तिर्यगानीयमानेषु शिखरेण प्रतिमुच्यमानं नभस्तलमुद्वेल्लयते प्रकाश्यते। कपिभिरित्यर्थात्। तिर्यगानयनेन गिरीणां शिखराणामित एवागमनाच्छिखराच्छन्नाकाशस्य प्रकाशो जायत इत्यर्थः। उत्क्षिप्यमाणेषूर्ध्वाप्यमानेषु पुनः संव्रियते विस्तृतकुञ्चितवस्त्रादिवद्वर्तुलीक्रियत इव। उत्क्षिप्तपर्वतच्छन्नतया नभसः प्रकाशाभावादिति भावः॥

अथ पर्वतानां स्कन्धारोपणमाह—

उम्मूलेन्ति पवंगा भुअसिहरारुहणणिच्चलपरिग्गहिए।
कडआवडणुत्थङ्घिअविसमविवत्तविवरम्मुहा धरणिहरे॥ ४२॥

[उन्मूलयन्ति प्लवगा भुजशिखरारोहणनिश्चलपरिगृहीतान्।
कटकापतनोत्तम्भितविषमविवृत्तविपराङ्मुखा धरणिधरान्॥]

प्लवंगा धरणिधरानुन्मूलयन्ति उत्थापयन्ति। तत्प्रकारमाह—कथंभूतान्। भुजशिखरेषु वाहुमूलेषु स्कन्धेषु वा यदारोपणमारोहणमर्थादेषामेव तेन निश्चलं स्थिरं परिगृहीतानुत्थापयितुं धृतान्। एवंप्रकारेण धृत्वोत्पाटयन्तीत्यर्थः। किंभूताः प्लवंगाः। कटकस्य पूर्वविघटितस्य तन्नितम्बस्य पतनेनाधःस्खलनेनोत्तम्भितमुत्थापितं गिरियन्त्रितस्य स्वस्यैव पतनभयात् अथ च विषमं नतोन्नतं सद्विवृत्तं तिर्यक्कृतं

अत एव विपराक् पश्चाद्गतं मुखं येषां ते । गिरीणामंसवर्तिनां त्रुटितो नितम्बो मुख एव पतेदिति शङ्कया पश्चात्कृतमुखा इत्यर्थः । अन्योऽपि गुरुद्रव्योत्तोलने मुखमन्यतः करोतीति ध्वनिः । एतावता व्यवसायबाहुल्यम् । 'कटकं वलये सानौ राजसेनानितम्बयोः' इति विश्वः ॥

गिरिचन्दनशाखाभङ्गमाह—

**हरिभुअकड्ढिअमुक्का भुअङ्गदढवेढणावलम्बणधरिआ ।**
**भिज्जन्ता वि महिअले ओअल्लन्ति ण पडन्ति चन्दणविडवा ॥४३॥**

[हरिभुजकृष्टमुक्ता भुजंगदृढवेष्टनावलम्बनधृताः ।
भिद्यमाना अपि महीतलेऽवनमन्ति न पतन्ति चन्दनविटपाः ॥]

चन्दनविटपा भिद्यमाना अपि अवनमन्ति अन्तरिक्ष एव तिष्ठन्ति महीतले न पतन्ति । कीदृशाः । हरीणां भुजेन हस्तेन कृष्टाः पुनर्मुक्तास्त्यक्ताः । एवं भुजंगानां दृढं यद्वेष्टनं मदीयवृक्षस्य शाखा केनाकृष्यत इति रुषा वृक्षमाश्रित्य शाखासु पुच्छस्य कुण्डलीकरणं तदेवावलम्बनमवष्टम्भस्तेन धृताः । तथा च कपिभिरुद्वहनसौकर्यायामोट्य भङ्क्त्वा मुक्त्वा अपि चन्दनशाखाश्चन्दनवृक्षस्थकालसर्पैरवलम्ब्य धृता इति सर्पाणां तेजस्वित्वमुक्तम् । तेजस्विभिः स्वविपत्तावपि स्वाश्रयरक्षा क्रियत एवेति ध्वनिः ॥

गिरिशिखरभङ्गमाह—

**पडिसमइ णहणिबद्धो चिरेण भरिअब्भणाअगम्भीरअरो ।**
**हरिभुअविक्कमपिसुणो अअण्डभज्जन्तधरणिहरणिग्घोसो ॥ ४४ ॥**

[प्रतिशाम्यति नभोनिबद्धश्चिरेण भृताभ्रनादगम्भीरतरः ।
हरिभुजविक्रमपिशुनोऽकाण्डभज्यमानधरणिधरनिर्घोषः ॥]

अकाण्डे हठाद्भज्यमानस्य अनपेक्षितभागदूरीकरणाय क्वचित्खण्ड्यमानस्य धरणीधरस्य निर्घोषो विदलनजन्मा टात्कारश्चिरेण प्रतिशाम्यति विरमति । कीदृक् । नभसि निबद्धः संबद्धः । एवंभूतस्य जलपूर्णस्याभ्रस्य नादवद्गम्भीरतरः । एवं कपीनां भुजपराक्रमस्य पिशुनः कथकः । स एव शब्दः पराक्रमकथकत्वेनोत्प्रेक्षित इति भावः । भृतेन धृतेन । मिश्रितेनेति यावत् । अभ्रस्य नादेन गम्भीरः । तथा च शिखरभङ्गाभिभूतत्वात्तत्रत्यमेघेन ध्वनिः कृतः तत्संवलनाद्गम्भीरतरो जात इत्यर्थ इति मदुन्नीतः पन्थाः ॥

गिरिनदीनामवस्थामाह—

पासल्लन्ति महिहरा जत्तोहुत्ता पवंगमभुअक्खित्ता।
धुव्वन्तधाउअम्बा तत्तोहुत्ता वलन्ति सरिआसोत्ता॥ ४५॥

[पार्श्वायन्ते महीधरा यतोऽभिमुखाः प्लवंगमभुजक्षिप्ताः।
धाव्यमानधात्वाताम्राणि ततोऽभिमुखानि वलन्ति सरित्स्रोतांसि॥]

प्लवंगमभुजाभ्यां क्षिप्ताः प्रेरिता महीधरा यदभिमुखाः पार्श्वायन्ते वक्रीभवन्ति सरित्स्रोतांस्यपि तदभिमुखानि वलन्ति। यद्दिशा पर्वता नमन्ति तद्दिशैव निर्झरा अपि पतन्तीत्यर्थः। कीदृशानि। धाव्यमानेन प्रक्षाल्यमानेन धातुना गैरिकेणेषत्ताम्राणि। प्रवाहाणामुत्पथगमनेन गैरिकमिश्रणादित्यर्थः॥

अथ गिरिभ्रामणमाह—

दीसन्ति पवअवलिआ आवत्तेसु व महोअहिस्स वलन्ता।
सरिआण घडिअपत्थिअवलन्तसलिलवलअन्तरेसु महिहरा॥४६॥

[दृश्यन्ते प्लवगवलिता आवर्तेष्विव महोदधेर्वलन्तः।
सरितां घटितप्रस्थितवलमानसलिलवलयान्तरेषु महीधराः॥]

प्लवगैर्वलिता उत्पाटनसौकर्याय चक्रवद्भ्रामिता महीधराः सरितामर्थात्स्वाश्रितानां घटितानि भ्रमणवेगवशान्मिथः संबद्धानि सन्ति प्रस्थितान्येकप्रवाहरूपतया संचरद्रूपाणि। अथ च भ्रमणवशाद्वलमानानि चक्राकाराणि यानि सलिलानि तान्येव वलयाकारत्वाद्वलयानि तदभ्यन्तरेषु दृश्यन्ते। उत्प्रेक्षते—केषु किंभूता इव। महोदधेरावर्तेषु पतन्त इव। भ्रमन्नदीजलवलयस्थिता नैते किं तु समुद्रावर्तेषु पतन्त इत्यर्थः। तथा च भ्रामितानां गिरीणां चतुर्दिगन्तरिक्षे कटकसंलग्नपार्श्वचतुष्टये वा चक्रवद्भ्रमन्ति संस्कारवशात्प्रसह्य भूमावापतन्ति सरिज्जलानि समुद्रावर्तवद्भासन्त इति तज्जलप्रकर्षेण गिरीणां महत्त्वेन च प्लवगानां बलवत्त्वं सूचितम्। घटितप्रस्थितानीति स्वारसिकक्रमेण सुघटितानि सन्ति प्रस्थितानि प्रवहद्रूपाणि अथ च गिरिभ्रमणवशाद्वलमानानि चक्रवद्भ्रमन्ति यानि सलिलानि तान्येव वलयानि तदभ्यन्तरेषु दृश्यन्त इति अन्यत्सर्वं पूर्ववदिति केचित्। तेन नानानदीनां स्रोतांसि नानावलयक्रमेणावर्तवद्भवन्तीति भावः॥

अथ मधुकरमिथुनावस्थामाह—

मअरन्दगरुअवक्खं पासोअल्लन्तवणलआविच्छूढम् ।
ण मुअइ कुसुमग्गोच्छं आसाइअमहुरसं पि महुअरमिहुणम् ॥४७॥

[मकरन्दगुरुकपक्षं पार्श्वायमानवनलताविक्षिप्तम् ।
न मुञ्चति कुसुमगुच्छमास्वादितमधुरसमपि मधुकरमिथुनम् ॥]

मधुकरमिथुनं कर्तृ पार्श्वायमाना पर्वतानामितस्ततश्चलनेन वक्रीभवन्ती या वनलता तया विक्षिप्तमपि त्यक्तमपि कुसुमगुच्छं न मुञ्चति । अत्र हेतुमाह—मधुकरमिथुनं कीदृक् । मकरन्देन पुष्पस्यैव गुरुकौ क्षेपणायोग्यौ पक्षौ यस्य तथा । एवमास्वादितो मधुरसो येन तत्तृप्तमपि । तथा च पक्षयोरार्द्रतयोड्डयनासामर्थ्येन भूमावभिघातहेतोर्निजपतनात्रस्यत्प्रयोजनं विनापि वनलतानां वक्रीभावेन विस्खलितानां पततामपि कुसुमानामवष्टम्भं न त्यजतीत्यर्थः । आस्वादितो मधुरसो यस्येति गुच्छविशेषणं वा ॥

सरःकमलक्षोभमाह—

उप्पुअसुरहिगन्धमअरन्दरञ्जिआइं
ठिअपरिलेन्तभमरभमरोअरञ्जिआइं ।
कमलवणाइँ सूरपरिमासविअसिआइं
उच्छलिए सराण सलिलम्मि विअसिआइं ॥ ४८ ॥

[उत्प्लुतसुरभिगन्धमकरन्दरञ्जितानि
स्थितपरिलीयमानभ्रमद्भ्रमरोदराञ्जितानि ।
कमलवनानि सूर्यपरिमर्शविकसितानि
उच्छलिते सरसां सलिले वियच्छ्रितानि ॥]

कमलवनानि सरसां सलिले पर्वतोत्क्षेपणादिव्यापारेणोच्छलिते सति तेनैव सह वियच्छ्रितानि । गतानीत्यर्थः । कीदृशानि । अतिसंनिहितत्वात्सूर्यस्य परिमर्शो मर्शनम् । किरणस्पर्श इति यावत् । तेन विकसितानि । अत एवोत्प्लुताः संचारिणः सुरभयो गन्धा यस्य तादृशेन मकरन्देन रञ्जितानि सकलानुरागविषयीकृतानि रक्तं वर्णविशेषं प्रापितानि वा । एवं स्थिताः सन्तः प्रस्तुतक्षोभेण लीयमाना एव भ्रमन्तो

ये भ्रमरास्तैरुदरे अञ्जितानि अञ्जनरेखाविशिष्टानि । श्यामत्वादित्यर्थः । उदरे अञ्चितानीत्यपव्याख्यानम् । यमकाभावात्तदप्रकृतिकत्वात् । एतेनोत्क्षेपणोत्कर्ष उक्तः ॥

सर्पव्यापारमाह—

**दृढसंदाणिअमूला वलन्ति वाणरभुआवलम्बिअसिहरा ।**
**रोसुप्पित्थभुअंगमविसमुद्धफणापणोल्लिआ धरणिहरा ॥ ४९ ॥**

[दृढसंदानितमूला वलन्ति वानरभुजावलम्बितशिखराः ।
रोषोद्विग्नभुजंगमविषमोर्ध्वफणाप्रणोदिता धरणीधराः ॥]

दृढं यथा स्यात्तथा संदानितं भूमिग्रथितं मूलं येषां ते महीधरा वानरभुजाभ्यामवलम्बितं शिखरं येषां तथाभूता वलन्ति । वक्रीभूय पतन्तीत्यर्थः । पतने हेतुमाह—रोषेण ममावासः कुतः केन चाल्यत इति क्रोधेनोद्विग्नो व्याकुलो यो भुजंगमस्तस्य विषमा विकटा ऊर्ध्वा प्रकृतक्षोभजिज्ञासया उत्थापिता फणा तया प्रणोदिताः । ऊर्ध्वं प्रेरिता इत्यर्थः । तथा च संदानितमूलत्वेन येषामुत्थापनं कपिभिः कर्तुं न पारितं किं तु करेण शिखरावलम्बनमात्रं कृतं त एव गिरयस्तलवर्तिभुजंगमेनाकस्मात्क्रोधतोऽनवधानादुत्थापितया फणया प्रेर्यमाणा भूमेरूर्ध्वं गत्वा पतिता इति सर्पाणां वानरेभ्योऽप्यतिबलवत्त्वं सूचितम् ॥

अथ गिरीणां तिर्यगान्दोलनमाह—

**सरिआ सरन्तपवहा अण्णोण्णमहाणइप्पवहपल्हत्था ।**
**खोहिअपङ्कक्खउरा वलन्तसेलवलिआ मुहुत्तं वूढा ॥ ५० ॥**

[सरितः सरत्प्रवाहा अन्योन्यमहानदीप्रवाहपर्यस्ताः ।
क्षोभितपङ्ककलुषा वलमानशैलवलिता मुहूर्तं व्यूढाः ॥]

संचरत्प्रवाहाः सरितो वलमाने जातवामदक्षिणपार्श्वान्दोलने शैले वलिताः शैलान्दोलनक्रमेणान्दोलिताः सत्यो मुहूर्तं व्याप्य व्यूढा उपचिताः । अत्र हेतुमाह—अन्योन्यमहानदीप्रवाहेषु पर्यस्तास्तिर्यग्भूय स्खलिताः । अत एवोत्पथगमनेन तटक्षोभादिना क्षोभितैरुत्थापितैः पङ्कैः कलुषा वर्णान्तरं प्राप्ताः । तथा च तिर्यक्पर्वतानामान्दोलने एका सरिदपरसरित्प्रवाहं प्रविष्टा तदैतज्जलेन तस्या उपचयः क्षणमेव जातः । पुनरपरदिक्चालने सैवैतत्प्रवाहं प्रविष्टा तदास्या एवोपचय इत्येवमन्यासामपीति नदीनामुपचयस्य मुहूर्तमात्रस्थायित्वेन कपीनामान्दोलने शीघ्र-

त्वमुक्तम् । भुजाभ्यामेकमुखीकृत्य पर्वतयोरेवान्दोलनादन्योन्यं सरित्संगमः क्षणिकोऽभूदिति वयम् । कुटिलयोः कलुषयोश्च संगमः क्षणिक इति ध्वनिः ॥

अथ भुजंगाकर्षणमाह—

कड्ढिज्जन्ति समन्ता विसमुव्वत्तन्तधवलकसणच्छाआ ।
महिहरमूलालग्गा रसाअलद्धपडिघोलिरा भुअइन्दा ॥ ५१ ॥

[कृष्यन्ते समन्ताद्विषमोद्वर्तमानधवलकृष्णच्छायाः ।
महीधरमूलालग्ना रसातलार्धप्रतिघूर्णनशीला भुजगेन्द्राः ॥]

महीधराणां मूलेष्वालग्नाः संबद्धा भुजगेन्द्राः समन्तादाकृष्यन्ते । वानरैरित्यर्थात् । 'समत्ता' इति पाठे समस्ता इत्यर्थः । किंभूताः । विषमं तिर्यग्यथा स्यादेवमुद्वर्तमानाः फणसंदंशेन पर्वतं धृत्वा त्यक्तुमसमीहया विपरीत्य विद्यमानाः । अत एवोदरपृष्ठस्य तुल्यदृश्यत्वेन श्वेतश्यामच्छायाः । एवं रसातले अर्धेन पुच्छभागेन घूर्णनशीलाः । उपरिभागस्य पर्वतलग्नत्वादत्रैवागतत्वात् । सर्पाणां पुच्छावष्टम्भो दृढ इति तस्य ऋजुभावेनाकर्षणशङ्कया विदिक्करणं घूर्णनपदद्योत्यम् । अत्र सर्पाणां रसातलगतत्वेन दीर्घत्वं पीनस्य यथा यथा कर्षणं तथा तथा वृद्धिस्तथापि समन्तात्सर्वतोभावेनाकर्षणेन कपीनामुच्चत्वं बलवत्त्वं च सूचितम् ॥

अथ गिरौ वनदेवतापरित्यागमाह—

गलइ सरसं पि कुसुमं वाइ अणालिद्धबन्धणं पि किसलअम् ।
रहसुम्मूलिअमहिहरभअविवलाअवणदेवआण लआणम् ॥ ५२ ॥

[गलति सरसमपि कुसुमं वात्यनालीढबन्धनमपि किसलयम् ।
रभसोन्मूलितमहीधरभयविपलायितवनदेवतानां लतानाम् ॥]

रभसेनावेगेनोन्मूलितो यो महीधरस्तस्माद्भयेन विपलायिता वनदेवता याभ्यस्तासां लतानां सरसमपि कुसुमं गलति । अस्पृष्टवृन्तमपि किसलयं वाति वृन्तादपगच्छति । वाइ वायति शुष्यतीति केचित् । वानराक्रमणादुत्पन्नमेतत्सर्वं रक्षकवनदेवतासंनिधिविरहादुत्प्रेक्षितम् । इवार्थस्य गम्यमानत्वात् । यद्वा तत्संनिधिविरहेण वास्तविकमेवैतद्रूपम् ॥

पर्वतानामुत्क्षेपणमाह—

उक्खिप्पन्ति जं दिसासु धरा समत्ता
तेण खणेण णज्जइ वसुंधरा समत्ता।
कीरइ महिहरेहि गअणं दिसालआणं
वड्ढइ जलअसिहरपउणं दिसालआणम्॥ ५३॥

[उत्क्षिप्यन्ते यद्दिशासु धरा समस्ता-
स्तेन क्षणेन ज्ञायते वसुंधरा समाप्ता।
क्रियते महीधरैर्गगनं द्विशालमानं
वर्धते जलदशिखरप्रगुणं दिशालतानाम्॥]

यद्दिक्षु समस्ता आमूलं धराः पर्वता उत्क्षिप्यन्ते उत्खायन्ते। वानरैरित्यर्थात्। तेनोत्क्षेपणरूपेण हेतुना तद्दिक्षु वसुंधरा पृथिवी क्षणेन समाप्ता पर्वतोपमर्दैन पर्वतावस्थितिभूभागस्य शून्यत्वेन वा नष्टेति ज्ञायते। एवं यद्दिक्षु महीधरैर्गगनं द्विशालवृक्षप्रमाणं द्विवृक्षप्रमाणं वा क्रियते। गगनस्योत्क्षिप्तपर्वताक्रान्तत्वात्। तद्दिक्षु दिश एव लतास्तासां जलदरूपं शिखरप्रगुणं शिखरोत्तमं वर्धते। गगनभागद्वयं वृक्षद्वयं तदाश्रिता दिशो लतास्तासामुन्नीतशैलशिखरस्योद्गतमेघरूपं शिरो वर्धत इत्यर्थः। अन्या अपि लता वृक्षावलम्बेन गगनपर्यन्तं वर्धन्त इति ध्वनिः। 'जलअसिहरपडणं' इति पाठे दिग्लतानां जलदशिखरपतनं वर्धत इत्यन्वयः। तेन शैलोत्क्षेपणे तदाश्रितदिग्लतानां दिशि दिशि मेघरूपशिखरपतनं वर्धते। जायत इत्यर्थः॥

अथ पर्वतोत्तोलनमाह—

एक्केक्केण अ सेलं करअलजुअलधरिअं तुलन्तेण कअम्।
अद्धत्थमिअं च णहं अद्धुग्घाडिअरसाअलं च महिअलम्॥५४॥

[एकैकेन च शैलं करतलयुगलधृतं तुलयता कृतम्।
अर्धास्तमितं च नभोऽर्धोद्घाटितरसातलं च महीतलम्॥]

वानरैरेकैकेण प्रत्येकं करतलद्वयेन धृतं शैलं तुलयता उत्तोलयता नभोऽर्धास्तमितमर्धच्छन्नं च कृतम्। उत्थितशिखरव्याप्तत्वात्। महीतलमर्धमुद्घाटितं प्रका-

शितं रसातलं यस्य तथाभूतं च कृतम् । मूलभागपरित्यक्तार्धकत्वात् । एतेन गिरीणां दैर्घ्यमुक्तम् ॥

अथ गिरिमूलभूमिसमुत्तोलनमाह—

**सेलणिअम्बालग्गा पविरलणइमग्गपाअडतडच्छेआ ।**
**भुअइन्दप्फणधरिआ णहं विलग्गन्ति मेइणिअलद्धन्ता ॥ ५५ ॥**

[शैलनितम्बालग्नाः प्रविरलनदीमार्गप्रकटतटच्छेदाः ।
भुजगेन्द्रफणधृता नभो विलगन्ति मेदिनीतटार्धान्ताः ॥]

मेदिनीतटैकदेशा नभो विलगन्ति । गच्छन्तीत्यर्थः । कथमित्यत आह—किंभूताः । शैलानां नितम्बेष्वालग्ना बलादामोट्य गृहीतत्वाल्लग्नोत्थिताः । एवं प्रविरलेन भूमिष्ठप्रवाहविच्छेदात्पर्वतमूलस्थमृत्तिकाभागेषु प्रसरणात्किंचित्किंचित्तनूभूतेन नदीमार्गेण प्रकटा दूरदृश्यास्तटच्छेदा येषु । एवं भुजगेन्द्रस्य शेषस्य फणेन धृता अवष्टब्धाः । तथा च तावद्दूरादागता भूमिरिति गिरिमूलस्य महत्त्वं कपीनां च बलवत्त्वमुक्तम् ॥

अथ गिरिसत्त्वक्षोभमाह—

**धरणिहरेण अ चलिअं चलिअकंदरेण**
**पुट्टइ गअउलं अणालिद्धकं दरेण ।**
**गिरिसिहराइ सरसहरिआलवङ्किआइं**
**समविसमं णमन्ति हरिआलवङ्किआइं ॥ ५६ ॥**

[धरणिधरेण च चलितं चलितकंदरेण
स्फुटति गजकुलमनालीढकं दरेण ।
गिरिशिखराणि सरसहरितालपङ्क्तितानि
समविषमं नमन्ति हरिजालवक्रितानि ॥]

च पुनर्धरणिधरेण चलितम् । प्लवगकरामोटनादिव्यापारात् । किंभूतेन । चलिताः कंदरा यत्र तेन । तस्मिंश्चलति कंदरा अपि चलिता इत्यर्थः । यद्वा चलिताः कंदरावर्तिन एणा यत्र तद्यथा स्यादिति चलितकंदरैणम्, चलिताः कंदराणामिना ईश्वरा गन्धर्वादयो यत्र तद्यथा स्यादिति चलितकंदरैनमिति वा क्रियाविशेषणम्

गिरिचलने तेषामपि चलनात्। एवं गिरौ चलति गजकुलं दरेण त्रासेन स्फुटति स्वयूथाद्भ्रश्यति। कीदृक्। अनालीढमनास्वादितं कं जलं येन तत्। तथा च त्रासेन यूथ्यवियोगेन च जलमपि न पिबतीत्यर्थः। एवं गिरिचलने सति गिरिशिखराणि समं च तद्विषमं चेति समविषमं यथा स्यादेवं नमन्ति। कीदृशानि। उच्छलित-नदीजलसंबन्धात्सरसेन हरितालेन पङ्कितानि पङ्कीकृतानि। पङ्कविशिष्टानीत्यर्थः। एवं हरिजालेन कपिसमूहेन वक्कितानि हस्तेनामोटितानि। यद्वा हरितालवक्कितानि हरीणां तालेन चपेटेन वक्कितानि अत एव समविषमं नमन्तीत्यर्थः। यद्वा हरिता-लवाङ्कितानि। हरिता दूर्वास्तासां लवैः खण्डैरङ्कितानि चिह्नितानीत्यर्थः। यद्वा हरिकालवक्कितानि। हरिः कपिः स एव कालोपमस्तदुपद्रवकत्वात् तेन वक्कितानि। यद्वा हरिजालपाङ्कितानि। हरिजालं पान्तीति हरिजालपाः कपिश्रेष्ठा अङ्गदादयस्तै-रङ्कितानि क्रोडीकृतानि। आक्रान्तानीत्यर्थः॥

अथ गिरिकुसुमरजोनिर्गममाह—

पाअवसिहरुत्तिण्णो मलअवणपवित्तपवणरअवित्थरिओ।
संझाराओ व णहं अप्फुन्दइ मलिअरविअरं कुसुमरओ॥ ५७॥

[पादपशिखरोत्तीर्णं मलयवनप्रवृत्तपवनरयविस्तृतम्।
संध्याराग इव नभ आक्रामति मृदितरविकरं कुसुमरजः॥]

गिरिसंक्षोभेण पादपशिखरादुत्तीर्णमुत्थितं कुसुमरजो नभ आक्रामति। गच्छ-तीत्यर्थः। कीदृक्। मलयवनात्प्रवृत्त उद्भूतो यः पवनस्तस्य रयेण विस्तृतम्। एवं मृदिता आक्रान्ता रविकरा येन तथाभूतम्। अत्यूर्ध्वं गतमित्यर्थः। संध्याराग इव। यथा संध्यारागो मृदितरविकरं यथा स्यादेवं नभ आक्रामतीति। लघुरपि भाग्यानुकूल्येन महत्पदमारोहतीति ध्वनिः। ताम्रत्वेन संध्यारागपरागयोस्तौल्यम्॥

...मूलकर्दमोत्थानमाह—

...मूलणिरन्तररसाअलुक्खित्तसलिलकद्दमघडिआ।
...त त्ति मुणिज्जइ णज्जइ ण मुअन्ति महिअलं ति महिहरा ५८

[...ष्टमूलनिरन्तररसातलोत्क्षिप्तसलिलकर्दमघटिताः।
...पर्यन्त इति ज्ञायते ज्ञायते न मुञ्चन्ति महीतलमिति महीधराः॥]

...ष्टं यन्मूलमर्थात्पर्वतस्य तेन सह निरन्तरोऽनुस्यूतो रसातलादुत्क्षिप्तमुत्थितं

यत्सलिलं तेन यः कर्दमः पातालमृत्तिकासंबन्धात्तेन घटिताः संघटिता महीधरा वर्धन्त इति ज्ञायते । ज्ञायते च महीतलं न मुञ्चन्तीति । यथा यथा पर्वत आकृष्यते तथा तथा पातालकर्दमसंबन्धाद्वृद्धिरेव प्रतिभासते न तु मूले विच्छेद इति गिरीणामापातालमूलत्वमुक्तम् ॥

पर्वताहरणे कपीनामसंतुष्टत्वमाह—

सिहराइ णिआइ णहं महिन्दलद्धाइं
मलअस्स अ अइणिआइ महिं दलद्धाइं ।
विञ्झणिअम्बाण कई दप्पुण्णामाणं
सज्झअडाण अ भरिआ धुअपुण्णामाणम् ॥ ५९ ॥

[शिखराणि नीतानि नभो महेन्द्रलब्धानि
मलयस्य चातिनीतानि महीं दलार्धानि ।
विन्ध्यनितम्बानां कपयो दर्पोन्नामानां
सह्यतटानां च भृता धुतपुंनागानाम् ॥]

कपयो विन्ध्यनितम्बैः सह्यतटैर्भृता भारवन्तो जाताः । अत एभिर्महेन्द्रपर्वतालब्धान्यानीतानि शिखराणि नभो नीतानि नभसि क्षिप्तानि । पुनर्विश्रम्याकाश एव पतन्ति धर्तव्यानीत्याशयात् । मलयस्य च दलार्धानि महीमतिनीतानि । मह्यां क्षिप्तानीत्यर्थः । विन्ध्यनितम्बानामित्यादि शेषविवक्षायां करणे षष्ठी । 'नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचना' इत्यादिवत् । यद्वा भरिआ भरिताः । स्मृतवन्त इत्यर्थः । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । विन्ध्यनितम्बान् सह्यतटान् स्मृतवन्त इति समन्वयः । तेन एभिस्तानि तानि पूर्वार्धोक्तानि तत्र तत्र क्षिप्तानीति पूर्ववत् । एतान्स्मृत्वा अत्युपादेयबुद्ध्या हर्तुं चलिता इति भावः । विन्ध्यनितम्बानां सह्यतटानां वा किंभूतानाम् । दर्पस्योन्नाम उन्नतिर्यस्मात्तेषामिति प्रथमे । द्वितीये तु धुतः पुंनागो वृक्षविशेषो यत्र तेषामित्युपादेयताप्रयोजकं रूपमुभयमुभयत्र वा । कई इत्यत्र महाराष्ट्रभाषायां बहुवचनेऽप्येकवचनम् ॥

गिरिवानरयोराकारतौल्यमाह—

सिहराण भुअसिरेहिं कडआण अ माविअं उरेहि पमाणम् ।
वणविवरेहि दरीणं तुलिआ पवआण अग्गहत्थेहि गिरी ॥ ६० ॥

[शिखराणां भुजशिरोभिः कटकानां च मापितमुरोभिः प्रमाणम्।
व्रणविवरैर्दरीणां तुलिताः प्लवगानामग्रहस्तैर्गिरयः॥]

प्लवगानां भुजशिरोभिरंसैः शिखराणामुरोभिः कटकानां च व्रणविवरैरङ्गगतैर्दरीणां प्रमाणं परिमाणं मापितं सदृशीकृतम्। अग्रहस्तैर्हस्ताग्रैर्गिरयस्तुलिताः सदृशीकृताः। तथा च स्वसमानरूपत्वेनोत्थापयितुमध्यवसायः स्थिरीकृत इति भावः। वस्तुतस्तु तैस्तेषां प्रमाणं मापितमित्यध्यवसायानन्तरमग्रहस्तैस्तुलिता उत्तोलिता इत्यर्थः॥

हस्तिनामवस्थामाह—

**पडिसन्तकण्णआलं ओवत्तमुहं पसारिओलुग्गकरम्।**
**झाइ णु सोअणिमिलं वीसमइ णु भमिअणीसहं हत्थिउलम्॥६१॥**

[प्रतिशान्तकर्णतालमपवृत्तमुखं प्रसारितावरुग्णकरम्।
ध्यायति नु शोकनिमीलितं विश्राम्यति नु भ्रमितनिःसहं हस्तिकुलम्॥]

प्रतिशान्त उपशमं प्राप्तः कर्णतालो यस्य। अपवृत्तं तिर्यक्कृतं मुखं येन। प्रसारितोऽवरुग्णः करो येन। एतादृशं हस्तिकुलं क्षोभजेन प्रियाविरहजेन वा शोकेन निमीलितं मुद्रितचक्षुः सद्ध्यायति नु। कुत्र स्थातव्यं कुत्र गन्तव्यमिति। कुत्र वा लब्धव्या प्रिया कुत्र वा यूथं प्राप्तव्यमिति चिन्तावशात्। भ्रमितं प्रकृतसंभ्रमेण दिशि विदिशि गतं सन्निःसहं विश्राम्यति नु। विश्राममाचरतीवेत्यर्थः। तथा च प्रकृतसंभ्रमाज्जायमानमेतद्रूपं करिणां संदेहमुखेन ध्यानविश्रामान्यतरजन्यत्वेनोत्प्रेक्षितम्॥

पर्वतोपमर्दमाह—

**पाअवा अ पासल्लसेलविसमाणिआ**
**चुण्णिआ दलिज्जन्तदलुव्विसमाणिआ।**
**जलहरा अ विहडन्तमहिन्दरवाविआ**
**वणलआ अ घोलन्ति महिं दरवाविआ॥ ६२॥**

[पादपाश्च पार्श्वायितशैलविषमानीता-
श्चूर्णिता दल्यमानदलोर्वीसमापिताः।

जलधराश्च विघटमानमहेन्द्ररवावृता
वनलताश्च घूर्णन्ते महीं दरवापिताः ॥]

पादपाश्चूर्णिताश्च । कीदृशाः । पार्श्वायिते वक्रीभूतशैले महेन्द्रनामनि विषमानीता वैषम्यमागताः । स्वयमपि वक्रीभूता इत्यर्थः । अत एव दल्यमानः खण्ड्यमानो दल एकदेशो यस्यास्तथाभूता या उर्वी भूमिस्तया समापिताः समाप्तिं नीताः । शैले पार्श्वायिते वृक्षाः पार्श्वायितास्ततस्तद्भरेण तन्मूलभूमिस्त्रुटिता तया सह भूमौ पतित्वा चूर्णिता इत्यर्थः । यद्वा दल्यमानदलायामुर्व्यां सम्यक्प्रकारेणार्पिताः प्रापिताः । कपिभिरेव भङ्क्त्वा क्षिप्ता इत्यर्थः । तदभिघातेन भूमिरपि खण्डितेति दल्यमानपदतात्पर्यम् । यद्वा पूर्वनिपातानियमाद्विषमानीतशैलपार्श्वायितास्तत्र विषमानीतो वक्रीकृतो यः शैलस्तस्य पार्श्वायिताः पञ्जरायिताः । नतोन्नतत्वेन सान्तरालत्वादित्यर्थः । वस्तुतस्तु पादपाश्चूर्णिताश्च । कीदृशाः । पार्श्वायिते शैले विषमा नतोन्नतत्वेन स्कन्धाद्यारोपणप्रतिकूलाः । अत एव नीता हस्तेनावञ्चितास्त एव दल्यमानदलोर्व्या समापिताः । क्षेपणानन्तरं तया सह भूमौ विशीर्णा इत्यर्थः । 'अलुव्वि' इति पाठे दल्यमाना तलोर्वी वृक्षतलभूमिरिति व्याख्येयम् । जलधराश्च विघटमानस्य महेन्द्रपर्वतस्य रवेण दलनोत्थेनावृता आच्छन्नाः सन्तो घूर्णन्ते । शब्दभयेन तदनवच्छिन्नदेशगमनायेत्यर्थः । एवं शैले पार्श्वायिते वनलताश्च घूर्णन्ते । तदाश्रितत्वादुद्वृत्य पतन्तीत्यर्थः । किंभूताः । महीं पृथ्वीं दरं ईषद्वापिताः प्रापिताः । उद्वर्तने सति किंचिद्भूसंबन्धात् । वापिता इति 'वा गतिगन्धनयोः' अस्य णिचि ॥

सर्पाणां दर्पानाह—

तुट्टन्ता वि ससद्दं पवअभुअक्खेवमूलवलिअद्धन्ता ।
भुअएहि भोअभारा सेलभरङ्कुसइअप्फणेहि ण णाआ ॥ ६३ ॥
[त्रुट्यन्तोऽपि सशब्दं प्लवगभुजक्षेपमूलवलितार्धान्ताः ।
भुजगैर्भोगभाराः शैलभराङ्कुशायितफणैर्न ज्ञाताः ॥]

भुजगैः सशब्दं यथा स्यात्तथा त्रुट्यन्तोऽपि भोगभाराः शरीरभारा न ज्ञाताः । कीदृशैः । शैलभरेऽङ्कुशायितोऽङ्कुशाकारः फणो येषां तैः । भोगभाराः कीदृशाः । प्लवगभुजाभ्यां क्षेप उत्क्षेपणं तेन हेतुना मूलेऽर्थाद्भूमेर्वलितो वक्रीभूतोऽर्धान्तो ऽन्तार्धं पुच्छभागो येषां ते । तथा चाकृष्यमाणशैलरक्षानिमित्तं शैलो मूले फण

संदष्टः पुच्छभागस्तु स्वाकर्षणभयाद्भूमिमूले वक्रीकृतः । तदवस्थायां शैलाकर्षणादहिदेहो मध्ये छिन्नस्तथापि फणसंदंशनिवृत्तिर्न जातेत्यज्ञानेन चोत्यत इति सर्पाणां तेजस्वित्वं कपीनां तु बलवत्त्वमुक्तम् ॥

अथ शैलोत्पाटनमाह—

दरदाविअपाआलं दरउक्खित्तविहलोसरन्तभुअंगम् ।
दीसइ हीरन्तं मिव कईहि दरतुलिअमहिहरं महिवेढम् ॥ ६४ ॥

[दरदर्शितपातालं दरोत्क्षिप्तविह्वलापसरद्भुजंगम् ।
दृश्यते ह्रियमाणमिव कपिभिर्दरतुलितमहीधरं महीवेष्टम् ॥]

दर ईषत्तुलित उत्तोलितो महीधरो यस्मात्तथाभूतं महीवेष्टं कपिभिर्ह्रियमाणमिव दृश्यते । पर्वतो यत्र किंचिदप्युत्थाप्यते तत्र महीमण्डलोत्थापनमेव प्रतीयत इति पातालव्यापकमूलकत्वं महीतोऽप्यधिकपरिमाणत्वं च गिरीणामिति भावः । कीदृक् । ईषद्दर्शितं पातालं यत्र । एवं किंचिदुत्क्षिप्त उत्थापितोऽत एव विह्वलः सन्नपसरन्नधो गच्छन्भुजंगो यस्मात् । तथा च महीमण्डलोत्तोलन इव पर्वतोत्तोलनेऽपि पातालदर्शनं भुजंगापसरणमित्युत्प्रेक्षानुगुणं विशेषणद्वयम् ॥

पर्वतीयमीनमहिषक्षोभमाह—

मीणउलाइ अविअ सिढिलेन्ति जीविअं ण अ णदीहराइं
विअसन्ते मुअन्ति धरणिहरसंभमे णअणदीहराइं ।
महिसउलाण (फलिह)मणिसिलावेल्लिआण वणचन्दणासिआणं
अवसेसो वि णत्थि तिमिरुग्गमाण जह चन्दणासिआणम् ॥ ६५॥

[मीनकुलान्यपि च शिथिलयन्ति जीवितं न च नदीगृहाणि (नदीह्रदान्वा)
विकसति मुञ्चति धरणिधरसंभ्रमे नयनदीर्घाणि ।
महिषकुलानां (स्फटिक)मणिशिलाप्रेरितानां वनचन्दनाश्रितानामवशेषोऽपि नास्ति तिमिरोद्गमानां यथा चन्द्रनाशितानाम् ॥]

धरणिधरसंभ्रमे विकसति मीनकुलानि कर्तॄणि जीवितमपि शिथिलयन्ति न च नदीरूपाणि गृहाणि मुञ्चन्ति । अत्र यत्स्यात्तत्स्यादिति कृत्वा तत्र स्थित्वा जीवितमपि नाशयन्ति न तु भयादन्यत्र गच्छन्तीत्यर्थः । मीनकुलानि कीदृशानि । नयनव-

द्दीर्घाणि नयनेन दीर्घाणि दीर्घनयनानीति वा। एतेन तद्व्यापकमाकारमहत्त्वमायातीति संप्रदायः। वयं तु—कीदृशानि। न च न दीर्घाणि अपि त्वतिदीर्घाणि। निषेधद्वयबलात्। यद्वा नतनदीभराणि नगनदीभराणि वा। नतानां निम्नानां गम्भीराणां नदीनां नगनदीनां वा भरः पूर्णता येभ्यस्तानि। प्रवाहपूरणक्षमदेहत्वात्। यद्वा नतनदीधराणि नगनदीधराणि वा। नता नदीर्नगनदीर्वा धारयन्ति स्वशरीरेण सेतुवदवष्टभ्नन्तीत्यर्थः। एतेन मीनानां महत्त्वमुक्तम्। वस्तुतस्तु संभ्रमे विकसति सति मीनकुलानि नगनदीगृहाणि नतनदीगृहाणि वा न च न मुञ्चन्ति अपि तु मुञ्चन्ति। अत एव जीवितमपि शिथिलयन्ति। संभ्रमान्नदीमपि त्यक्त्वा यान्ति तत्र जलविरहाज्जीवितमपि नाशयन्तीत्यर्थः। कीदृशानि। दीर्घाणि इति कर्मकर्त्रोरपि विशेषणमिति ब्रूमः। एवं वनचन्दनाश्रितानां महिषकुलानां (स्फटिक)मणिशिलाभिः प्रेरितानां सतामवशेषोऽपि नास्ति। पर्वतानां वक्रभावे स्वभावपिच्छिलस्फटिकभूमेः स्खलनात्सर्वमेव नश्यतीत्यर्थः। दृष्टान्तयति—यथा चन्द्रेण नाशितानां तिमिरोद्गमानामवशेषोऽपि न तिष्ठतीति चन्द्रस्फटिकयोस्तिमिरमहिषयोः सितासिताभ्यां साम्यमिति संप्रदायः। मम तु किंचिच्चमत्करोति—किंभूतानां महिषकुलानां वनचन्दनासितानां वनचन्दनेष्वासितानामुपविष्टानाम्। अथवा वनचन्दनेषु आ अत्यर्थेन असितानां श्यामानाम्। चन्दनानां शुभ्रत्वेन तन्मध्ये महिषश्यामिकोद्रेकादित्यर्थः। यद्वा वनचन्दनासिकानां वनचन्दने आसिका उपवेशनं येषाम्। यद्वा वनचन्दनमस्यति क्षिपतीति वनचन्दनासि तादृकं मस्तकं येषामिति वा। शृङ्गाभ्यां तत्क्षेपणात्। चन्दनस्य पत्रसत्त्वेन अशितं भुक्तं वनचन्दनं यैस्तेषामशितवनचन्दनानामिति वा। निगर्वस्तु—महिषकुलानामवशेषोऽपि नास्ति। कीदृशानामिव। फडिहमणिसिलाबेल्लिआणव्व स्फटिकमणिशिलाप्रेरितानामिव। स्फटिकमणिशिलाभिः प्रेरितानामिवेत्यर्थः। पुनः कीदृशानाम्। निषेधद्वयेन न वनचन्दनमश्रितानामपि तु वनचन्दनं श्रितानाम्। तथा च वनचन्दनस्थितानां नाशप्रयोजकवास्तविकस्फटिकभूमिकर्तृकप्रेरणहेतुकत्वमुत्प्रेक्षितम्। अन्योऽपि कुतश्चित्कंचित्प्रेरयति ततः स पतित्वा नश्यतीति ध्वनिरिति विस्तरभिया संक्षेपः॥

अथोत्तोलितपर्वतानां भ्रंशमाह—

**अद्धेअद्धप्फुडिआ अद्धेअद्धकडउक्खअसिलावेढा ।**
**पवअभुआइअविसढा अद्धेअद्धसिहरा पडन्ति महिहरा ॥ ६६ ॥**

[अर्धार्धस्फुटिता अर्धार्धकटकोत्खातशिलावेष्टाः ।
प्लवगभुजाहतविशीर्णा अर्धार्धशिखराः पतन्ति महीधराः ॥]

प्लवगभुजेनाहतास्ताडिता अत एव विशीर्णाः खण्डखण्डीभूता महीधराः पतन्ति । विशीर्णताप्रकारमाह—कीदृशाः । अर्धं चार्धं चार्धार्धं तद्यथा भवति तथा स्फुटिताः । मध्ये द्विधाभूता इत्यर्थः । एवमर्धार्धं द्विखण्डीभूतं यत्कटकं तस्मादुत्खातं तुलित्वा पतितं शिलावेष्टं येषां ते । एवमर्धार्धमर्धद्वयीभूतं शिखरं येषां ते । तथा च गुरु द्रव्यमुत्तोलने सति बलादुपर्युपरि क्रियमाणं करतलाहतिविषयो भवतीति । तथा क्रियमाणे मध्ये नितम्बे शृङ्गे च द्विधाभूय पतिता इत्याशयः । यद्वा अर्धे मध्येऽर्धस्फुटिता अर्धं समांशं यथा भवति तथा स्फुटिताः । अथार्धद्वयं वृत्तं तत्रैकस्मिन्नर्धे कटकभागीयेऽर्धकटकात्कटकार्धादुत्खातशिलावेष्टाः । एवमपरत्रार्धे शिखरभागीये अर्धशिखरा अर्धं शिखरं येषां ते । तथा च स्थानत्रयेऽपि त्रुटिता इति वयमुन्नीतवन्तः ॥

कपीनां कार्यपरतामाह—

**जस्स सिहरं विवज्जइ पडिअं फुडिओ अ जो धरिज्जइ सेलो ।**
**सो च्चेअ विसज्जिज्जइ उक्खन्तूण वि अपूरमाणम्मि भरे ॥६७॥**

[यस्य शिखरं विपद्यते पतितं स्फुटितश्च यो ध्रियते शैलः ।
स एव विसृज्यते उत्खायाप्यपूर्यमाणे भरे ॥]

यस्य शिखरं पतितं सद्विपद्यते स्फुटति अदृढमित्यर्थः । स्फुटितश्च स्वभावास्फुटित एव । यश्च ध्रियते । यद्वा स्फुटितः सन् यश्च ध्रियते । ध्रियमाण एव स्फुटतीत्यर्थः । अत्यन्तादार्ढ्यप्रदर्शनाय कार्यस्यापि स्फुटनस्य कारणाद्धारणात्पूर्वकालत्वं तेन प्रतिपादितम् । तदुक्तम्—'कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः' इति । स एव शैल उत्खायाप्युत्पाट्यापि विसृज्यते त्यज्यते । क सति । भरे कार्ये कार्याध्यवसाये वा आपूर्यमाणे सति । तथा च कार्याक्षमत्वेनादृढस्य त्यागादन्यस्य च दृढस्योत्पाटने साकाङ्क्षत्वात्कपीनां बलवत्त्वमुद्योगशीलत्वं चोक्तम् । कार्योपयुक्ता एवाद्रियन्त इति ध्वनिः । एकत्र शिखरस्य परत्र शिखरिणो दार्ढ्याभाव उक्त इत्यपौनरुक्त्यम् ॥

गजवधूनामवस्थामाह—

**लोअणवत्तन्तरिए कणे रुअन्तीओ**
**धारेन्ति वाहमइए कणेरुअन्तीओ ।**

मण्णेन्ति अ आसाअं विसं णवअणस्स
विरहम्मि जूहवइणो विसण्णवअणस्स ॥ ६८ ॥
[लोचनपत्रान्तरितान्कणान्रुदत्यो
धारयन्ति बाष्पमयान्करेणुपङ्क्तयः ।
मन्यन्ते चास्वादं विषं नवतृणस्य
विरहे यूथपतेर्विषण्णवदनस्य (विसंज्ञवचनस्य वा) ॥]

यूथपतेर्गजराजस्य संभ्रमेण विश्लिष्टस्य विरहे सति करेणुपङ्क्तयो लोचनपत्रं पक्ष्म तदन्तरितान्बाष्पमयान्कणान्धारयन्ति । अश्रुत्यागं कुर्वन्तीत्यर्थः । नवतृणस्य चास्वादं विषं मन्यन्ते । तं विना तमपि न कुर्वन्तीत्यर्थः । यूथपतेः किंभूतस्य । विषण्णं विषादशालि वदनं यस्य । यद्वा विसंज्ञं चैतन्यशून्यं वचनं यस्य । वयं तु— नवगणस्य यूथान्तरस्यासादं प्राप्तिं विषं मन्यन्ते । तत्रापि नानुरज्यन्तीत्यर्थ इति ॥

शेषनागस्यावस्थामाह—

सेलुद्धरणारोसिअभुअइन्दणिराअअप्फणणिसम्मन्ती ।
जह जह संखोहिज्जइ तह तह कइदेहभरसहा होइ मही ॥ ६९॥
[शैलोद्धरणारोषितभुजगेन्द्रनिरायतफणनिषीदन्ती ।
यथा यथा संक्षोभ्यते तथा तथा कपिदेहभरसहा भवति मही ॥]

मही यथा यथा संक्षोभ्यते पर्वतोत्पाटनव्यापारेणान्दोल्यते तथा तथा कपीनां देहगौरवसहा भवति । अत्र हेतुमाह—कीदृशी । शैलोद्धरणादारोपितस्य शेषस्य फणाभङ्गभीरुतया निरायतेषु दीर्घीकृत्योत्थापितेषु फणेषु निषीदन्ती स्थिरीभवन्ती । तथा च पर्वतोपमर्देन भूम्युपमर्दः । तेन शेषस्य भारगौरवम् । तेन फणोत्तोलनम् । तेन भूमेः स्थैर्यम् । तेन च कपिभारसहत्वमिति हेतुपरम्परा । विपदि महतामवलम्बनं महान्त एवेति ध्वनिः ॥

गुरुपर्वतखण्डनमाह—

संचालिअणिक्कम्पा भुआणिहाअविसमुक्खअसिलावेढा ।
खुडिआ सिहरद्धेसु अ पवएहि णिअम्बबन्धणेसु अ सेला ॥७०॥
[संचालितनिष्कम्पा भुजानिवातविषमोत्खातशिलावेष्टाः ।
खण्डिताः शिखरार्धेषु च प्लवगैर्नितम्बबन्धनेषु च शैलाः ॥]

संचालिताः संचालयितुमारब्धाः सन्तो निष्कम्पाः शैलाः प्लवगैः शिखरार्धेष्व-नपेक्षितशिखरभागसंधिषु नितम्बबन्धनेषु नितम्बस्यूतिसंधिषु च खण्डिताः । आमोट्य त्रोटिता इत्यर्थः । कीदृशाः । भुजानिघातेन भुजाभिहत्या उत्खातानि स्कन्धारोपणसौकर्याय खण्डितानि विषमाणि निम्नोन्नतानि शिलावेष्टानि येषां ते । निष्कम्पत्वेनोत्पाटने विलम्बः स्यादिति मूलमत्रं च निरस्योपयुक्तमध्यभाग एव सुसमीक्ष्य गृहीत इत्याशयः ॥

गिरीणां महत्त्वमाह—

उण्णामिअं मिव णहं दूरं ओसारिआ विव दिसाहोआ ।
उम्मूलन्तेहि धरे पसारिअं मिव पवंगमेहि महिअलम् ॥ ७१ ॥

[उन्नामितमिव नभो दूरमपसारिता इव दिगाभोगाः ।
उन्मूलयद्भिर्धरान्प्रसारितमिव प्लवंगमैर्महीतलम् ॥]

धरान्पर्वतानुन्मूलयद्भिः प्लवंगमैर्नभ उन्नामितमिव ऊर्ध्वं नीतमिव । पर्वतोन्न-मनात् । एवं दिगाभोगा दिग्विस्तारा दूरं व्याप्यापसारिता इव बहिःकृता इव । पर्वतविस्ताराक्रान्तत्वात् । एवं महीतलं प्रसारितमिव सावकाशीकृतमिव । पर्वत-मूलोत्थापनेन सप्रकाशत्वादिति गिरीणामग्रमध्यमूलभागोत्कर्ष उक्तः ॥

गिरिमूलखातगाम्भीर्यमाह—

दीसइ कइणिवहुक्खअधराहरट्ठाणगहिरविवरुत्तिण्णो ।
उप्पाआअवअम्बो सेसाहिप्फणमणिप्पहाविच्छड्डो ॥ ७२ ॥

[दृश्यते कपिनिवहोत्खातधराधरस्थानगभीरविवरोत्तीर्णः ।
उत्पातातपाताम्रः शेषाहिफणमणिप्रभाविच्छर्दः ॥]

कपिनिवहेनोत्खातानां धराधराणां स्थानान्यवस्थितिप्रदेशास्तान्येव गभीरविव-राणि तैरुत्तीर्णः पातालादूर्ध्वमुद्गतः शेषरूपस्याहेः सर्पस्य फणमणीनां प्रभासमूह उत्पातातपवदाताम्रो दृश्यते । गिरिविवरेषु पातालतिमिरसंक्रमाद्धूम्रत्वेन मणिप्रभाणां प्रातरुत्पातरूपधूमधूम्रतरणितेजोभिः साम्यम् । शेषस्य नानाफणानां नानामणीनां नानाविवरवर्त्मना विनिर्गम इति । समूहवाचि विच्छर्दपदम् ॥

वानराणां बलवत्तामाह—

केलासदिट्ठसारं गरुअं पि भुआबलं णिसाअरवइणो ।
पवएहि पाडिएक्कं एक्ककरुक्खित्तमहिहरेहि लहुइअम् ॥ ७३ ॥

[कैलासदृष्टसारं गुरुकमपि भुजाबलं निशाचरपतेः ।
प्लवगैः प्रत्येकमेककरोत्क्षिप्तमहीधरैर्लघूकृतम् ॥]

प्लवगैर्निशाचरपते रावणस्य कैलासे दृष्टं सारमुत्कर्षो यस्य तादृशम् । अत एव गुरुकमपि भुजानां बलं लघूकृतम् । अत्र हेतुमाह—कीदृशैः । प्रत्येकं प्रतिव्यक्ति एककरेणोत्क्षिप्त उत्थाप्य प्रेरितो महीधरो यैस्तैः । तथा च रावणो विंशत्या भुजैः कैलासमान्दोलयामास कपयस्त्वेकैके एकैकेन करेण एकैकानपि गिरीनुत्क्षिपन्ति स्मेति बलं तस्यानादरविषयोऽभूदित्यर्थः ॥

उत्पाटितपर्वतमूलस्थानमाह—

उक्खअगिरिविवरोवइअदिणअराअवमिलन्ततमसंघातम् ।
जाअं पविरलतिमिरं आवण्डुरधूमधूसरं पाआलम् ॥ ७४ ॥

[उत्खातगिरिविवरावपतितदिनकरातपमिलत्तमःसंघातम् ।
जातं प्रविरलतिमिरमापाण्डुरधूमधूसरं पातालम् ॥]

उत्खातानां गिरीणां विवरेषु मूलस्थानेष्ववपतितैर्दिनकरातपैर्मिलंस्तमःसंघातो यत्र तादृशं पातालं प्रविरलं तिमिरं यत्र तथाभूतं सत् आपाण्डुरः शुभ्रश्यामो यो धूमस्तद्वद्धूसरं जातम् । तथा चोत्पाटितगिरिविवरेण रविरश्मयः पातालं प्रविष्टास्तत्र च तैस्तिमिराणां नाशेऽपि कियतां क्वचित्क्वचिन्निम्नेषु सत्त्वेन तदुभयमिश्रणात्पाण्डुर-धूमतुल्यत्वं पातालस्येति शैलानां महामूलत्वमुक्तम् । पिधानापगमे परप्रवेशो दुर्वार इति ध्वनिः ॥

कपीनां स्वामिभक्तिमाह—

पवएहि अ णिरवेक्खं कओ करन्तेहि गिरिसवासुद्धरणम् ।
सामिअकज्जेक्करसो अअसमुहे वि जसभाअणं अप्पाणो ॥ ७५ ॥

[प्लवगैश्च निरपेक्षं कृतः कुर्वद्भिर्गिरिशवासोद्धरणम् ।
स्वामिकार्यैकरसो यशोमुखेऽपि यशोभाजनमात्मा ॥]

प्लवगैरयशोमुखेऽपि दुर्यश उपक्रमेऽपि यशोभाजनमात्मा कृतश्च। कीदृक्। स्वामिकार्ये एकस्मिन्रसो यस्य तादृक्। प्लवगैः कीदृशैः। निरपेक्षमपेक्षाशून्यं यथा भवत्येवं गिरिशवासः कैलासस्तदुद्धरणं तदुत्पाटनं कुर्वद्भिः। तथा च पर्वतानुत्पाटयद्भिः कपिभिः प्रसङ्गात्कैलासोऽप्युत्पाटित इति भर्गभवनभङ्गादपयशो यद्यपि तथापि स्वामिकार्याय तथा कृतमतो यश एवासीदिति स्वामिकार्यमकृत्यमपि कृत्वा कुर्यादिति ध्वनिः॥

अथ कपीनां वेगमाह—

**होन्ति गरुआ वि लहुआ पवंगभुअसिहरणिमिअवित्थअमूला।**
**रहसुद्धाइअमारुअदूरुक्खित्तोज्झरा धराधरणिवहा॥ ७६॥**

[भवन्ति गुरुका अपि लघुकाः प्लवंगभुजशिखरनिवेशितविस्तृतमूलाः।
रभसोद्धावितमारुतदूरोत्क्षिप्तनिर्झरा धराधरनिवहाः॥]

गुरुका गुरुत्वयुक्ता अपि धराधराणां निवहा लघवो भवन्ति। तदानीमित्यर्थात्। किंभूताः। प्लवगैर्भुजानां शिखरेष्वग्रेषु। हस्तेष्वित्यर्थः। निवेशितं विस्तृतं मूलं येषां ते। लाघवहेतुमाह—रभसेन वेगेन प्लवंगमानामेव उद्धावित उत्थितो यो मारुतस्तेन दूरमुत्क्षिप्ता उद्धूय पातिता निर्झरा येषां ते। अयमर्थः—कपिभिः पर्वतानुत्पाट्य स्कन्धावष्टम्भेन वामकरतले तन्नितम्बमारोप्य वेगितम्, अथ वेगादभ्युद्गतैर्गिरिविवरचारिभिः पवनैरूर्ध्वं नीत्वापि निपातिता निर्झरा इति निर्झरकृतगुरुत्वाभावाल्लघुत्वमासीद्गिरीणामिति प्लवगानां वेगबलोत्कर्षः। सर्वस्वापगमे लघुत्वमेव भवतीति च ध्वनिः॥

अथ कपीनामागमनायोत्फालमाह—

**अह वेएण पवंगा सअलं आअड्ढिऊण महिहरणिवहम्।**
**ओवअणाहि वि लहुअं वीसज्जिअकलअलं णहं उप्पइआ॥७७॥**

[अथ वेगेन प्लवंगाः सकलमाकृष्य महीधरनिवहम्।
अवपतनादपि लघुकं विसृष्टकलकलं नभ उत्पतिताः॥]

अथ पर्वतोत्पाटनानन्तरं प्लवंगा अवपतनादपि लघुकं क्षिप्रं यथा स्याद्विसृष्टः पर्वताहरणजन्योत्साहेन सकलसंज्ञानिमित्तं वा कलकलः शब्दविशेषो यत्र तच्च यथा स्यादेवं वेगेन नभो लक्ष्यीकृत्योत्पतिता उत्फालं कृतवन्तः। किं कृत्वा। सकलं महीधराणां निवहमाकृष्य। हस्ते कृत्वेत्यर्थः। तथा चागमनसमये आकाशादधःपतने

यल्लाघवं तदपेक्षयाप्युत्पतने ऊर्ध्वगमनव्यलीकपर्वतभारवत्त्वेऽपि महल्लाघवमासीदिति कपीनामुत्साहाधिक्यं बलवत्त्वं च सूचितम् । वस्तुतस्तु वेगेनाकृष्येत्यन्वयः । वयं तु—वेगेनावपतनादपि लघुकमिति संबन्धः कर्तव्यस्तेन वेगपदमनर्थकं नापतति । उत्पतने च लाघवोत्कर्षो व्यङ्ग्यो भवति । एवं नभः किंभूतम् । विसृष्टः समाप्तः कलकलो यत्र तत् । तथा च भूमावारब्धस्य कलकलस्य नभसि त्यागेनोत्पतनस्यातिलघुत्वमवगम्यते तदव्याप्यत्वादित्यर्थ इति ब्रूमः ॥

अथ कपीनां गगनारोहणमाह—

**चडुलेहि णिप्पअम्पा उप्पइअव्वलहुएहि वित्थअगरुआ ।**
**एक्कक्खेवेण णहं पक्खेहि व महिहरा कईहि विलइआ ॥ ७८ ॥**

[चटुलैर्निष्प्रकम्पा उत्पतितव्यलघुकैर्विस्तृतगुरुकाः ।
एकक्षेपेण नभः पक्षैरिव महीधराः कपिभिर्विलगिताः ॥]

महीधराः पक्षैरिव कपिभिः करणभूतैरेकक्षेपेणैकप्रयत्नेन । समकालमित्यर्थः । नभो विलगिताः प्रापवन्तः । शैलाः स्वभावतः पक्षिण एव । तदानीं पक्षविरहात्कपय एव पक्षत्वेनोत्प्रेक्षिताः । अन्येऽपि पक्षिणः संभूय सहसैवोड्डयन्त इति ध्वनिमुखेन सपर्वताः कपयः सहसैव गगनं गता इत्यर्थेन सर्वेषां समानपराक्रमत्वमुक्तम् । पक्षतौल्यमाह—कपिभिः किंभूतैः । चटुलैर्नभसि चञ्चलैः एवमुत्पतितव्ये उत्पतने लघुकैः क्षिप्रैः । उड्डयनकाले पक्षोऽप्येवमेव भवतीति भावः । महीधराः कीदृशाः । निष्प्रकम्पाः । स्थिरा इत्यर्थः । एवं विस्तृताः सन्तो गुरुका गौरवयुक्ताः । पक्षिणोऽप्येवमेव भवन्ति । न च प्रत्येकपर्वतस्य प्रत्येकवानरहरणीयत्वेन द्वितीयपक्षाभाव इति वाच्यम् । मिथो विमिश्रत्वेन पर्वतान्तरलग्नकपिना परपार्श्वपक्षसत्त्वप्रतीतेः । एवं कपीनां पक्षत्वोत्प्रेक्षया तदपेक्षया गिरीणामतिमहत्त्वं तदाहरणेन च तेषां बलवत्त्वमुक्तम् । कपिभिः कर्तृभूतैः पर्वता नभो नीता उत्पतनकारणत्वात्पक्षैरिवेत्युक्तमिति केचित् ॥

अथ पर्वतखातपूरणमाह—

**पवअक्कन्तविमुक्कं विसमुद्धप्फुडिअपत्थिअणिअत्तन्तम् ।**
**घडिअं घडन्तणइमुहसंदाणिअसेलणिग्गमं महिवेढम् ॥ ७९ ॥**

[प्लवगाक्रान्तविमुक्तं विषमोर्ध्वस्फुटितप्रस्थितनिवर्तमानम् ।
घटितं घटमाननदीमुखसंदानितशैलनिर्गमं महीवेष्टम् ॥]

महीवेष्टं घटितं प्रागिव मिलित्वा समीभूतम्। कीदृक्। प्लवगानामाक्रान्तेनाक्रमणेन। भावे क्तः। विमुक्तं स्फुटितम्। पर्वतोत्पाटनेन सखातीभूतमिति यावत्। एवं घटमानेन मिलता नदीमुखेन नदीप्रवाहेण संदानितः संयोजितः शैलनिर्गमः शैलमूलखातो यत्र तत्तथा। एवं विषमं नतोन्नतं पूर्वपातानियमेनोर्ध्वप्रस्थितं सत्स्फुटितं त्रुटितं पश्चान्निवृत्तं तत्खाते पतितम्। अयमर्थः—पर्वतोत्पाटनेन कियत्यो मृत्तिकाः खातपार्श्व एव तिर्यगूर्ध्वमुत्थिताः अथोत्तोलितगिरिनिर्झरपातपूरिते तत्खाते जलसंबन्धात्त्रुटित्वा पुनः पतितास्तेन तद्विवरमुद्रणम्। यद्वा उत्तोलितपर्वतमूललग्नैव मृत्तिका विषमा ऊर्ध्वप्रस्थिता अथ निर्झरेण सह त्रुटित्वा निवृत्त्य तत्खात एव प्रविष्टेति प्रकृतभूमितुल्यतेति संप्रदायः। वस्तुतस्तु प्लवगेनाक्रान्तमवपतनादथोत्पतनेन विमुक्तं त्यक्तमथ विषमं सदूर्ध्वेऽन्तरिक्षे पर्वतमूले लग्नमुत्थितं पुनः स्फुटितं त्रुटितमत एव प्रस्थितं शैलेन सहेत्यर्थात् पश्चान्निवर्तमानं त्रुटनानन्तरमध एवागतं महीवेष्टं घटितं प्रागिव संबद्धम्। तत्र हेतुमाह—घटमानेत्यादि। तथा च प्लवगेन केनचिद्गिरय उत्पतनकाल एवोत्थापितास्तेन तन्मूलभूमिरपि कियद्दूरमुत्थाय निजखात एव पतितेति सति भूमिपर्वतयोरन्तरा विच्छेदे पुनः पर्वतमूलेनोर्ध्वतः पतता निर्झरजलेन पर्वतसमानाकारेण भूमिपर्वतयोरन्तरादेश एकीकृत इति निर्झरमहत्त्वेन गिरिमहत्त्वमुक्तमिति मदुन्नीतः पन्थाः॥

मृगीणां वैयग्र्यमाह—

**हीरन्तमहिहराहिँ मईहि भअहित्थपत्थिअणिअत्ताहिँ।**
**सोहन्ति खणविवत्तिअससंभमुम्मुहपलोइआइ वणाइं॥ ८०॥**

[ह्रियमाणमहीधराभिर्मृगीभिर्भयोद्विग्नप्रस्थितनिवृत्ताभिः।
शोभन्ते क्षणविवर्तितससंभ्रमोन्मुखप्रलोकितानि वनानि॥]

वनानि शोभन्ते। ह्रियमाणपर्वतानामित्यर्थात्। किंभूतानि। ह्रियमाणो महीधरो यासां ताभिर्मृगीभिः क्षणं व्याप्य विवर्तितं किमिदमिति जिज्ञासया विलोकितं ससंभ्रमं सत्रासमत एवोन्मुखं यथा स्यात्तथा प्रलोकितानि। स्नेहविषयत्वात्। मृगीभिः कीदृशीभिः। भयेनोद्विग्नाभिः अत एवान्यत्र गन्तुं प्रस्थिताभिः अथ निवृत्ताभिः परावृत्य स्थिताभिः। मृगैः संभ्रमे सति कियद्दूरं गत्वोन्मुखीभूय परावृत्य विलोक्यत इति जातिरलंकारः॥

नदीनां प्रवाहमाह—

उम्मूलिआण खुडिआ उक्खिप्पन्ताण उज्जुअं ओसरिआ ।
णिज्जन्ताण णिराआ गिरीण मग्गेण पत्थिआ णइसोत्ता ॥ ८१ ॥

[उन्मूलितानां खण्डितान्युत्क्षिप्यमाणामृजुकमपसृतानि ।
नीयमानानां निरायतानि गिरीणां मार्गेण प्रस्थितानि नदीस्रोतांसि ॥]

नदीस्रोतांसि गिरीणां मार्गेण प्रस्थितानि । गिरीणां यावस्था सा नदीनामपीत्यर्थः । तदेवाह—किंभूतानां सतां किंभूतानि । उन्मूलितानां खण्डितानि । यदा गिरय उन्मूलितास्तदा यथा तेषां भूसंबन्धः खण्डितस्तथा स्रोतसामपीत्यर्थः । एवमन्यत्रापि । यदा गिरय उत्क्षिप्यमाणतया ऋजूकृतास्तदा तान्यपि ऋजुकमपसृतानि । ऋजूभूय पतितानीत्यर्थः । आर्जवमात्रे तौल्यम् । एवं यदा गिरयस्तिर्यग्नभसि नीयमाना दीर्घा इव जातास्तदा तत्पृष्ठाकाशदेशे व्यवच्छिद्य पतितानि स्रोतांसि निरायतानि पवनवेगवशाच्चिरं दीर्घाणि जातानीत्यर्थः ॥

अथ गिरीणामुद्वहनमाह—

उम्मुहसारङ्गअणं अप्फुन्दइ मलिअमेहसारं गअणम् ।
विवरब्भन्तरविहअं गिरिआलं सिहरपरिभमन्तरविहअम् ॥८२॥

[उन्मुखसारङ्गगणमाक्रामति मृदितमेघसारं गगनम् ।
विवराभ्यन्तरविहगं गिरिजालं शिखरपरिभ्रमद्रविहयम् ॥]

गिरिजालं कर्तृ गगनमाक्रामति । कीदृग्गिरिजालं गगनं वा । कुत्र गम्यते किं स्यादिति कृत्वा उन्मुखः सारङ्गाणां कुरङ्गाणां गणो यत्र तत् । यद्वा उन्मुख ऊर्ध्वमुखः सारङ्गाणां चातकानां गणो यस्मात् । पर्वतेषु मेघभ्रमादित्यर्थः । पुनः कीदृक् । मृदितं मेघसारं गगनवर्ति मेघजलं येन । पक्षे यत्र गिरिशिखरोल्लेखनात्तत्रत्यमेघजलक्षरणमित्यर्थः । एवं विवराभ्यन्तरे विहगा यत्र । भयेन कंदरालीनपक्षिकत्वात् । एवं शिखरेषु परिभ्रमन्तो रविहया यत्र । एतत्प्रतिरोधेन वर्त्मालाभादित्युभयसाधारणम् । कंदरा शिखरद्वारैव । 'सारङ्गश्चातके भृङ्गे कुरङ्गेऽपि मतङ्गजे' ॥

अथ पर्वतोद्वहनप्रकारमाह—

अंसट्ठविअमहिहरा उब्भिअदाहिणकरावलम्बिअसिहरा ।
उत्ताणवामकरअलधरिअणिअम्बपसरा णिअत्तन्ति कई ॥ ८३ ॥

[अंसस्थापितमहीधरा उच्छ्रितदक्षिणकरावलम्बितशिखराः।
उत्तानवामकरतलधृतनितम्बप्रसरा निवर्तन्ते कपयः॥]

अंसे स्थापितो महीधरो यैः। उच्छ्रितेन दक्षिणकरेणावलम्बितं शिखरं यैः। उत्तानेन वामकरतलेन धृतो नितम्बप्रसरो यैस्तथाभूताः कपयो निवर्तन्ते। परावर्तन्त इत्यर्थः॥

अथ कपीनां शक्तिवैचित्र्यमाह—

पत्थाणच्चिअ पढमं भुअमेत्तपहाविआण जं ण पहुत्तम्।
कह तं चिअ ताणं चिअ पहुप्पइ कईण महिहराण अ गअणम्॥ ८४

[प्रस्थान एव प्रथमं भुजमात्रप्रभावितानां यन्न प्रभूतम्।
कथं तदेव तेषामेव प्रभवति कपीनां महीधराणां च गगनम्॥]

यद्गगनं प्रथमं प्रस्थानसमय एव भुजमात्रेण पर्वतशून्यभुजेन प्रधावितानां कपीनां न प्रभूतं एतदाकारापेक्षया स्वल्पत्वान्नाङ्गमानक्षममासीत्तदेव गगनं तेषामेव कपीनां महीधराणां च कथं प्रभवति मानक्षमं जायते। यत्सर्वेऽपि सपर्वतास्तत्र संचरन्तीत्यर्थः। तथा चेदानीमिच्छया लघूकृतदेहा अपि तथाविधपर्वतानुद्वहन्तीति शक्तिवैचित्र्यम्॥

अथ नभसि गिरीणां मिथः संघट्टमाह—

वहइ पवंगमलोओ समतुलिउक्खित्तमिलिअमूलद्धन्ते।
एक्कक्कमसिहरुग्गमणिहसुप्पुसिअसरिआमुहे धरणिहरे॥ ८५॥

[वहति प्लवंगमलोकः समतुलितोत्क्षिप्तमिलितमूलार्धान्तान्।
एकक्रमशिखरोद्गमनिघर्षोत्प्रोञ्छितसरिन्मुखान्धरणीधरान्॥]

प्लवंगमलोको धरणीधरानुद्वहति। कीदृशान्। सममेकदैव तुलिता उत्तोलिता अथोत्क्षिप्ता ऊर्ध्वं नीता अथ मिलिताः परस्परसंबद्धा मूलैकदेशा येषां तान्। एवमेकक्रमेणैकरूपेणोद्गतशिखराणां निघर्षेण परस्परसंघट्टेनोत्प्रोञ्छितानि सरिन्मुखानि येषु येषां वा। तथा च कपिभिस्तथा पर्वता नीयन्ते यथा नितम्बशिखरादीनां मिथो मिलने नदीस्रोतांसि परस्परप्रतिरोधाद्भुवौ पतितुं न पारयन्तीत्यर्थः॥

अथ कपीनामधोविलोकनमाह—

**णिव्वण्णेऊण चिरं पवआ बोलेन्ति महिहरभरक्कन्ता ।**
**साअरपडिरूआइं पढमुक्खअविअडमहिहरट्ठाणाइं ॥ ८६ ॥**

[निर्वर्ण्य चिरं प्लवगा व्यतिक्रामन्ति महीधरभराक्रान्ताः ।
सागरप्रतिरूपाणि प्रथमोत्खातविकटमहीधरस्थानानि ॥]

महीधराणां भारेणाक्रान्ताः प्लवगाः प्रथमोत्खातानां विकटमहीधराणां स्थानानि मूलखातान् चिरं व्यतिक्रामन्ति लङ्घन्ते । कीदृशानि । सागरस्य प्रतिरूपाणि प्रतिबिम्बानि । समानाकारत्वात् । किं कृत्वा । निर्वर्ण्य । निर्वर्णनमहो ईदृगस्य गौरवं मूलविस्तारश्चायं तथा चामुनैव सेतुः स्यादिति निरूपणं कृत्वा । तथा चाकाशेनापि संचरमाणास्तथाविधवेगबलशालिनोऽपि भूमिनिष्ठमपि तत्खातं चिरेण लङ्घन्त इति खातविस्तारे गिरीणां महत्त्वमायाति । 'सागरपडिरूवा इव' इति पाठे सागरप्रतिरूपाणीवेत्युत्प्रेक्षा ॥

अथ नभसि नदीप्रवाहमाह—

**खणसंधिअमेहअडा वेउक्खिप्पन्तगिरिणिराअट्ठविआ ।**
**परिवड्ढन्ताआमा वहन्ति व णहङ्गणे महाणइसोत्ता ॥ ८७ ॥**

[क्षणसंहितमेघतटानि वेगोत्क्षिप्यमाणगिरिनिरायतस्थापितानि ।
परिवर्धमानायामानि वहन्तीव नभोङ्गणे महानदीस्रोतांसि ॥]

महानदीनां स्रोतांसि नभोङ्गणे प्रवहन्तीव । क्षणं व्याप्य संहिता मिलिता मेघा एव तटानि येषां तानि । मेघा एव तटभूमयो भवन्तीत्यर्थः । एवं वेगोत्क्षिप्यमाणेन गिरिणा निरायतं दीर्घं यथा स्यादेवं स्थापितानि अथ परिवर्धमान आयामो दैर्घ्यं येषां तानि । पवनवेगवशादित्यर्थः । तथा च पर्वतात्स्खलितानामपि नदीनां निरवलम्बे नभसि प्रवाहदैर्घ्यं कपीनां वेगोत्कर्षं गमयति ॥

वनगजचेष्टामाह—

**सेलेसु सेलतुङ्गा णहअलमिलिएसु मिलिअदन्तप्फलिहा ।**
**पवअविहुएसु विहुआ णिव्वडिएसु वि ण णिव्वलन्ति वणगआ ॥ ८८ ॥**

[शैलेषु शैलतुङ्गा नभस्तलमिलितेषु मिलितदन्तपरिघाः ।
प्लवगविधुतेषु विधुता निर्वलितेष्वपि न निर्वलन्ति वनगजाः ॥]

वनगजा निर्वलितेष्वपि भूमितः पृथग्भूतेष्वपि । उत्पाटितेष्वपीति यावत् । एवंभूतेषु शैलेषु न निर्वलन्ति न पृथग्भवन्ति । शैलसमानाकारत्वादित्यर्थः । तदेवाह—शैलवत्तुङ्गाः । एवं नभस्तले मिलितेषु तेषु मिलितौ निखातौ दन्तपरिघौ येषां ते । पतनभयादित्याशयः । अत एव प्लवगैर्विधुतेषु तेषु विधुताः सन्तो न निर्वलन्ति न पृथग्भवन्ति । तथा च दृढनिखातदन्तत्वात्कम्पते परं तु न पतन्तीत्यर्थः । तेन तथाविधगजसहितपर्वतोद्वहनेन कपीनामतिबलवत्त्वमुक्तम् । विपत्ताश्रयत्यागः कथमपि न कर्तव्य इति ध्वनिः ॥

दिशां छन्नतामाह—

वेविरपओहराणं दिसाण गिरिविवरदिट्ठतणुमज्झाणम् ।
कुसुमरएण सुरहिणा अग्घाएण व णिमीलिआइँ मुहाइं ॥ ८९ ॥

[वेपनशालिपयोधराणां दिशां गिरिविवरदृष्टतनुमध्यानाम् ।
कुसुमरजसा सुरभिणा आघ्रातेनेव निमीलितानि मुखानि ॥]

दिशां मुखानि सुगन्धिना कुसुमरजसा निमीलितानि मुद्रितानि । तथा च पर्वतेभ्यस्तावन्ति कुसुमरजांस्युद्गतानि यावद्भिरन्धकारोऽभूदित्यर्थः । उत्प्रेक्षते—आघ्रातेनेव । अन्यत्रापि लोकानां पङ्कजादिकुसुमरजसा आघ्रातेन मुखानि निमीलन्ति मुद्रितानि भवन्तीति ध्वनिः । समासोक्तिलभ्यनायिकात्वप्रतिपादकं विशेषणमाह—कीदृशीनाम् । पर्वताभिघातेन वेपमानाः पयोधरा मेघा यासाम् । एवं गिरीणां मिलितानामप्यन्तरान्तरा विवरेण शून्यदेशेन दृष्टं तनु कृशं मध्यं यासाम् । अन्तरालदेशस्यातिकृशत्वादित्यर्थः । नायिकापि भावेन कम्पनशीलपयोधरोत्तरीयापसारणेन दृष्टक्षीणमध्या च सुरभिकुसुमाघ्राणेन मीलितनयना भवतीत्यर्थः ॥

प्लवगानामनायासमाह—

पवआ करअलधरिए णहमुहणिब्भिण्णवेवमाणविसहरे ।
गइवसविसट्टसिहरे बिइअकरेहि परिसंठवेन्ति महिहरे ॥ ९० ॥

[प्लवगाः करतलधृतान्नखमुखनिर्भिन्नवेपमानविषधरान् ।
गतिवशविशीर्णशिखरान्द्वितीयकरैः परिसंस्थापयन्ति महीधरान् ॥]

प्लवगा एककरधृतान्महीधरान् द्वितीयकरेण परिसंस्थापयन्ति नभसि पतनशङ्कया स्थिरीकुर्वन्ति । कीदृशान् । नखमुखेन नखाग्रेण निर्भिन्ना अत एव वेपमाना

विषधरा येषु तान् । द्रष्टुमुद्यतः सर्पो नखेन विद्ध इत्यर्थः । तथा च सर्पवेधकाले एककरतलधृतत्वेन विसंष्ठुलः पर्वतः सर्पवेधोत्तरं द्वितीयकरेण स्थिरीकृत इति भावः । एवं गतिवशेन वेगवशेन विशीर्णानि शिखराणि येषां तान् ॥

कपीनां वेगोत्कर्षमाह—

**णहअलवेअपहाविअपवंगहीरन्तसेलसिहरक्खलिआ ।**
**मग्गागअसेलाणं होन्ति मुहुत्तोज्झरा महाणइसोत्ता ॥ ९१ ॥**

[नभस्तलवेगप्रधावितप्लवंगह्रियमाणशैलशिखरस्खलितानि ।
मार्गागतशैलानां भवन्ति मुहूर्तं निर्झरा महानदीस्रोतांसि ॥]

महानदीनां स्रोतांसि मार्गेण पश्चादागतानां शैलानां मुहूर्तं निर्झरा भवन्ति । कीदृशानि । नभस्तले वेगेन प्रधावितेन प्लवगेन ह्रियमाणस्य शैलस्य शिखरे स्खलितानि । च्युतानीत्यर्थः । अयमाशयः—अग्रे गतस्य प्लवगस्य वेगपवनोत्थानवशात्समधृतसूत्रायमाणं गिरिशिखराच्च्युतं स्रोतः स्फुटितुं नापत् तदानीमेव पश्चादागतगिरिशिखरे निर्झरायितं पुनरस्मिन्गतेऽपरत्रापि तथैव स्थितमिति शैलानामिति बहुवचनेन सूचितश्चिरं पतनाभावो मुहूर्तपदमहिम्ना पश्चादागतानामपि वेगातिशयं द्योतयति ॥

पुनस्तदेवाह—

**वेउक्खअदुमणिवहे तडपब्भारणिहणिवलन्तजलहरे ।**
**णेन्ति जरढाअवाहअदरिविवरणिसण्णगअउले धरणिहरे ॥ ९२ ॥**

[वेगोत्खातद्रुमनिवहांस्तटप्राग्भारनिभनिर्वलमानजलधरान् ।
नयन्ति जरठातपाहतदरीविवरनिषण्णगजकुलान्धरणीधरान् ॥]

वानरा धरणीधरान्नयन्ति प्रापयन्ति । कीदृशान् । वेगेनोत्खातो द्रुमनिवहो येभ्यस्तान् । एवं तटो नितम्बः । तटप्राग्भारतुल्या निर्वलमानाः पृथग्भूता जलधरा येभ्यस्तान् । वेगप्रेरितवाय्वभिघातेन वृक्षवन्मेघा अपि स्खलन्ति ते त्रुटितकटकबुद्धिं जनयन्तीत्यर्थः । एवं जरठैः प्रौढैरातपैराहतं स्पृष्टं सूर्यसंनिहितत्वात् अत एव शैत्याय दरीविवरेषु निषण्णं गजकुलं येषु तान् । दरीविवरनिषण्णमेवातपैराहतमिति वा ॥

अथ मलयदर्शनमाह—

**धावइ वेअपहाविअपवंगहीरन्तसेलसिहरन्तरिओ।**
**छाआणुमग्गलग्गो तुरिअं छिण्णाअओ व मलउच्छङ्गो ॥ ९३ ॥**

[धावति वेगप्रधावितप्लवंगह्रियमाणशैलशिखरान्तरितः।
छायानुमार्गलग्नस्त्वरितं छिन्नातप इव मलयोत्सङ्गः ॥]

वेगेन गच्छन्तः कपयो मलयोत्सङ्गमपि गच्छन्तमवगच्छन्ति। तदुत्प्रेक्षते—मलयोत्सङ्गस्त्वरितं धावतीव। धावने बीजमाह—कीदृक्। वेगेन प्रधावितैः प्लवंगैर्ह्रियमाणानां शैलानां शिखरैरन्तरितो व्यवहितः सन् छिन्न आतपो यस्मात्। शिखरैरेव सच्छिन्नातपः। अत एव च्छायायां ह्रियमाणपर्वतानामित्यर्थात्। अनुमार्गलग्नः पश्चाल्लग्नः। अयमभिप्रायः—उपरि ह्रियमाणगिरिभिर्व्यवधाय निवारितसूर्यातपः पुनस्तत्स्पर्शभीरुर्मलयोत्सङ्गो यथा यथा गिरयो धावन्ति तथा तथा तच्छायामिवानुवर्तमानः स्वयमपि धावति। यद्वा अन्यत्तुल्यमेव। छायया तद्गिरिस्फटिकभित्तिगतप्रतिबिम्बेनानुमार्गलग्नः पृष्ठलग्नः। तथा च तदातपभिया तद्गिरिं पृष्ठलग्नच्छायार्थमेव धावतीत्यर्थः। एवंविधभ्रमस्य नौकादिगमने दृष्टत्वादिति भावः॥

अथ कपीनां कार्योत्साहमाह—

**आलोइआ ण दिट्ठा सच्चविआ ण गहिआ समोवइएहिं।**
**उम्मूलिआ वि जेहिं तेहिं ण उअहिं णिआ कईहि महिहरा ९४**

[आलोकिता न दृष्टाः सत्यापिता न गृहीताः समवपतितैः।
उन्मूलिता अपि यैस्तैर्नोदधिं नीताः कपिभिर्महीधराः ॥]

महीधराः प्रथमं दूरादपि यैरालोकितास्तैः पुनर्न दृष्टाः। तदानीमेवान्यैरुत्पाटितत्वादिति भावः। एवं यैः सत्यापिता ग्रहीतुं स्थिरीकृतास्तैर्न गृहीताः। किंत्वन्यैरेवेत्यर्थः। वस्तुतस्तु दूरादालोकिताः सत्यापिता अपि पूर्ववेगवशादुल्लङ्घ्य गतैः पुनर्न दृष्टा न च गृहीता इति भावः। एवं सममेकदैवावपतितैर्यैरुन्मूलिता उत्पाटिता अपि तैरुदधिं न नीताः। किं तु क्षिप्रकारिभिरन्यैरेवेत्यर्थः। एतेन त्वरातिशयः सूचितः॥

अथ प्लवगानां गतिमार्गमाह—

**भग्गदुमभङ्गभरिओ उक्खित्तविसट्टपडिअमहिहरविसमो।**
**पवआण उअहिलग्गो लक्खिज्जइ बिइअसंकमो व गइवहो ॥९५॥**

[भग्नद्रुमभङ्गभृत उत्क्षिप्तविशीर्णपतितमहीधरविषमः ।
प्लवगानामुदधिलग्नो लक्ष्यते द्वितीयसंक्रम इव गतिपथः ॥]

समुद्रलग्नः प्लवगानां गतिपथः संचारमार्गोऽधोवर्ती पथाकारो भूप्रदेशो द्वितीयसंक्रम इव द्वितीयसेतुरिव लक्ष्यते । कीदृक् । संक्षोभाद्भग्नद्रुमाणां भङ्गैः खण्डैर्भृतो व्याप्तः । एवं प्रथममुत्क्षिप्ताः सन्तो विशीर्णा उत्क्षेपणाभिघातेन खण्डशो भूता अथ पतिताः । भूमावित्यर्थात् । एवंभूता ये महीधरास्तैर्विषमो निम्नोन्नतः । संक्रमोऽप्येवमेव द्रुमशैलभङ्गपूर्णो भवतीत्यर्थः । पतत्पर्वतवृक्षखण्डपूर्णत्वात्समुद्रपर्यन्ताकाशदेश एव गतिपथ इति केचित् ॥

अथाश्वासं विच्छिन्दन्कपीनां समुद्रप्राप्तिमाह—

वेएण गहिअसेलं वेलावोलेन्तपडिणिअत्तोवइअम् ।
जाअं रामाहिमुहं अणुराउप्फुल्ललोअणं कइसेण्णम् ॥ ९६ ॥

इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे
छट्ठओ आसासओ ॥

[वेगेन गृहीतशैलं वेलाव्यतिक्रान्तप्रतिनिवृत्तावपतितम् ।
जातं रामाभिमुखमनुरागोत्फुल्ललोचनं कपिसैन्यम् ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये षष्ठ आश्वासः ।

कपिसैन्यं गृहीतशैलं सद्वेगेन रामाभिमुखं जातम् । रामसंमुखे स्थितमित्यर्थः । अतः परमस्माभिः किं कर्तव्यमित्याशयात् । कीदृक् । अकारप्रश्लेषाद्वेलामप्यतिक्रान्तं यथा स्यात्तथा पर्वताहरणात्प्रतिनिवृत्तं सदवपतितम् । वेलायामवतीर्णमित्यर्थः । वस्तुतस्तु गृहीतशैलं सद्वेगेन वेलाव्यतिक्रान्तं वेलामप्यतिक्रम्य कियद्दूरे समुद्रोपरि गतम् । अथ तथाज्ञानात्प्रतिनिवृत्तं परावृत्तं सदवपतितं वेलायामेवेत्युन्नयामः । एवमनुरागोत्फुल्लनयनं साधितपर्वताहरणत्वादिति भावः ॥

पर्वतोद्धारदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णा षष्ठी शिखाभवत् ॥

---

सप्तम आश्वासः ।

अथ सेतूपक्रममाह—

अह ते विक्कमणिहसं दहवअणपआवलङ्घणग्गक्खन्धम् ।
आढत्ता विरएउं सासअरामजसलञ्छणं सेउवहम् ॥ १ ॥

[अथ ते विक्रमनिकषं दशवदनप्रतापलङ्घनाग्रस्कन्धम् ।
आरब्धा विरचयितुं शाश्वतरामयशोलाञ्छनं सेतुपथम् ॥]

अथ पर्वतानयनानन्तरं ते वानराः सेतुपथं विरचयितुमारब्धवन्तः । कीदृशम् । विक्रमस्य तेजोरूपत्वेन सुवर्णरूपस्य निकषं कषपाषाणम् । पाषाणमयत्वात् । यथा कषपरीक्षितं सुवर्णादि कुण्डलादिकर्मण्युपयुज्यते तथा सेतुपरीक्षितो वानरविक्रमो रावणवधादावुपयोक्ष्यत इत्याशयः । पुनः कीदृशम् । दशवदनप्रतापस्य यल्लङ्घनमतिक्रमस्तत्राग्रस्कन्धमग्रेसरसैन्यरूपम् । सेतुसिद्ध्यैव तल्लङ्घनं तस्मिन्नसति सेतुरेव न भवेदिति भावः । एवं शाश्वतं स्थिरं रामयशसो लाञ्छनं चिह्नम् । तज्ज्ञापकत्वात् । अथ च श्लेषेण चन्द्ररूपस्य तस्य लाञ्छनं श्यामत्वादिति शुभ्रश्यामयोः संगत्या शोभाविशेष एवेति न हीनोपमा । एतावता रामयशसोऽतिव्यापकत्वमुक्तम् । सर्वत्र रूपकम् ॥

अथ सिन्धौ शैलक्षेपणमाह—

णवरि अ महिअलधरिआ मुक्का उअहिम्मि वाणरेहिँ महिहरा ।
आइवराहभुएहिँ व पलउव्वहणदलिआ महिअलद्धन्ता ॥ २ ॥

[अनन्तरं च महीतलधृता मुक्ता उदधौ वानरैर्महीधराः ।
आदिवराहभुजैरिव प्रलयोद्वहनदलिता महीतलार्धान्ताः ॥]

आरम्भानन्तरं वानरैर्महीधरा उदधौ मुक्ताः क्षिप्ताश्च । कीदृशाः । महीतलेऽर्थात्तीरे धृताः कथं वा कुत्र क्षेप्तव्या इति विचारेण क्षणं स्थापिता विश्रामाय वा । दृष्टान्तमाह—चतुर्भुजस्यादिवराहस्य भुजैः प्रलये यदुद्वहनमुद्धरणमर्थान्महीतलस्य तेन दलिता अकस्मात्त्रुटिता महीतलैकदेशा इव । यथा ते तैरुदधौ मुक्तास्तथैतेऽप्यमीभिरित्यर्थः । तथा च भूखण्डतौल्येन पर्वतानां महत्त्वमुक्तम् ॥

अथ समुद्रस्यावस्थामाह—

णिवडन्तम्मि ण दिट्ठो दूरोवइअम्मि कम्पिओ गिरिणिवहे ।
खणपडिअम्मि विलुलिओ अत्थमिअम्मि परिवड्ढिओ सलिलणिही

[निपतति न दृष्टो दूरादवपतिते कम्पितो गिरिनिवहे ।
क्षणपतिते विलुलितोऽस्तमिते परिवर्धितः सलिलनिधिः ॥]

सलिलनिधिर्गिरिनिवहे निपतति सति न दृष्टः । छन्नत्वादिति गिरीणां महत्त्वं बहुत्वं चोक्तम् । दूरादवपतिते उपरितः संबद्धे सति कम्पितः । अभिहतत्वादिति दृढावयवत्वम् । क्षणं व्याप्य पतिते सति विलुलितः खण्डखण्डीभूतः । पर्वतैर्विदीर्णत्वात् । क्षणमेव पतितस्तदुत्तरं हठादेवास्तमितो गिरिनिवह इत्यर्थः । तदाह—अस्तमिते जलाभ्यन्तरं गते सति परिवर्धित आक्रान्तपुलिनः । पर्वतपूरितजलत्वादिति गिरिसमुद्रयोरपि महत्त्वमुक्तम् ॥

अथ समुद्रस्य क्षोभमाह—

**णिहउव्वत्तजलअरं कड्ढिअकाणणभमन्तभमिरुच्छङ्गम् ।**
**जाअं कलुसच्छाअं पढमुच्छलिआगअं महोअहिसलिलम् ॥ ४ ॥**

[निहतोद्वृत्तजलचरं कृष्टकाननभ्रमद्भ्रमणशीलोत्सङ्गम् ।
जातं कलुषच्छायं प्रथमोच्छलितागतं महोदधिसलिलम् ॥]

महोदधिसलिलं प्रथमं पर्वतपतनावसर एवोच्छलितं सदागतं महीमाप्लाव्य निवृत्तम् । अत एव कलुषच्छायं महीनिष्ठरजस्तृणादिसंबन्धादाविलं जातमित्यन्वयः । कीदृक् । निहताः पर्वतानामुच्छलितजलानां वाभिघाताद्गतप्राणा अत एवोद्वृत्ता दर्शितोदरा जलचरा यत्र तथा । एवं पूर्वनिपातानियमात्कृष्टं कल्लोलाभिघातादाकृष्टं अथ च भ्रमद्घूर्णमानं काननं यत्र एतादृशो भ्रमणशील आवर्तरूपतापन्न उत्सङ्गो यस्य तत् । आकृष्टकारण(नन)स्य भूमौ पाताद्भ्रमणमित्यर्थः । वस्तुतस्तु कृष्टकाननं सद्भ्रमद्दिशि दिशि गच्छच्च तद्भ्रमणशीलमध्यं चेति कर्मधारयः । तथा चावर्तशीलमध्यजलस्य काननसंबन्धाद्विश्रृङ्खलगतिकत्वेन भ्रमणमिति भावः । यद्वा ऊर्ध्वदेशावच्छेदेनोच्छलनं विवक्षितम् । तत्र गिरिवर्तमानकाननस्य कल्लोलाभिघातादाकर्षणेन तन्मिश्रितगैरिकादिसंबन्धात्कलुषच्छायमित्यर्थः ॥

अथ समुद्रोपरि नभोभागमाह—

**सलिलत्थमिअमहिहरो पुणो वि अदिट्ठमिलिअगिरिसंघाओ ।**
**तह घडिअपव्वओ विअ दीसइ णहसाअरन्तरालुद्देसो ॥ ५ ॥**

[सलिलास्तमितमहीधरः पुनरप्यदृष्टमिलितगिरिसंघातः ।
तथा घटितपर्वत इव दृश्यते नभःसागरान्तरालोद्देशः ॥]

सलिलैरर्थात्प्रथमपतितपर्वताभिघातादूर्ध्वमुच्छलितैरस्तमिता अदृश्यतां नीताः समुद्रे पतन्ते महीधरा यत्र तादृशो नभःसागरयोरन्तरालप्रदेशस्तथा पूर्वप्रकारेण घटिता योजिताः पर्वता यत्र तथाभूत इव दृश्यते । अत्र हेतुमाह—पुनरप्यदृष्टमनाकलितं यथा स्यादेवं मिलितः स्वसंबद्धो मिथःसंबद्धो वा गिरिसंघातो यत्र तथा । तथा च प्रथममुच्छलितजलेन पतत्पर्वतानां तिरोधानेऽप्यन्यैर्बहुभिरापतितैस्तैस्तज्जलानामेव तिरोधानादधःपतनाद्वा पूर्वपर्वतघटित एव लक्षित इत्युत्प्रेक्षा ॥

कपीनामारम्भोत्कर्षमाह—

**जणिअं पडिवक्खभअं तुलिआ सेला धुओ कईहिँ समुद्दो ।**
**ण हु णवर हिअअसारा आरम्भा वि गरुआ महालक्खाणम् ॥६॥**

[जनितं प्रतिपक्षभयं तुलिताः शैला धुतः कपिभिः समुद्रः ।
न खलु केवलं हृदयसारा आरम्भा अपि गुरवो महालक्ष्याणाम् ॥]

कपिभिः शैलास्तुलिता उत्पाट्यानीताः । अथ तत्क्षेपेण समुद्रो धुत आन्दोलितः । तत एव प्रतिपक्षाणां रावणादीनां भयं जनितमित्युत्तरोत्तरं प्रति पूर्वपूर्वस्य हेतुत्वमिति हेतुपरम्परा । अर्थान्तरन्यासमाह—महल्लक्ष्यं लक्षणं येषां ते महालक्ष्या महापुरुषास्तेषां न खलु केवलं हृदयस्य सारा अभिप्राया एव गुरवः किं त्वारम्भा अपि गुरव एव । यस्मादारम्भादेवं प्रतिपक्षभयपर्यन्तं जातमित्यर्थः । महान्रावणप्रभृति लक्ष्य उद्देशो येषां तेषामिति वा । सारो बलमभिप्राय उत्साहो वा ॥

अथ समुद्रे गिरीणां मग्नतामाह—

**जो दीसइ धरणिहरो णज्जइ एएण वज्झइ त्ति समुद्दो ।**
**उअहिम्मि उण वडन्ता कत्थ गअ त्ति सलिले ण णज्जन्ति धरा ॥७॥**

[यो दृश्यते धरणीधरो ज्ञायते एतेन बद्ध इति समुद्रः ।
उदधौ पुनः पतन्तः कुत्र गता इति सलिले न ज्ञायन्ते धराः ॥]

समुद्रानवच्छिन्नदेशो यो धरणीधरो दृश्यते एतेनैव समुद्रो बद्ध इति ज्ञायते महत्त्वात् । उदधौ पुनः सलिले पतन्त एव धरा गिरयः कुत्र गता इति न ज्ञायन्ते । तथा च पूर्वार्धे बद्ध इति भूतक्तप्रत्ययमहिम्ना बन्धनक्रियावश्यकत्वाद्धरणीधर इत्येकवचनेनैकस्यैव बन्धक्षमत्वमुक्तमत्र तु धरा इति बहुवचनेन तथाविधानामेव बहूनां सलिलपातसमकालमेवास्तमनात्समुद्रस्यातिविस्तारित्वं गभीरत्वं चोक्तम् ॥

अथ तिमीनां मुखे गिरीणां मज्जनमाह—

**सअलमहिवेढविअडो सिहरसहस्सपडिरुद्धरइरहमग्गो ।**
**इअ तुङ्गो वि महिहरो तिमिङ्गिलस्स वअणे तणं व पणट्ठो ॥८॥**

[सकलमहीवेष्टविकटः शिखरसहस्रप्रतिरुद्धरविरथमार्गः ।
इति तुङ्गोऽपि महीधरस्तिमिंगिलस्य वदने तृणमिव प्रनष्टः ॥]

इत्यनेन प्रकारेण तुङ्गोऽपि महीधरस्तिमिंगिलस्य नक्रविशेषस्य स्वभावादेव व्यात्तमुखस्य मुखे तृणमिव प्रनष्टः । अदर्शनं गत इत्यर्थः । भक्ष्यबुद्ध्या व्यात्ते वा । कीदृक् । सकलमहीमण्डलवद्विकट इति विस्तृतत्वं शिखरसहस्रेण प्रतिरुद्धश्छन्नो रविरथमार्गो येनेति तुङ्गिमाधिक्यं चोक्तम् । 'पविट्ठो' इति पाठे प्रविष्ट इत्यर्थः ॥

अथ रत्नानामुच्छलनमाह—

**पव्वअसिहरुच्छित्तं धावइ जं जं जलं णहङ्गणहुत्तम् ।**
**तं तं रअणेहिँ समं दीसइ णक्खत्तमण्डलं व पडन्तम् ॥ ९ ॥**

[पर्वतशिखरोत्क्षिप्तं धावति यद्यज्जलं नभोङ्गणाभिमुखम् ।
तत्तद्रत्नैः समं दृश्यते नक्षत्रमण्डलमिव पतत् ॥]

पर्वतशिखरेणाभिहत्य उत्क्षिप्तं यद्यज्जलं नभोङ्गणाभिमुखं सद्धावति । नभोङ्गणं व्याप्नोतीत्यर्थः । तत्तज्जलं मूलादुच्छलितै रत्नैः समं पतद्दृश्यते । रत्नानां जलबिन्दूनां च नक्षत्रतुल्याकारत्वान्नक्षत्रमण्डलमिवेत्युपमा । यथा नक्षत्रमण्डलं पततीत्यर्थः । तत्तदेव नक्षत्रमण्डलमित्युत्प्रेक्षा वा । एतेन समुद्रमूलक्षोभ उक्तः ॥

अथ शैलानां पतनप्रकारमाह—

**वाणरवेआइद्धा पिहुलवलन्तणिअओज्झरपरिक्खित्ता ।**
**अप्पत्त च्चिअ उअहिं भमन्ति आवत्तमण्डलेसु व सेला ॥ १० ॥**

[वानरवेगाविद्धाः पृथुलवलमाननिजनिर्झरपरिक्षिप्ताः ।
अप्राप्ता एवोदधिं भ्रमन्त्यावर्तमण्डलेष्विव शैलाः ॥]

वानरैर्वेगेनाविद्धाः प्रेरिताः शैला उदधिमप्राप्ता एवावर्तमण्डलेष्वेव भ्रमन्ति । तथा च प्रेरणाविशेषवशाद्गुरुद्रव्यस्वाभाव्येन च भ्रमन्तः सन्तः पतन्तीत्याशयः । तदाह—कीदृशाः । पृथुलैर्वलमानैर्वक्रीभूतैर्निजनिर्झरैः परिक्षिप्ता वेष्टिताः । अत एव गिरिभ्रमणवशाच्चतुर्दिशं भ्रमित्वा पतत्सु निर्झरजलेष्वावर्तत्वमुत्प्रेक्षितम् ॥

अथ कपीनां कार्योद्योगमाह—

**खणमेलिआपविद्धो सिहरन्तरणित्तरित्तवाणरलोओ ।**

**पच्छा पडइ समुद्दे अण्णो मिलइ पढमं णहे गिरिणिवहो ॥११॥**

[क्षणमेलितापविद्धः शिखरान्तरनिर्यद्रिक्तवानरलोकः ।

पश्चात्पतति समुद्रेऽन्यो मिलति प्रथमं नभसि गिरिनिवहः ॥]

क्षणं व्याप्य क्षणेनोत्सवेन वा प्रथमं मेलितो योजितः । संमुखीकृत इति यावत् । पश्चादपविद्धः प्रेरितो गिरिनिवहः समुद्रे पश्चात्पतति प्रथमं नभस्यन्तराळेऽन्यो गिरिनिवहो मिलति । तथा च पुरोनिक्षिप्तपर्वता यावत्समुद्रं न प्राप्नुवन्ति तावदेव पश्चादागच्छद्भिः कपिभिः स्वापकर्षशङ्कया तथा वेगः कृतस्तथा च निक्षिप्तः पर्वतो यथा तदुभयगिरिमिलनमन्तराल एव जातमिति कपीनां जिगीषा शीघ्रता च सूचिता । गिरिनिवहः कीदृक् । शिखरान्तरान्निर्यन्बहिर्गच्छन् रिक्तस्तत्पर्वतस्य क्षिप्तत्वेन वोढव्याभावाच्छून्यहस्तो वानरलोको यस्मात् । तथा च शिखरान्तरावस्थित्या कपीनामुत्फालसौकर्यार्थमाकारलाघवेऽपि स्वाधिकशैलोद्वहनेन बलप्रकर्ष उक्तः ॥

समुद्रे गिरिप्रवेशमार्गमाह—

**दीहा वलन्तविअडा रसन्ति उवहिम्मि मारुअभरिज्जन्ता ।**

**पाआलोअरगहिरा रहसोविद्धाण महिहराण गइवहा ॥ १२ ॥**

[दीर्घा वलद्विकटा रसन्त्युदधौ मारुतभ्रियमाणाः ।

पातालोदरगभीरा रभसापविद्धानां महीधराणां गतिपथाः ॥]

रभसेन वेगेनापविद्धानां प्रेरितानां महीधराणामुदधौ गतिपथाः प्रवेशमार्गा रसन्ति शब्दायन्ते । किंभूताः । पातालोदरपर्यन्तं गभीराः । एवं दीर्घा ऋज्वाकाराः । वलन्तो नितम्बशिखरवैषम्येण विषमीभूता विकटा विस्तीर्णाः । तथा मारुतैः कंदरानिःसृतैर्भ्रियमाणाः पूर्यमाणाः । तथा च तन्मार्गस्य शून्यत्वेन प्रविशज्जलानां पवनसंबन्धाच्छब्दोत्पत्तिस्थानत्वमिति भावः । एवं च तस्य दीर्घत्वेनावर्ताद्यनुत्क्षेप्यतया गिरीणां गुरुत्वं विषमत्वेन च हठाज्जलानतिक्रमणेन महत्त्वं सूचितम् ॥

गिरीणां पतनसांकर्यमाह—

**उक्खित्तविमुक्काइं णहम्मि एक्केक्कमावडणभिण्णाइं ।**
**वज्जभउव्विण्णाइँ व पडन्ति रअणाअरे गिरिसहस्साइं ॥ १३ ॥**

[उत्क्षिप्तविमुक्तानि नभस्येकैकक्रमावपतनभिन्नानि ।
वज्रभयद्विग्नानीव पतन्ति रत्नाकरे गिरिसहस्राणि ॥]

उत्क्षिप्तान्यूर्ध्वं नीतानि सन्ति विमुक्तान्यधःक्षिप्तानि गिरिसहस्राणि रत्नाकरे पतन्ति । कीदृशानि । नभस्येकैकक्रमेण यदवपतनं तेन भिन्नानि । परस्परसंघट्टेन विशीर्णानीत्यर्थः । अत एवोत्प्रेक्षते—वज्रभयेनोद्विग्नानीव । भीताः संगोपनस्थलमेकदैव प्रविशन्तीति पूर्वं मैनाकादयो वज्रभयाद्यथैव प्रविष्टास्तथैव संप्रत्येतेऽपीत्याशयः ॥

गिरिपतने सत्वरतामाह—

**भिण्णसिलाअलसिहरा णिअअदुमोसरिअकुसुमरअधूसरिआ ।**
**पढमं पडन्ति सेला पच्छा वाउद्धुआ महाणइसोत्ता ॥ १४ ॥**

[भिन्नशिलातलशिखराणि निजकद्रुमापसरत्कुसुमरजोधूसरिताः ।
प्रथमं पतन्ति शैलाः पश्चाद्वातोद्धतानि महानदीस्रोतांसि ॥]

भिन्नानि विशीर्णानि शिलातलानि यत्र तादृशानि शिखराणि येषां ते शैलाः प्रथमं गुरुत्वात्समुद्रे पतन्ति पश्चात्कंदरोद्गतेन कपिवेगोत्थितेन वा वातेनोद्धूतानि महानदीस्रोतांसि पतन्ति । तथा च शिलातलदलनाद्विच्छिद्य पतदपि नदीजलं वातोद्धूतत्वात्पश्चादेव पततीति भावः । शैलाः कीदृशाः । निजकद्रुमेभ्योऽपसरद्भिः कुसुमरजोभिर्धूसरिताः ॥

जलपतितानां गिरीणां कपिभिर्दर्शनमाह—

**णिम्मलसलिलब्भन्तरविहत्तदीसन्तविसमगइसंचारा ।**
**णस्सन्ति णिच्चलट्ठिअपवंगमालोइआ चिरेण महिहरा ॥ १५ ॥**

[निर्मलसलिलाभ्यन्तरविभक्तदृश्यमानविषमगतिसंचाराः ।
नश्यन्ति निश्चलस्थितप्लवंगमालोकिताश्चिरेण महीधराः ॥]

महीधराश्चिरेण नश्यन्ति जलान्तरितत्वेनादृश्या भवन्ति । अत्र प्रकारमाह—

निर्मलं स्वच्छं यत्सलिलं तदभ्यन्तरे विभक्ताः पृथग्भूता विभक्तं यथा स्यादिति वा दृश्यमाना विषमा नानापर्वतपतनोत्थापितजलावर्तवशात्तिर्यग्वलिता गतिः प्रकारो यस्य तथाभूतः संचारो भ्रमणरूपो येषां ते । जले निक्षिप्तं गुरुद्रव्यमावर्ते पतन्भ्रमदेवाधो गच्छतीत्याशयः । अत एव कौतुकेन पर्वताः कुत्र गच्छन्ति किं वा भवेदिति चिन्तया वा तीरे निश्चलस्थितैः प्लवंगमैरालोकिताः । जलनैर्मल्यादिति भावः । गतिविधाप्रकारास्तुल्यार्थाः । संचर्यतेऽनेनेति संचारो वर्त्म । तथाच विषमा गतिर्भ्रमणरूपा तस्या वर्त्म येषामिति वा ॥

अथ मूलरत्नक्षोभमाह—

फेणकुसुमन्तरुत्तिण्णकेसराआरवेविरमऊहाइं ।
सूएन्ति पवत्ताइं मूलुक्खुहिअं महोअहिं रअणाइं ॥ १६ ॥

[फेनकुसुमान्तरोत्तीर्णकेसराकारवेपनशीलमयूखानि ।
सूचयन्ति प्लवमानानि मूलोत्क्षुभितं महोदधिं रत्नानि ॥]

प्लवमानानि जलोपरि संचारीणि रत्नानि मूलादुत्क्षुभितं महोदधिं सूचयन्ति कथयन्ति । उपरिगतरत्नैरनुमीयते समुद्रमूले पर्वताघातो वृत्त इति भावः । किंभूतानि । फेनरूपाणां कुसुमानामन्तरेण मध्येनोत्तीर्णा उद्गताः केसराकारा वेपनशीलाः फेनगत्या चञ्चला मयूखा येषां तानि । अन्यत्रापि कुसुमे केसराणि तिष्ठन्तीत्याशयः ॥

पुनः समुद्रक्षोभमाह—

विहुणइ वेलं व महिं भिन्दइ समअं व धरणिधरसंघाअम् ।
गेण्हइ भअं व गअणं मुअइ सहाअं व साअरो पाआलम् ॥ १७ ॥

[विधुनोति वेलामिव महीं भिनत्ति समयमिव धरणीधरसंघातम् ।
गृह्णाति भयमिव गगनं मुञ्चति स्वभावमिव सागरः पातालम् ॥]

सागरो वेलामिव महीं विधुनोति । यथा जलं कम्पयति तथा जलक्षोभान्महीमपीत्यर्थः । अक्षोभ्यत्वात्साम्यम् । एवं समयं वेलालङ्घनं न कर्तव्यमिति व्यवस्थामिव धरणीधरसमूहं भिनत्ति खण्डयति । अभेद्यत्वात्साम्यम् । तथा च वेलामपि लङ्घते परस्पराभिघातात्पर्वतानपि विशीर्णयतीत्यर्थः । एवं यथा भयं गृह्णाति तथा गगनमपि कल्लोलद्वारेत्यर्थः । अग्राह्यत्वात्साम्यम् । एवं यथा स्वभावं प्रकृतिमक्षो-

भ्यत्वादिकां मुञ्चति क्षुभ्यति तथा पातालमपि । शैलाघातेनोच्छालनादित्यर्थः । गभीरत्वात्साम्यम् । सर्वत्र सहोपमा । 'वेला तत्तीरनीरयोः' इति कोषः ॥

पुनः पर्वतपतनप्रकारमाह—

**पल्हत्थन्ति वलन्ता चलविडवन्तरणिअत्ततरुपारोहा ।**
**मूलुण्णामिअजलआ अहोमुहन्दोलिओज्झरा धरणिहरा ॥ १८ ॥**

[पर्यस्यन्ति वलमानाश्चलविटपान्तरनिवृत्ततरुप्ररोहाः ।
मूलोन्नामितजलदा अधोमुखान्दोलितनिर्झरा धरणिधराः ॥]

धरणिधरा वलमाना अधोमुखत्वेन वक्रीभवन्तः सन्तः पर्यस्यन्तीतस्ततः पतन्ति । किंभूताः । चञ्चला या शाखा तदन्तरेण तन्मध्येन निवृत्ता लम्बमानास्तरूणां प्ररोहाः शिफा यत्र ते । तरूणामप्यधोमुखत्वेन शिफा अप्यधोमुखा भवन्तीत्यर्थः । एवं मूलेनोन्नामिता ऊर्ध्वमुत्थापिता जलदा येभ्यस्ते । नितम्बानामूर्ध्वगतत्वेनाधोमुखशिखरस्थिता मेघा मूलभागेनैव गगनं गच्छन्तीत्यर्थः । एवमधोमुखाः सन्त आन्दोलिताश्चालिता निर्झरा येषां ते । तथा च निर्झराणामान्दोलनमात्रं न तु व्यवच्छिद्य पतनम् । पर्वतानामेव तदभ्यन्तरे पतनादित्यमीषां गुरुत्वेन महत्त्वमुक्तम् ॥

अथोच्छलितजलान्धकारमाह—

**अट्ठिअपडन्तमहिहरदूरट्ठिअजलरअन्धआरत्थमिए ।**
**साहइ णवर पडन्ते पक्खुहिअसमुद्दपडिरओ धरणिहरे ॥ १९ ॥**

[अस्थितपतन्महीधरदूरोत्थितजलरयान्धकारास्तमितान् ।
शास्ति केवलं पततः प्रक्षुभितसमुद्रप्रतिरवो धरणिधरान् ॥]

प्रक्षुभितस्य समुद्रस्य प्रतिरवः केवलं धरणिधरान्पततः शास्ति कथयति । किंभूतान् । अस्थितमव्यवस्थितं पतन्तो ये महीधरास्तैर्हेतुभूतैर्दूरं व्याप्योत्थितानां जलानां रयेण वेगेन सूर्यस्य च्छन्नतया योऽन्धकारस्तेनास्तमितान् तिरोहितान् । पर्वतानामव्यवस्थितपतने जलोपरि जलोत्थितावन्धकारापर्यवसानेन चाक्षुषज्ञानाभावे समुद्रक्षोभशब्दप्रतिरवैः पर्वताः पतन्तीति परमनुमीयत इति पर्वतपतनशब्दापेक्षया समुद्रक्षोभशब्दो महानिति समुद्रस्य महाशयत्वमुक्तम् । पर्वतपतनेन समुद्रक्षोभस्तेन तटाभिघातादिस्तेन शब्दस्तेन प्रतिशब्दस्तेन शैलानां पतनमहत्त्वयोरनुमितिस्तया च कपीनां बलवत्त्वानुमितिरिति हेतुपरम्परालंकारो वस्तुना व्यज्यते ॥

कपीनामवधानमाह—

**दरधोअकेसरसडा पाआलुम्हगिरिधाउकद्दमिअमुहा ।**
**पडिसक्कन्ति पवंगा पल्हत्थिअमहिहरूससन्तक्खन्धा ॥ २० ॥**

[दरधौतकेसरसटाः पातालोष्मगिरिधातुकर्दमितमुखाः ।
परिवर्तन्ते प्लवंगाः पर्यस्तमहीधरोच्छ्वसत्स्कन्धाः ॥]

प्लवगाः परिवर्तन्ते । समुद्रे पर्वतान्निक्षिप्य तदुच्छलितजलपातशङ्कया पश्चादायान्तीत्यर्थः । कीदृशाः । दरधौता उच्छलितजलस्पृष्टाः केसरसटा येषां ते । एवं पातालोष्मणा गिरिधातुभिः कर्दमितानि मुखानि येषाम् । समुद्रजलद्विधाभावेनोत्थितपातालोष्मसंबन्धात्स्वेदोद्गमेन पूर्वलग्नगिरिधातूनां कर्दमीभावादिति भावः । तथा च पश्चादपसरणेऽप्युच्छलितजलसंपर्केणोष्मसंबन्धेन च पर्वताभिघातप्रकर्ष उक्तः । कर्दमोद्गमेन च स्वेदप्रकर्षस्तेनोष्मोद्गमप्रकर्षस्तेन जलभेदप्रकर्षस्तेनाभिघातोत्कर्षस्तेन पतनवेगोत्कर्षस्तेन पर्वतोत्कर्षस्तेन कपीनां बलोत्कर्षोऽनुमीयत इत्यनुमानपरम्परा। पुनः कीदृशाः । पर्यस्तैरवतारितैर्महीधरैर्हेतुभिरुच्छ्वसन्तः स्कन्धा येषां ते ॥

पुनः पर्वतपतनमाह—

**विअलन्तोज्झरलहुआ पवणविहुव्वन्तपाअवुद्धपइण्णा ।**
**पवएहिँ उद्धमुक्का सिहरेहिँ पडन्ति साअरम्हि महिहरा ॥ २१ ॥**

[विगलन्निर्झरलघुकाः पवनविधूयमानपादपोर्ध्वप्रकीर्णाः ।
प्लवगैरूर्ध्वमुक्ताः शिखरैः पतन्ति सागरे महीधराः ॥]

प्लवगैरूर्ध्वान्नभसो मुक्ता महीधरा अधोमुखत्वेन विगलद्भिर्निर्झरैर्लघुका अपि सागरे शिखरभागैः पतन्ति । अत्र हेतुमाह—पवनैरन्तरिक्षचारिभिर्विधूयमानपादपत्वादूर्ध्वेन मस्तकेन प्रकीर्णा विक्षिप्ताः । तथा च शिरोवर्तिवृक्षाणामप्रत्यूहपवनान्दोलनवशादासादितशिरोगुरुत्वात्तद्भागेनैव पतन्तीत्यर्थः ॥

गिरिमज्जनमार्गमाह—

**अत्थमिअसेलमग्गा भिण्णणिअत्तन्तसलिलपुञ्जिअकुसुमा ।**
**होन्ति हरिआलकविला दाणसुअन्धुप्पवन्तगअदुमभङ्गा ॥ २२ ॥**

[अस्तमितशैलमार्गा भिन्ननिवर्तमानसलिलपुञ्जितकुसुमाः ।
भवन्ति हरितालकपिला दानसुगन्ध्युत्प्लवमाना गजद्रुमभङ्गाः ॥]

अस्तमितानां जलमग्नानां शैलानां मार्गा भवन्ति । कीदृशाः । प्रथमं पर्वताभिघाताद्भिन्नाभ्यां द्विधाभूताभ्यामथ निवर्तमानाभ्यां सलिलाभ्यां पुञ्जितानि राशीकृतानि कुसुमानि यत्र तथा । गिरिवृक्षकुसुमानि तत्र तत्र पर्यस्तानि भिन्नसलिलभागद्वयपरावृत्त्या वर्तुलीक्रियन्त इत्यर्थः । एवं च हरितालैः कपिलाः । तेषामपि सलिले संपृक्तत्वात् । एवं दानेन मदजलेन सुगन्धयः सन्त उत्प्लवमाना उपरि घूर्णमाना गजद्रुमभङ्गा गजभग्नद्रुमखण्डा यत्र । यद्वा गजद्रुमो नागवृक्षस्तस्य खण्डा यत्र ते । तथा च पद्धतिरपि गिरीणामनुमेयैवेति समुद्रस्य महत्त्वमुक्तम् । महतामस्तमनेऽपि चिह्नं नापगच्छतीति सत्कर्मैव कर्तव्यमिति ध्वनिः ॥

अथ वनमहिषाणामवस्थामाह—

**अत्थाअन्ति सरोसा सलिलदरत्थमिअसेलसिहरावडिआ ।**
**एक्कावत्तवलन्ता धुवआतम्बलोअणा वणमहिसा ॥ २३ ॥**

[अस्तायन्ते सरोषाः सलिलदरास्तमितशैलशिखरापतिताः ।
एकावर्तवलमाना धुताताम्रलोचना वनमहिषाः ॥]

वनमहिषा एकस्मिन्नावर्ते वलमाना भ्रमन्तः सन्तोऽस्तायन्ते । मज्जन्तीत्यर्थः । कीदृशाः । सलिले किंचिदस्तमितानां शैलानां शिखरादवपतिताः । गिरौ मज्जति मग्नः स्यामिति क्वचिदन्यत्र गन्तुमवतीर्णा अथावर्ते निमग्ना इत्यर्थः । अत एव प्रतिकर्तुमक्षमतया सरोषास्तत एव धूयमाने इतस्ततः प्रेर्यमाणे आताम्रे लोचने यैस्ते । धाव्यमाने क्षाल्यमाने लोचने येषामिति वा ॥

मृगानाह—

**भिण्णमिलिअं पि भिज्जइ पुणो वि एक्कक्कमावलोअणसुहिअम् ।**
**सेलत्थमणणउण्णअतरङ्गहीरन्तकाअरं हरिणउलम् ॥ २४ ॥**

[भिन्नमीलितमपि भिद्यते पुनरप्येकैकक्रमावलोकनसुखितम् ।
शैलास्तमननतोन्नततरङ्गह्रियमाणकातरं हरिणकुलम् ॥]

शैलानामस्तमनेन नतोन्नता ये तरङ्गास्तैर्ह्रियमाणां शैलेभ्य आच्छिद्यमानमत एव कातरं जीवितसदयं हरिणकुलं भिन्नं सन्मीलितमपि भिद्यते । गिरिमज्जनोत्थतरङ्गभ्राम्यमाणा हरिणा मिथो भिद्यन्ते । पुनर्मिलन्ति पुनरपि भिद्यन्ते जलवेगवशादित्यर्थः । कीदृक् । पुनरपि परस्परावलोकनेन सुखितम् । तद्दशायामपि बन्धुदर्शनं बहु मन्यत इति भावः ॥

सिंहानाह—

दाढाविभिण्णकुम्भा करिमअराण थिरहत्थकड्ढिज्जन्ता ।
मोत्ताग्गभिणसोणिअभरेन्तमुहकंदरा रसन्ति मिइन्दा ॥ २५ ॥

[दंष्ट्राविभिन्नकुम्भाः करिमकराणां स्थिरहस्तकृष्यमाणाः ।
मुक्तागर्भितशोणितभ्रियमाणमुखकंदरा रसन्ति मृगेन्द्राः ॥]

दंष्ट्राभिर्भिन्नौ कुम्भौ यैः । करिमकराणामित्यर्थात् । ते मृगेन्द्रा रसन्ति । किंभूताः । करिमकराणां जलहस्तिनां स्थिरैर्हस्तैः शुण्डाभिः कृष्यमाणाः । एवं कुम्भस्थमुक्तागर्भितैः शोणितैर्भ्रियमाणा मुखकंदरा येषां ते । कुम्भयोः कृतकवला गिरिसिंहाः स्वभूमिबलिभिर्जलहस्तिभिः शुण्डाभिराकृष्यमाणाः प्रतिकर्तुमक्षमतया मांसकवलमत्यजन्त एव शब्दायन्त इत्यर्थः । परभूमौ विक्रमो न कर्तव्य इति ध्वनिः ॥

वनगजानाह—

उव्वत्तिअकरिमअरा पडन्ति पडिअगिरिसंभमुब्भडरोसा ।
ओवइअमअरणिद्दअलुअगत्तावरविसण्ठुला माअङ्गा ॥ २६ ॥

[उद्वर्तितकरिमकराः पतन्ति पतितगिरिसंभ्रमोद्भटरोषाः ।
अवपतितमकरनिर्दयलूनगात्रावरविसंष्ठुला मातङ्गाः ॥]

मातङ्गा वनहस्तिनः पतन्ति म्रियन्ते । किंभूताः । पतितेन गिरिणा हेतुभूतेन यः संभ्रम उद्वेगस्तेनोद्भटो रोषो येषां तथाभूताः सन्त उद्वर्तिता उत्तानीकृताः करिमकरा यैस्ते । एवमवपतितैर्वनजन्तुज्ञानादन्यत आगतैर्मकरैर्निर्दयं यथा स्यादेवं लूने गात्रावरे येषां ते । अत एव विसंष्ठुला इति कर्मधारयः । तथा च वनहस्तिनो लब्धजलगजगन्धा गिरिपातजातरोषत्वेनावप्लुत्य जलहस्तिनः पातयामासुः । अथ मकरान्तरैरागत्य छिन्नजङ्घापूर्वपश्चाद्देशा निपेतुरित्यविमृश्यकारिता न कर्तव्येति ध्वनिः । 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात्' इत्यमरः ॥

समुद्रवीचीमाह—

विहुलपवालकिसलअं सेलदरत्थमिअदरिमुहवलन्तीहिं ।
आवेढपहुप्पन्तं वीईहिँ दुमेसु वणलआहिँ व भमिअम् ॥ २७ ॥

[विधुतप्रवालकिसलयं शैलदरास्तमितदरीमुखवलमानाभिः ।
आवेष्टप्रभवद्वीचिभिर्द्रुमेषु वनलताभिरिव भ्रमितम् ॥]

द्रुमेषु वीचिभिर्वनलताभिरिव भ्रमितमावर्तनं कृतम् । आवेष्टो वृक्षाणां मण्डलीकरणं तत्र प्रभवत्समर्थं यथा स्यादेवम् । एवं वीचीपक्षे विधुतं कम्पितं प्रवालानां किसलयं यत्र तद्यथा स्यात् । तथा च वीचीविक्षोभे विद्रुमक्षोभोऽप्यभूदित्यर्थः । लतापक्षे प्रवालवत्किसलयं यत्र तद्यथा स्यादिति । लतासंचारे किसलयसंचार इत्यर्थः । यद्वा विधुतं प्रवालरूपकिसलयं यथा स्यादिति । पूर्वत्र विद्रुमः परत्र नवदलमित्यर्थः । किंभूताभिर्वीचिभिर्लताभिर्वा । शैलेषु दरास्तमितानि यानि दरीमुखानि तत्र वलमानाभिर्भ्रमन्तीभिः । अयमर्थः—शैले मज्जति किंचिद्दरीमुखमज्जने तद्वर्त्मना समुद्रजलानि प्रवालकम्पनपूर्वं प्रविश्य तत्रत्यवृक्षमावेष्टयामासुस्तत्संस्कारक्रमेण तत्रत्यलता अपि नवदलकम्पनपूर्वं तमेवेति सहोपमा । तथा च द्रुमेषु यथा लताभिर्भ्रमितं तथा वीचीभिरपीत्यर्थः । वीचीवनलतयोर्वृक्षेण समं नायकनायिकावृत्तान्तः समासोक्तिलभ्यः । तत्रावेष्टः परिरम्भणम् । तदपि किसलयप्रायकरकम्पनमुखवलनभ्रमणादिचेष्टापूर्वकमेव भवतीत्यर्थः ॥

अथ पातालोद्घाटनमाह—

**गिरिणिवहेहि रसन्तं उक्खम्मन्तेहि णिवडिएहि अ समअम् ।**
**धरणीअ साअरस्स अ उग्घाडिज्जइ णिरन्तरं पाआलम् ॥ २८ ॥**

[गिरिनिवहै रसदुत्खायमानैर्निपतितैश्च समम् ।
धरण्याः सागरस्य च उद्घाट्यते निरन्तरं पातालम् ॥]

गिरिनिवहैरुत्खायमानैरुत्पाट्यमानैः सद्भिर्धरण्याः सागरे निपतितैः सद्भिः सागरस्य च पातालं सममेकदैवोद्घाट्यते व्यक्तीक्रियते । प्रथमे पातालपर्यन्तव्यापनाद्गिरिमूलस्य महत्त्वं द्वितीये जलस्यामूलोच्छलनात्प्रहारस्य दृढत्वं समोद्घाटनादुत्पाटनपातनयोस्तुल्यकालत्वेन कपीनां वेगबलाधिक्यं च सूचितम् । निरन्तरमित्यन्यकृतव्यवधानशून्यमिति पातालविशेषणम् । वारंवारमिति क्रियाविशेषणम् । रसच्छब्दायमानमित्युभयथापि पातालविशेषणम् । यद्वा सममुत्खायमानैर्निपतितैः समुद्घाट्यत इति सर्वत्र क्रियाविशेषणम् । तेन कार्यकारणयोश्च पौर्वापर्यव्यतिक्रम इति सर्वथा शीघ्रकारित्वमायातीति भावः ॥

प्रकारान्तरेण गिरिपतनमाह—

वेआविद्धवलन्ता मुहलवलन्तोज्झरावलिपरिक्खित्ता ।
संवेल्लिअघणणिवहा वलिअलआलिङ्गिआ पडन्ति महिहरा॥ २९

[वेगाविद्धवलन्तो मुखरखलन्निर्झरावलिपरिक्षिप्ताः ।
संवेल्लितघननिवहा वलितलतालिङ्गिताः पतन्ति महीधराः ॥]

महीधराः पतन्ति । समुद्र इत्यर्थात् । किंभूताः । वेगेनाविद्धाः प्रेरिता अत एव वलन्तो भ्रमन्तः । अत एव मुखरं सशब्दं यथा स्यादेवं वलन्तीभिर्भ्रमन्तीभिर्निर्झरावलिभिः परिक्षिप्ता वेष्टिताः । यथा यथा गिरिभ्रमणं तथा तथा भ्रमन्तीनां निर्झरावलीनां परितः पतनमित्यर्थः । एवं संवेल्लिताश्चञ्चलीभूता घननिवहा येषु ते । तद्भ्रमणेन घनानामपि भ्रमणात् । एवं वलिताभिर्वक्रीभूताभिर्लताभिरालिङ्गिताः । भ्रमित्वा वेष्टिता इत्यर्थः । अत्र गिरीणां भ्रमणे हेतुः प्रहारापकर्षस्तत्कारणं गिरीणां गौरवाधिक्यं वा कपीनामुत्कृष्टवेगवत्त्वं वा दूरात्क्षिप्तमधश्चिरेण गच्छत्तथाविधसंस्कारविरहाद्भ्रमतीति दूराकाशादवपातनं वा सूचितम् ॥

कपीनां क्रियाशैघ्र्यमाह—

एक्कक्कमावडन्ता णिअभुअक्खेवभिण्णसेलद्धन्ता ।
णिन्ति धुअकेसरसडा गअणुच्छलिअसलिलोत्थआ कइणिवहा ॥

[एकैकक्रमापतन्तो निजकभुजक्षेपभिन्नशैलार्धान्ताः ।
निर्यन्ति धुतकेसरसटा गगनोच्छलितसलिलावस्तृताः कपिनिवहाः ॥]

एकैकक्रमेण परस्परेणापतन्तः समुचितस्थाने पर्वतक्षेपणाय समुद्रोपर्याकाशदेशं गच्छन्तः कपिनिवहा निर्यन्ति । पर्वतान्क्षिप्त्वा तीरमायान्तीत्यर्थः । इति शीघ्रकारित्वमुक्तम् । कीदृशाः । निजकभुजाभ्यां यः क्षेपस्त्यागस्तेन भिन्नस्त्रोटितः शैलार्धान्तो यैरिति गिरीणां विकटाकारत्वं कपीनां बलवत्त्वम् । पुनर्गगनोच्छलितैः सलिलैरवस्तृता व्याप्ता इति बहिर्गमनेऽपि सलिलसेकात्पर्वतप्रकर्षः । अतएवोपरिपतितजलवर्जनाय धुताः कम्पिताः केसरसटा यैस्ते । तथा च राजकार्यमात्मोपद्रवेऽपि कर्तव्यमिति ध्वनिः ॥

जलोच्छलनप्रकर्षमाह—

**दीसइ वारंवारं गिरिघाउक्खित्तसलिलरेइअभरिअम् ।**
**पाआलं व णहअलं णहविवरं व विअडोअरं पाआलम् ॥ ३१ ॥**

[दृश्यते वारंवारं गिरिघातोत्क्षिप्तसलिलरेचितभृतम् ।
पातालमिव नभस्तलं नभोविवरमिव विकटोदरं पातालम् ॥]

वारंवारं गिरिघातेनोत्क्षिप्तं यत्सलिलं तेन रेचितमुच्छलनदशायां शून्यीकृतं पश्चादवपतनदशायां भृतं पूरितं पातालमिव नभस्तलं दृश्यते । तज्जलेन तस्यापि तथैव रेचितपूरितत्वात् । उपमानविशेषणस्योपमेयेऽपि प्रतीयमानत्वात् । अत एव व्यञ्जिततद्विशेषणविशिष्टं नभस्तलमिव पातालं दृश्यते । तज्जलस्योभयत्र निरन्तरं गतागतत्वमिति भावः । विकटोदरं तुच्छोदरमित्युभयविशेषणम् । यद्वा पौर्वापर्यमनपेक्ष्य रेचनभरणमात्रविवक्षायां तथाविधसलिलेन रेचितभृतं पातालमिव नभः, नभ इव पातालमित्युभयविशेषणम् । यद्वा तथाविधसलिलेन पूर्वं रेचितमेव सद्भृतं नभस्तलं पातालमिव दृश्यते जलपूर्णत्वात् । विकटोदरं तुच्छोदरं पातालं नभोविवरमिव जलस्योच्छलनात् । केचित्तु पातालमिव नभो नभ इव पातालमित्युभयमपि तत्सलिलेन रेचितभृतं दृश्यते । नभ इव पातालं रेचितं तदिव नभो भृतमित्यर्थः । परस्परोपमा हेतुपरिवृत्तिश्चालंकारौ ॥

गिरीणां विशीर्णतामाह—

**संखोहभिण्णमहिअलगलिअजलोलुग्गपङ्कअवणुच्छङ्गा ।**
**विहलगइन्दालम्बिअ फुडिअपडन्तसिहरा पडन्ति महिहरा ॥ ३२ ॥**

[संक्षोभभिन्नमहीतलगलितजलावरुग्णपङ्कजवनोत्सङ्गाः ।
विह्वलगजेन्द्रालम्बितस्फुटितपतच्छिखराः पतन्ति महीधराः ॥]

महीधराः पतन्ति । समुद्र इत्यर्थात् । कीदृशाः । संक्षोभेणोद्वहनादिक्रियान्दोलनेन भिन्नं विशीर्णं यन्महीतलं सरोवरावच्छिन्नं तेन गलितजलत्वेनावरुग्णं शुष्कं पङ्कजवनं यत्र तादृश उत्सङ्गो येषां ते । अवरुग्णः पङ्कजवनस्योत्सङ्गो यस्येति वा । विशीर्णभूमितलभागेन जलगलनात्पङ्कजानां शुष्कत्वमित्यर्थः । एवं विह्वलैः पतनशङ्कया व्याकुलैर्गजेन्द्रैरालम्बितानि शुण्डादिनावष्टब्धानि अत एव स्फुटितानि त्रुटितानि तत एव पतन्ति शिखराणि येषां ते । गजेन्द्रभारेण शिखराण्यपि तैः सह त्रुटित्वा पतन्तीत्यर्थः । विपदि स्त्रीयादपि स्वहानिरिति ध्वनिः ॥

समुद्रस्य मथनमाह—

रसइ गिरिघाअभिण्णो तीरं लङ्घेइ वलइ विसमक्खलिओ ।
पावइ महणावत्थं णवर ण णिदेइ साअरो अमअरसम् ॥ ३३ ॥

[रसति गिरिघातभिन्नस्तीरं लङ्घयति वलति विषमस्खलितः ।
प्राप्नोति मथनावस्थां केवलं न निर्ददाति सागरोऽमृतरसम् ॥]

सागरो गिरिघातेन भिन्नः सन्रसति । तदुत्तरं तीरं लङ्घयत्युच्छलति । तदनु विषमे निम्नोन्नतभूभागे स्खलितः प्रतिहतः सन्वलति वैषम्यमावहति । एवं मथनतुल्यामवस्थां प्राप्नोति केवलममृतरसं न निर्ददाति नोद्गिरति। अमृतोत्पत्त्यभावेन परं मथनशब्दप्रयोगो नेति भावः । ताडनादिक्लेशेऽपि स्वान्तःसारं न दातव्यमिति ध्वनिः ॥

प्रकृतारम्भस्य दुरन्ततामाह—

उक्खअणिवुड्डसेलो संसइअसमुद्दघोरमुक्कन्दो ।
रक्खसपुरीअ कह आ गमणोवाओ वि दारुणसमारम्भो ॥ ३४ ॥

[उत्खातनिपातितशैलो संशयितसमुद्रघोरमुक्ताक्रन्दः ।
राक्षसपुर्यां कथं वा गमनोपायोऽपि दारुणसमारम्भः ॥]

कथं वेति वितर्के आश्चर्ये वा। राक्षसपुर्यां लङ्कायां गमनोपायोऽपि दारुणः कठिनः समारम्भो यस्य तथा । किं पुनर्गमनमित्यर्थः । आरम्भदारुणत्वमाह—कीदृक् । उत्खाता उत्पाटिता अथ निपातिताः समुद्रे क्षिप्ताः शैला यत्र । एवं संशयितः स्थास्यति न वा यद्वा स्थास्यामि न वेति संशयविषयीभूतो यः समुद्रस्तेन घोरं यथा स्यादेवं मुक्त आक्रन्दः शब्दो यत्र । पक्षे रोदनम् । अन्योऽपि प्राणसंशयितो घोरमाक्रन्दति । शैलानां क्षयेण समुद्रस्य च दुरवस्थया दारुणत्वमिति भावः ॥

सौवर्णपर्वतानयनमाह—

वेउक्खलिउद्धाइअणहभमिरफुरन्तकञ्चणसिलावेढम् ।
कुसुमसुअन्धरआलं पल्हत्थइ पवअणोल्लिअं धरआलम् ॥ ३५ ॥

[वेगोत्खण्डितोद्धावितनभोभ्रमणशीलस्फुरत्काञ्चनशिलावेष्टम् ।
कुसुमसुगन्धरजोजालं पर्यस्यति प्लवगनोदितं धरजालम् ॥]

धराणां पर्वतानां जालं प्लवगैर्नोदितं प्रेरितं सत्पर्यस्यति । समुद्रे समाप्नोतीत्यर्थः ।

कीदृक् । वेगेनोत्खण्डितं त्रुटितमथोद्धावितं वेगशालि सद्गुरुत्वाम्भसि भ्रमणशीलमत एव रविकरसंबन्धात्स्फुरत्काञ्चनशिलावेष्टं यत्र । यतस्त्रुटित्वा काञ्चनशिला अपि निपतन्तीत्यर्थः । एवं कुसुमानां सुगन्धिरजोजालं यत्र । सुगन्धिरजआलं रजोयुक्तमित्यर्थो वा । मतुबर्थे आलच्प्रत्ययः । पर्वतक्षोभे रजांस्यपि पतन्तीति भावः ॥

क्रियानानारूपतामाह—

**वड्ढइ पवअकलअलो वलइ वलन्तवलआमुहो सलिलणिही ।**
**पवणणिराइअरुक्खा पडन्ति उद्धट्ठिओज्झरा धरणिहरा ॥ ३६ ॥**

[वर्धते प्लवगकलकलो वलति वलमानवडवामुखः सलिलनिधिः ।
पवननिरायतवृक्षाः पतन्त्यूर्ध्वस्थितनिर्झरा धरणीधराः ॥]

पवनेन कपिवेगजेन निरायता दीर्घीकृता वृक्षा येषु ते धरणिधराः समुद्रे पतन्ति । कीदृशाः । ऊर्ध्वस्थिताः कंदरोत्थितपवनरयादुच्छलिता निर्झरा येषु ते । पर्वता अधो गच्छन्ति निर्झरा ऊर्ध्वमित्यर्थः । एवं सति प्लवगानां कलकलः पर्वतक्षेपकालीनः कोलाहलो वर्धते । तथा सति वलमानो वक्रीभूतो वडवाग्निर्यत्र तादृक्सलिलनिधिर्वलति । जलोच्छलनाद्दिशि दिशि गच्छतीत्यर्थः ॥

गिरिनदीमत्स्यानाह—

**दूराइद्धणिअत्ता मोडिअमलिअहरिअन्दणमइज्जन्ता ।**
**उअहिं रहसुक्खित्ता आसाएन्ति विरसं महाणइमच्छा ॥ ३७ ॥**

[दूराविद्धनिवृत्ता मोटितमृदितहरिचन्दनमुह्यमानाः ।
उदधिं रभसोत्क्षिप्ता आस्वादयन्ति विरसं महानदीमत्स्याः ॥]

पर्वतेन सहागतानां महानदीनां मत्स्या उदधिजलं यतो विरसं लवणाकरत्वात्, अत आ ईषत्स्वादयन्ति । कीदृशाः । वेगेनाविद्धाः प्रेरिताः पर्वतपतनेन समुद्रगर्भं गमिता अथापरिचितं जलमिति निवृत्तास्तटमागताः । अथ तत्र प्रथमं जलसंघट्टान्मोटितेन ततस्तरङ्गाभिहत्या मृदितेन पर्वतीयहरिचन्दनेन रक्तचन्दनेन मुह्यमानाः प्राक्परिचितचन्दनरससंपर्केण स्वीयजलबुद्ध्या जातहर्षा अत एव रभसेनोत्कण्ठया उत्क्षिप्ता उत्प्लुत्योत्प्लुत्य परितो गताः । तथा च तत्र पुनश्चन्दनादिरसानुपलम्भाज्जलान्तराशङ्कया निर्णेतुं वैरस्येन रसनाग्रेणैव जलमास्वादयन्तीत्यर्थः ॥

महागिरिपतनमाह—

आसीविसमणिअम्बा पल्हत्थन्ति विहडन्तविसमणिअम्बा ।
दुमणिवहोवरि हरिआ दरीसु सेला रविप्पहावरिहरिआ ॥ ३८ ॥

[आशीविषमण्याताम्राः पर्यस्यन्ति विघटमानविषमनितम्बाः ।
द्रुमनिवहोपरि हरिता दरीषु शैला रविप्रभापरिहृताः ॥]

शैलाः पर्यस्यन्ति समुद्रे निपत्य विशीर्यन्ति । किंभूताः । आशीविषाणां मणिभिराताम्राः । तेषामप्यागमनात् । पुनर्विघटमानाः संघट्टात्त्रुटन्तो विषमा विकटा नितम्बा येषां ते । पुनर्द्रुमनिवहानामुपरि हरिताः । रविरुचीनामप्यगम्यतया नित्यं छायासंबन्धात् । पुनर्दरीषु रविप्रभाभिः परिहृताः । अतिगभीरत्वात् । अत्र विशेषणचतुष्टयेन विषमत्वपृथुत्वतुङ्गत्वविकटोदरत्वानि गिरीणामुक्तानि ॥

शेषस्य क्षोभमाह—

धरिअं वेओवत्तं गिरिघाउच्छित्तपाणिअम्मि समुद्दे ।
वलिऊण भुअअवइणा कहं वि तुलग्गविसमाअअं महिवेढम् ३९

[धृतं वेगापवृत्तं गिरिघातोत्क्षिप्तपानीये समुद्रे ।
वलित्वा भुजगपतिना कथमपि तुलाग्रविषमागतं महीवेष्टम् ॥]

भुजगपतिना शेषेण वलित्वा तिर्यग्भूत्वा तुलाग्रेण काकतालीयसंवादेनाकस्माद्विषमागतं तिर्यग्भूतं महीवेष्टं कथमपि धृतम् । कीदृक् । गिरिघातेनोत्क्षिप्तं पानीयं यस्मात्तथाभूते समुद्रे सति वेगेन हठादपवृत्तमपवर्तितुमारब्धम् । आदिकर्मणि क्तः । तथा च जलानामुच्छलने यन्त्रणाभावाल्लघुत्वेन धरण्यास्तिर्यगुन्नतौ तद्धारणाय शेषोऽपि तिर्यग्मौलिरासीदिति भावः । निजभारस्य रक्षा कष्टेनापि कर्तव्येति ध्वनिः ॥

बहूनां वैक्लव्यमाह—

वज्जभअं धरणिहरा आइवराहखुरपेल्लणाइँ वसुमई ।
समअं चिअ पम्हट्ठं संभरिओ महणसंभमं च समुद्दो ॥ ४० ॥

[वज्रभयं धरणिधरा आदिवराहखुरप्रेरणानि वसुमती ।
समकमेव प्रस्मृतं संस्मृतवान्मथनसंभ्रमं च समुद्रः ॥]

धरणिधरा वज्रभयं स्मृतवन्तः । पूर्वं वज्रभयेन पलायने समुद्रप्रवेशे वा परस्पर-

संघट्टावस्थोद्बोधात् । यद्वा समुद्रस्था एव धरणिधरा वज्राभिघातसजातीयागन्तुक-पर्वताभिघातादित्यर्थः । आदिवराहखुरैः प्रेरणानि वसुमती स्मृतवती । कपीनां चरणसंक्रमेण तत्सजातीयदुःखोदयात् । एवं मथनात्संभ्रममुद्वेगं त्रासं वा समुद्रः स्मृतवान् । तत्समानविमर्दोदयात् । समकमेकदैवेत्यर्थः । प्रस्मृतं विस्मृतम् । अत्र प्रस्मृतं स्मृतवानित्युभयत्र यथायोग्यं विभक्तिलिङ्गविपरिणामेनान्वयः कर्तव्यः । सममेव विस्मृतं सममेव स्मृतवन्त इत्यर्थो वा । 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति भावः ॥

अन्यापराधेन समुद्रस्य विपत्तिमाह—

**मलअचन्दणलआहरे संभरमाणओ**
**णिअअमहणदुक्खं मिव संभरमाणओ ।**
**रसइ सेलसिहराहिहओ सरिआवई**
**दहमुहस्स दोसेण समोसरिआवई ॥ ४१ ॥**

[मलयचन्दनलतागृहान्संबिभ्राणो
निजकमथनदुःखमिव संस्मरन् ।
रसति शैलशिखराभिहतः सरित्पति-
र्दशमुखस्य दोषेण समवस्तृतापत् ॥]

शैलशिखरेण पतताभिहतः सरित्पतिः समुद्रो रसति अभिघातवशेन शब्दायते । अत्रोत्प्रेक्षते—निजकं मथनदुःखं संस्मरन्ननुभवन्निव । अन्योऽपि वेदनया रोदितीत्ययमपि शब्दव्याजेन रोदितीत्यर्थः । कीदृक् । मलयपर्वतस्थचन्दनलतागृहाणि संबिभ्राणो धारयन् । तत्संबन्धात्पयःसेकादिना पुष्णन्निति वा । डुभृञः पोषणमप्यर्थ इत्यर्थ इत्याशयात् । यद्वा पोषणार्थकभरधातोरेवायं संभरमाण इति प्रयोगः । तदुक्तम्—'भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम्' इति । पुनः कीदृक् । दशमुखस्य दोषेण सीतापहरणरूपेण समवस्तृता समुपागता आपद्विपत्तिर्यस्य तथा । तदुक्तम्—'खलः करोति दुर्वृत्तं नूनं फलति साधुषु' इति । तथा च दुष्टसमाजः सर्वथा त्याज्य इति ध्वनिः ॥

गिरिनदीशीकरानाह—

**जलवट्ठत्थमिएसु अ उद्धाइ गिरीसु मलिअविद्दुमअम्बो ।**
**आवलिअचुण्णिएसुं धुअधाउरओ व्व सीहरग्घाओ ॥ ४२ ॥**

[जलपृष्ठास्तमितेषु चोद्धावति गिरिषु मृदितविद्रुमाताम्रः ।
आपतितचूर्णितेषु धुतधातुरज इव शीकररजउद्घातः ॥]

जलपृष्ठ एव जलावर्ते वास्तमितेषु मग्नेषु गिरिषु प्रथमं समुद्रे आपतितेषु पश्चात्परस्पराभिघाताच्चूर्णितेषु धुतं धातुरज इव शीकर एव रजस्तदुद्घात उद्धावत्यूर्ध्वं गच्छति । गिरीणां चूर्णितत्वाद्यथा धातुरज उद्गच्छति तथा तदभिघातात्तत्रत्यनदीशीकरोऽपीति सहोपमा । उद्घातः कीदृक् । मृदितेनाभिघातादेव चूर्णितेन विद्रुमेणाताम्रः । तत्कणानामत्रागमनादत एव लौहित्येन साम्यम् ॥

पुनः समुद्रक्षोभमाह—

**सेलसिहरसंखोहिअकल्लोलन्तअं**
**गलिअधाउरसराइअकल्लोलन्तअम् ।**
**रसइ उअहिसलिलं धरेसु वलमाणअं**
**भग्गचन्दणरसोसहिणिव्वलमाणअम् ॥ ४३ ॥**

[शैलशिखरसंक्षोभितकल्लोलान्तं
गलितधातुरसराजितलोलकान्तम् ।
रसत्युदधिसलिलं धरेषु वलमानं
भग्नचन्दनरसौषधिनिर्वलमानकम् ॥]

धरेषु पर्वतेषु वलमानं कंदरादिकोटरेषु प्रवेशाद्वक्रीभवदुदधिसलिलं रसति शब्दायते । तुच्छपूरणात् । कीदृक् । शैलशिखरेण संक्षोभिता अभिहत्योत्थापिताः कल्लोला यत्र तादृशोऽन्तः प्रान्तो यस्य तादृक् । कल्लोलस्य प्रान्ते प्रादुर्भावात् । यद्वा शैलशिखरसंक्षोभितः सन्कल्लोलायमानकल्लोलरूपस्तमिति कर्मधारयः । यद्वा शैलशिखरसंक्षोभितकल्लोलं ततं विस्तीर्णमित्यर्थः । एवं गलितेन जलसंपर्कादित्यर्थात् धातुरसेन राजितः शोभितः शोणीकृतो वा लोलस्तरङ्गाच्चञ्चलः कः सूर्यो यत्र । प्रतिबिम्बेन संक्रान्तत्वात् । एतादृशोऽन्तः स्वरूपं यस्य तथा । पुनर्भग्नं खण्डखण्डीभूतं यच्चन्दनरसौषधिर्मनःशिलादि तद्योगेन निर्वलमानं जलान्तरात्पृथग्भूतम् ।

चन्दनरसरूपौषधिरित्यर्थो वा । चन्दनादिसंबन्धेन लब्धवर्णान्तरत्वादिति भावः । 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपे च मनोहरे' । 'को ब्रह्मान्यनिलार्केषु समरे सर्वनाम्नि च । पानीये च मयूरे च सुखशीर्षसुखेषु कम् ॥'

गिरिद्रुमानाह—

**गिरिणिव्वलिअपडन्ता उद्धअजलमूलमिलिअपत्तलविडवा ।**
**लहुअत्तणुप्पवन्ता गअणमणाअड्ढिआ वि लग्गन्ति दुमा ॥ ४४ ॥**

[गिरिनिर्वलितपतन्त उद्धृतजलमूलमिलितपत्रलविटपाः ।
लघुत्वोत्प्लवमाना गगनमनाकृष्टा अपि लगन्ति द्रुमाः ॥]

अनाकृष्टा अपि द्रुमा गगनं विलगन्ति । तथा चाकर्षणसाध्यविलम्बशून्यत्वेन हठादित्यर्थः । कीदृशाः । गिरेर्निर्वलिताः पृथग्भूताः सन्तः पतन्तः । समुद्र इत्यर्थात् । एवमुद्धृतं वृक्षाभिघातादेवोच्छलितं यन्मूलजलं पातालस्थं पूर्वनिपातानियमात् तत्र मिलिताः संगताः पत्रलाः पत्रयुक्ता विटपा येषां ते । तत्र तत्र गलितपत्रदर्शनादनुमीयते अत्र द्रुमाः पतिता इति भावः । अतएव लघुत्वेनोत्प्लवमाना उपरि वीचीविवर्तेन दोलायमानाः । अयमर्थः— द्रुमास्तावत्पर्वतसंक्षोभेण शिथिलमूलतया त्रुटित्वा समुद्रे पतितास्ततस्तत्संस्कारवशात्पातालपर्यन्तं गतास्ततः पुनरभिघातोच्छलितजलेन सार्धमुपर्यागतास्तत्र पुनर्लघुत्वात्प्लवमाना एव तद्वीचिविक्षिप्ता वियति लग्नाः । अन्यदपि लघुद्रव्यं जले मग्नमुन्मज्योपरि गच्छतीति ध्वनिः ॥

कपीनामावेशमाह—

**पवअबलेहिँ राअसंजाअमच्छरेहिँ**
**गअणणिराअभिण्णघणभेसिअच्छरेहिँ ।**
**फुडधवलग्गदन्तपडिपेल्लिआहरेहिँ**
**भिज्जइ साअरस्स सलिलं धराहरेहिँ ॥ ४५ ॥**

[प्लवगबलै रागसंजातमत्सरै-
र्गगननिरायतभिन्नघनभीषिताप्सरोभिः ।
स्फुटधवलाग्रदन्तप्रतिप्रेरिताधरै-
र्भिद्यते सागरस्य सलिलं धराधरैः ॥]

प्लवगबलैः कर्तृभिर्धराधरैः करणैः सागरस्य सलिलं भिद्यते । गिरिक्षेपेण द्विधा-

कियत इत्यर्थः । किंभूतैः प्लवगबलैः । रागेण द्वेषेण रावणं प्रति संजातमात्सर्यैः । अथवा रामं प्रत्यनुरागेण रावणं प्रति जातमात्सर्यैः । मत्सरशब्दोऽपि क्रोधवाची । एवं गगने निरायता गमनवेगपवनेन दीर्घीकृताः सन्तो भिन्नाः पृथक्कृता ये घनास्तैरपरिचितपूर्वविकटाकारतया भीषितास्त्रासिता अप्सरसो यैस्तैः । एवं स्फुटं व्यक्तं धवलाग्रैर्दन्तैः प्रतिप्रेरितः क्रोधेन दष्टोऽधरो यैः । 'गअपेल्लिआहरेहिं' इति पाठे धराधरैः किंभूतैः । स्फुटधवलाग्राभ्यां दन्ताभ्यां गजेन प्रेरितो भिन्नोऽधरो नितम्बो येषां तैः । प्राकृतत्वाद्गजशब्दस्य परनिपातः । तथा च पातशङ्कया नितम्बे दन्तौ निखाय गजा यत्र स्थिता इत्यर्थः । अत्र पक्षेऽपरमपि विशेषणद्वयं मात्सर्योद्दीपकत्वेन मेघानां भेदकतया च बहुव्रीहिणा धराधरगतमपि । एतेनोत्साहाधिक्यमुक्तम् ॥

महेन्द्रगिरिखण्डपतनमाह—

पवणभरन्तदरिमुहं पवणसुअक्कन्तविहलिअसिलावेढम् ।
पडइ सिहरोज्झरुग्गअमहिन्दधणुगब्भिणं महिन्दक्खण्डम् ॥४६॥

[पवनभ्रियमाणदरीमुखं पवनसुताक्रान्तविघटितशिलावेष्टम् ।
पतति शिखरनिर्झरोद्गतमहेन्द्रधनुर्गर्भितं महेन्द्रखण्डम् ॥]

महेन्द्रस्य गिरेः खण्डं पतति समुद्र एव । किंभूतम् । पवनेन भ्रियमाणं दरीमुखं यत्रेति विकटोदरत्वम् । एवं पवनसुतेन हनुमता आक्रान्तं समुद्रलङ्घनसमये चरणाभ्यामवष्टब्धं यन्त्रितमत एव शिथिलमूलं सत्तदानीं विघटितं शिलावेष्टं यस्य तत् । मलयमहेन्द्रयोरेव चरणौ दत्त्वा हनूमानब्धिं लङ्घितवानित्याशयः । एवं शिखरनिर्झरेषूद्गतं यन्महेन्द्रधनुस्तद्गर्भितम् । नानामणिमरीचिसंपर्कात्सूर्यतेजसा जले शक्रधनुरुत्पत्तिः । तथा चेन्द्रधनुःसत्तया गिरिखण्डस्य श्यामत्वेन मेघोपमा व्यज्यते ॥

समुद्रे गिरीणां स्फुटनमाह—

गअणअलम्मि सेलसंवट्टवारिआणं
ओत्थरिअं रवेण जलभरिअवारिआणम् ।
वहमाणं लआघराइं सअन्दलाइं
किं पडिअं ण होइ सिहरं सअं दलाइं ॥ ४७ ॥

[गगनतले शैलसंघट्टवारितानामवस्तृतं रवेण जलभृतवारिदानाम् ।
वहमानं लतागृहाणि सकन्दलानि
किं पतितं न भवति शिखरं शतं दलानि ॥]

समुद्रे पतितं सच्छिखरं शतं दलानि किं न भवति, अपि तु भवत्येव । कीदृक् । गगनतले शैलसंघट्टेन वारितानां बहिष्कृतानां जलेन भृतानां पूर्णानां वारिदानां रवेणावस्तृतं व्याप्तम् । गगनस्था एव मेघाः शिखरैर्भिन्ना रसन्तीत्यर्थः । अन्योऽपि सूच्यादिवेधे रोदिति । पुनः कीदृक् । कन्दलो नाम वृक्षविशेषस्तत्सहितानि लतागृहाणि वहमानम् । गगन एव मेघरवसंबन्ध इति यावत्, यद्विश्रामो न वृत्तस्तावदेव तद्विशिष्टस्य शतखण्डत्वे पवनवेगप्रकर्ष उक्तः । शतखण्डहेतुत्वेन च समुद्रावर्तस्योत्कर्षः ॥

चमरीणामवस्थामाह—

लक्खिज्जन्ति समुद्दे गिरिघाउव्वत्तमअरविसमुक्कित्ता ।
छेअपसरन्तरुहिरा फेणमिलन्ता वि चमरिबालद्धन्ता ॥ ४८ ॥

[लक्ष्यन्ते समुद्रे गिरिघातोद्वृत्तमकरविषमोत्कृत्ताः ।
छेदप्रसरद्रुधिराः फेनमिलन्तोऽपि चमरीवालार्धान्ताः ॥]

समुद्रे गिरिघातेनोद्वृत्तैर्दर्शितोदरैर्मकरैः संमुखगतत्वेन विषमं उत्कृत्ताश्छिन्नाश्चमरीणां वालार्धान्ताः पुच्छैकदेशाः फेनेषु मिलन्तोऽपि लक्ष्यन्ते । तर्क्यन्त इत्यर्थः । कीदृशाः । छेदेन छेदनेन छेदे छिन्नभागे वा प्रसरन्ति रुधिराणि येभ्यस्ते । तथा च फेनश्वैत्येन विविच्य ग्रहणायोग्यत्वेऽपि रुधिरलौहित्येनानुमीयन्त इति काव्यलिङ्गम् ॥

गिरौ सिद्धमिथुनत्यागमाह—

सिद्धअणो भएण मुञ्चइ लआघराइं
सुरअविसेसजाअसेओल्लआहराइं ।
गिरिसरिआमुहाइं णासन्ति सासआइं
भमइ महोअहिस्स सलिलं दिसासआइं ॥ ४९ ॥

[सिद्धजनो भयेन मुञ्चति लतागृहाणि
सुरतविशेषजातखेदार्द्राधराणि ।
गिरिसरिन्मुखानि नश्यन्ति शाश्वतानि
भ्रमति महोदधेः सलिलं दिक्शतानि ॥]

सिद्धजनो भयेन गिरिक्षोभजेन लतागृहाणि मुञ्चति । पलायत इत्यर्थः । सुरतविशेषेण बन्धवैचित्र्याज्जातैः खेदैरार्द्राण्यधराण्यधःस्थलानि येषां तानि । एतेन गिरीणां दुरवगाहत्वमुक्तम् । एवं शाश्वतानि सार्वदिकान्यपि गिरिनदीमुखानि नश्यन्ति समुद्रजलप्रवेशादेकीभावात् । यद्वा साश्रयाणि आश्रयो गिरिस्तत्सहितानि । नद्यो गिरिरपि निमज्य नश्यन्तीत्यर्थः । तथा महोदधेः सलिलं दिक्शतानि भ्रमति शैलाभिघातेनावर्तीभूतत्वात् । 'सुरअविसेसजाअहरिसोल्लआहराइं' इति पाठे सुरतविशेषेण जातो हर्षो यत्र तादृशान्यार्द्राणि शीतलान्यधराण्यधःस्थलानि येषामिति बहुव्रीहिगर्भः कर्मधारयः । 'देशं सोपद्रवं त्यजेत्' इति ध्वनिः ॥

आवर्तपतितं गिरिगजमाह—

भमइ समुक्खित्तकरं गअवइवारिअपवित्तप्पग्गाहम् ।
विहलुत्थङ्घिअकलहं विअडावत्तमुहमागअं गअजूहम् ॥ ५० ॥

[भ्रमति समुत्क्षिप्तकरं गजपतिवारितप्रवृत्तप्रग्राहम् ।
विह्वलोत्थापितकलभं विकटावर्तमुखमागतं गजयूथम् ॥]

विकटावर्तस्य मुखं संमुखमागतं तत्र पतितं सद्गजयूथं भ्रमति । आवर्तानुसारेणेत्यर्थः । कीदृक् । समुत्क्षिप्त ऊर्ध्वं नीतः करः शुण्डा येन । अगाधजले शुण्डाया रक्षणीयत्वादिति जातिरलंकारः । एवं गजपतिना वारितः प्रतिषिद्धः प्रवृत्तः सर्वानपि प्रहर्तुमुद्यतः प्रग्राहो जलसिंहो यस्मात् । मद(गन्ध)मुपलभ्यापतितः सिंहो यूथपतिना पुरोगत्वात्प्रतिषिद्ध इत्यर्थः । एवं विह्वलः सन्नुत्थापितः कलभो यत्र । मग्नः कलभः शिशुरिति संभूय सर्वैरुत्थापित इत्यर्थः । अन्यत्रापि जलमग्नो बालः सर्वैरुत्थाप्यत इति ध्वनिः ॥

नदीनां दौःस्थ्यमाह—

समुहपडन्तविअडगिरिसिहरवेल्लिआणं
वीइपरिक्खलन्तपवणवसवेल्लिआणम् ।
दिट्ठिं देइ राहवो कह वि जा णईणं
ता विरहेइ णवर हिअअम्मि जाणई णम् ॥ ५१ ॥

[संमुखपतद्विकटगिरिशिखरप्रेरितानां
वीचिपरिस्खलत्पवनवशवेल्लितानाम् ।
दृष्टिं ददाति राघवः कथमपि यावन्नदीनां
तावद्विरहयति केवलं हृदये जानकी एनम् ॥]

राघवो यावन्नदीनां कृते नदीभ्यो वा दृष्टिं ददाति तावदेव केवलं जानकी सीत एनं रामं हृदये कथमपि कष्टसृष्ट्या विरहयति । समुद्रवैकल्येन नदीनां वैकल्यमुपलभ्य स्वामिनि दुःखिते तद्वध्वोऽपि दुःखमनुभवन्तीति स्वदुःखेन संभावितसीतादुःखजिज्ञासया नदीर्यावत्पश्यति तावदेव नदीगतमनस्कतया रामस्य हृदयं जानकी त्यजतीत्यर्थः । तदैव परं रामो विरहदुःखं नानुभवतीति भावः । यद्वा तावदेव जानकी एनं धीरोदात्तत्वेन हृदये विरहयति विरहिणं करोति । विरहदुःखमनुभावयतीति यावत् । अन्यदा सेतूद्योगमग्नमनस्कतया सीताविस्मरणात्तदानीं समुद्रविप्लवे नदीरूपतद्वधूविपर्यासदर्शनोद्गतकरुणया सीतास्मरणात् । कीदृशीनाम् । संमुखे पततां विकटगिरीणां शिखरैः प्रेरितानां शिखराभिघातादान्दोलितानाम् । एवं वीचिषु परिस्खलतो विषयसंचारस्य पवनस्य वशेनायत्त्या वेल्लितानाम् । वीचीनामुत्तुङ्गतया पवनस्य नतोन्नतगत्या चञ्चलीकृतानामित्यर्थः ॥

अथ समुद्रमूलवर्तिरामशरपक्षोद्गममाह—

दरडड्ढविद्दुमवणा उद्धावन्ति सिहिकज्जलिअसङ्कउला ।
पाआलल्लग्गकड्ढिअरामसरोलुग्गपत्तणा जलणिवहा ॥ ५२ ॥

[दरदग्धविद्रुमवना उद्धावन्ति शिखिकज्जलितशङ्खकुलाः ।
पाताललग्नकृष्टरामशरावरुग्णपत्रणा जलनिवहाः ॥]

जलनिवहा उद्धावन्ति । पातालादूर्ध्वमागच्छन्तीत्यर्थात् । कीदृशाः । दरदग्धानि

विद्रुमवनानि येषु रामशरानलात् । एवं शिखिना तेनैव कज्जलितानि दग्ध्वा श्यामीकृतानि शङ्खकुलानि येषु । एवं पातालमग्नाः स्थिता अथ कृष्टाः स्वोद्गमेनाकृष्टा रामशराणामवरुग्णा भग्ना पत्त्रणा पुङ्खगतपक्षविरचना यैस्ते । तथा च रामशरमात्रगम्यपातालजलस्यापि क्षोभो गिरिभिर्गत्वा कृत इति भावः ॥

अथ पातालदर्शनमाह—

**भीअणिसण्णजलअरं पलोट्टणिअअभरभिण्णवक्खमहिहरम् ।**
**दीसइ विहिण्णसलिलं कुविउद्धाइअभुअंगमं पाआलम् ॥ ५३ ॥**

[भीतनिषण्णजलचरं प्रलुठितनिजकभरभिन्नपक्षमहीधरम् ।
दृश्यते विभिन्नसलिलं कुपितोद्धावितभुजंगमं पातालम् ॥]

विभिन्नं पर्वताभिघातात्पृथग्भूतं सलिलं यस्मात्तथाभूतं सत्पातालं दृश्यते । व्यवधायकस्य जलस्योच्छलनादिति भावः । कीदृक् । भीताः सन्तो निषण्णा निःस्पन्दमवस्थिता जलचरा यत्र । एवं प्रलुठिता भूमावेव क्वचित्क्वचिन्निपतिता निजकभरेण भिन्नो भग्नः पक्षो येषां तथाभूता महीधरा यत्र । उड्डीय पलायितुमुद्यतानां निजदेहभारेणानभ्यासे चोड्डयनासामर्थ्येन भूमौ पतितानां पक्षभङ्गात्प्रलुठनमिति भावः । वस्तुतस्तु प्रलुठिता भूमौ क्वचित्क्वचित्पतिता निजं यत्कं समुद्रीयं जलं तस्य भरः प्राचुर्यं तेन भिन्नौ पक्षौ येषां तथाभूता महीधरा यत्र । तथा चोड्डीय गन्तुमारम्भेऽपि पक्षयोर्जलार्द्रतया तदसंभवे भूमौ निपातेन प्रलुठनमिति मदुन्नीतः पन्थाः । एवं मम क्षोभः केनोत्पादित इति कुपिताः सन्त उद्धावितास्तद्देशाय यतस्ततः संचारशीला भुजंगमा यत्र तथाभूतम् ॥

पुनर्गजानां विपत्तिमाह—

**खुहिअसमुद्दाहिमुहा तंसट्ठिअमहिहरोसरन्तक्खलिआ ।**
**करिमअरबद्धलक्खा करिमअरपडिच्छिआ पडन्ति गइन्दा ॥५४**

[क्षुभितसमुद्राभिमुखास्तिर्यक्स्थितमहीधरापसरत्स्खलिताः ।
करिमकरबद्धलक्ष्याः करिमकरप्रतीष्टाः पतन्ति गजेन्द्राः ॥]

गजेन्द्राः पतन्ति । समुद्र इत्यर्थात् । कीदृशाः । क्षुभितो गिरिपतनान्दोलितो यः समुद्रस्तदभिमुखाः । कोऽयमपूर्व इति जिज्ञासावशात् । पुनस्तिर्यक्स्थितात्क्षेपणाय पार्श्वायितान्महीधरादपसरन्तः सन्तः स्खलिताः । अवधानाभावेन स्थान-

च्युतौ देहगौरवाद्भ्रष्टा इत्यर्थः । तदवस्थायामपि मदगन्धोपलम्भेन युयुत्सया करिमकरेषु बद्धलक्ष्या दत्तदृष्टयः । तदानीमेव तैरेव करिमकरैः प्रतीष्टा युद्धाय स्वीकृता इति संप्रदायः । मम तु व्याख्या—गजेन्द्राः पतन्ति म्रियन्ते । कीदृशाः । कोऽयं किमाकारः कथमस्मिन्पतित्वा जीवितव्यमिति क्षुभिताः सन्तः समुद्राभिमुखाः समुद्रमवलोकयन्तः । अथ तद्दर्शनकाले तत्रैव दृष्टेषु करिमकरेषु बद्धं लक्ष्यं यैः । प्रहर्तुमित्यर्थात् । योद्धुं कृताध्यवसाया इत्यर्थः । अथ युयुत्सया समुद्रे देहपातनाय तिर्यक्स्थिताः सन्तो महीधरादपसरन्त एव स्खलितास्त्यक्तकायतया समुद्रे पतिताः । अथ तैरेव करिमकरैः प्रतिपक्षतया प्रतीष्टाः । पुरः समागत्य दत्तप्रहारा इत्यर्थः । तथा च समुद्रपातशङ्कासमुत्थप्राणसंशयेऽपि युयुत्सया शरीरानपेक्षपतनकर्मणा च मदतेजःप्रकर्ष उक्तः । परभूमौ सहसा कर्म न कर्तव्यमिति ध्वनिः । 'मइन्दा' इति पाठे मृगेन्द्रा इत्यर्थः ॥

उच्छलितजलप्रकर्षमाह—

**ण वि तह पवआविद्धा विअडणिअम्बगरुआ रसाअलमूलम् ।**
**जह उच्छलिउद्धाइअसलिलभरोवाहिआ अइन्ति महिहरा ॥५५॥**

[नापि तथा प्लवगाविद्धा विकटनितम्बगुरुका रसातलमूलम् ।
यथा उच्छलितोद्धाविअसलिलभरापवाहिता आयान्ति महीधराः ॥]

प्लवगैराविद्धाः प्रक्षिप्ता अपि विकटनितम्बगुरुका अपि महीधरास्तथा तेन प्रकारेण रसातलमूलं नायान्ति न गच्छन्ति यथा स्वाभिघातेनोच्छलितैरथोर्ध्वं धावितैर्गगनगाहिभिः सलिलभरैरपवाहिताः परावृत्त्य नियन्त्रणाभिरधः प्रेरिता गच्छन्ति । तथा च प्रेरकाणामतिबलवत्त्वं प्रेर्याणां चातिगुरुत्वमित्युभयथापि हठादेव पातालगमनौचिती । तदपेक्षयाप्युच्छलितजलाभिघातेन यत्सुतरां पतनं तेन तत्पर्वते खण्डजलावयविनस्तस्याभिघातप्रकर्षस्तेन स्वोच्छलनहेतुतत्पर्वतस्य पुनरन्तरालब्ध्या चोभयथापि गुरुप्रकर्षस्तेन महत्त्वप्रकर्षः गुरोरप्यतिदूरमूर्ध्वगमनमित्युच्छलनवेगप्रकर्षस्तेन समुद्रतत्पर्वताभिघातप्रकर्षस्तेन क्षेपप्रकर्षस्तेन कपीनां बलप्रकर्षोऽनुमीयत इत्यनुमानपरम्परा । एवं च तत्पर्वतस्य तृतीयकारणोपनिपातेन पातालप्राप्त्या स्वोत्थापितखण्डजलेनान्तरासंबन्धेन च समुद्रस्य गाम्भीर्यमुक्तम् । यद्वा प्लवगैः आ अत्यर्थेन विद्धाः क्षिप्ता नितम्बगुरवोऽपि महीधरास्तथा पातालं न गच्छन्ति यथा तदभिघातोच्छलितैरेव सलिलैरपवाहिता अन्य एव गच्छन्ति । बलं विनैव

क्षिप्ता लघव इत्यर्थात् । तथा च बलक्षिप्तानां गुरूणां पुरोगामिनामप्यपेक्षया अप्रयत्नक्षिप्ता लघवः पश्चाद्गामिनोऽप्यग्रे पातालं गता इति प्रेरकजलस्य प्रकर्षस्तेन तदभिहन्तुस्तत्पर्वतस्य तेन कपीनां बलस्य चेत्युन्नयामः ॥

तरङ्गाणामुत्थापनमाह—

**उत्तङ्घिअदुमणिवहा गिरिवाउव्वत्तमुच्छिअमहामच्छा ।**
**वेलासेलक्खलिआ उद्धं भिज्जन्ति उअहिजलकल्लोला ॥ ५६ ॥**

[उत्तम्भितद्रुमनिवहा गिरिघातोद्वृत्तमूर्च्छितमहामत्स्याः ।
वेलाशैलस्खलिता ऊर्ध्वं भिद्यन्ते उदधिजलकल्लोलाः ॥]

उदधिजलानां कल्लोलाः प्रथमं प्रक्षिप्ता गिरिघातेनोद्वृत्ता दर्शितोदराः अथ च मूर्च्छिता महामत्स्या येषु तथाभूताः । अथ तदभिघातेनोच्छलनाद्वेलाशैलेषु मलयसुवेलादिषु स्खलिताः प्रतिरुद्धगतयस्तदनूत्तम्भिताः स्वाभिघातेनोत्खा(ता)योत्थापिता वेलाशैलानामेव द्रुमनिवहा यैरेवंभूताः सन्त ऊर्ध्वमाकाशं व्याप्य भिद्यन्ते शतखण्डा भवन्तीत्युच्छलनप्रकर्षेणाभिघातप्रकर्ष उक्तः । अभिघातोच्छलितमन्यदपि जलं कुत्रचित्स्खलितमूर्ध्वमुत्तिष्ठतीति ध्वनिः ॥

सुरमिथुनापयानमाह—

**अद्धत्थमिअविसण्ठुलगअजूहारूढसिहरविहलस्स णहम् ।**
**जीअं व झत्ति णज्जइ गिरिस्स कुहराहि उग्गअं सुरमिहुणम् ५७**

[अर्धास्तमितविसंष्ठुलगजयूथारूढशिखरविह्वलस्य नभः ।
जीव इव झटिति ज्ञायते गिरेः कुहरादुद्गतं सुरमिथुनम् ॥]

सुरमिथुनं गिरेः कुहरात्कंदरातो झटिति नभ उद्गतं ज्ञायते जीव इव । गिरौ निमज्जति निमज्जनशङ्कया नभोगामि सुरमिथुनं न भवति किंतु पयसि मज्जतो गिरेर्जीवः प्राणा एव जीवात्मा वा । तदुद्गमनमेव वृत्तमित्युत्प्रेक्षा । गिरेः कीदृशस्य । अर्धास्तमितं गिरौ मज्जत्यर्धमग्नमत एव विसंष्ठुलं यद्गजयूथं तेनात्मरक्षानिमित्तमारूढेन शिखरेण हेतुना विह्वलस्य । एकत्र मज्जनमपरत्र गजाक्रमणमित्युभयमपि प्राणोत्क्रमणहेतुत्वेन संभावितमिति भावः । केचित्तु तथाभूतेन शिखरेण हेतुना विह्वलस्यार्धास्तमुद्रस्य जीवो जलमिव गिरेः सुरमिथुनमुद्गतम् । यथा तज्जलं नभ उद्गतं तथेदमपीति सहोपमा । अपूर्ववस्तुविगमो जीवविगमतुल्य इति ध्वनिः ॥

कपीनां प्रौढिमाह—

**धरिआ भुएहि सेला सेलेहि दुमा दुमेहि घणसंघाआ ।**
**ण वि णज्जइ किं पवआ सेउं बन्धन्ति ओ मिणेन्ति णहअलम् ॥५८॥**

[धृता भुजैः शैलाः शैलैर्द्रुमा द्रुमैर्घनसंघाताः ।
नापि ज्ञायते किं प्लवगाः सेतुं बध्नन्ति उत मिन्वन्ति नभस्तलम् ॥]

वानराणां भुजैः शैलास्तैरपि द्रुमास्तैरपि मेघसंघाता धृताः । अतो न ज्ञायते किं प्लवगा अनेन प्रकारेण सेतुं बध्नन्ति उत पक्षान्तरे नभस्तलं मिन्वन्ति मापयन्ति । गगनगाहिनः सेतोर्गगनमापनस्यापि सामग्रीयमिति भावः । तद्द्वयमपि दुष्करं प्लवगसाध्यमेवेत्याशयः । 'न विज्ञायते' इति वा ॥

पुनः समुद्रक्षोभमाह—

**रहसविसज्जिएक्कमेक्का वलन्तधुअपडिअमणिसिला साअरम्मि णिवडन्ति धरणिहाआ मलिअमहाभुअंगभग्गप्फणोअरोसरिअसंपुडं रसाअलं दुम्मेन्ति धरणिहाआ ।**

**णासइ जं जलं साअरस्स चुण्णिअमणोसिलाअडपडन्तसेलसंदारुणं फलन्तं दरिअणिसाअरेन्दहीरन्तजाणईबाहणिब्भरपुलोइअस्स किर दारुणं फलं तम् ॥ ५९ ॥**

[रभसविसृष्टैकैके वलद्धुतपतितमणिशिलाः सागरे निपतन्ति धरनिघाता मृदितमहाभुजंगभग्नफणोदरापसृतसंपुटं रसातलं दुन्वन्ति धरणिघाताः । नश्यति यज्जलं सागरस्य चूर्णितमनःशिलातटपतच्छैलस्यन्दारुणं फलद्धृतनिशाचरेन्द्रह्रियमाणजानकीबाष्पनिर्भरप्रलोकितस्य किल दारुणं फलं तत् ॥]

धराणां पर्वतानां निघाताः समूहाः सागरे निपतन्ति । कीदृशाः । रभसेनोत्कण्ठया वेगेन वा विसृष्टाः क्षिप्ता एकैके पर्वता एव यत्र ते । यद्वा एकैके स्वरूपा इत्यर्थः । एवं वलन्त्यो वक्रीभवन्त्यो धुताः कम्पिताः पतिता मणिरूपाः शिला येभ्यस्ते । गिरिपतने तत्क्षोभान्मणिशिला अपि भ्रमित्वा पतन्तीत्यर्थः । तदुत्तरं धरणीघाता भूमेरभिघाता रसातलं पातालं दुन्वन्ति व्याकुलयन्ति । पर्वतपतनेन

समुद्रजलक्षोभकृततटाभिघाताया धरण्या आन्दोलने तत्संलग्नत्वेन पातालमप्यान्दोलयतीत्यर्थः। धरण्या दलने पातालमपि दलतीत्यर्थो वा। रसातलं कीदृशम्। सृदितस्य धरण्या यन्त्रितस्य महाभुजंगस्य शेषाहेर्भग्ना अवनता याः फणास्तासामुदराभ्यन्तरादपसृतास्त्यक्ताः संपुटा ओष्ठद्वयमिश्रणा यत्र तत्। क्षुभितभूमिभारेण शेषादेः फणाभङ्गे ओष्ठद्वयविभागेन संपुटत्यागो भवतीत्यर्थः। अथ चूर्णितं मनःशिला धातुविशेषस्तत्तटं यत्र तथाभूतस्य पततः शैलस्य स्पन्देन मनःशिलारागमिश्रितजलक्षरणेनारुणं सागरस्य जलं यन्नश्यति उच्छलितं सत्क्षीयते तत्किल दृसेन बलवता निशाचराणामिन्द्रेण ह्रियमाणाया जानक्या बाष्पैरश्रुभिर्निर्भरं पूर्णं यत्प्रलोकितमवलोकनं तस्य फलं निष्पद्यमानं जायमानपरिपाकम्। 'फल निष्पत्तौ' धातुः। एतादृशं दारुणं दुःसहं फलम्। रावणेन ह्रियमाणां सबाष्पमवलोकयन्तीमपि सीतां समुद्रो न त्याजितवांस्तज्जातपातकस्य फलमिदमित्यर्थः। दीनरक्षामकृत्वा दुःखं लभ्यत इति ध्वनिः॥

हंसानां क्षोभमाह—

सेलसिलाहआ समुद्दोअरे मणीणं
चुण्णिज्जन्ति वित्थरा रअणगामणीणम्।
भरइ णहङ्गणं अणिव्विण्णमेहलाणं
हंसउलावलीणं वणराइमेहलाणम्॥ ६०॥

[शैलशिलाहताः समुद्रोदरे मणीनां
चूर्ण्यन्ते विस्तारा रत्नग्रामणीनाम्।
भ्रियते नभोङ्गणमनिर्विण्णमेघलानं
हंसकुलावलीनां वनराजिमेखलानाम्॥]

मणीनां विस्ताराश्चूर्ण्यन्ते कणशः क्रियन्ते। पर्वतैरेवेत्यर्थात्। अत्र हेतुमाह—कीदृशाः। समुद्रोदरे शैलशिलाभिराहता अभिहताः। मणीनां किंभूतानाम्। रत्नग्रामणीनां रत्नश्रेष्ठानाम्। एवं हंसकुलावलीनामिति 'नाग्निस्तृप्यति काष्ठानां' इतिवत्करणे षष्ठी। तथा च हंसकुलावलीभिर्नभोङ्गणं भ्रियते पूर्यते। कीदृक्। अनिर्विण्णमसंपन्नं मेघानां लानमादानं यस्य। गिरीणां मिथः संघट्टनं मेघानामपगमात्। 'ला आदाने' धातुः। कीदृशानाम्। वनराज्याः पर्वतीयवनमालाया वनं जलं

तद्राज्या वा मेखला काञ्ची तद्रूपाणाम् । पर्वतक्षोभेण तत्सरोवरहंसानामपीतस्ततो नभसि प्रसरणमित्यर्थः । पर्वतपतनकदर्थिताः समुद्रहंसा एव गगनं गता इति वा । यद्वा नभोङ्गणं कर्तृ, हंसकुलावलीनां स्मरति । मेघसंबन्धाभावेन हंसप्रसरणयोग्यत्वादिति भावः । कर्मणि षष्ठी । 'स्मरति वनगुल्मस्य कोकिलः' इतिवत् ॥

पुनः समुद्रक्षोभमेवाह—

**रसइ रसाअलं दलइ मेइणी णिसुब्भन्ति जलअणिवहा परीइ गअणङ्गणे कविअणो ओसुब्भन्ति महिहरा महिहराहिहओ साअरो वि सुइरं थलम्मि घोलइ अमुक्कविअणो ।**

**कुसुमपसाहणं विअ समुद्धपल्लवं साअरम्मि पडिआण विडवलग्गं दुमावलीणं जाअं भिण्णसिप्पिउडमज्झणिग्गअत्थोरधवलमोत्ताविहूसणं विद्दुमावलीणम् ॥ ६१ ॥**

[रसति रसातलं दलति मेदिनी निपात्यन्ते जलदनिवहाः पर्येति गगनाङ्गणे कपिजनोऽवपात्यन्ते महीधरा महीधराभिहतः सागरोऽपि सुचिरं स्थलं घूर्णतेऽमुक्तवेदनः ।

कुसुमप्रसाधनमिव समुग्धपल्लवं सागरे पतितानां विटपलग्नं द्रुमावलीनां जातं भिन्नशुक्तिपुटमध्यनिर्गतस्थूलधवलमुक्ताविभूषणं विद्रुमावलीनाम् ॥]

रसातलं पातालं रसति शब्दायते । पर्वताभिघातात् । मेदिनी दलति खण्डिता भवति । तत एव जलदनिवहा निपात्यन्ते । स्वपतनेन गिरिभिरित्यर्थात् । एवं गगनाङ्गणे कपिजनः कपिलोकः पर्येति । वानरान्तरक्षिप्तपर्वतानामुपरि पातशङ्कया बहिर्यातीत्यर्थः । महीधरा अवपात्यन्ते । सागरे कपिभिरित्यर्थात् । महीधरेणाभिहतः सागरोऽपि सुचिरं व्याप्य स्थले घूर्णते । उच्छलनात् । कीदृक् । अमुक्ता वेदना येन । पर्वतपातजन्यवेदनावानित्यर्थः । एवं पर्वताभिघातेन भिन्नस्य द्विधाभूतस्य शुक्तिपुटस्य मध्यान्निर्गतं बहिर्भूतं स्थूलं धवलं मुक्तारूपं विभूषणं कर्तृ विद्रुमेषु प्रवालेष्ववलीनं संबद्धं सत्सागरे पतितानां द्रुमावलीनां विटपे लग्नं मुग्धपल्लवसहितं कुसुमप्रसाधनं कुसुमरूपालंकरणमिव जातम् । शुक्तेरुच्छलितानि मुक्ताफलानि विद्रुमेषु लग्नानि तेन समुद्रपतितपर्वतीयवृक्षाणां मुक्ताफलानि शुभ्र-

तया कुसुमत्वेन विद्रुमवनानि शोणतया नवदलत्वेनोत्प्रेक्षितानि । महदाश्रयेण विपत्तावपि शोभालाभ इति ध्वनिः ॥

गिरीणां वनमाह—

अत्थमिआण महिहराण समच्छरेहिं
परिमलिआइ वणगएहिं समच्छरेहिं ।
साहइ कुसुमरेणुमइओ धओ वणाइं
अविरअणिम्महन्तमहुगन्धओवणाइं ॥ ६२ ॥

[अस्तमितानां महीधराणां समत्सरैः
परिमृदितानि वनगजैः सममप्सरोभिः ।
शास्ति कुसुमरेणुमयो ध्वजो वनानि
अविरतनिर्यन्मधुगन्धयौवनानि ॥]

अप्सरोभिः सहास्तमितानां समुद्रे मग्नानां महीधराणां वनानि कुसुमानां रेणवः परागास्तन्मयो ध्वजो दण्डाकारं चिह्नं शास्ति कथयति वनानामपि मग्नत्वाज्जलसंपर्कोद्धूतैः कुसुमरेणुभिर्ध्वजाकारैः परमनुमीयते अत्र वनानीति । कीदृशानि । समत्सरैर्जलमज्जनोद्गतमात्सर्यैर्वनगजैरितस्ततो निर्गमाय संचारेण परिमृदितानि । तथापि निर्गमालाभ इति भावः । पुनः कीदृशानि । अविरतः सदातनो निर्यतां मधूनां गन्धो यत्र तादृशं यौवनं तारुण्यं येषां तानि । 'अत्थमिआइं' इति पाठे अस्तमितानीति वनविशेषणम् ॥

समुद्रस्य गाम्भीर्यमाह—

वहइ पवंगमलोओ पहुप्पइ णहङ्गणं पडिच्छइ उअही ।
देइ मही वि महिहरे तह वि हु दूरविअडोअरं पाआलम् ॥६३॥

[वहति प्लवंगमलोकः प्रभवति नभोङ्गणं प्रतीष्टे उदधिः ।
ददाति मह्यपि महीधरांस्तथापि खलु दूरविकटोदरं पातालम् ॥]

यद्यपि प्लवंगमलोको महीधरान्वहत्यानयतीत्युद्वाहकमहत्त्वम् । नभोङ्गणं प्रभवति विस्तीर्णतया तत्प्रसारणयोग्यं भवति । उदधिः प्रतीष्टे स्वयं गृहीत्वा पातालाय समर्पयति । न केवलमेतावत्येव सामग्री किं तु मह्यपि ददाति । तथा च

यावन्महीवर्तिनः पर्वतान्यावन्तः प्लवंगमा यावदाकाशेन यावत्समुद्रे प्रवेशयन्ति तथापि खलु पातालं दूरादेव विकटोदरं तुच्छोदरम् । पर्वतानामेकदेशे पर्याप्तेरित्यर्थः । तथा च सेतोरसिद्धिरिति भावः । अन्यत्रापि भोज्यादौ भक्ष्यवस्तूनि कश्चिद्ददाति कश्चिदुद्वहति कश्चिद्ध्रियते कश्चित्परिवेषयति कश्चिद्भुङ्क्ते भोजनशक्त्या च तस्योदरपूरणं न भवतीति पातालरूपभक्षकस्य महोदरत्वमुक्तम् । दरिद्रोदरपूरणमशक्यमिति ध्वनिः ॥

अथ षड्भिः स्कन्धकैरादिकुलकेन समुद्रोपमर्दमुपसंहरति—

इअ खोहेन्ति पवंगा थोअविराअगिरिपङ्कणिव्वुअमहिसम् ।
दुममिलिअविद्दुमवणं थलसावअमिलिअजलअरं मअरघरम् ६४

[इति क्षोभयन्ति प्लवङ्गाः स्तोकविशीर्णगिरिपङ्कनिर्वृतमहिषम् ।
द्रुममिलितविद्रुमवनं स्थलश्वापदमिलितजलचरं मकरगृहम् ॥]

प्लवंगा इत्यनेन प्रकारेण मकरगृहं समुद्रं क्षोभयन्ति व्याकुलयन्ति । पर्वतप्रक्षेपेणेत्यर्थात् । कीदृशम् । स्तोकमीषद्विशीर्णानां आवर्ते पतनाच्चितम्बावच्छेदेन भ्रमतापि गिरीणामुपरि पङ्के निर्वृताः सुखिनो (महा)महिषा यत्र तम् । तथा चावर्ते पतनादधोविशीर्णतायामप्युपरि पङ्के महिषनिर्वृत्या क्षोभोत्पाटनोद्वहनक्षेपणावर्तभ्रमणानामपरिज्ञानादतिमहत्त्वं गिरीणामुक्तं सत्वरता वा कपीनाम् । गुरोरपि मज्जनाभावेनावर्तस्यातिवेगवत्त्वम् । एवं द्रुमेषु । पर्वतीयेष्वर्थात् । मिलितानि विद्रुमवनानि यत्र । 'मलिअ' इति पाठे द्रुमैर्मृदितानि वनानि यत्रेत्यर्थः । एवं स्थलश्वापदेषु वन्यसिंहगजादिषु मिलिताः संगता जलचरा जलसिंहादयो यत्र तम् । तथा च विरुद्धानामप्येकत्र स्थित्या समुद्रे पर्वतानवच्छिन्नदेशाभाव उक्तः । क्षोभातिशयश्च जन्तूनाम् । विपत्तौ विरुद्धैरपि मिलित्वा स्थातव्यमिति ध्वनिः ॥

वणगअगन्धारोसिअजम्भाअन्तपडिउद्धकेसरिमअरम् ।
संमुहपडन्तधराहरभीअवलन्तभुअइन्दजणिआवत्तम् ॥ ६५ ॥

[वनगजगन्धारोषितजृम्भायमाणप्रतिबुद्धकेसरिमकरम् ।
संमुखपतद्धराधरभीतवलमानभुजगेन्द्रजनितावर्तम् ॥]

पुनः किंभूतम् । वनगजानां गन्धेन । मदस्येत्यर्थात् । आरोषिताः क्रुद्धा अत एव जृम्भायमाणाः सन्तः प्रतिबुद्धाः सुप्तोत्थिताः केसरिमकरा जलसिंहा यत्र ।

वनगजमदगन्धेन निद्राभङ्गाज्जृम्भायमाणत्वमित्यर्थः । एवं संमुखे पतद्भ्यो धराधरेभ्यो भीता अत एव वलन्त उपरिपतनमाशङ्क्य सांमुख्यत्यागाय वक्रीभवन्तो ये भुजगेन्द्रास्तैर्जनित आवर्तो यत्र तम् । आवर्तहेतुवलनशालित्वेन सर्पाणामतिमहत्त्वमुक्तम् । अनागतप्रतिविधानं कर्तव्यमिति ध्वनिः ॥

अत्थाअन्तवणत्थलिपरिणामोलुग्गपण्डुवत्तत्थइअम् ।
मअणदुमभङ्गणिग्गअकसाअरसमइअविह्लवोलिरमच्छम् ॥६६॥

[अस्तायमानवनस्थलीपरिणामावरुग्णपाण्डुपत्रस्थगितम् ।
मदनद्रुमभङ्गनिर्गतकषायरसमत्तविह्वलघूर्णमानमत्स्यम् ॥]

एवमस्तायमानायाः पर्वते मज्जति मज्जन्त्या वनस्थल्याः परिणामेन पाकेनावरुग्णैः शुष्कैरत एव पाण्डुभिः पत्रैः स्थगितं व्याप्तम् । वृक्षाणां मग्नत्वेऽपि शुष्कवृन्ततया कोमलत्वेन त्रुटित्वा पत्राणि जलोपर्यवस्थितानीति भावः । एवं मदनद्रुमाणां भङ्गेन शाखादलनेन निर्गतो यः कषायरसस्तेन मत्ता अत एव विह्वलाः सन्तो घूर्णमानाः स्वास्थ्याभावेन परितो गच्छन्तो मत्स्या यत्र । मत्स्यान्प्रति मदनद्रुमस्य विषतुल्यत्वादिति भावः ॥

धरणिहरभारवेल्लिअपल्लवदलमुद्धवेल्लिअलआजालम् ।
विसवण्णवाअवाहअपवाअन्तविसवण्णवाअवकुसुमम् ॥ ६७ ॥

[धरणिधरभारप्रेरितपल्लवदलमुग्धवेल्लितलताजालम् ।
विषवन्नवातपाहतप्रवायद्बिसवर्णपादपकुसुमम् ॥]

एवं धरणीधराणां भारेण प्रेरितानि सन्ति पल्लवानां दलेन दलनेन मुग्धानि ह्रस्वानि अत एव वेल्लितानि चञ्चलानि लतानां जालानि यत्र । गिरिगौरवकृतप्रेरणया पल्लवभङ्गकृतलाघवेन च लतानां वेल्लनमित्यर्थः । एवं विषवन्तः सर्पास्त एव नवातपास्तापहेतुत्वात्तैराहतानि स्पृष्टानि अत एव प्रवायन्ति शुष्यन्ति । 'ओवै शोषणे' धातुः । बिसवर्णानि मृणालवद्धवलानि पादपानां कुसुमानि यत्र । पर्वतवृक्षाणां समुद्र एव पतनादिति भावः । तदानीं सर्पाणां क्षोभादितस्ततः संचरतां निःश्वासेन पुष्पमालिन्यमिति भावः । दुष्टसांनिध्यमपकारहेतुरिति ध्वनिः ॥

आवत्तभमिरमहिहरसिहरोज्झरसीहरन्धआरिअगअणम् ।
पडिओसहिगन्धाहअपाआलसमुच्छलन्तविहलविसहरम् ॥६८॥

[आवर्तभ्रमणशीलमहीधरशिखरनिर्झरशीकरान्धकारितगगनम् ।
पतितौषधिगन्धाहतपातालसमुच्छलद्विह्वलविषधरम् ॥]

एवमावर्तेषु भ्रमतां महीधराणां शिखरेषु ये निर्झरास्तेषामुच्छलनादुपरि चक्रवद्भ्रमतां शीकरैरन्धकारितं गगनं यत्र । गिरीणां गुरुत्वेऽप्यावर्तस्योत्कटतया तलं गन्तुमलभमानानां शिखरपरिभ्रमन्निर्झरशीकरावृतत्वात्सूर्यस्येति भावः । तथा च सूर्याच्छादकत्वेन तमसः प्रकर्षस्तेन शीकराणां तेन निर्झरस्य तेन शिखरस्य तेन पर्वतस्य तेन तत्पतनप्रतिबन्धकतयावर्तवेगपरिमाणयोस्तेन च समुद्रस्य प्रकर्षो व्यज्यत इति व्यञ्जनापरम्परा। एवं पतितानां जलमूलगतानामोषधीनां गन्धेनाहता स्पृष्टा अत एव पातालात्समुच्छलन्त उपरि समागच्छन्तो विह्वला विषधरा यत्र तम् । पर्वतौषधीनां गन्धवत्तया सर्पैर्दुःसहगन्धत्वादिति भावः । 'देशं सोपद्रवं त्यजेत्' इति ध्वनिः ॥

आवत्तमण्डलोअरवलन्तसेलकडअप्पहामिज्जन्तम् ।
णिन्तरसाअलविसहरविस्थिण्णफणामणिप्पहामिज्जन्तम् ॥ ६९ ॥
(कुलअम्)

[आवर्तमण्डलोदरवलमानशैलकटकप्रभ्राम्यमाणम् ।
निर्यद्रसातलविषधरविस्तीर्णफणामणिप्रभामीयमानम् ॥]
(कुलकम्)

एवं मण्डलाकारस्यावर्तस्योदरे वलमानो भ्रमन्यः शैलस्तस्य कटकेन प्रभ्राम्यमाणम् । आवर्ते चक्रवद्भ्रमतः कटकस्य संस्कारेण समुद्रस्यापि भ्रमणमिति कटकमहत्त्वात्पर्वतमहत्त्वं तथाविधपर्वतमज्जनप्रतिबन्धकतया चावर्तस्योत्कर्षात्समुद्रस्योत्कर्ष इति परस्परालंकारः । एवं निर्यन्तः पर्वतौषधिगन्धेन पातालक्षोभेण वा बहिर्भवन्तो ये रसातलसर्पास्तेषां विस्तीर्णा याः फणास्तासां मणीनां प्रभाभिर्मीयमानं ज्ञायमानम् । उपरि प्रागुक्तशीकरान्धकारसत्त्वेऽप्युत्थितपातालसर्पफणामणिप्रभाभिरधस्तादुद्योतेन ज्ञायते समुद्रोऽयमिति भावः । यद्वा जलान्तरवर्तितन्मणितेजोविशेषेणोद्गच्छता पातालोत्थितसर्पवानयमित्यनुमीयमानमित्यर्थः ॥ आदिकुलकम् ॥

सेतोरनिष्पत्तिमाह—

**अव्वोच्छिण्णविसज्जिअणिअन्तराआममिलिअपव्वअघडिओ ।**
**दीसइ णहणिम्माओ णासइ उअहिम्मि णिवडिओ सेउवहो ॥ ७० ॥**

[अव्यवच्छिन्नविसृष्टनिरन्तरायाममिलितपर्वतघटितः ।
दृश्यते नभोनिर्मितो नश्यत्युदधौ निपतितः सेतुपथः ॥]

अव्यवच्छिन्नमविच्छेदं यथा स्यादेवं विसृष्टाः क्षिप्ता अथ निरन्तरेण निःसंधिना आयामेन दैर्घ्येणोपलक्षिताः सन्तो मिलिताः परस्परं संबद्धा ये पर्वतास्तैर्घटितो योजितः सेतुपथो नभसि निर्मितो दृश्यते । उदधौ पुनर्निपतितः सन्नश्यति मज्जन्नदृश्यो भवति । पर्वतानामेकदैव क्षेपादाकाशे वृत्त इति निश्चीयमानोऽपि सेतुरुदधौ न तिष्ठतीति स्थिरबुद्धिः क्वापि न कर्तव्येति ध्वनिः ॥

अथ कपीनां परिश्रममाह—

**तो घेप्पिउं पउत्ता थोअत्थोअं परिस्समेण पवंगा ।**
**अणुराए व्व विराए लङ्काणत्थघडणक्खमे सेउवहे ॥ ७१ ॥**

**इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे**
**महाकव्वे सत्तमो आसासओ ।**

[ततो ग्रहीतुं प्रवृत्ताः स्तोकस्तोकं परिश्रमेण प्लवंगाः ।
अनुराग इव विशीर्णे लङ्कानर्थघटनक्षमे सेतुपथे ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये सप्तम आश्वासः ॥

ततः पर्वतक्षयानन्तरं प्लवंगाः स्तोकस्तोकमल्पमल्पं परिश्रमेण ग्रहीतुमाक्रमितुं प्रवृत्ताः प्रारब्धाः । कस्मिन्सति । लङ्काया अनर्थस्य दुरन्तस्य घटनक्षमे सेतुपथे अनुराग इव विशीर्णे नष्टे सति । तदानीं वानराणां यथा यथा सेतुर्विशीर्णस्तथा तथा मनःप्रसादो विशीर्ण इति सहोपमा । लङ्कानर्थघटनक्षम इत्यनुरागेऽपि योज्यम् । मनःप्रसादस्यापि तद्घटकत्वात् । तथा च प्रथमं सेतुनिश्चयात्परिश्रमाभावः पश्चाद्यथा यथा सेतुव्यतिरेकसंशयोदयस्तथा तथा परिश्रमोत्पत्तिरिति कपीनां वीरत्वमुक्तम् । आरब्धा निष्पत्तिः सर्वथा दुःखहेतुत्वात्परिहर्तव्येति ध्वनिः ॥

सेतोरुद्योगदशाया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णाभूत्सप्तमी शिखा ॥

---

अष्टम आश्वासः ।

अथ कपीनां निवृत्तव्यापारतामाह—

**इअ जाहे णिवडन्ता सिहरोज्झरधोअसुरविमाणधअवडा ।**
**अत्थाअन्ति समुद्दे वित्थारत्थमिअणहअला वि महिहरा ॥ १ ॥**

[इति यदा निपतन्तः शिखरनिर्झरधौतसुरविमानध्वजपटाः ।
अस्तायन्ते समुद्रे विस्तारास्तमितनभस्तला अपि महीधराः ॥]

इत्यनेन प्रकारेण यदा एवंभूता अपि महीधराः समुद्रे निपतन्तः सन्तोऽस्तायन्ते मज्जन्ति। तदेत्यग्रिमस्कन्धकेनान्वयः। किंभूताः। शिखरस्थनिर्झरैर्धौताः प्रक्षालिताः सुरविमानानां ध्वजपटा यैरित्युच्चत्वम्। एवं विस्तारेणास्तमितं छन्नं नभस्तलं यैस्ते॥

**ताहे णिसुद्धसेसा वेवन्तुव्वत्तकरअलोसरिअअडा ।**
**ठविआ वेलामूले खणलक्खिअगोरवा कईहि महिहरा ॥ २ ॥**

**( जुग्गअम् )**

[तदा निपातितशेषा वेपमानोद्वृत्तकरतलापसृततटाः ।
स्थापिता वेलामूले क्षणलक्षितगौरवाः कपिभिर्महीधराः ॥]

(युग्मकम्)

तदा कपिभिर्निपातितेभ्यः समुद्रे क्षिप्तेभ्यः शेषा अवशिष्टा महीधरा वेलामूले तीरभूमौ स्थापिताः। वृथा किमिति क्षेप्तव्या इत्याशयः। कीदृक्षाः। क्षणं व्याप्य लक्षितं ज्ञातं गौरवं येषां ते। कार्यानिष्पत्त्योत्साहापगमादवतारणक्षण एव गौरवज्ञानं वृत्तमित्यर्थः। एवं वेपमानादवतारणसमये गौरवज्ञानेन क्रोधेन वा कम्पवतोऽथ चानास्थयावतारणायोद्वृत्तादूर्ध्वपृष्ठीकृतात्करतलादपसृतमधःपतितं तटं कटकभागो येषां ते। गुरुद्रव्यावतारणे करे कम्पो भवतीति वस्तुगतिः॥ युग्मकम्॥

अथ दशभिः स्कन्धकैः समुद्रस्य विश्राममाह—

**गिरिसंखोहविमुक्का झीणा अप्पत्तपढमगमणोआसा ।**
**मन्दन्दोलणमउआ गआगअ च्चिअ समुद्दसलिलुप्पीडा ॥ ३ ॥**

[गिरिसंक्षोभविमुक्ताः क्षीणा अप्राप्तप्रथमगमनावकाशाः ।
मन्दान्दोलनमृदुका गतागता एव समुद्रसलिलोत्पीडाः ॥]

पतनजन्याद्गिरिसंक्षोभाद्विमुक्तास्त्यक्ताः समुद्रसलिलानामुत्पीडा गतागता एव । प्रथमं गता उच्छलनवशात् ततः पर्वतानामप्रक्षेपाज्जलान्तरस्यानुत्थानात्कियद्दूरतः प्रतिनिवृत्त्यागता एव । जलस्य क्वचित्क्वचिन्निम्नप्रदेशे प्रविष्टत्वादल्पीभूय समुद्रं प्रविष्टा एवेत्यर्थः । तदुक्तं क्षीणाः । तत एवाविलम्बेनागता इत्येवकारार्थः । एवमप्राप्तः प्रथमगमनस्यावकाशो निम्नप्रदेशो यैः । तेषां प्रथमगमन एव जलपूर्णत्वात्परावृत्तौ संबन्धाभावात् । एवं मन्देनान्दोलनेन क्षोभेण मृदुकाः । उच्छलनहेतुवेगविरामेण परावृत्तौ क्षारसिकतया मृदुगतय इत्यर्थः । वस्तुतस्तु गिरिसंक्षोभेण विमुक्ताः समुद्रात्पृथक्कृता जलोत्पीडा गता गता एव । ये गता उच्छलितत्वात्ते गता एव न पुनः प्रत्यावृत्ता इत्यर्थः । तेनोच्छलनवेगप्रकर्ष उक्तः । अनागमने हेतुमाह— क्षीणाः क्वचित्क्वचिद्विशीर्णाः । तदाह—अद्भिः प्राताः पूरिताः प्रथमगमनस्यावकाशा निम्नप्रदेशा यस्मात् । अत एव सैन्याच्चिरकालीनत्वेन पूर्वसंस्कारापगमाच्च मन्दान्दोलनेत्यादि । उच्छलितजलस्य कियद्दूरे गतिमार्दवं भवतीत्याशयः । अप्राप्तः परावृत्त्यभावेनालब्धः प्रथमगमनप्रदेशो यैरिति केचित् ॥

अथ समुद्रस्य पूर्वावस्थाप्राप्तिमाह—

**भिण्णघडन्तावत्तो आवत्तन्तरभमन्तभिण्णमहिहरो ।**
**महिहरसंभमविहुओ विहुअणिअत्तसलिलो णिअत्तइ उअही ॥४॥**

[भिन्नघटमानावर्त आवर्तान्तरभ्रमद्भिन्नमहीधरः ।
महीधरसंभ्रमविधुतो विधुतनिवृत्तसलिलो निवर्तत उदधिः ॥]

महीधरसंभ्रमेण गिरिसंक्षोभेण विधुत आन्दोलितः समुद्रो निवर्तते गिरिपतनाभावेन पूर्वावस्थां लभते । किंभूतः । भिन्नाः प्रथमं पर्वतपातेन विशकलिताः पश्चात्तदभावेन घटमानास्तत्रैव यथापूर्वं प्रवृत्ता आवर्ता यत्र । एवमावर्तान्तरे भ्रमन्तस्तत्संस्कारेण घूर्णन्तो भिन्नाः खण्डखण्डीभूता महीधरा यत्र । दैवात्पुनस्तत्र ये पतितास्ते शतखण्डीभूय तत्रैव भ्रमन्तीत्यर्थः । एवं प्रथमं विधुतं गिरिपतनादुच्छलितं पश्चान्निवृत्तं तत्रैव प्रविष्टं सलिलं यत्र तथा । शृङ्खलानुप्रासोऽयम् ॥

अथ समुद्रस्य निश्चलतामाह—

**वोच्छिज्जन्तकलअलं जहोइअट्ठाणदरपअत्तावत्तम् ।**
**दीसइ खणदुल्लक्खं तं चिअ थिमिअसलिलत्तणं जलणिहिणो ॥५॥**

[व्यवच्छिद्यमानकलकलं यथोचितस्थानदरप्रवृत्तावर्तम् ।
दृश्यते क्षणदुर्लक्ष्यं तदेव स्तिमितसलिलत्वं जलनिधेः ॥]

क्षणं व्याप्य दुर्लक्ष्यं पर्वतपतने सत्यलक्ष्यमुदधेः स्तिमितसलिलत्वं निश्चलजलत्वं तदेव प्राचीनमेव दृश्यते । पर्वतपतनाभावेन पूर्ववदेव दृश्यत इत्यर्थः । कीदृक् । व्यवच्छिद्यमानः प्रशान्तः कलकलः पर्वतसंघट्टजन्यः शब्दो यत्र । एवं यथोचितस्थाने पूर्वस्मिन्नेव देशे ईषत्प्रवृत्त आवर्तो यत्र तत् । पुनस्तत्रैवावर्तोत्पत्तेरित्यर्थः । गिरिपतनकालापेक्षया तदानीं स्वारसिकतया तथावेगाभावेनेषत्त्वम् ॥

अथ समुद्रप्रशान्तौ योग्यप्रसङ्गमाह—

**मोत्ताघडन्तकुसुमं सममरगअवत्तभङ्गभरिआवत्तम् ।**
**विद्दुममिलिअकिसलअं ससङ्खधवलकमलं पसम्मइ सलिलम् ॥६॥**

[मुक्तावटमानकुसुमं सममरकतपत्रभङ्गभृतावर्तम् ।
विद्रुममिलितकिसलयं सशङ्खधवलकमलं प्रशाम्यति सलिलम् ॥]

सलिलमर्थात्समुद्रस्य प्रशाम्यति निश्चलतामवलम्बते । कीदृक् । मुक्ताभिर्घटमानानि संबध्यमानानि गिरिवृक्षाणां कुसुमानि यत्र । शुभ्रत्वात् । एवं पूर्वनिपातानियमेन मरकतसमेन पत्रभङ्गेन तेषामेव प्रौढपत्राणां खण्डेन भृतः पूर्ण आवर्तो यत्र । हरिद्वर्णत्वात् । एवं विद्रुमैर्मिलितानि तेषामेव किसलयानि नवदलानि यत्र । लौहित्यात् । एवं सशङ्खानि शङ्खमिश्रितानि धवलकमलानि यत्र तादृशम् । शुक्लत्वादेव । तथा च यथा तत्र मुक्तामरकतविद्रुमशङ्खाः स्थितास्तथा सजातीयत्वेन तदानीं तत्तन्मिश्रितानि कुसुमपत्रभङ्गकिसलयकमलानीत्यर्थः । यद्वा पर्वतप्रक्षेपोत्तरमपि स्थितानि पुष्पादीनि स्वसमानवर्णतया तत्तन्मिश्रितानि तत्तद्बुद्धिमेव जनयन्तीति पर्वता इह पतिता इति बुद्धिरेव नासीत् । एतादृशी निश्चलतासीदिति भावः ॥

अथ धातुरागनिवृत्तिमाह—

**दीसइ ओसिअन्ती खणणिवलिउत्तरन्तविलुलिअकुसुमा ।**
**झिज्जन्तारुणअम्बा समुद्दवट्टम्मि धाउपङ्कच्छाआ ॥ ७ ॥**

[दृश्यते समवसीदन्ती क्षणनिर्वलितोत्तरद्विलुलितकुसुमा ।
क्षीयमाणारुणताम्रा समुद्रपृष्ठे धातुपङ्कच्छाया ॥]

समुद्रस्य पृष्ठे उपरि धातुगैरिकं तस्य यत्पङ्कं समुद्रजलसंबन्धात् तच्छाया तत्कान्तिः समवसीदन्ती क्षीयमाणा सती क्षीयमाणो योऽरुणः सूर्यसारथिः संध्यारागो वा तद्वदा ईषत्ताम्रा दृश्यते । यथारुणस्य क्षयदशायामग्रेऽग्रे क्रमेण लौहित्यह्रासस्तथा पर्वतपतनाभावादपरस्यानुत्पत्त्या पूर्वपूर्वस्य धातुरागस्य ह्रास इत्यर्थः । किंभूता । क्षणात्तदानीमेव निर्वलितं पृथग्भूतं सदुत्तरज्जलाभ्यन्तरादूर्ध्वमागच्छद्विलुलितं जलसंबन्धान्मृष्टं कुसुमं गिरिवृक्षाणां यत्र तत् । क्षोभसमये तलगतमपि कुसुमं तन्निवृत्तावुन्मजतीति वस्तुस्थितिः । 'अरुणोऽव्यक्तरागे स्यात्संध्यारागेऽर्कसारथौ' इति विश्वः ॥

अथ जलहस्तिनां चेष्टामाह—

**वणगअगन्धुत्तिण्णा पुणो णिअत्तन्ति आअवाहअविहला ।**
**णिअअकरसीहरोल्लिअणिवाअन्तमुहमण्डला करिमअरा ॥ ८ ॥**

[वनगजगन्धोत्तीर्णाः पुनर्निवर्तन्त आतपाहतविह्वलाः ।
निजककरशीकरार्द्रितनिर्वाप्यमाणमुखमण्डलाः करिमकराः ॥]

वनगजानां मदस्य गन्धेनोत्तीर्णा युद्धाय तटमागताः करिमकराः पुनर्निवर्तन्ते समुद्रमेव प्रविशन्ति । अत्र हेतुमाह—आतपेन रवितेजसा आहताः स्पृष्टाः सन्तो विह्वलाः । सदा जलावस्थित्या आतपतैक्ष्ण्यासहत्वात् । एवं निजकः स्वीयः करः शुण्डा तदीयशीकरैरार्द्रितं सजलीकृतं सन्निर्वाप्यमाणं तापशून्यीक्रियमाणं मुखमण्डलं यैस्ते । तापे सति शुण्डानीतोदरजलेन वपुः सिञ्चन्तीति करिस्वभावः । तथाविधपर्वताभावेन प्रतिपक्षालाभादातपसंबन्धाद्वा निवृत्तिरिति भावः ॥

अथ नदीनां समुद्रप्रवेशे मुखमालिन्यमाह—

**दुमभङ्गकलुसिआइं कसाअरसभिण्णपण्डुरप्फेणाइं ।**
**जाआइँ णिण्णआणं उत्थलवलणरअधूसराइँ मुहाइं ॥ ९ ॥**

[द्रुमभङ्गकलुषितानि कषायरसभिन्नपाण्डुरफेनानि ।
जातानि निम्नगानामुत्स्थलवलनरजोधूसराणि मुखानि ॥]

निम्नगानां समुद्रगामिनीनामित्यर्थात् मुखानि प्रवेशस्थानानि उत्स्थलेन तीरभूमावुन्मार्गेण यद्वलनमितस्ततो गमनं तेन रजोभिर्धूसराणि जातानि । कीदृशानि । पार्वतीयानां द्रुमाणां भङ्गैः संघट्टजैः खण्डैः कलुषितानि पूर्णानि । एवं द्रुमभङ्गस्यैव

कषायेण रसेन भिन्नाः संबद्धाः पाण्डुराः फेना येषु तानि । पूर्वं पर्वतक्षोभजन्यतरङ्गाभिघातेन निम्नगाजलानि तीरभूमौ लुठितानि पश्चात्तन्निवृत्तौ परावृत्त्या धूलीसंबद्धाद्धूसराणि । तरङ्गसहागतद्रुमभङ्गसङ्गात्कलुषितानीत्यर्थः । तीरभूमिष्ठा वृक्षभङ्गास्तेन सहागतास्तैः कलुषितानीति वा । अथ च पत्युरापदि पत्नीनां मुखं रजोधूसरं कलुषं च भवतीति नदीनामप्रसन्नता सूचिता ॥

अथ पर्वतखण्डानामितस्ततो गमनमाह—

**खुहिओअहिविच्छूडा महिन्दकडएसु मलअभित्तिच्छेआ ।**
**घडिआ मलिअगअउला मलअअडेसु अ महिन्दसेलद्धन्ता ॥१०॥**

[क्षुभितोदधिविक्षिप्ता महेन्द्रकटकेषु मलयभित्तिच्छेदाः ।
घटिता मृदितगजकुला मलयतटेषु च महेन्द्रशैलार्धान्ताः ॥]

मलयभित्तिस्तत्पार्श्वभागस्तत्खण्डा महेन्द्रगिरिकटकेषु च पुनर्महेन्द्रशैलस्यैकदेशा मलयतटेषु घटिताः संबद्धा जाताः । समुद्रक्षोभे विपर्यस्तास्तन्निवृत्तौ यत्र ये गतास्तत्रैव ते मिलित्वा स्थिताः संचारकतरङ्गाभावादिति भावः । तदाह—किंभूताः । क्षुभितेन पर्वतसंघट्टान्दोलितेनोदधिना विक्षिप्ता दिशि दिशि प्रेरिताः । एवं मृदितं गजानां कुलं यैस्ते । तरङ्गाभिहतैस्तत्तत्खण्डैः स्वसंघट्टेन तत्तद्गिरिगजा मर्दिता इत्यर्थः ॥

अथ पुलिने जलत्यागमाह—

**दीसन्ति विअडधवला थिमिअणिअत्तन्तजलतरङ्गिअवट्टा ।**
**वासुइणिम्मोअणिहा णिरन्तरालग्गमोत्तिआ पुलिणवहा ॥ ११ ॥**

[दृश्यन्ते विकटधवलाः स्तिमितनिवर्तमानजलतरङ्गितपृष्ठाः ।
वासुकिनिर्मोकनिभा निरन्तरालग्नमौक्तिकाः पुलिनपथाः ॥]

पुलिनरूपाः पन्थानो वासुकेर्निर्मोकः कञ्चुकस्तत्तुल्या दृश्यन्ते । पर्वतक्षेपाभावाज्जलस्योच्छलनाभावेन पुलिनस्य सुखसंचारयोग्यतया पथत्वेन रूपणम् । कीदृशाः । विकटाः सन्तो धवलाः । एवं स्तिमितं स्थिरं यथा स्यादेवं निवर्तमानं विश्रम्य विश्रम्याधो गच्छद्यज्जलं तेन तरङ्गितं निम्नोन्नतरेखाविशेषशालि पृष्ठं येषां ते । पर्वतप्रक्षेपह्रासक्रमेण जलनिवर्तनक्रमाद्रेखाणामुदयादिति भावः । अत एव निरन्तरं यथा स्यादेवमालग्नानि मौक्तिकानि येषु । जलस्याधोगमने सन्निधौ संनिधावेव

मुक्तानां पतितत्वात् । अत एव निर्मोकसाम्यम् । तस्यापि विकटधवलत्वाद्रेखाविशेषशालिपृष्ठत्वात्कचित्कचिन्मुक्ताभबिन्दुचित्रितत्वादित्याशयः ॥

अथ गतजलानां प्रत्यागमनमाह—

खोहेन्ति खुहिअणिहुअं उअहिं णहवन्धपडिणिअत्तोवइआ ।
पव्वअघाउक्खित्ता चिरआलालोइआ सलिलसंघाआ ॥ १२ ॥

[क्षोभयन्ति क्षुभितनिभृतमुदधिं नभःपथप्रतिनिवृत्तावपतिताः ।
पर्वतघातोत्क्षिप्ताश्चिरकालालोकिताः सलिलसंघाताः ॥]

पर्वतघातेनोत्क्षिप्ता ऊर्ध्वं गमिताः सलिलसंघाता नभःपथात्प्रतिनिवृत्ता अत एवावपतिता अधः पतिताः सन्तः प्रथमं पर्वतक्षेपे सति क्षुभितमान्दोलितं पुनस्तन्निवृत्तौ निभृतं निश्चलमुदधिं पुनरपि क्षोभयन्ति स्वस्थान एव पतित्वा आन्दोलयन्ति । किंभूताः । चिरकालेन क्षेपनिवृत्तावप्यकस्माद्दृष्टाः । एतेनोच्छलनप्रकर्षेण पर्वताभिघातप्रकर्षः । यद्वा चिरं व्याप्य किमेतदिति कृत्वा आलोकिताः । एतेनातिदूरतो दर्शनात्समुद्रान्दोलनक्षमत्वेऽपि हठावर्तनाज्जलावयविनो महत्त्वमुक्तम् ॥

अथ नलं प्रति सुग्रीवोक्तिं प्रस्तौति—

अह णलविइण्णणअणो जम्पइ विहडन्तमणिसिलासणवट्ठो ।
उव्वत्तिआअअट्ठिअवामअरारुहिअतिअभरो पवअवई ॥ १३ ॥

[अथ नलवितीर्णनयनो जल्पति विघटमानमणिशिलासनपृष्ठः ।
उद्वर्तितायतस्थितवामकरारोपितत्रिकभरः प्लवगपतिः ॥]

अथ सेतोरसिद्धेरुत्तरं प्लवगपतिर्जल्पति । नलमित्यर्थात् । तदाह—नले वितीर्णे दत्ते नयने येन । नलन्यस्तदृष्टिरित्यर्थः । एवमुद्वर्तिते पञ्जरमिश्रितापरपार्श्वे अथ चायतस्थिते दण्डाकारे वामकरे वामबाहावारोपितस्त्रिकभरो येन । तथा वामपङ्क्तिस्थनलसंमुखीभवनाय निजतिर्यग्भावेन भूम्यर्पितवामकरस्यापि तिर्यक्तया देहभारस्य तत्रैवारूढत्वादित्याशयः । यद्वा उद्वर्तितस्तिर्यग्भूतः सन्नायतः स्थितो नलदर्शनाय मस्तकोन्नमनादथ च वामकरारोपितत्रिकभरश्चेति कर्मधारयः । अत एव विघटमानं नतोन्नतं मणिशिलारूपासनपृष्ठं यस्य तथा । आसनस्य वामभागे देहगौरवेण दक्षिणभागस्योन्नमनादिति भावः ॥

अथ चतुर्भिस्तदुक्तिस्वरूपमाह—

**खविओ वाणरलोओ दूरट्ठिअविरलपव्वअं महिवेढम् ।**
**ण अ दीसइ सेउवहो मा हु णमेज्ज गरुअं पुणो रामधणुम् ॥१४॥**

[क्षपितो वानरलोको दूरस्थितविरलपर्वतं महीवेष्टम् ।
न च दृश्यते सेतुपथो मा खलु नमेद्गुरुकं पुना रामधनुः ॥]

वानरलोकः क्षपितोऽवसन्नः । दूरे स्थिता विरलाः स्वल्पाः पर्वता यत्र एतादृशं महीपृष्ठं जातम् । संनिधौ सर्वेषां दूरे कुतश्चित्कुतश्चित्कियतां च शैलानां समुद्र एव क्षिप्तत्वात् । तथापि सेतुपथो न च दृश्यते न वृत्तः । खलुर्हेतौ । ततो हेतोः पुनरपि रामधनुः कर्तृ मा नमेत् समुद्रताडनाय मा कृष्टं भवेत् । तथा सत्येकवारं धनुर्नमने समुद्रस्य क्षतमासीदतः परं प्राणा एव यास्यन्तीति भावः । यद्वा यूयं रामधनुः पुनरपि मा नमयत तथा सति युष्मानेव ताडयेत् । तथा च सेतुं सर्वात्मना बध्नीतेति भावः ॥

सेतोरवश्यंभावित्वमाह—

**मइरा मुद्धमिअङ्को अमअं लच्छी सकोत्थुहं दुमरअणम् ।**
**किं सेउबन्धलहुअं जं वोत्तूण रअणाअरेण ण दिण्णम् ॥ १५ ॥**

[मदिरा मुग्धमृगाङ्कोऽमृतं लक्ष्मीः सकौस्तुभं द्रुमरत्नम् ।
किं सेतुबन्धलघुकं यदुक्त्वा रत्नाकरेण न दत्तम् ॥]

मदिरा वारुणी । मुग्धो बालो मृगाङ्कः शशी । सुधा । लक्ष्मीः । द्रुमाः पारिजातादयस्त एव रत्नम् । द्रुमेषु रत्नमिति वा । मिलितानामेकरत्नत्वप्रतिपादनार्थमेकवचनम् । एतत्सर्वम् । किं वितर्के प्रश्ने वा । सेतुबन्धाल्लघुकमल्पीयः यत्सेतुबन्धस्वरूपं रत्नाकरेणोक्त्वाप्यङ्गीकृत्यापि न दत्तम् । तानि त्वनुक्त्वैव दत्तानीति भावः । यद्वा एतत्सर्वं सेतुबन्धाल्लघुकमल्पमूल्यं किम् । अपि तु नाल्पमूल्यं किं तु बहुमूल्यमेव । यन्मदिरादिकं नकारस्यापकर्षणादनुक्त्वापि रत्नाकरेण दत्तम् । तथा च महार्घमपि मदिराद्यनुक्त्वा चेद्दत्तं तदा सेतुबन्धमल्पीयांसमुक्त्वापि न दास्यति किं तु दास्यत्येवेत्यध्यवस्यत इति भावः । दत्तमिति 'नपुंसकमनपुंसकेन' इत्येकवद्भावेन लिङ्गव्यत्ययेन वा ॥

समुद्रस्य वृत्तं पराभवमाह—

**धूमाअन्ति व्विअ से अज्ज वि पाआलदेहदूरालग्गा ।**
**आअट्टन्तजलाहअससद्दविज्झविअहुअवहा रामसरा ॥ १६ ॥**

[धूमायन्त इवास्याद्यापि पातालदेहदूरालग्नाः ।
आवर्त्यमानजलाहतसशब्दविध्यापितहुतवहा रामशराः ॥]

अस्य समुद्रस्य पातालरूपं यद्देहमेकदेशस्तत्र दूरं व्याप्य । आ अत्यर्थेन लग्नाः संबद्धा रामशरा अद्यापि धूमायन्त एव न तु निर्वाणतां गताः । कीदृशाः । आवर्त्यमानेन क्वथ्यमानेन जलेनाहताः स्पृष्टाः सन्तः सशब्दं यथा स्यादेवं विध्यापिता अप्रौढशिखतां नीता हुतवहा येषां ते । जलसंबन्धेन वह्नेः शब्दो धूमश्च भवतीत्यर्थः । तथा चाकारितसेतुरनात्मज्ञः समुद्रः पुनर्नाशमेव लप्स्यत इति भावः । यद्वाद्यापि धूमायन्त इत्यचिरोद्गताविस्मृतरामशरपराभवः सेतुपथं कारयिष्यत्येवेति नलप्रोत्साहनम् । सशब्द इत्यत्र 'समुद्द' इति पाठे आवर्त्यमानजलेनेति करणम् । आहतसमुद्रेण विध्यापितो हुतवहो येषामित्यर्थः ॥

नलं प्रति नियोगमाह—

**तं बन्धसु धीर तुमं सेउं अज्जेअ जाव दूरन्तरिआ ।**
**एक्कं मलअसुवेला होन्तु दुहा अ विअडा समुद्दद्धन्ता ॥ १७ ॥**

[ततो बधान धीर त्वं सेतुमद्यैव यावद्दूरान्तरितौ ।
एकं मलयसुवेलौ भवतां द्विधा च विकटौ समुद्रार्धान्तौ ॥]

हे धीर सामर्थ्येऽपि धैर्यमवलम्ब्य किमप्यकुर्वाण, निपुण वा, ततः पूर्वोक्तहेतोरद्यैव सेतुं बधान । यावदिति वाक्योपसंहारे । दूरान्तरितौ दूरं व्याप्य व्यवहितौ मलयसुवेलावेकं वस्तु भवताम् । तावद्दूरव्यापिसेतुकत्वादिति भावः । एवं विकटौ समुद्रस्यार्धान्तौ वामदक्षिणभागौ द्विधा च भवताम् । सेतुच्छिन्नमध्यकत्वेन द्विखण्डावित्यर्थः । यद्वा तावद्दूरं सेतुं बधान । तावत्कतरत्, यावद्व्याप्यान्तरिता अन्तरमन्तरा वा मध्यभागस्तत्प्राप्ताः समुद्रार्धान्ताः समुद्रप्रदेशाः । यावत्समुद्रपरिमाणं तावद्बधानेत्यर्थः । तथा सति द्विभावो द्वित्वं तेन विकटौ प्रकटौ । ख्याताविति यावत् । मलयसुवेलावेकं भवताम् । तदद्वयस्थितत्वादिति भावः । यद्वा यावदिति यावता दूरान्तरितौ मलयसुवेलावेकं भवताम्, अथ च दूरं व्याप्यान्तरिता विस्तीर्णाः

समुद्रप्रदेशा द्विभागेन विकटाः ख्याता भवन्तु । द्विवचने बहुवचनं नित्यमिति तिङ्सुपोरपि वचनश्लेष इति मदुन्नीतम् । यद्वा युग्मम् ॥

अथ नलस्योत्तरमाह—

**तो पवअबलाहि फुडं विण्णाणासङ्गणिवलन्तच्छाओ ।**
**पवअवइसंभमुम्मुहविइण्णभअहित्थलोअणो भणइ णलो ॥ १८॥**

[ततः प्लवगबलात्स्फुटं विज्ञानाध्यवसायनिर्वलच्छायः ।
प्लवगपतिसंभ्रमोन्मुखवितीर्णभयोद्विग्नलोचनो भणति नलः ॥]

ततः सुग्रीवाज्ञोत्तरं स्फुटं नलो भणति । कीदृक् । प्लवगबलाद्विज्ञानस्य सेतुरचनशिल्पस्याध्यवसायेनावश्यंभाविफलनिश्चयेन निर्वलन्ती पृथग्भवन्ती छाया कान्तिर्यस्य । शिल्पचातुर्येण शेषवानरापेक्षया स्फुरद्रूप इत्यर्थः । एवं प्लवगपतये संभ्रमेणादरेणोन्मुखं संमुखं यथा स्यादेवं वितीर्णे अर्पिते भयेनोद्विग्ने लोचने येन सः । सुग्रीवं पश्यन्नित्यर्थः । प्रभुः कर्माकरणे शास्तिमाचरेदिति भयम् । यद्वा प्लवगपतिना संभ्रमोन्मुखं यथा स्यादेवं वितीर्णे भयोद्विग्ने लोचने यस्मिन् । तेन सादरं दृष्ट इत्यर्थः । शिल्पनिपुणोऽप्ययमनध्यवसायं प्रकाशयेदिति भयम् । 'विज्ञानं शिल्पशास्त्रयोः' इत्यमरः ॥

अथाष्टभिरुत्तरस्वरूपमाह—

**भण्णइ पवंगपुरओ रहुणाहस्स अ पवंगवइ वीसत्थम् ।**
**तुह सेउबन्धजणिआ ममम्मि संभावणा ण होहिइ अलिआ ॥ १९॥**

[भणति प्लवंगपुरतो रघुनाथस्य च प्लवंगपते विश्वस्तम् ।
तव सेतुबन्धजनिता मयि संभावना न भविष्यत्यलीका ॥]

स नलः प्लवगानां रघुनाथस्य च पुरतो विश्वस्तं यथा स्यादेवं भणति । किं तदाह—हे प्लवगपते, मयि विषये सेतुबन्धेन जनिता तव संभावना प्रतिष्ठा अलीका न भविष्यति किंतु सत्यैव । सेतुर्मया बद्धव्य एवेति भावः ॥

'खविओ वाणरलोओ' इति पूर्वोक्तेः प्रत्युत्तरमाह—

**खविओ पवअणिवहो दलिअँ व रसाअलं धुओ व समुद्दो ।**
**जीअं व परिचत्तं अज्ज व संभावणा तुहं णिव्वूढा ॥ २० ॥**

[क्षपितः पर्वतनिवहो दलितं वा रसातलं धुतो वा समुद्रः।
जीवो वा परित्यक्तोऽथ वा संभावना तव निर्व्यूढा॥]

वाशब्दोऽवधारणे। पर्वतनिवहः क्षपित एव नाशित एव। समुद्रे क्षिप्तत्वात्। रसातलं दलितमेव। पर्वतानामुत्पाटनाप्रक्षिप्तत्वाच्च। समुद्रो धुत एव तत एव जीवोऽप्यस्माभिः परित्यक्त एव। श्रमेण शुष्कप्रायत्वात्। अथ चाद्य तव संभावना प्रतिष्ठा निर्व्यूढैव। तथा च यथा तत्सर्वं वृत्तमेव तथा तव प्रतिष्ठापि वृत्तैव। मया सेतोरवश्यं बद्धव्यत्वादित्याशयः। आशंसायां संनिहितभविष्यदर्थे क्तः। यद्वा वाशब्दो व्यक्तिस्वरूपको ह्युपस्थितौ। तथा च पर्वतादीनां क्षेपणादिकमपि वृत्तं तव संभावनाप्यद्य वृत्तेत्यर्थः। यद्वा सर्वत्र भविष्यदर्थे क्तः। तेनास्माभिः पर्वतादिकमपि क्षपणीयं तव संभावनापि निर्वाहनीयेत्यर्थः। वस्तुतस्तु वाशब्दः सर्वत्र इवार्थे। तेन पर्वतादिकक्षपितादिकमिव तवापि संभावना निर्व्यूढेवेत्यर्थः॥

'एक्कं मल्ल–' इत्यत्र प्रत्युत्तरमाह—

**तं पेक्खसु महिविअलं महिवट्टम्मि व महं महोअहिवट्टे।**
**घडिअं घडन्तमहिहरघडिअसुवेलमलअन्तरं सेउवहम्॥ २१॥**

[तत्प्रेक्षस्व महीविकटं महीपृष्ठ इव मम महोदधिमध्ये(पृष्ठे)।
घटितं घटमानमहीधरघटितसुवेलमलयान्तरं सेतुपथम्॥]

तद्धेतोर्ममेति मया महीपृष्ठ इव महोदधिमध्ये घटितं सेतुपथं प्रेक्षस्व। यथा भूमौ सेतुः क्रियते तथा जलेऽपीत्यर्थः। कीदृशम्। महीवद्विकटं विस्तीर्णम्। एवं घटमानैः समीभूय तिष्ठद्भिर्महीधरैर्घटितमेकीकृतं सुवेलमलययोरन्तरमन्तरालदेशो यत्र तमिति शिल्पनैपुण्यसूचनम्॥

चतुर्भिः स्कन्धकैः स्वस्य सामर्थ्यं सेतुकौशलं चाह—

**किं उत्तरउ णिरन्तरवडन्तधरणिहरसंकमेण समुद्दम्।**
**ओ वोलेउ धुओअहिथोउत्तिण्णमहिमण्डलेण कइबलम्॥ २२॥**

[किमुत्तरतु निरन्तरघटमानधरणिधरसंक्रमेण समुद्रम्।
उत व्यतिक्रामतु धुतोदधिस्तोकोत्तीर्णमहीमण्डलेन कपिबलम्॥]

कपिबलं कर्तृ निरन्तरमव्यवहितं घटमानैः परस्परं मिलितैर्धरणिधरैर्यः संक्रमस्तेन किं समुद्रमुत्तरतु। उत पक्षान्तरे। धुतः फूत्कारादिना विकीर्णजलीकृतो य

हृदयस्थितेन लोकमीषदुत्तीर्णमुत्थितं यन्महीमण्डलं तेन व्यतिक्रामतु लङ्घताम् । जलमनामितस्ततो गमनेन यन्त्रणाभावाद्भूमेरुत्थानं जलाभावात्पारगमनं चेत्यर्थः ॥

सेतोरवश्यंभावमाह—

तं पेच्छह मलओ च्चिअ पत्थन्तो पडिगअं गओ व्व सुवेलम् ।
मह भुअदढसंरुद्धो आइउं धुणउ मुहवडं व समुद्दम् ॥ २३ ॥

[तत्पश्यत मलय एव प्रार्थयमानः प्रतिगतं गज इव सुवेलम् ।
मम भुजदृढसंरुद्ध आविद्धं धुनोतु मुखपटमिव समुद्रम् ॥]

तद्धेतोः हे सुग्रीवादयः, यूयं पश्यत मलय एव सुवेलं प्रार्थयमानो मुखपटमिव समुद्रं धुनोत्विति संबन्धः । क इव प्रतिगजं गज इव । यथाम्बष्ठस्य भुजाभ्यामङ्कुशप्रहारादिना दृढं संरुद्धोऽपि गजः प्रतिपक्षगजं प्रार्थयमानो युद्धायोपक्रन्धन्नाविद्धमन्तरा पातितं मुखाच्छादकपटं धुनोति मदोन्मत्तः सन्नन्यतः क्षिपति तथा मलय एव मम भुजाभ्यां दृढं संरुद्ध उत्पाट्य प्रेरितः समुद्रोपरि सेतुवन्नीयमानः सुवेलं प्रार्थयमानः प्रतीष्टमानः । मिलन्निति यावत् । आविद्धमन्तरावर्तित्वान्मुखपटतुल्यं समुद्रं धुनोतु विक्षिप्तमिवासत्कल्पं करोत्वित्यर्थः । अन्ये तावद्दूरवर्तिनः पर्वता दूरे सन्तु संनिहितत्वादयमेवेत्येवकारार्थः । अत्र गजप्रायो मलयः । प्रतिगजप्रायः सुवेलः । मुखपटप्रायः समुद्रः । तथा च मद्भुजप्रसारितेन सुवेलमिलितेन समुद्रोपरि तिष्ठता मलयेन कपिसैन्यमुत्तरत्विति वाक्यार्थः । तमित्यत्र 'ओ' इति पाठे उतेत्यर्थः ॥

प्रकारान्तरमाह—

ओ विरएमि णहअले तुरिअपहाविअपवंगसंचरणसहम् ।
अणुपरिवाडिपरिट्ठिअघणकूडघडन्तमहिहरं सेउवहम् ॥ २४ ॥

[उत विरचयामि नभस्तले त्वरितप्रधावितप्लवंगसंचरणसहम् ।
अनुपरिपाटीपरिस्थितघनकूटघटमानमहीधरं सेतुपथम् ॥]

उत पक्षान्तरे । समुद्रजलास्पृष्टे नभस्तल एव सेतुपथं विरचयामि । तेनैव पारं गच्छतेति भावः । कीदृशम् । अनुपरिपाट्यानुक्रमेण यथायोग्यसंनिवेशेन परिस्थिता घनकूटेषु मेघसमूहेषु घटमानाः सरसत्वात्कर्दमेष्विव परस्परं संबध्यमाना महीधरा यत्र तम् । 'घडेन्त' इति पाठेऽनुक्रमपरिस्थितेन घनकूटेन घट्यमाना महीधरा यत्र

१। अत एव त्वरितं प्रधावितं वेगो यत्र तादृशं यत्प्लवंगानां संचरणं तत्सहं तद्योग्यम् । रवलम्बेऽपि सेतुनिर्माणचातुरी ममेत्यभिप्रायः । त्वरितप्रधावितानां प्लवंगमानां चारसहमित्यर्थ इति केचित् । 'सहः शक्ते क्षमायुक्ते तुल्यार्थे च सहाव्ययम्' ॥

पक्षान्तरमाह—

ओ साअरोअरब्भन्तराणिओवरिपरिट्ठविअणिप्फन्दा ।
जलहरलम्बिअवक्खा घडेन्तु लङ्कावहं रसाअलसेला ॥ २५ ॥

[उत सागरोदराभ्यन्तरानीतोपरिस्थापितनिःस्पन्दाः ।
जलधरलम्बितपक्षा घटयन्तु लङ्कापथं रसातलशैलाः ॥]

उत पक्षान्तरे । रसातलस्य शैलाः सपक्षा मैनाकादयो लङ्कापथं सेतुं घटयन्तु । कीदृशाः । सागरस्योदराभ्यन्तरादानीता अथ उपरि जलस्येत्यर्थात् परिस्थापिताः सन्तो निःस्पन्दा निश्चलाः । निश्चलत्वे हेतुमाह—जलभरेण लम्बितावधोवर्तिनौ पक्षौ येषाम् । जलार्द्रपक्षत्वादुड्डयनासमर्था इति भावः । यद्वा उपरीत्यस्य नभसी-त्यर्थः । तथा च जलभरेण लम्बितावलम्बितौ पक्षौ येषां ते । नभोनिर्भरमेघसंदा-नितपक्षत्वेन पतनाभाव उक्तः । तेन पातालशैलानप्याक्रष्टुं क्षमोऽस्मीति सूचितम् ॥

अहंकारवचनेनोपसंहरति—

तं मह मग्गालग्गा विरएह जहाणिओअमुक्कमहिहरा ।
अणुवाअदिट्ठदोसं अइराहोन्तसुहबन्धणं सेउवहम् ॥ २६ ॥

[तन्मम मार्गलग्ना विरचयत यथानियोगमुक्तमहीधराः ।
अनुपायदृष्टदोषमचिराद्भवत्सुखबन्धनं सेतुपथम् ॥]

तदिति वाक्योपसंहारे हेतौ वा । हे कपयः, मम मार्गलग्नाः पश्चाल्लग्नाः सन्तः सेतुपथं विरचयत । किंभूताः । यथानियोगं मुक्ताः क्षिप्ता महीधरा यैस्ते । तथा च यथा मयोच्यते तथा समुद्रे पर्वताः क्षिप्यन्तामित्यर्थः । अत एव कीदृशम् । अचिरा-द्भवच्च तत्सुखबन्धनं चेति कर्मधारयः । तथा च मन्नियोगानुसारेण पर्वतक्षेपे सेतुपथः सुखबन्धन एव स्यादित्यर्थः । भवत्सुखं बन्धनं यस्येति वा । एवमनुपायेन दृष्टो दुःसाध्यत्वादिरूपो दोषो यत्र तम् । उपायापरिज्ञानं मयैव त्याजनीयमिति भावः ॥

अथ कपीनामुत्साहमाह—

इअ पलवअणहरिसिअं गलिअपरिस्समणिराअमुक्ककलअलम् ।
चलिअं तुलिअधराहरकअणिब्भरदसदिसं पवंगमसेण्णम् ॥२७॥

[इति नलवचनहर्षितं गलितपरिश्रमनिरायतमुक्तकलकलम् ।
चलितं तुलितधराधरकृतनिर्भरदशादिक्प्लवंगमसैन्यम् ॥]

इत्यनेन प्रकारेण नलस्य वचनेन हर्षितं संजातहर्षं कपिसैन्यं चलितम् । पर्वतानयनायेत्यर्थात् । किंभूतम् । गलितपरिश्रमं सत् निरायतो दीर्घो मुक्तः कलकलो येन । उपायाभावेन परिश्रमज्ञानमासीत्तदानीं तदपि न स्थितमित्यर्थः । एवं तुलितैरुत्तोलितैर्धराधरैः कृता निर्भराः पूर्णा दश दिशो येन । पूर्वानीतपर्वतान्करस्थानेव दिशि दिशि त्यक्त्वा चलितमित्यर्थः । यद्वा तुलिता आकारेण सदृशीकृता धराधरा येन तच्च तत्कृता निर्भराः पूर्णा दश दिशो येनेति कर्मधारयः । तथा च पर्वताहरणानुरूपाकारतया दिग्व्यापकमासीदित्यर्थः ॥

अथ सेतोरारम्भे नलस्य मङ्गलमाह—

**अह णेण सुहप्फरिसे पिउणो सलिलम्मि मज्जिऊण सणिअमम् ।**
**रामचरणाण पढमं पच्छा काऊण रविसुअस्स पणामम् ॥ २८ ॥**

[अथानेन सुखस्पर्शे पितुः सलिले मङ्क्त्वा सनियमम् ।
रामचरणयोः प्रथमं पश्चात्कृत्वा रविसुतस्य प्रणामम् ॥]

अथ सिद्धान्तानन्तरं अनेन नलेन जलनिधौ महीधरो मुक्त इत्युत्तरस्कन्धकेन संदानितकम् । किं कृत्वा । क्षोभशान्त्या सुखस्पर्शे सलिलेऽर्थात्समुद्रस्य सनियमं सविधि मङ्क्त्वा स्नात्वा प्रथमं पितुर्विश्वकर्मणः शिल्पिनामुपास्यत्वात् ततो रामचरणयोरुपजीव्यत्वात् पश्चाद्रविसुतस्य नायकत्वात् प्रणामं कृत्वा ॥

**तो कअणधाउअम्बो सपल्लवासोअविडवभरिअदरिमुहो ।**
**पढमं णलेण णिमिओ मङ्गलकलसो व जलणिहिम्मि महिहरो २९**
**(जुग्गअम्)**

[ततः कनकधात्वाताम्रः सपल्लवाशोकविटपभृतदरीमुखः ।
प्रथमं नलेन नियोजितो मङ्गलकलश इव जलनिधौ महीधरः ॥]
(युग्मकम्)

महीधरः कीदृक् । कनकं सुवर्णं धातुर्गैरिकमाभ्यामाताम्रम् । यद्वा कनकधातुः सुवर्णगैरिकं तेनाताम्रम् । एवं सपल्लवेनाशोकविटपेन भृतं पूर्णं दरीरूपं मुखं यस्य । क इव । मङ्गलकलश इव । सोऽपि कनकेन धातुना चाताम्रः । तत्संबन्धादेव

पल्लवसहिताशोकविटपभृतदरीप्रायमुखश्च । लोकाचारादयमेव प्रकृते मङ्गलकलशो-ऽभूदिति भावः । युग्मकम् ॥

अथ प्रथमक्षिप्तपर्वतावस्थामाह—

तह पढमं विअ मुक्को वेलाअडसंठिओ णलेण महिहरो ।
जह दीसिउं पउत्तं लङ्काणत्थस्स सेउबन्धस्स मुहम् ॥ ३० ॥

[तथा प्रथममेव मुक्तो वेलातटसंस्थितो नलेन महीधरः ।
यथा द्रष्टुं प्रवृत्तं लङ्कानर्थस्य सेतुबन्धस्य मुखम् ॥]

वेलातटे पूर्वधृतत्वात्संस्थितो महीधरो नलेन प्रथममेव तथा तेन प्रकारेण मुक्तः समुद्रे क्षिप्तो यथा लङ्काया अनर्थो यस्मादेवंभूतस्य सेतुबन्धस्य मुखमुपक्रमो द्रष्टुं प्रवृत्तमारब्धम् । कपिभिरित्यर्थात् । तथा च प्रथमपर्वतक्षेपेणैव सेतोर्मुखमासीत् । पितुर्वैरलाभादिति भावः । यद्वा सेतुबन्धस्य मुखं द्रष्टुं प्रवृत्तं कपिसैन्यमित्यर्थात् । तथा च नलस्य कीदृक्कौशलं पर्वतः स्थितो न वेति च निरूपणाय सोत्कण्ठीभूय सर्व एव सेतुमुखं दृष्टवन्त इत्यर्थः ॥

अथ पुनः समुद्रक्षोभमाह—

भमिओ अ तह धराहरपहरुच्छित्तसलिलो णहम्मि समुद्दो ।
महिहररअमइलाइं जह धोआइ समअं दिसाण मुहाइं ॥ ३१ ॥

[भ्रमितश्च तथा धराधरप्रहारोत्क्षिप्तसलिलो नभसि समुद्रः ।
महीधररजोमलिनानि यथा धौतानि समं दिशां मुखानि ॥]

च पुनर्नलकृतेन धराधरस्य प्रहारेणोत्क्षिप्तमुच्छलितं सलिलं यस्य तथाभूतः समुद्रो नभसि तथा भ्रमित आवर्तरूपतया दिशि दिशि प्रसृतो यथा महीधराणामानीतानामेव रजोभिर्मलिनानि धूसरीकृतानि दिशां मुखानि सममेकदैव धौतानि । जलसंपर्केण धूलीनां शान्त्या प्रक्षालितानीत्यर्थः । तथा चैकदैव जलस्य चतुर्दिग्गामितया प्रहारस्योत्कर्षः समुद्रस्य क्रियानुकूलत्वेन दिङ्मुखप्रसादेन च मङ्गलमपि ध्वनितम् ॥

अथ नलस्य घटनकौशलमाह—

जलतण्णाअघडन्ता अविभाविज्जन्तघडणमग्गोआसा ।
ण मुअन्ति एक्कमेक्कं खुहिअसमुद्दविसमाहआ वि महिहरा ॥३२॥

[जलार्द्रघटमाना अविभाव्यमानघटनमार्गावकाशाः ।
न मुञ्चन्त एकैकं क्षुभितसमुद्रविषमाहता अपि महीधराः ॥]

क्षुभितेन समुद्रेण विषममाहतास्ताडिता अपि महीधराः सेतौ नलेन योजिता इत्यर्थात् । एकैकं परस्परं न मुञ्चन्ति । क्षिप्तपर्वतान्तरोत्थापितलहर्याहत्यापि विशकलिता न भवन्तीत्यर्थः । किंभूताः । जलेनार्द्राः सन्तो घटमानाः परस्परं मिलिताः । अन्यदपि जलादि संपर्केण मिलतीति ध्वनिः । अत एव विभाव्यमाना विविच्य गृह्यमाणा घटनमार्गस्य घटनस्थानस्यावकाशा अन्तरालप्रदेशा येषां ते समीभूताः । एतेन घटनादार्ढ्यमुक्तम् ॥

अथ नदीमुखनिरोधमाह—

पडिवहपत्थिअसलिला वेलाअडपडिअमहिहरसमकन्ता ।
जे च्चिअ अहिगममग्गा जाआ ते च्चेअ णिग्गमा वि णईणम् ॥ ३३ ॥

[प्रतिपथप्रस्थितसलिला वेलातटपतितमहीधरसमाक्रान्ताः ।
य एवाभिगममार्गा जातास्त एव निर्गमा अपि नदीनाम् ॥]

नदीनां य एवाभिगमस्य समुद्रप्रवेशस्य मार्गास्त एव निर्गमा अपि बहिर्गमनस्यापि मार्गा जाताः । त एव निर्गमाः । अत्र हेतुमाह—कीदृशाः । वेलातटपतितेन महीधरेण सेतावित्यर्थात् समाक्रान्ता अवरुद्धा अत एव प्रतिपथेन प्रतिस्रोतसा प्रस्थितं सलिलं येषां ते । तथा च नदीजलानि येनैव पथा समापतानि तेनैव परावृत्तानीति नदीमुखावरोधकत्वेन पर्वतानामुत्कर्षः सेतुस्थैर्यं च सूचितम् ॥

पर्वतानां पतनस्वभावमाह—

णिवडन्ति तुङ्गसिहरा पवलविमुक्का अहोमुहा वि णलवहे ।
भमिऊण मूलगरुआ जहेअ उम्मूलिआ तहेअ महिहरा ॥ ३४ ॥

[निपतन्ति तुङ्गशिखराः प्लवगविमुक्ता अधोमुखा अपि नलपथे ।
भ्रमित्वा मूलगुरुका यथैवोन्मूलिता तथैव महीधराः ॥]

महीधरा यथैव येनैव प्रकारेणोर्ध्वशिखरा एवोन्मूलिता उत्पाटिता भ्रमित्वा विपरीत्य तेनैव प्रकारेणोर्ध्वशिखरा एव नलपथे निपतन्ति । किंभूताः । अधोमुखा अधःशिखराः सन्तः प्लवगेन विमुक्ताः सेतुसंगतिसौकर्याय क्षिप्ता अपि । भ्रमणे हेतुमाह—मूलेगुरुका महत्तरा अत एवाधोमुखा अप्यधोमूला जाता इत्यर्थः ॥

अथ जलकरिणा वनकेसरिणो युद्धमाह—

विहुणेन्ति विहुव्वन्ता करिमअरमुहाइ थिरणिहित्तणहमुहा ।
मुहपज्जत्तदढुक्खअकुम्भअडभमन्तकेसरा केसरिणो ॥ ३५ ॥

[विधूनयन्ति विधूयमानाः करिमकरमुखानि स्थिरनिहितनखमुखाः ।
मुखपर्याप्तदृढोत्खातकुम्भतटभ्रमत्केसराः केसरिणः ॥]

केसरिणः करिमकराणां तैरेव शुण्डाकृष्ट्या विधूयमानाः सन्तो विधूनयन्त्या-न्दोलयन्ति । किंभूताः । मुखे पर्याप्तं पूर्णं दृढं यथा स्यादेवमुत्खातं कवलीकृतं यत्कु-म्भतटं तेषामेव तत्र भ्रमन्तः केसरा येषां ते । एवं स्थिरं यथा स्यादेवं निहितानि कुम्भ एवार्पितानि नखमुखानि नखाग्राणि यैस्ते । जलहस्तिभिः कवलितकुम्भा हरयः शुण्डयान्दोल्यमाना अपि कुम्भस्थलं न त्यजन्ति किं त्वान्दोलयन्तीति । यथायथा-न्दोलनं तथातथा केसरभ्रमणमित्युभयोः शूरत्वम् ॥

अथ जलकरिवनकरिणोर्युद्धमाह—

पडिगअगन्धपसारिअकरिमअरच्छिण्णगलिअकरपब्भारे ।
जाणन्ति णवर कुविआ लवणजलालिद्धवणमुहे वणहत्थी ॥३६॥

[प्रतिगजगन्धप्रसारितकरिमकरच्छिन्नगलितकरप्राग्भारान् ।
जानन्ति केवलं कुपिता लवणजलाश्लिष्टव्रणमुखान्वनहस्तिनः ॥]

कुपिता वनहस्तिनः प्रतिगजानां जलहस्तिनामेव गन्धेन दानस्य प्रसारितांस्तानेवोपरोद्धुमग्रे कृतान् पुनः करिमकरैस्तैरेवाभिपत्य छिन्नानथ गलितान् करप्राग्भारान् खण्डितशुण्डादण्डान् केवलं लवणजलेनाश्लिष्टं संबद्धं व्रणमुखं येषां तान् सतो जानन्ति कृत्तानपि लवणसंपर्कं विना न जानन्तीति शौर्यप्रकर्ष उक्तः । 'प्रधावित—' इति पाठे प्रतिगजानां वनगजानां गन्धेन प्रधावितैरुपरि पतितैः करिमकरैश्छिन्ना-नीत्यर्थः । हत्थीति महाराष्ट्रभाषायां बहुवचनेऽप्येकवचनम् ॥

अथ जलपर्वतानामुन्मज्जनमाह—

दरघडिअसेउबन्धा उप्पइऊण पवआ समुद्दुप्पइए ।
कड्ढन्ति जमलकरअलसंदाणिअवक्खसंपुडे धरणिहरे ॥ ३७ ॥

[दरघटितसेतुबन्धा उत्पत्य प्लवगाः समुद्रोत्पतितान् ।
कर्षन्ति यमलकरतलसंदानितपक्षसंपुटान्धरणीधरान् ॥]

प्लवगाः समुद्रादुत्पतितानितत्रासेनोर्ध्वमुड्डीनान्धरणीधरान्कर्षन्ति । उत्प्लुत्य धृत्वानयन्तीत्यर्थः । किंभूतान् । यमलकरतलेन हस्तद्वयेन संदानिते मिथो निबद्धे पक्षती येषां तान् । अन्योऽपि पक्षी तथैव धृत्वा बध्यत इति ध्वनिः । आरणे हेतुमाह—कीदृशाः । दरघटितः किंचिन्निष्पादितः सेतुबन्धो यैस्ते । सेतोरपरिपूर्तावेतैरेव सेतुः स्यादित्याशयः । तथा चोत्फालप्रकर्षः कपीनामुक्तः ॥

अथ सेतौ नलस्य चेष्टामाह—

बन्धइ णलो वि तक्खणविसमुच्छलिअचलकेसरसङ्घाओ ।
तिअवलिअकरपसारिअहरिहत्थुक्खित्तमहिहरो सेउवहम् ॥३८॥

[बध्नाति नलोऽपि तत्क्षणविषमोच्छलितचलकेसरसटोद्घातः ।
त्रिकवलितकरप्रसारितहरिहस्तोत्क्षिप्तमहीधरः सेतुपथम् ॥]

न केवलं वानराः अपि तु नलोऽपि सेतुपथं बध्नाति । कीदृक् । त्रिकाद्वलितः पश्चात्स्थितपर्वतग्रहणाय त्रिकपार्श्वमपहाय स्कन्धसमीपेन पश्चाद्गतो यः करस्तेन प्रसारितः समुद्रे पातितो हरिहस्तादुत्क्षिप्तो गृहीत्वोत्थापितो महीधरो येन । ततः करेण शैलं गृहीत्वोत्तोल्य समुद्रे निक्षिपन्तीत्यर्थः । अत एव तत्क्षणं विषमं यथा स्यादेवमुच्छलित उत्थितश्चञ्चलः केसरसटासमूहो यस्य । शैलादानविसर्गाभ्यां तथाभावादिति भावः । केचित्तु पूर्वनिपातानियमाद्वलितत्रिको वक्रीकृतत्रिकश्चासौ पर्वतग्रहणाय प्रसारितकरश्च तथा हरिहस्तादुत्थापितमहीधरश्चेति कर्मधारयमूचुः । तथा च नलस्यानायास उक्तः ॥

अथ गिरीणां विस्तारमाह—

जं बहुपव्वअजणिअं विच्छूढसमुद्दपाअडं महिविवरम् ।
तं एक्को पडिरुम्भइ वित्थारब्भहिअसंठिओ धरणिहरो ॥ ३९ ॥

[यद्बहुपर्वतजनितं विक्षिप्तसमुद्रप्रकटं महीविवरम् ।
तदेकः प्रतिरुणद्धि विस्तराभ्यधिकसंस्थितो धरणीधरः ॥]

बहुभिः पर्वतैर्जनितं कपिक्षिप्तैर्निपतद्भिरभिघातात् क्षोभतश्च पातालादुत्थितैर्वा कृतं यन्महीविवरं तद्विस्तारेणाभ्यधिकं यथा स्यादेवं संस्थितः सन्नेको धरणीधरः प्रतिरुणद्धि व्याप्नोति । कीदृशम् । विक्षिप्तैः पतत्पर्वतैर्द्विधाभूते समुद्रे प्रकटं व्यक्तम् । तथा च तत्क्षणमेव तथाविधं महीधरविवरमवलोक्य तदधिकेन गिरिणैकेन मुद्रयतीति नलस्य विन्यासकौशलम् ॥

नलस्य रचनाचातुर्यमाह—

साअरलद्धत्थाहं णिमेन्ति जं जं धराहरं कइणिवहा।
बज्झइ पुरओ हुत्तो काऊण पअं तहिं तहिं सेतुवहो ॥ ४० ॥
[सागरलब्धस्थाघं नियोजयन्ति यं यं धराधरं कपिनिवहाः।
बध्यते पुरतोऽभिमुखः कृत्वा पदं तत्र तत्र सेतुपथः ॥]

सागरे लब्धः स्थाघो (मूलं) येन तम्। लब्धसागरमूलं यं यं धराधरं कपिनिवहा नियोजयन्ति तत्र तत्र पदं कृत्वा विन्यस्य पुरतोऽभिमुखोऽग्रिमाग्रिमः सेतुपथो नलेन बध्यते। भूमिनिखातमूलः स एव पुरतः सेतने पदार्पणस्थानं भवतीति दृढमूलत्वमुक्तम्। 'लद्धत्थामं' इति पाठे लब्धस्थामानमित्यर्थः॥

नलस्य त्वरामाह—

समअं पवअविमुक्के सेउवहम्मि समअं अभाअपडन्ते।
परिपेल्लेइ रएइ अ समअं च णलो पडिच्छिऊण महिहरे ॥४१॥
[समकं प्लवगविमुक्तान्सेतुपथे समकमभागपततः।
प्रतिप्रेरयति रचयति च समकं च नलः प्रतीक्ष्य महीधरान् ॥]

समकमेकदैव प्लवगैर्विमुक्तांस्त्यक्तान् सेतुपथे समकमेकदैवाभागेऽस्थाने पततो महीधरान् समकं चैकदैव प्रतीक्ष्य गृहीत्वा नलः प्रतिप्रेरयति। कुतश्चित्कुत्रचिद्योजयति। करादिना यन्त्रयति वा। रचयति च। सम्यग्घटयतीत्यर्थः। पततपतिष्यत्पर्वतग्रहणविन्यासरचनासु कालसौक्ष्म्यमपि न लक्ष्यत इति भावः। यद्वा समकं प्लवगविमुक्तान्समकं प्रतीक्ष्य प्रतिप्रेरयति अभागपततो रचयति चेति यथासंख्यमन्वयः। क्वचित् 'समअं व णल—' इति पाठः। तत्र समकमिवेति सर्वत्रोत्प्रेक्षा॥

सेतौ समुद्रस्य सहकारितामाह—

अवलम्बइ णलघडिए अभाअवलिआणिए घडेइ महिहरे।
सेउवहस्स समुद्दो उव्वेलन्तसलिलो पवड्ढइ पुरओ ॥ ४२ ॥
[अवलम्बते नलघटितानभागवलितान्घटयति महीधरान्।
सेतुपथस्य समुद्र उद्वेलसलिलः प्रवर्धते पुरतः ॥]

समुद्रः सेतुपथस्य महीधराबलेन घटितान्सुदृढीकृतानवलम्बते धारयति । इतस्ततो गन्तुं न ददाति । तदवच्छेदेन समुद्रस्य स्थिरत्वादित्यर्थः । अभागेऽस्थाने वलितान् वक्रीभूतानथानीतान् तरङ्गाभिघातेन यथास्थानं प्रापितान् घटयति सुदृढान् करोति । एवं पुरतोऽग्र उद्वेलसलिल उच्छलितः सन्प्रवर्धते । अग्रेसरतामवलम्बत इति भावः । यथा यथा सेतुर्वर्धते तथा तथा तत्संमुखे वेलायां जलमप्युच्छलतीत्याशयः॥

नलस्य बलातिशयमाह—

जं जं आणेइ गिरिं रहिरहचक्कपरिमट्ठसिहरं हणुमा ।
तं तं लीलाइ णलो वामकरुत्थम्भिअं रएइ समुद्दे ॥ ४३ ॥
[यं यमानयति गिरिं रविरथचक्रपरिमृष्टशिखरं हनूमान् ।
तं तं लीलया नलो वामकरोत्तम्भितं रचयति समुद्रे ॥]

हनूमान् यं यं गिरिमानयति । कीदृशम् । रविरथस्य चक्रेण परिमृष्टं परिघृष्टं शिखरं यस्य तं तुङ्गम् । 'परिहट्टसहं' इति पाठे परिघर्षणसहमित्यर्थः । तं तं वामकरेणोत्तम्भितं हनूमतो हस्तादुत्थापितं नलः समुद्रे रचयति । सेतौ यथोचितस्थाने संनिवेशयतीत्यर्थः । हनूमदानीतस्य तादृशपर्वतस्य पृष्ठतो वामकरेणोत्थापनमहंकारं बलं च गमयति ॥

समुद्रशैलोत्कर्षमाह—

वित्थअसरकमलसिरे सेले दरघडिअसेउसंकमलसिरे ।
जलणिहिसेआलग्गा पाआलधरा धरेन्ति सेआलग्गा ॥ ४४ ॥
[विस्तृतसरःकमलशिरसः शैला दरघटितसेतुसंक्रमलसनशीलान् ।
जलनिधिसेवालग्नाः पातालधरा धारयन्ति शैवालाग्र्याः ॥]

पातालस्य धराः पर्वता दरघटिते सेतुरूपसंक्रमे लसनशीलान् श्लिष्टान् कान्तिमतो वा शैलान्धारयन्त्यवष्टभ्नन्ति । तदुपर्यमी स्थिरतामासादयन्तीत्यर्थः । 'लस श्लेषणक्रीडनयोर्लससंक्रान्तौ च' धातुः । कीदृशान् । विस्तृतानां सरसां कमलानि पद्मानि जलानि वा यत्र तादृशानि शिरांसि येषाम् । विस्तृतानि प्रफुल्लानि विस्तारशालीनि वा सरःकमलानि पद्मानि जलानि वा यत्र तादृशानि शिरांसि येषामिति वा । पूर्वनिपातानियमाद्विस्तृतानि कमलानि यत्र तादृशानि सरांसि शिरसि येषामिति वा । अनेन महत्त्वमुक्तम् । पातालधराः कीदृशाः । जलनिधिसेवायां लग्नाः । तदन्तर्वर्तिन इत्यर्थः । यद्वा जलनिधिशैवालालग्नाः शैवालाः प्रवालास्तत्र लग्नास्तत्संबद्धाः ।

एवं शैवालैरग्र्याः श्रेष्ठाः । शैवालमग्रे येषामित्यर्थेन शैवालाग्रा इति वा । तत्पूर्णा इत्यर्थः । तेन चिरंतनत्वमुक्तम् । यद्वा शैवालानामग्ररूपाः । तेन शैवालापेक्षया क्षुद्राणामेव पर्वतानामेतादृशमहत्पर्वतधारणक्षमत्वमिति समुद्रोत्कर्षः । तदुक्तं बधिरकविराजेन—'मैनाकोऽपि गभीरनीरविलुठत्पाठीनपृष्ठोल्लसच्छैवालाङ्कुरकोटिकोटरकुटीकुड्यान्तरे निर्वृतः' इति ॥

मणीनामवस्थामाह—

**वेलाअडसंबद्धा गओणिअत्तन्तजलरअविहुव्वन्ती ।**
**हल्लन्तकिरणविडवा अन्दोलइ मरगअप्पहावणराई ॥ ४५ ॥**

[वेलातटसंबद्धा गतापनिवर्तमानजलरयविधूयमाना ।
लसत्किरणविटपा आन्दोल्यते मरकतप्रभावनराजी ॥]

मरकतानां प्रभैव वनराजी वनं वारि काननं वा तस्य राजी परम्परा आन्दोल्यते पर्वतपतनोत्थतरङ्गेण चञ्चला क्रियते । तदुक्तम्—गतापनिवर्तमानस्य गतस्यागतस्य जलस्य रयेण विधूयमाना क्षोभ्यमाणा । पुनः कीदृशी । वेला तीरं नीरं वा तत्तटे संबद्धा । एवं 'हल्लन्त' इति लसदर्थे देशी । तथा च लसन्तः संचारिणः किरणा एव विटपा यस्याः सा । अन्यत्रापि तरुकम्पे शाखाकम्पो भवति । यद्वा मरकतवत्प्रभा यस्या इति हरिद्वर्णा वनराजी वनपङ्क्तिः सेतुपर्वतोपरिस्था आन्दोल्यते । कीदृशी । लसत्किरणमितस्ततो गमनं येषाम् । 'कॄ विक्षेपे' धातुः । तादृशा विटपा यस्याः । तरङ्गगतागतेन शाखानां गतागतमिति मदुन्नीतः पन्थाः ॥

जलहस्तिसर्पयोः संबन्धमाह—

**दन्तेसु वलिअलग्गा खोहुव्विग्गगअसंपहारुक्खित्ता ।**
**करिमअराण भुअंगा पडन्ति कालासमण्डलपडिच्छन्दा ॥ ४६ ॥**

[दन्तेषु वलितलग्नाः क्षोभोद्विग्नगजसंप्रहारोत्क्षिप्ताः ।
करिमकराणां भुजंगाः पतन्ति कालायसमण्डलप्रतिच्छन्दाः ॥]

भुजंगाः करिमकराणां दन्तेषु वलितलग्ना वेष्टितलग्नाः सन्तः पतन्ति । किंभूताः । क्षोभेण समुद्रस्येत्यर्थात् उद्विग्नैः क्रुद्धैर्वन्यैर्गजैः संप्रहारेण प्रवाहपूर्वमुत्क्षिप्ताः । समुद्रक्षोभेण दैवात्पुरः प्राप्ताः । शुण्डयोर्ध्वं प्रेरिता इत्यर्थः ॥ यद्वा—क्षोभोद्विग्नैर्वन्यैर्गजैः समं संप्रहारे युद्धे उत्क्षिप्ताः करिमकरैरेवेत्यर्थः । अत एव कालायसमण्डलं

लौहवलयस्तत्प्रतिच्छन्दास्तुल्यरूपाः । 'कालायसमयो लौहं गिरिसारमशस्त्रकम्' इति कोषः ॥

कल्लोलानामानुकूल्यमाह—

**पव्वअवडनाइद्धो जो च्चिअ उअहिस्स पडिणिअत्तइ पढमम् ।**
**सो च्चिअ सलिलद्धन्तो अण्णोहुत्तविसमं वलेइ णलवहम् ॥ ४७ ॥**

[पर्वतपतनाविद्धो य एवोदधेः प्रतिनिवर्तते प्रथमम् ।
स एव सलिलार्धान्तोऽन्यतोऽभिमुखविषमं वलयति नलपथम् ॥]

पर्वतपतनेनाविद्धः प्रेरितो य एवोदधेः सलिलार्धान्तः प्रथमं प्रतिनिवर्तते परावर्तते स एवान्यतोऽभिमुखमत एव विषममसंघटितं नलपथं वलयति वक्रीकृत्य ऋजुतां प्रापयति । दूरं गत्वा प्रतिनिवृत्तः कल्लोल एव सेतौ वक्रीभूतं गिरिमभिहत्य समीकरोतीत्यर्थः । तेन कल्लोलप्रकर्ष उक्तः । प्रथममिति कल्लोलान्तरापेक्षया नलापेक्षया वा । तथा च कल्लोल एव प्रथमं समीकरोति, नलस्तु पश्चादिति भावः ॥

गजसर्पयोः संबन्धमाह—

**खुहिअसमुद्दत्थमिआ खुडेन्ति अक्खुडिअमअजलोज्झरपसरा ।**
**चलणालग्गभुअंगे पासे व्व णिराअकड्ढिए माअङ्गा ॥ ४८ ॥**

[क्षुभितसमुद्रास्तमिताः खण्डयन्त्यखण्डितमदजलनिर्झरप्रसराः ।
चरणालग्नभुजंगान्पाशानिव निरायतकृष्टान्मातङ्गाः ॥]

मातङ्गा वनहस्तिनश्चरणेष्वालग्नान्भुजंगान्पाशानिव खण्डयन्ति । यथा चरणेषु बन्धनरज्जुः खण्ड्यते तथैवेत्यर्थः । कथंभूतान् । निरायतान्सतः कृष्टान् । एकतश्चरणं दत्त्वा परतः शुण्डया खण्डनायाकृष्टौ दीर्घीभूतान् । पाशोऽप्याकर्षणे दीर्घायत इति साम्यम् । मातङ्गाः किंभूताः । क्षुभिते समुद्रेऽस्तमिताः पर्वतेन सहैव मग्नाः । एवम् अखण्डितो मदजलस्य प्रसरो येषां ते । मज्जनदशायामपि शौर्यशालिन इति भावः ॥

तरङ्गाणां रत्नादिसंबन्धमाह—

**रअणच्छविविमलअरा फलरसभरिअदरभिण्णमरगअणिवहा ।**
**ओधुव्वन्ति तरङ्गा चुण्णिअसङ्खउलपण्डुराअरफेणा ॥ ४९ ॥**

[रत्नच्छविविमलतराः फलरसहरितदरभिन्नमरकतनिवहाः ।
अवधूयन्ते तरङ्गाश्चूर्णितशङ्खकुलपाण्डुरतरफेनाः ॥]

तरङ्गा अवधूयन्ते गिरिपतनेन दिशि दिशि नीयन्ते। कीदृशाः। रत्नच्छविभिर्विमलतरा अत्युज्ज्वलाः। तेषु तेषामपि सत्त्वात्। एवं फलरसै रसनीयफलैर्वनक्षोद्भवैर्हरिताः किंचित्किंचित्खण्डिता मरकतनिवहा येषु। अभिघातत्रुटितमरकतखण्डानां वन्यफलमिश्रणेन हरितत्वोत्कर्ष इति भावः। एवं चूर्णितेन शङ्खकुलेन पाण्डुरतराः फेना येषु ते। समानरूपत्वात्। तथा च जलीयपर्वतीयवस्तूनामेकीभावेन समुद्रक्षोभातिशय उक्तः॥

अथ पातालजलोद्गममाह—

घडमाणेहि अ समअं झिज्जइ सेलेहि जेत्तिअं चिअ उअही।
उच्छलइ तेत्तिअं चिअ उत्थङ्घिअमूलसलिलपरिपूरन्तो॥ ५०॥

[घटमानैश्च समं क्षीयते शैलैर्यावन्मात्रमेवोदधिः।
उच्छलति तावन्मात्रमेवोत्तम्भितमूलसलिलपरिपूर्यमाणः॥]

च पुनः सममेकदैव घटमानैः संबध्यमानैः शैलैर्यावन्मात्रमेव यावत्प्रमाणमेवोदधिः क्षीयते गिरिपातात्तरङ्गाणामुच्छलनेन जलह्रासात्तावन्मात्रमेव पुनरुच्छलति वर्धते। अत्र हेतुमाह—कीदृक्। उत्तम्भितं यन्मूलसलिलं पातालजलं तेन परिपूर्यमाणः।.........समुच्छलतीत्यन्वयः। तेन यदैव क्षीयते तदैवोच्छलतीत्यर्थे पातालजलस्योल्बणत्वेन गाम्भीर्यमुक्तम्॥

क्षोणीक्षोभमाह—

उद्धप्फुडिअणइमुहा णिअअट्ठाणसिढिलोसरन्तमहिहरा।
अन्दोलन्तसमुद्दा अन्दोलन्ति व णहं धरणिसंखोहा॥ ५१॥

[ऊर्ध्वस्फुटितनदीमुखा निजकस्थानशिथिलापसरन्महीधराः।
आन्दोलत्समुद्रा आन्दोलयन्तीव नभो धरणिसंक्षोभाः॥]

धरण्याः संक्षोभा गगनमान्दोलयन्तीव। कीदृशाः। ऊर्ध्वानि सन्ति स्फुटितानि खण्डखण्डीकृतानि नदीनां मुखानि यैस्तानि(स्ते)। एवं निजकस्थानाच्छिथिलाः सन्तोऽपसरन्तो यतस्ततो दोलायमाना महीधरा येभ्यस्तानि(स्ते)। एवं आन्दोलन्तो दोधूयमानाः समुद्रा येभ्यः। तथा चायमर्थः—पर्वतपतनोत्थितकल्लोलाभिघातेन भूमिकम्पान्नदीमुखजलान्युद्भूय विशीर्यन्ति सेतौ निहितानि निजनिजस्थानस्थिता एव मेरुमलयप्रभृतयश्च गिरयो भूकम्पाहितमूलशैथिल्येन यतस्ततः

संचरन्ति । एवं सति संचरत्तदीयशिखरप्रेरितसुरविमानजलधरपटलचलनादिना उच्छलितसमुद्रतरङ्गातिक्रमेण च निष्क्रियस्यापि नभसः कम्प उत्प्रेक्षित इवशब्देन ॥

अथ सेतोरीषदुद्भवमाह—

**अद्धुट्ठिअसेउवहं होइ खणं अद्धदिण्णहरिहिअअसुहम् ।**
**अद्धोवइअमहिहरं अद्धोसारिअरसाअलं उअहिजलम् ॥ ५२ ॥**

[अर्धोत्थितसेतुपथं भवति क्षणमर्धदत्तहरिहृदयसुखम् ।
अर्धावपातितमहीधरमर्धापसारितरसातलमुदधिजलम् ॥]

उदधिजलं भवति । कीदृक् । अर्धेन भागेन अर्धे वोत्थितः सेतुपथो यत्र । एवं क्षणं व्याप्यार्धं दत्तं हरीणां कपीनां हृदये सुखं येन । सेत्वर्धनिष्पत्त्यानन्दार्धमित्यर्थः । एवं अर्धेऽवपातिताः क्षिप्ता महीधरा यत्र । अर्धावच्छिन्ना गिरयो वेलायामेव तिष्ठन्तीत्यर्थः । एवम् अर्धमर्धावच्छिन्नमपसारितमन्यतः क्षिप्तं रसातलं यतस्तत् । तावदवच्छेदेन पर्वतपूरितत्वात् । एतेन सेतोरामूलत्वमुक्तम् ॥

अथ सेतोर्जलेन तिरोधानमाह—

**णिम्माओ त्ति मुणिज्जइ दूराइद्धम्मि साअरे सेतुवहो ।**
**सो च्चिअ सलिलभरन्तो थोआरद्धो व्व दीसइ णिअत्तन्ते ॥५३॥**

[निर्मित इति ज्ञायते दूराविद्धे सागरे सेतुपथः ।
स एव सलिलभ्रियमाणः स्तोकारब्ध इव दृश्यते निवर्तमाने ॥]

दूरं व्याप्याविद्धे प्रेरिते सागरे सेतुपथो निर्मित इति दृश्यते । स एव सेतुपथः सागरे निवर्तमाने सति सलिलेन भ्रियमाणः पूर्यमाणः सन्स्तोकारब्ध इव दृश्यते । अयमर्थः—क्षिप्तपर्वताभिघातद्विधाभूतसमुद्रजलयोर्दूरमुच्छलनात्सेतुर्निर्मित एव दृश्यते । समुद्रस्याल्पजलत्वाद्यदा पुनस्तज्जलद्वयं परावृत्य समुद्रे मिलति तदा सलिलास्तमितत्वात्स्तोक एवेत्यभिघातजलयोरुत्कर्षः ॥

अथ महावराहस्य चरणगर्तापूरणमाह—

**अवि पूरइ पाआलं ण अ कुविअदिसागइन्दगमणविहाआ ।**
**उअहिविइण्णोआसा पूरेन्ति महावराहपअणिक्खेवा ॥ ५४ ॥**

[अपि पूर्यते पातालं न च कुपितदिग्गजेन्द्रगमनविघाताः ।
उदधिवितीर्णावकाशाः पूर्यन्ते महावराहपदनिक्षेपाः ॥]

अपिः संभावनायाम्। गिरिभिः पातालमपि पूर्यते, न तु महावराहस्य पदनिक्षेपाः पुरातनानि चरणनिक्षेपस्थानानि पूर्यन्ते। तेषां ततोऽपि महत्त्वादिति भावः। तदेवाह—कीदृशाः। करिमकरास्फालनादिना कुपितानां दिग्गजेन्द्राणां गमनस्य स्वेच्छाचारस्य विघातो येभ्यः। अतिगभीरत्वात्। तथा च जलहस्तिनो भयेन तत्र प्रविश्य तिष्ठन्ति दिक्करिणः प्रवेष्टुं न पारयन्तीति मत्तस्यापि गमनप्रतिबन्धकत्वेनातिविकटत्वमुक्तम्। कुपितपदेन दिग्गजानां गमनस्य विघाताः परिपन्थिनः। हन्यतेऽनेनेति करणे घञिति केचित्। एवं उदधिना वितीर्णो दत्तोऽवकाशः स्थानं यस्मै। तत्संलीनत्वात्। वस्तुतस्तु—उदधये दत्तोऽवकाशो यैः। तस्य तत्रैव विश्रामात्। अनेन महत्तरत्वमुक्तम्॥

अथ जलस्य नानारूपतामाह—

**जाअं महिहरमहिअं धातुअडक्खलणसरसपल्लवराअम्।**
**दुमभङ्गतुवरसुरहिं उप्पज्जन्तमइरं व साअरसलिलम्॥ ५५॥**

[जातं महीधरमथितं धातुतटस्खलनसरसपल्लवरागम्।
द्रुमभङ्गतुवरसुरभि उत्पद्य[मान]मदिरमिव सागरसलिलम्॥]

सागरस्य सलिलं महीधरेण मथितं सदुत्पद्यमाना मदिरा यस्मात्तथाभूतमिव जातम्। मथनचिह्नमाह—कीदृशम्। धातूनां गैरिकाणां तटस्य स्खलनात्सरसपल्लवस्येव रागो लौहित्यं यस्य। यथा मदिरायामर्पितमधूकपल्लवादिरागो जायते, तथा प्रकृतेऽपि गिरिगैरिकराग इत्यर्थः। एवं पर्वतीयद्रुमाणां भङ्गेनावर्तादिजातेन खण्डेन तुवरं कषायं सत्सुरभि। मदिरायामपि मधूकादिखण्डार्पणात्कषायता सौरभं चेति साम्यम्। 'तुवरस्तु कषायोऽस्त्री' इत्यमरः। तथा च पूर्वमपि महीधरेण मथितः समुद्रः सुरा चाभूत्। संप्रति सलिलस्यैव ताम्रकषायसुरभित्वात्सुरात्वमित्युत्प्रेक्षा॥

अथ समुद्रसंचारेण सेतुस्थैर्यमाह—

**संचालेइ समुद्दो जह जह विरलट्ठिअं धराहरणिवहम्।**
**तह तह विराअसिहरो पूरिअविवरत्थिरो घडइ सेउवहो॥ ५६॥**

[संचालयति समुद्रो यथा यथा विरलस्थितं धराधरनिवहम्।
तथा तथा विशीर्णशिखरः पूरितविवरस्थिरो घटते सेतुपथः॥]

सेतौ विरलस्थितं व्यवहितस्थितं धराधराणां निवहं यथा यथा समुद्रः संचाल-

यति तथा तथा विशीर्णं चूर्णितं शिखरं यत्र तथाभूतः सेतुपथः पूरितेन विवरेण स्थिरः सन् घटते । पर्वतपतनाज्जातसमुद्रक्षोभेण सेतुपर्वतानां चलने परस्परमिलनाच्छिखरभङ्गेनावकाशपूरणादन्तरालविरहात्सुदृढः सेतुरुत्पद्यते इत्यर्थः ॥

अथ सेतोरनिर्धारणीयरूपतामाह—

पडइ णु णहअलघडिओ कड्ढिज्जइ णु मलआहि चिरणिम्माओ ।
घडइ णु समुद्दसलिले घडिओ णीइ णु रसाअलाहि णलवहो ५७

[पतति नु नभस्तलघटितः कृष्यते नु मलयाच्चिरनिर्मितः ।
घटते नु समुद्रसलिले घटितो निरेति नु रसातलान्नलपथः ॥]

नुशब्दो विकल्पे उत्प्रेक्षायां वा । नलपथः कपिभिर्नभस्तले घटितः सन् पतति नु । समुद्र इत्यर्थात् । चिरनिर्मितः पूर्वमेव निर्मितो मलयात्कृष्यते नु । समुद्रस्य जले घटते स्वयमेवोत्पद्यते नु । रसातलाद्घटित एव सिद्ध एव निरेति निर्याति नु । तथा चोपरितः पतनं मलयादाकर्षणं सलिले तात्कालिकघटनं पातालादुत्थानं वा सेतोः किमिति निर्धारयितुं न पारितम् । सर्वत्र समानरूपत्वाद्वानराणां नलस्य च शीघ्रकारित्वादित्यर्थः ॥

अथ पर्वतानां सर्वत्र तुल्यरूपतामाह—

गअणम्मि उअहिसलिलं सलिलविमुक्के रसाअलम्मि णहअलम् ।
दीसइ तीसु वि समअं णहसलिलरसाअलेसु पव्वअजालम् ॥ ५८ ॥

[गगने उदधिसलिलं सलिलविमुक्ते रसातले नभस्तलम् ।
दृश्यते त्रिष्वपि समं नभःसलिलरसातलेषु पर्वतजालम् ॥]

गगने उदधिसलिलं दृश्यते, उच्छलितत्वात् । सलिलविमुक्ते रसातले नभस्तलं दृश्यते, तुच्छत्वात् । त्रिष्वपि नभःसलिलरसातलेषु पर्वतजालं समं तुल्यमेव दृश्यते, निरन्तरं वर्षणशालित्वात् । तथा च यत्र यस्यासंभवस्तदपि तत्र कृतमिति समुद्राकाशयोर्व्यत्ययेन स्थानत्रयस्यापि पर्वतमयत्वेन च नलस्य निर्माणकौशलं दर्शितम् ॥

अथ सेतोरान्दोलनमाह—

वेलालाणणिअलिओ रसिऊण रसाअलट्ठिअं पि समुद्दो ।
चालेइ सेउबन्धं खम्भं आरण्णकुञ्जरो व वलन्तो ॥ ५९ ॥

[वेलालाननिगलि(डि)तो रसित्वा रसातलस्थितमपि समुद्रः।
चालयति सेतुबन्धं स्तम्भमारण्यकुञ्जर इव वलन्॥]

समुद्रः सेतुबन्धं चालयति तरङ्गाभिघातेनान्दोलयति। किं कृत्वा। रसित्वा कल्लोलकोलाहलं कृत्वा। क इव। स्तम्भमारण्यकुञ्जर इव। यथा नवबद्धकुञ्जरो बन्धनस्थानं स्तम्भं रसित्वा चीत्कृत्य चालयति उत्पाटयितुमान्दोलयति। समुद्रो गजो वा किं कुर्वन्। वलन्वक्रीभवन्। नित्यसंचारशीलत्वात्। समुद्रः कीदृक्। वेला तरङ्गस्तटं वा, तद्रूपेणालानेन निगलि(डि)तो बद्धः। गजोऽप्यालानबद्धो भवति। सेतुबन्धं स्तम्भं वा किंभूतम्। रसातलस्थितमपि। गभीरनिखातत्वात्। अत्र समुद्रस्य गजेनोपमायां सेतोः स्तम्भत्वम्, वेलाया आलानत्वं च हेतुः॥

अथ सेतोर्नैबिड्यमाह—

पेल्लिज्जन्ति दढअरं जह जह पवएहि खुहिअजलतण्णाआ।
ओहट्टन्ताआमा तह तह एक्कक्कमं अइन्ति महिहरा॥ ६०॥

[प्रेर्यन्ते दृढतरं यत्र यत्र प्लवगैः क्षुभितजलार्द्राः।
अपसरदायामास्तत्र तत्रैकैकमायान्ति महीधराः॥]

प्लवगैर्महीधरा दृढतरं यथा यथा प्रेर्यन्ते निबिडीकरणाय हस्तादिनाभिहन्यन्ते, तथा तथा क्षुभितेन तत्प्रेरणाभिरुत्थितेन जलेनार्द्राः। एवम् अपसरन्नपकर्षशील आयामो दैर्घ्यं येषां तथा सन्त एकैकमायान्ति जलार्द्रत्वात्प्लवगप्रेरणाच्च वेगाभिहतपटतन्तव इव परस्परं संबध्यन्त इत्यर्थः। मिथोमिलनादेव दैर्घ्यह्रासाद्दृढत्वमित्याशयः॥

अथ सागरस्य शब्दमाह—

पवअभुअगलत्थल्लिआ विप्पइण्णरअणा
धरणिहरा पडन्ति भअचुण्णइंणरअणा।
खुहिओ साअरो रसई उण्णअं ण ईणं
मोअन्तो व तिव्वभअउण्णअं णईणम्॥ ६१॥

[प्लवगभुजगलहसिता विप्रकीर्णरत्ना
धरणिधराः पतन्ति भयचूर्णकिंनरगणाः।
क्षुभितः सागरो रसति उन्नतं न दीनं
मोचयन्निव तीव्रभयपूर्णतां नदीनाम्॥]

धरणिधराः समुद्रे पतन्ति । कीदृशाः । प्लवगभुजैः प्रेरिताः । एवं विप्रकीर्णानि इतस्ततः क्षिप्तानि रत्नानि यैस्ते, तदभिघातेन समुद्ररत्नानामुच्छलनात् । विप्रकीर्णरचना वा । विप्रकीर्णा विस्तारशालिनी रचना सेतौ संघटना येषामित्यर्थः । एवं भयेन चूर्णा व्यस्ताः किंनरगणा येषु, समुद्रे पतितव्यमित्याशयात् । अथ क्षुभितः पर्वतपतनान्दोलितः सागर उन्नतं रसति । न दीनं ह्रस्वं यथा स्यात्तथा रसतीत्यर्थः । किं कुर्वन्निव । नदीनां तीव्रं भयं स्वामी समुद्रः किं स्यादित्यादिकं तत्पूर्णतां मोचयन्निव न भेतव्यमित्याश्वासयन्निव । पराभवं प्राप्तस्य वल्लभस्य प्रतिभया पत्नीनां भयमपगच्छतीति भावः ॥

अथ मणिप्रभानामुद्गममाह—

**भरइ व दूराइद्धो धुवइ व पडन्तधरणिहरकद्दमिओ ।**
**रुम्भइ व पडिणिअत्तो भिण्णो घडइ व मणिप्पहाहि समुद्दो ६२**

[भ्रियत इव दूराविद्धो धाव्यत इव पतद्धरणिधरकर्दमितः ।
रुध्यत इव प्रतिनिवृत्तो भिन्नो घटत इव मणिप्रभाभिः समुद्रः ॥]

दूरमाविद्धः पर्वतपतनेनोच्छलितः समुद्रः स्वस्य पर्वतानां वा मणिप्रभाभिर्भ्रियत इव तुच्छोऽपि पूर्यत इव, तद्व्याप्तत्वात् । पतद्भिर्धरणिधरैः कर्दमितो गौरिकादिसंबन्धात् धाव्यते प्रक्षाल्यत इव, स्वव्याप्त्योज्वलीक्रियमाणत्वात् । उच्छलनेन कियद्दूरं गत्वा प्रतिनिवृत्तः सन् रुध्यत इव निजप्रसरेण विष्टभ्यमानत्वात् । भिन्नः । पर्वतपतनाद्द्विधाभूतः सन् घटत इव एकीभवतीव, संधीयमानान्तरालत्वात् । मणिप्रभाभिरिति सर्वत्र योजनीयम् । अत्रोत्प्रेक्षाचतुष्टयमपि मणिप्रभाणां बाहुल्यमौज्वल्यं गाढत्वं यथासंख्यमाद्यत्रये तृतीयपरिहारेण जलाकारत्वं च सर्वत्र निमित्तमिति ध्येयम् ॥

जलवनगजयोरसंगममाह—

**करिमअराण खुहिअसाअरविसासिआणं**
**सेउवहम्मि पडिअगिरिणिवहविसासिआणम् ।**
**समअं वणगआण णिवहा धरोसिआणं**
**समुहं आवडन्ति मअगन्धरोसिआणम् ॥ ६३ ॥**

[करिमकराणां क्षुभितसागरविषाश्रितानां
सेतुपथे पतितगिरिनिवहविशासितानाम् ।
समकं वनगजानां निवहा धरोषितानां
संमुखमापतन्ति मदगन्धरोषितानाम् ॥]

करिमकराणां वनगजानां च निवहाः सममेकदैव संमुखमापतन्ति । युद्धाय परस्परमभिमुखीभवन्तीत्यर्थः । करिमकराणां किंभूतानाम् । क्षुभितं यत्सागरस्य विषं जलं तदाश्रितानाम् । तदानीं क्षुभितानां सागरजलमाश्रितानामिति वा कर्मधारयः । यद्वा विषासितानां जले आसितानाम् । उपविष्टानामित्यर्थः । यद्वा विषवद्गरलवदासितानामुपविष्टानाम् । विषवदसितानां श्यामानामिति वा । यद्वा विषाशितानां विषं जलमाशितानाम् । भोजितानामित्यर्थः । यद्वा विषासिकानां सागरजले आसिकोपवेशनं येषामित्यर्थः । एवं सेतुपथे पतितगिरिनिवहेन विशेषतः शासितानाम् । मारितानामित्यर्थः । 'शसु हिंसायाम्' इति धातोर्णिचि । यद्वा गिरिनिवहेन विश्लेषितानां दिशि दिशि गतानाम् । यद्वा गिरिनिवहेन विशासितानाम्, गिरिषु सजातीयगजभ्रमेणोपगमात् । एवं वनगजानां किंभूतानाम् । धरेषु पर्वतेषूषितानाम्, वनचरत्वात् । वस्तुतस्तु करिमकराणां वनगजानामित्युभयोरपि सर्वं विशेषणम् । तथाहि प्रथमे—धरेषूषितानाम् । वनगजैः सह योद्धुं समुद्रादपि पर्वतमारूढानामिति शौर्यप्रकर्षः । यद्वा धरेषु मैनाकादिषूषितानां स्वभावादेवेत्यर्थः । द्वितीये—सागरविषमाश्रितानां करिमकरैः सह योद्धुं पर्वतादपि समुद्रजलं प्रविष्टानामित्यस्यापि शौर्यप्रकर्षः । एवं सेतुपथे पतितगिरिनिवहेन विशेषतः शासितानां धर्षितानाम्, तेन व्याकुलीक्रियमाणत्वात् । एवं मिथो मदगन्धेन रोषितानामित्युभयपक्षेऽपि सर्वं तुल्यमिति मदुन्नीतः पन्थाः । 'विषं पुरीषे गरले पानीये च प्रकीर्तितम्' ॥

अथ सेतौ तरङ्गपतनमाह—

उत्थद्धिअदुमणिवहा सुइरं परिमलिअसेउवहपासल्ला ।
धाउकलङ्कक्खउरा दूरं गन्तूण उव्वमन्ति तरङ्गा ॥ ६४ ॥

[उत्थापितद्रुमनिवहाः सुचिरं परमृदितसेतुपथपार्श्वाः ।
धातुकलङ्ककलुषा दूरं गत्वा उद्वमन्ति तरङ्गाः ॥]

तरङ्गा दूरं गत्वा सेतोः कियन्तमुपरितनं भागमतिक्रम्योद्वमन्ति विलीयन्ते । समाप्ता भवन्तीत्यर्थः । किंभूताः । उत्थापितः स्वाभिघातेन भङ्क्त्वोर्ध्वं नीतो द्रुमनिवहो यैः । तथा च वृक्षोन्मूलनसमर्थस्यापि तरङ्गस्य कियद्दूर एव समाप्त्या सेतोर्विस्तीर्णत्वमुक्तम् । एवं सुचिरं व्याप्य परिमृदितः परिघृष्टः सेतुपथस्य पार्श्वप्रदेशो यैस्ते । पार्श्व एव चिरकालव्यापनादुच्चत्वमुक्तम् । एवं धातुरूपेण कलङ्केन वर्णान्तरस्य प्राप्तत्वात्कलुषाः । तथा च महतोऽपि तरङ्गस्य धातुकालुष्येणाधिकदेशव्यापनेऽपि सकलाव्याप्तिरित्यमहत्त्वमिति भावः । वस्तुतस्तु पार्श्वस्यैव दूरं दूरभागं गत्वातिक्रम्योद्वमन्ति त्यजन्ति । कियद्दूरं गत्वा पश्चादागच्छतीत्यर्थः । एतेन सेतोरुच्चत्वमुक्तम् ॥

मृगादीनां चेष्टामाह—

दीसइ मअउलेहि उअही णलो अणेहिं
समअं सेल(उ)पडणभअउण्णलोअणेहिं ।
जं खलिअं अईइ सलिलं णईण ऊरं
तं उद्धाइ पवअकलकलविइण्णऊरम् ॥ ६५ ॥

[दृश्यते मृगकुलैरुदधिर्नलो जनैः
समं शैल(सेतु)पतनभयपूर्णलोचनैः ।
यत्स्खलितमत्येति सलिलं नदीनां पूरं
तदुद्धावति प्लवगकलकलवितीर्णतूर्यम् ॥

गगन एवानीयमानगिरिस्थैर्मृगकुलैरुदधिः, पतनभयाज्जनैर्नलश्च सेतुघटनविस्मयात् सममेकदैव दृश्यते । उभयगतं विशेषणमाह—कीदृशैर्मृगकुलैः । सेतौ पतनभयेन पूर्णे कातरत्वादिचिह्निते लोचने येषां तैः । सेतुपतने समुद्र एव पतनं स्यादित्याशयात् । जनैः कीदृशैः । सेतोः पतनं समुद्रजले मज्जनं तद्भयेन पूर्णे लोचने येषाम् । सेतोर्मज्जनमेव स्यादिति क्षुभ्यतां सेतुस्थितिदर्शनेन विस्मय इति भावः । अणेहिं एभिर्मृगकुलैरुदधिर्नलश्च समं तुल्यमेव दृश्यते इत्यपि कश्चित् । अत्र सेतौ पतनभयेनेति सेतावेव चेत् स्थितिस्तदा नलात्, अन्यत्र चेत्तदा जलाद्भयमित्युभयदर्शनमिति भावः । एवं समुद्रस्यैव यत्सलिलं सेतुपर्वतयोरभिघातात्स्खलितं सन्नदीनां पूरं प्रवाहमत्येति अतिक्रामति, तत्प्लवगानां कलकलेन वितीर्णतूर्यं

वाद्यविशेषो यस्य तदुद्धावति ऊर्ध्वमुत्तिष्ठति । वाद्यादिकोलाहलेन जलमुत्तिष्ठतीति प्रसिद्धिः । तथा च नदीसमुद्रजलयोः संघट्टादुत्थानमेवमुत्प्रेक्षितमिति भावः । यद्वा नदीनामेव सेतुस्थानामित्यर्थात् सलिलमिति कर्तृ । समुद्रतरङ्गाभिघातात्स्खलितं सद्दूरमतिक्रामति समुद्रजलमित्यर्थात्, तत्प्लवगकलकलवितीर्णतूर्यं सदुद्धावति । तथा च समुद्रतरङ्गाभिहतमपि सेतुनदीजलं यत्समुद्रमेवातिक्रामति तत्प्लवगकलकलमहिम्ना बहुलीक्रियमाणत्वनिमित्तकमित्युत्प्रेक्षा । एतेन समुद्रातिक्रमक्षमत्वात्सेतुनदीनामुत्कर्षः सूचितः ॥

अथ पञ्चभिः स्कन्धकैरन्त्यकुलकेन सेतुं वर्णयति—

**इअ सअलमहिअलुक्खअमहिहरसंघाअणिम्मिअमहारम्भम् ।**
**णिअअच्छाआवइअरसामलइअसाअरोअरजलद्धन्तम् ॥ ६६ ॥**

[इति सकलमहीतलोत्खातमहीधरसंघातनिर्मितमहारम्भम् ।
निजकच्छायाव्यतिकरश्यामलितसागरोदरजलार्धान्तम् ॥]

इत्यनेन प्रकारेण 'वानरा नलपथं संघटयन्ति' इति पञ्चमस्कन्धकेन संबन्धः । नलानुगामित्वेन परेषामपि कर्तृत्वाद्बहुवचनम् । कीदृशम् । सकलमहीतलादुत्खातैर्महीधराणां संघातैर्निर्मितो महानारम्भ उच्छ्रायो यस्य तम् । एवं निजकच्छायायाः स्वीयप्रतिबिम्बस्य व्यतिकरेण संबन्धेन श्यामलितः सागरोदरजलस्यार्धान्तो येन तमिति सेतोरुच्छ्रायो दैर्घ्यं सूचितम् । स्वाभाविकी सिन्धुजलश्यामता सेतुच्छायात्वेनोत्प्रेक्षितेति कश्चित् ॥

**विसमोसरिअसिलाअलदढघाउक्खित्तमच्छपच्छिमभाअम् ।**
**मज्झच्छिण्णभुअंगमवेड्ढुप्पीडणविआरिअसिलावेढम् ॥ ६७ ॥**

[विषमापसृतशिलातलदृढघातोत्कृत्तमत्स्यपश्चिमभागम् ।
मध्यच्छिन्नभुजंगमवेष्टोत्पीडनविदारितशिलावेष्टम् ॥]

पुनः किंभूतम् । विषमं समीभूय न लग्नम्, अतोऽपसृतं स्खलितं यच्छिलातलं तद्दृढघातेनोत्कृत्तश्छिन्नो मत्स्यस्य । तलवर्तिन इत्यर्थात् । पश्चिमभागः पुच्छप्रदेशो यत्र तम् । एवं तेनैव मध्यच्छिन्नं यद्भुजंगमवेष्टं सर्पभोगस्तस्योत्पीडनेन गाढीकृतवेष्टनेन विदारितं द्विधाकृतं शिलावेष्टं यस्य तम् । भोगेनाभिघातजनकमावेष्टयतीति सर्पस्वभावः । तथा च ययैव शिलया मध्ये छिन्नः सैवावेष्ट्य विदारितेति

द्वयोरपि महत्त्वमुक्तम् । मध्यच्छिन्नभुजंगमस्य यद्वेष्टमावेष्टनं तस्योत्पीडनेन यन्त्रणेनेत्यर्थ इति कश्चित् ॥

**सेलुम्मूलणसंभमगहिअप्फिलिअगअमग्गधाइअसीहम् ।**
**गिरिसिहरणिसण्णाणिअगिरिपेल्लिअपिन्तमुहलजलहरसलिलम् ६८**

[शैलोन्मूलनसंभ्रमगृहीतभ्रष्टगजमार्गधावितसिंहम् ।
गिरिशिखरनिषण्णानीतगिरिप्रेरितनिर्यन्मुखरजलधरसलिलम् ॥]

एवं कपिभिः कृतं यच्छैलोन्मूलनं तत्संभ्रमाद्गृहीतभ्रष्टस्य संभ्रमपूर्वं गृहीतस्य धृतस्य तस्मिन्सति भ्रष्टस्य तदन्यमनस्कत्वेन पलायितस्य गजस्य मार्गेण पृष्ठेन धावितः सिंहो यत्र तम् । उत्पाटनसमये भ्रष्टस्य गजस्य सेतावप्यनुसंधानेन वानराणामानयने शैघ्र्यं पर्वतस्य दैर्घ्यं वा सूचितम् । येन चिरकालेनापि न विश्राम इति भावः । एवं गिरिशिखरनिषण्णस्य तथैवानीतस्य । सेतावित्यर्थात् । गिरिणा सेतुलग्नपर्वतान्तरेण प्रेरितस्य यन्त्रितस्य अत एव पीडया मुखरस्य शब्दायमानस्य जलधरस्य निर्यत् क्षरत्सलिलं यत्र तम् । पूर्वनिपातानियमात् । मेघानां कोमलत्वेन जलक्षरणम्, धूमरूपत्वेऽपि बहिर्गमनाभावात् गिरीणां संनिवेशस्यातिनिबिडत्वं सूचितम् । यद्वा गिरिप्रेरितत्वेन निर्यतो बहिर्गच्छतो मुखरजलधरस्य सलिलं यत्र । तथा च धूमरूपतया मेघा गच्छन्ति छिद्रगलितानि जलानि गुरुत्वात्तत्रैव पतन्तीत्याशयः । वस्तुतस्तु गिरिशिखरनिषण्णस्यानीतेनानेतुमारब्धेन गिरिणा प्रेरितस्य उत्क्षेपणादिप्रसङ्गेन शिखरेणैव विद्धस्य मुखरजलदस्य निर्यत्सलिलं यत्रेत्यनेनाप्युत्पाटनसमयोपजातजलगलनस्य सेतावप्यनुवर्तमानत्वेन कपीनामानयनशैघ्र्यं जलबाहुल्येन मेघमहत्त्वात्पर्वतमहत्त्वं चेत्यहमुन्नयामि ॥

**पासल्लपडिअवणगअरुद्धमहोज्झरदुहापहाविअसलिलम् ।**
**धरणिहरन्तरिअट्ठिअचन्दणवणमुणिअमलअसिहरक्खण्डम् ॥६९**

[पार्श्वपतितवनगजरुद्धमहानिर्झरद्विधाप्रधावितसलिलम् ।
धरणिधरान्तरितस्थितचन्दनवनज्ञातमलयशिखरखण्डम् ॥]

एवम् उत्पाटनक्षोभात्पार्श्वे पार्श्वायमानेन वा पतितेन वनगजेन रुद्धस्य महानिर्झरस्य द्विधा द्विप्रकारेण प्रधावितं सलिलं यत्र तम् । महानिर्झरस्याप्यवरोधकत्वेन गजस्य महत्त्वमुक्तम् । चिररुद्धं जलमवरोधकप्रान्तद्वयेन वेगेन गच्छतीति प्रधावि-

तपदार्थः । एवं धरणीधराणामन्तरितमन्तर्गतं सत्स्थितं यच्चन्दनवनं तेन ज्ञायमानमनुमीयमानं मलयशिखरखण्डं यत्र । तस्यैव चन्दनाधिष्ठानत्वात्कस्यापि विविच्य ग्रहणं नेति घटनाय निःसंधित्वमुक्तम् ॥

वीईपडिऊलाहअथोउव्वेल्लिअदुमावलम्बन्तलअम् ।
विसमसिहरन्तरागअसंवेल्लिअसाअरं घडेन्ति णलवहम् ॥ ७० ॥
( कुलअम् )

[वीचिप्रतिकूलाहतस्तोकोद्वेल्लितद्रुमावलम्बमानलतम् ।
विषमशिखरान्तरागतसंवेल्लितसागरं घटयति नलपथम् ॥]
( कुलकम् )

एवं समुद्रस्य वीचिभिः प्रतिकूलं यथा स्यात्तथाहतास्ताडिताः, अत एव स्तोकमीषदुद्वेल्लिता उद्वेष्टिता मूलादारभ्य शिखापर्यन्तं द्रुमेषु लम्बमाना यत्र तम् । यद्वा तादृशद्रुम एव लम्बमाना विपर्यस्यावस्थिता लता यत्र तम् । एवं विषमाणां नतोन्नतस्थितानां शिखराणामन्तरेण मध्यावकाशेन संवेल्लितः स्तोकजलनिर्गमाच्चञ्चलीभूतः सागरो यत्र तम् ॥

अथ सुवेलदर्शनमाह—

वित्थरइ सेउबन्धो विहुवइ धराहराहओ सलिलणिही ।
दिट्ठसुवेलुच्छङ्गं रसइ दिसाइण्णपडिरवं कइसेण्णम् ॥ ७१ ॥

[विस्तीर्यते सेतुबन्धो विधूयते धराधराहतः सलिलनिधिः ।
दृष्टसुवेलोत्सङ्गं रसति दिक्कीर्णप्रतिरवं कपिसैन्यम् ॥]

सेतुबन्धः स्वयमेव विस्तीर्यते विस्तारं गच्छति । धराधरैराहतस्ताडितः सलिलनिधिः स्वयमेव विधूयते । द्वयमपि क्रियाशैघ्र्यसूचनाय कर्मकर्तरी । एवं कपिसैन्यं दिक्षु कीर्णो व्याप्तः प्रतिरवो यस्य यथा तथा स्यादेवं रसति शब्दायते । अत्र हेतुमाह—कीदृक् । दृष्टः सुवेलस्य दक्षिणतीरस्थपर्वतस्योत्सङ्गः क्रोडो येन, संनिहितत्वात् । तथा च सेतोः सिद्धकल्पत्वात्सानन्दमिति भावः ॥

अथाष्टभिः स्कन्धकैः समुद्रावस्थामाह—

दीसन्ति भिण्णसलिले समुद्दमज्झम्मि सेउबन्धक्कन्ता ।
संभमकड्ढणलुग्गा भअचुण्णपलाअसेलपक्खद्धन्ता ॥ ७२ ॥

[दृश्यते भिन्नसलिले समुद्रमध्ये सेतुबन्धताक्रान्ताः ।
संभ्रमकर्षणावरुग्णा भयचूर्णपलायितशैलपक्षार्धान्ताः ॥]

भिन्नसलिले कपिनिक्षिप्तशैलद्विधाभूतजले समुद्रस्य मध्ये भयचूर्णस्य भयोद्विग्नस्य, अत एव पलायितस्य पलायितुमारब्धस्य शैलस्य । आदिकर्मणि क्तः । पक्षैकदेशा दृश्यन्ते । कीदृशाः । सेतुबन्धेनाक्रान्ताः । अतः संभ्रमेण चूर्णीभावत्रासेन यदाकर्षणं तेनावरुग्णाः खण्डिताः । तथा च सेतुयन्त्रणपरिहारायाकृष्यमाणः पक्षः खण्डित इति सेतोर्दृढत्वं व्यनक्ति । 'भअपुण्ण' इति पाठे भयपूर्णेत्यर्थः ॥

अथ सेतौ विघटितस्थानसंघटनमाह—

**महिहरपहरक्खोहिअसलिलपरिक्खअविराअमूलमहिहरम् ।**
**थोअत्थोओसरिअं बन्धेन्ति पवंगमा पुणो वि णलवहम् ॥ ७३ ॥**

[महीधरप्रहारक्षोभितसलिलपरिक्षतविशीर्णमूलमहीधरम् ।
स्तोकस्तोकमपसृतं बध्नन्ति प्लवंगमाः पुनरपि नलपथम् ॥]

प्लवंगमाः पुनरपि नलपथं बध्नन्ति । कीदृशम् । क्षेपणहेतुकेन महीधराणां प्रहारेण क्षोभितमान्दोलितं यत्सलिलं तेन परिक्षतं खण्डितम्, अत एव विशीर्णं विघटितं मूलं येषां तथाविधा महीधरा यत्र तम् । निक्षिप्तपर्वताभिहतजलाघातखण्डितत्वेन मूलविघटनमित्यर्थः । सलिलपरिक्षताः सन्तो विशीर्णा मूलमहीधरा यत्रेति वा । अत एव स्तोकस्तोकमपसृतं क्वचित्क्वचिद्विपर्यस्तम् । तथा च यत्र यत्र विघटते सेतुः, तत्र तत्र पर्वतान्तरं प्रक्षिप्य सुघटयन्तीति सेतोर्निर्भरत्वं कपीनामुद्योगशीलत्वं च दर्शितम् ॥

अथ सेतोः समाप्तकल्पतामाह—

**जह जह अच्चासण्णो उअहिं जेऊण होइ सेउवहवरो ।**
**उच्छलइ धराहिहअं दूरथोअत्तणेण तह तह सलिलम् ॥ ७४ ॥**

[यथा यथात्यासन्न उदधिं जित्वा भवति सेतुपथवरः ।
उच्छलति धराभिहतं दूरस्तोकत्वेन तथा तथा सलिलम् ॥]

उदधिं जित्वातिक्रम्य सेतुपथश्रेष्ठो यथा यथा अत्यासन्नोऽपरतटसंनिहितो भवति, तथा तथा पूरयितव्यभागवर्तिसलिलं धरैः प्रक्षिप्यमाणैरभिहतं सत्स्तोकत्वेन

दूरमुच्छलति। अत्यर्थेन तिर्यगूर्ध्वमुत्तिष्ठतीत्यर्थः । यथा यथाल्पत्वं भवति तथातिदूरमुत्थानमित्याशयः ॥

अथ सेतौ समुद्रजलेन नदीप्रवृत्तिमाह—

महिहरपहरुच्छित्ता उअरिं सेउस्स जे पडन्ति खलन्ता ।
ते च्चिअ सलिलुप्पीडा होन्ति वलन्तविसमा महाणइसोत्ता ॥७५॥

[महीधरप्रहारोत्क्षिप्ता उपरि सेतोर्ये पतन्ति स्खलन्तः ।
त एव सलिलोत्पीडा भवन्ति वलद्विषमा महानदीस्रोतांसि ॥]

महीधरप्रहारेणोत्क्षिप्ता ऊर्ध्वं गमिता य एव सलिलोत्पीडाः सेतोरुपरि पतन्ति त एव स्खलन्तो वृक्षादिना प्रतिहन्यमानाः सन्तो वलन्तो वक्रगतयो विषमा नतोन्नता अत एव महानदीनां स्रोतांसि भवन्ति । तेषामपि तदाकारत्वात् । एतेन सेतोर्जलस्य च महत्त्वमुक्तम् ॥

अथ सेतोरवशिष्टे भागे तिमिना संधानमाह—

देइ समत्तच्छाअं दरमिलिअसुवेलमहिहरतडद्धन्तो ।
बीओआसपहाविअतिमिपूरिअसाअरन्तरो सेउवहो ॥ ७६ ॥

[ददाति समाप्तच्छायां दरमिलितसुवेलमहीधरतटार्धान्तः ।
द्वितीयावकाशप्रधाविततिमिपूरितसागरान्तरः सेतुपथः ॥]

सेतुपथः समाप्तस्य संपूर्णस्य छायां शोभां ददाति । समाप्त इव जात इत्यर्थः । कुत इत्यत आह—कीदृक् । द्वितीयावकाशात्प्रधावितेन तिमिना पूरितं सागररूपमन्तरं सुवेलेन सहान्तरालदेशो यस्य । सागरस्यान्तरमवशिष्टभागो यत्रेति वा । अत एव ईषन्मीलितसुवेलमहीधरस्य तटैकदेशो यत्र तथा । अयं भावः—एकपार्श्वादपरपार्श्वं प्रति सेतुकृतगमनप्रतिबन्धशङ्कया सत्वरं गच्छता तिमिना पूरिते सति सेतुसुवेलान्तरालजलभागे सेतुः समाप्त इति सर्वे ज्ञातवन्त इति तिमीनां महत्त्वमुक्तम् ॥

अथ शैलानां दृढीकरणमाह—

जाहे सेउणिबद्धं धुणइ णलो विसमसंठिअमहासेलम् ।
ताहे चिरेण सअलो सअलक्कन्तवसुहो णिअत्तइ उअही ॥ ७७ ॥

[यदा सेतुनिबद्धं धुनोति नलो विषमसंस्थितमहाशैलम् ।
तदा चिरेण सकलः सकलाक्रान्तवसुधो निवर्तते उदधिः ॥]

सेतौ निबद्धं संहितमथ च विषमसंस्थितं समीभूय न लग्नं महाशैलं सुसज्जीकरणाय नलो यदा धुनोति इतस्ततश्चालयति, तदा सकलोऽप्युदधिः आक्रान्ता सलिलेन पूरिता सकला वसुधा येनेत्थंभूतः संश्चिरेण निवर्तते स्वस्थानमागच्छति । अयमर्थः—दृढीकरणाय विशकलितपर्वतान्दोलने सेतोरान्दोलनम्, तेन च समुद्रस्यापीति सेतुकृता यथा तज्जलवृद्धिरासीत्, यथा तदुच्छलनेन सकलापि मही प्लाव्यत इति समुद्रान्दोलनक्षमान्दोलनशालितया चिरेण च तज्जलस्य निवृत्तिरिति सेतोर्महत्त्वम्, तेन च नलस्य महाबलत्वमुक्तम् ॥

अथ सिन्धोः स्वल्पावशिष्टत्वमाह—

**लहुइअपेसणहरिसिअकइणिवहणिसुद्धसेलपहरवलन्तो ।**
**णइसोत्तो व्व समुद्दो सेउसवेलन्तरे मुहुत्तं वूढो ॥ ७८ ॥**

[लघुकृतप्रेषणहर्षितकपिनिवहनिपातितशैलप्रहारवलमानः ।
नदीस्रोत इव समुद्रः सेतुसुवेलान्तरे मुहूर्तं व्यूढः ॥]

लघुकृतमल्पावशिष्टं समाप्तकल्पत्वात् यत्प्रेषणमीश्वराज्ञा तेन हर्षितेन कपिनिवहेन निपातितस्य शैलस्य प्रहारेण वलमानो दोलायमानः समुद्रः सेतोः सुवेलस्य चान्तरे मध्ये नदीप्रवाह इव मुहूर्तं व्यूढ उपचितः । स्वल्पतया शैलप्रहारोत्तम्भितजलत्वात्सेतोः सुवेलस्य चान्तरे नदीप्रवाहोऽयमिति संदेहविषयीभूत इत्यर्थः । मुहूर्तमिति तदैव पूरित इति भावः ॥

अथ रावणक्षोभमाह—

**जह जह णिम्माविज्जइ वाणरवसहेहि सेउसंकमसिहरम् ।**
**तह तह दहमुहहिअअं फाडिज्जइ साअरस्स सलिलेण समम् ॥७९॥**

[यथा यथा निर्मीयते वानरश्रेष्ठैः सेतुसंक्रमशिखरम् ।
तथा तथा दशमुखहृदयं पाट्यते सागरस्य सलिलेन समम् ॥]

वानरश्रेष्ठैः सेतुरूपसंक्रमस्य शिखरमग्रभागो यथा यथा निर्मीयते निष्पाद्यते तथा तथा दशमुखस्य हृदयं सागरस्य जलेन समं पाट्यते द्विधा क्रियते । तैरेवेत्यर्थात् । समुद्रे सेतुः केनापि कर्तुं न पारित इति क्षोभादिति भावः । सागरजलमपि पाट्यते रावणहृदयमपीति सहोक्तिरलंकारः । हृदयस्य समुद्रजलेनोपमानाद्धीरत्वं गम्भीरत्वं च सूचितम् ॥

अथ सेतोः समाप्तिमाह—

पाआलमिलिअमूलो अव्वोच्छिण्णपसरन्तसरिआसोत्तो ।
ठाणट्ठिओ वि पडिओ मुहम्मि धरणिहरसंकमस्स सुवेलो ॥८०॥

[पातालमिलितमूलोऽव्यवच्छिन्नप्रसरत्सरित्स्रोताः ।
स्थानस्थितोऽपि पतितो मुखे धरणीधरसंक्रमस्य सुवेलः ॥]

स्थानस्थितोऽपि वानरैरनानीतोऽपि सुवेलो धरणीधरपाटितसंक्रमस्य मुखे पतितः। मुखमग्रं तत्पूरको गिरिः सुवेल एव कृत इत्यर्थः । कीदृक् । पाताले मिलितं मूलं यस्येति दृढत्वमुक्तम् । तथा चोत्पाटने सति तादृग्दार्ढ्यं न स्यादित्यावश्यकमुखदार्ढ्यायैव स्थापित इति पूर्वमनुत्पाटने बीजमिति भावः । पुनः कीदृक् । अव्यवच्छिन्नमखण्डितं सत् प्रसरत्सरित्स्रोतो यत्र तथेति सरसतया सेतुसंघटनसामग्री दर्शिता ॥

अथ सुग्रीवादीनां सेतुनिष्पत्तिज्ञानमाह—

मलउच्छङ्गगएण वि रहुवइपासट्ठिएण वाणरवइणा ।
कइकलअलेण णाओ णिप्पच्छिमसेलपूरिओ सेउवहो ॥ ८१ ॥

[मलयोत्सङ्गगतेनापि रघुपतिपार्श्वस्थितेन वानरपतिना ।
कपिकलकलेन ज्ञातो निष्पश्चिमशैलपूरितः सेतुपथः ॥]

मलयस्योत्सङ्गः क्रोडस्तद्गतेन तत्र स्थितेनापि रामनिकटवर्तिना वानरपतिना पश्चिमश्चरमस्तटाद्विनिर्मुक्तेन चरमेण । यद्वा । पश्चिमः शेषस्तद्रहितेन सर्वशेषेण शैलेन पूरितो निष्पादितः सेतुपथः कपीनां कलकलेन सेतुजन्यानन्दकोलाहलेन ज्ञातः । कथमन्यथा एवंविधं शब्दाडम्बरमाचरेयुरिति भावः । अत एव कपीनां चेष्टां कपिरेव जानातीति प्राधान्येन सुग्रीवस्य ज्ञानमुक्तं न तु रामस्य । मलयस्थितेनेति परोक्षेऽप्याज्ञानिर्वाह इति प्रभुशक्तिः । कोलाहलस्य च तावद्दूरव्यापकत्वेन कपीनामतिबलवत्त्वमुक्तम् । यद्वा तावद्दूरमपि तत्संनिहितमेव परं तु कपिभिर्व्यवधानाच्चक्षुरगम्यत्वेन शब्दानुमेयत्वमिति सुग्रीवस्यैवाकारमहत्त्वमिति भावः ॥

अथ समुद्रस्य द्विधाभावमाह—

आरम्भन्ते सअलो तिहाअविसमो दरुट्ठिअम्मि णलवहे ।
होइ दुहा अ समत्ते सो च्चिअ अण्णो पुणो पुणो वि समुद्दो ॥८२॥

[आरभ्यमाणे सकलस्त्रिभागविषमो दरोत्थिते नलपथे ।
भवति द्विधा च समाप्ते स एवान्यः पुनः पुनरपि समुद्रः ॥]

स एव समुद्रः पुनः पुनरप्यन्य एव समुद्रो भवतीत्यध्याहारः । तदेवाह— आरभ्यमाणे नलपथे सकल एव । अखण्डित एवेत्यर्थः । ईषदुत्थिते सति सेतौ त्रिभागेन विषमोऽवशिष्टभागत्रयेण विसदृशः प्रथमभागस्य सेतुच्छन्नत्वात् । यद्वा— 'त्रिधा च विषमः' किंचिद्वृत्ते नलपथे त्रिधा त्रिप्रकारकः । त्रिखण्ड इत्यर्थः । खण्डद्वयं पार्श्वयोः, एकः पुरतः, अत एव विषमः समाप्ते सति द्विधा पार्श्वयोः खण्डद्वयरूपः । तथा च सेतोर्महत्त्वमुक्तम् ॥

अथ सेतोः सुवेलावष्टब्धत्वमाह—

**मलउच्छङ्गपउत्तो चलन्तवाणरभरोणओ सेउवहो ।**
**गरुओ तिऊडगिरिणा पल्हत्थन्तो दुमो दुमेण व धरिओ ॥८३॥**

[मलयोत्सङ्गप्रवृत्तश्चलद्वानरभरावनतः सेतुपथः ।
गुरुकस्त्रिकूटगिरिणा पर्यस्यमानो द्रुमो द्रुमेणेव धृतः ॥]

मलयोत्सङ्गात्प्रवृत्त उपक्रान्तः, अत एव गुरुको महान्सेतुपथः पर्यस्यमानः समुद्रवीचिभिरितस्ततः प्रेर्यमाणस्त्रिकूटगिरिणा सुवेलेन धृतोऽवलम्बितः । न केवलं वीचिभिराकुलितः, किं तु चलतां वानराणां भरेणावनतोऽपि । तथा च मलयावष्टब्धोऽपि सुवेलावष्टम्भेन स्थिरोऽभूदिति भावः । क इव । द्रुम इव । यथा पर्यस्यमानः पतिष्णुर्द्रुमो द्रुमेण पार्श्ववर्तिना ध्रियते । मलयादारभ्य सुवेलपर्यन्तं सेतुरभूदिति महावाक्यार्थः । 'पर्यस्तं पतिते हते' इति विश्वः ॥

अथ सेतोस्तुङ्गतामाह—

**दीसइ सेउमहावहदोहाइअपुव्वपच्छिमदिसाभाअम् ।**
**ओवत्तोहअपासं मज्झुक्खित्तविसमं णमन्तं व णहम् ॥ ८४ ॥**

[दृश्यते सेतुमहापथद्विधायितपूर्वपश्चिमदिग्भागम् ।
अपवृत्तोभयपार्श्वं मध्योत्क्षिप्तविषमं नमदिव नभः ॥]

सेतुरूपेण महापथेन द्विधायितौ द्विखण्डीकृतौ पूर्वपश्चिमरूपौ दिग्भागौ यत्र

तथाभूतं नभो नमदिव दृश्यते । अत्रोत्प्रेक्षाबीजं रूपमाह—किंभूतम् । मध्ये उत्क्षिप्तमुत्थापितम्, अत एव विषमं विषमसदृशं सत्, अपवृत्तमवनतमुभयपार्श्वं यस्य तादृशम् । तथा च यथा गृहादिकं मध्ये स्तम्भं दत्त्वोत्थाप्यते तदा पार्श्वद्वयेन नमति, तथा सेतोरपि दूरसमुन्नतत्वेन गगनमप्युत्तोल्यमानमिवावनतपूर्वपश्चिमपार्श्वं लक्षितमिति भावः । रावणमरणकारणत्वेन महापथपदोपन्यासः, सेतुपदसमभिव्याहारेणाविरुद्धार्थत्वाद्वा ॥

अथ सेतोर्दैर्घ्यमाह—

**मलअसुवेलालग्गो पडिट्ठिओ णहणिहम्मि सागरसलिले ।**
**उअअत्थमणणिराओ रविरहमग्गो व पाअडो सेउवहो ॥ ८५ ॥**

[मलयसुवेलालग्नः परिस्थितो नभोनिभे सागरसलिले ।
उदयास्तमननिरायतो रविरथमार्ग इव प्रकटः सेतुपथः ॥]

सेतुपथः प्रकटः प्रव्यक्तो दृश्यते । क इव । उदय उदयाचलः, अस्तमनमस्ताचलः, तावद्दूरं निरायतो रविरथमार्ग इव । किंभूतः सेतुपथः । नभोनिभे सागरसलिले मलयसुवेलयोरालग्नः सन् परिस्थितः । रविरथमार्गो नभसि तिष्ठतीति श्यामत्वाद्विस्तीर्णत्वाच्च नभस्तुल्यत्वं सागरजलस्य, महत्त्वेन च मलयसुवेलयोरुदयास्ताचलतुल्यत्वम् । अत एव दीर्घत्वेन सेतो रविरथमार्गेणोपमा ॥

सेतोरवस्थितिप्रकारमाह—

**दीसइ पवणविहुव्वन्तसाअरोअरपरिट्ठिअमहासिहरो ।**
**विअडपसारिअवक्खो उप्पवमाणो व्व महिहरो सेउवहो ॥ ८६ ॥**

[दृश्यते पवनविधूयमानसागरोदरपरिस्थितमहाशिखरः ।
विकटप्रसारितपक्ष उत्प्लवमान इव महीधरः सेतुपथः ॥]

सेतुपथो दृश्यते । किंभूतः । पवनेन विधूयमानानि कल्लोलाभिघातेन चाल्यमानानि सागरोदरे परिस्थितानि महान्ति शिखराणि यस्य तथा । क इव । उत्प्लवमान उड्डयमानो महीधर इव । महीधरः कीदृक् । विकटौ, विकटं यथा स्यात्तथेति वा, प्रसारितौ पक्षौ येन । पक्षिणः पक्षौ प्रसार्योड्डयन्ते इति स्वभावः । तथा च तुङ्गतया क्षुभितपार्श्वद्वयसलिलदोलायमानपक्षसमानाकारशिखरशालितया च सेतोरुत्प्ल-

वमानगिरिसाम्यम् । गिरेरपि सपक्षत्वादिति केचित् । वस्तुतस्तु—उत्प्लवनं जलोपरिसंचारविशेषस्तमाचरन्महीधर इवेति व्याख्या । अत एव—शिखराणां प्रतिबिम्बद्वारा सागरोदरपरिस्थितत्वपर्यन्तधावनम् । पक्षिणः पयसि पक्षौ प्रसार्य संचार्य च प्लवनं कुर्वत इति विकटप्रसारितेत्युक्तम् । पयसि पार्श्वयोर्वीचिद्वारा पवनचालितानां शिखरप्रतिबिम्बानां पक्षैरुपमा ॥

अथ सेतौ सिद्धे रामरावणयोरवस्थामाह—

**अरई थोरूसासा णिद्दाणासो विवण्णदा दौब्बल्लम् ।**
**सेउम्मि रइज्जन्ते रामादो रावणम्मि संकन्ताइं ॥ ८७ ॥**

[अरतिः स्थूलोच्छ्वासा निद्रानाशो विवर्णता दौर्बल्यम् ।
सेतौ रच्यमाने रामाद्रावणे संक्रान्तानि ॥]

अरतिः सीतालाभप्रतिबन्धकसमुद्रसेतोरनुत्पत्त्या विषयान्तरेष्वप्रीतिः, ममापि प्रिया रक्षोगृहे तिष्ठतीति मनःखेदात्स्थूला उद्गताः श्वासाः, सीता कथं वा तिष्ठति, किं वा चेष्टते, इत्यादितद्गतमनस्कत्वान्निद्रानाशः, परापहृतवधूकत्वेन लज्जया विवर्णता, किं स्यात्को वा उपायः कर्तव्य इत्यादिचिन्तावशाद्दौर्बल्यम्, एवंप्रकारेणैतानि सर्वाणि सेतावनध्यवसायेन प्रथमं रामे स्थितानि । पश्चात्सेतौ रच्यमाने सति समुद्रकृतप्रत्यूहेन रामागमनं न स्यादित्यध्यवसितत्वेन प्रागस्पृष्टे रावणे संक्रान्तानि सेतुसिद्ध्यानध्यवसितत्वात् । तथा हि—समुद्रे सेतुः केनापि न दत्तपूर्व इति मनःक्षोभादरतिः, समुद्रसेतुविदितसामर्थ्यो रामः कदाचिन्मामपि हन्यादिति शङ्कया स्थूलोच्छ्वासाः, किं स्यात्कोवोपायः कर्तव्य इति विचारेण निद्रानाशः, लङ्कापरिखायमाणसमुद्रावस्कन्दो मया वारयितुं न पारित इति लज्जया विवर्णता, त्रैलोक्यविजित्वरस्य ममापि मानभङ्गः प्रसक्त इति चिन्तावशाद्दौर्बल्यमित्यर्थः । अत्र पूर्वं रामादागन्तुमुत्सुकान्यप्येतानि समुद्रकृतप्रतिबन्धादनागतानि, सति सेतौ तद्रूपवर्त्मलाभात्तदानीं पुनरागतानीत्युत्प्रेक्षा व्यङ्ग्या । रचित इति वक्तव्ये रच्यमान इति वर्तमानार्थकशानच्प्रत्ययसंक्रान्तानीतिभूतार्थकक्तप्रत्ययाभ्यामागमनहेतुसेतुरचनस्य शीघ्रकारिता व्यज्यते । तदुक्तम्—'कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः' इति ॥ केचित्तु—सेतोरसिद्धौ संदिग्धसीतालाभे रामे विप्रलम्भरूपकामावस्थानुभावत्वेन स्थितान्येतानि, सति सेतौ सीतालाभेऽध्यवसायं तमपहाय प्रागध्यवसितसीतालाभ-

त्वेनास्पृष्टेऽपि रावणे तदानीं सीतालाभानध्यवसायाद्विप्रलम्भरूपकामावस्थात्वेनैव संक्रान्तानीत्यर्थमाहुः। तदुक्तं कण्ठाभरणे—'चक्षुःप्रीतिर्मनःसङ्गः संकल्पोत्पत्तिसंततिः। प्रलापो जागरः कार्श्यमरतिर्विषयान्तरे॥ लज्जाविसर्जनं व्याधिरुन्मादो मूर्च्छनं तथा। मरणं चेति विज्ञेयाः क्रमेण प्रेमपुष्टयः॥' इति॥ संक्रान्तानीति। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्येकशेषान्नपुंसकं बहुवचनं च॥

सेतुं वर्णयति—

अह थोरतुङ्गविअडो णेउं णिहणं सबन्धवं दहवअणम्।
दोहाइअसलिलणिही कअन्तहत्थो व्व पसरिओ सेउवहो॥ ८८॥

[अथ स्थूलतुङ्गविकटो नेतुं निधनं सबान्धवं दशवदनम्।
द्विधायितसलिलनिधिः कृतान्तहस्त इव प्रसृतः सेतुपथः॥]

अथ तथाविधरावणावस्थानन्तरं द्विधायितो द्विखण्डीभूतः सलिलनिधिर्यस्मादेवंभूतः सेतुपथः कृतान्तो यमस्तस्य हस्त इव बाहुरिव प्रसृतः। किमर्थम्। सबान्धवं दशवदनं निधनं नाशं नेतुम्। मारयितुमित्यर्थः। अन्योऽपि हस्तेनाकृष्य मार्यत इति भावः। किंभूतः। स्थूलः पुष्टस्तुङ्गश्च अत एव विकटो भयानकः। यमहस्तोऽप्येवमेवेत्याशयः॥

उत्प्रेक्षान्तरमाह—

विसमेण पअइविसमं महिहरगरुएण समरसाहसगरुअम्।
दूरत्थेण वि भिण्णं सूलेण व सेउणा दसाणणहिअअम्॥ ८९॥

[विषमेण प्रकृतिविषमं महीधरगुरुकेण समरसाहसगुरुकम्।
दूरस्थेनापि भिन्नं शूलेनेव सेतुना दशाननहृदयम्॥]

दूरस्थेनाप्यलग्नेनापि सेतुना शूलेनेव दशाननस्य हृदयं भिन्नम्। यथा शूलेन भिद्यते तथैवेत्यर्थः। कीदृशेन। सेतुना, शूलेन वा। विषमेण काठिन्ययुक्तेन। एवं महीधरैर्गुरुकेण तद्घटितत्वात्। पक्षे महीधरवद्गुरुकेण स्थूलत्वात्। हृदयं कीदृक्। प्रकृत्या स्वभावेन विषमं दुर्भेद्यत्वात्। एवं समरसाहसे गुरुकम् अचाल्यत्वात्। तथा च विषमस्य विषमेण गुरुकस्य गुरुकेण भेदनं युज्यत इति भावः। असंबद्धस्यापि तापजनकत्वेन भेदकत्वमित्यपिर्विरोधाभाससूचकः॥

सेतौ कटकद्रुमानाह—

**दीसन्ति खुहिअसाअरसलिलोल्लिअकुसुमणिवहलग्गमहुअरा ।**
**सेतुस्स पासमहिहरपअडन्तोवत्तकिसलआ कडअदुमा ॥ ९० ॥**

[दृश्यन्ते क्षुभितसागरसलिलार्द्रितकुसुमनिवहलग्नमधुकराः ।
सेतोः पार्श्वमहीधरप्रकट्यमानोद्वृत्तकिसलयाः कटकद्रुमाः ॥]

सेतोः कटकद्रुमा दृश्यन्ते । कीदृशाः । क्षुभितः सेतुप्रतिरुद्धजलत्वेन कल्लोलरूपतया दोधूयमानो यः सागरस्तस्य सलिलेनार्द्रीकृते कुसुमनिवहे रजःपङ्कसङ्गित्वात्सजलपक्षत्वाच्च लग्ना मधुकरा येषु ते । अतएव पार्श्वमहीधरेषु प्रकटीक्रियमाणानि सन्ति उद्वृत्तानि भ्रमरभराद्विपरीत्य स्थितानि किसलयानि येषामिति सेतोरुच्चत्वमुक्तम् ॥

सेतौ स्फटिकप्रदेशानाह—

**थिमिओअहिसच्छाया कत्थ वि दीसन्ति महिहरन्तरवडिआ ।**
**फलिहसिलाअलघडिआ मज्झच्छिण्ण व्व सेउबन्धोआसा ॥ ९१ ॥**

[स्तिमितोदधिसच्छायाः कुत्रापि दृश्यन्ते महीधरान्तरपतिताः ।
स्फटिकशिलातलघटिता मध्यच्छिन्ना इव सेतुबन्धावकाशाः ॥]

कुत्रापि स्फटिकशिलातलेन घटिताः सेतुबन्धावकाशास्तत्प्रदेशा मध्यच्छिन्नाः सेतुबन्धे स्फुटिता इव दृश्यन्ते । अत्र हेतुमाह—कीदृशाः । स्तिमितस्य निश्चलस्योदधेः सच्छायाः समानभासः स्वच्छत्वात् । अत एव 'जलधिजलमिदं स्फुटितसेतुमध्ये [न] प्रसरति' इति भावः । न च जलधिजलस्य श्यामत्वेन कथं स्फटिकतौल्यमिति वाच्यम् । व्यवच्छिन्नस्य तस्यापि श्वैत्यादित्याशयः । तदुक्तम्—'वियति विक्षिप्तानां कालिन्दीजलानाम्—' इत्यादि । पुनः किंभूताः । महीधराणामन्तरे मध्ये पतिताः । तथा च श्यामानां महीधराणामन्तःस्थितकतिपयस्फटिकभूभागस्य स्फुटितभ्रमजनकत्वमिति तात्पर्यम् । वस्तुतस्तु, पूर्वनिपातानियमात्, अन्तरपतिता महीधरा यतोऽत एव श्यामतया स्तिमितोदधिसच्छायाः सामान्यत एव सेतुबन्धप्रदेशाः कुत्राप्येकदेशे स्फटिकशिलातलघटिताः सन्तो मध्यस्फुटिता इव दृश्यन्ते इत्यन्वयः । स्वभावतः श्यामले सेतौ स्फटिकभुवि जलनिर्गमभ्रमात्स्फुटितत्वमुत्प्रेक्षितमिति मदुन्नीतः पन्थाः ॥

सेतुगिरीणां चिह्नमाह—

हिमपडणोत्थइआइं घडिआइं वि णलवहम्मि णज्जन्ति फुडम्।
सिहराइँ सिहरिवइणो मलअस्स अ मलिअचन्दणसुअन्धाइं॥९२॥

[हिमपतनावस्थगितानि घटितान्यपि नलपथे ज्ञायन्ते स्फुटम्।
शिखराणि शिखरिपतेर्मलयस्य च मृदितचन्दनसुगन्धानि॥]

शिखरिपतेर्हिमालयस्य च शिखराणि नलपथे घटितान्यपि सन्ति स्फुटं ज्ञायन्ते। अत्र हेतुमाह—कीदृशानि। हिमपतनेनावस्थगितानि छन्नानि। एवं मृदितेन चन्दनेन सुगन्धानि। तथा च पूर्वेण हिमालयीयत्वस्य, अपरेण मलयीयत्वस्य चानुमितिरिति नानापर्वतसंकीर्णत्वमुक्तम्॥

सेतोरुपरि लहरीसंभारमाह—

जाआ फुडवित्थारा गओणिअत्तन्तजलरअविहुव्वन्ता।
पग्गाहसमग्गा सेउम्मि वि साअरस्स वेलामग्गा॥९३॥

[जाताः स्फुटविस्तारा गतापनिवर्तमानजलरयविधूयमानाः।
प्रग्राहसमग्राः सेतावपि सागरस्य वेलामार्गाः॥]

सागरस्य वेला कल्लोलरूपं जलं तन्मार्गाः सेतावपि स्फुटो विस्तारो येषां तथा जाताः। सेतुप्लावका इत्यर्थः। कीदृशाः। गतस्यापनिवर्तमानस्य परावर्तमानस्य जलस्य रयेण धूयमानास्तदभिघातेन दोलायमानाः। 'जलअर-' इति पाठे तथाभूतजलचरेण करिमकरादिना धूयमाना इत्यर्थः। एवं प्रग्राहो जलसंहस्तेन समग्राः संपूर्णाः। कल्लोलेन सह तेषामपि तत्र गमनादिति भावः। यद्वा वेला तटं तद्रूपा मार्गा इति। सेतुरपि समुद्रस्यैकं तटमभूदित्यर्थः॥

सेतौ सिंहावस्थामाह—

सेलाइक्कमणपडिआ सलिलोल्लिअगरुअकेसरभरक्कन्ता।
दीसन्ति दरुत्तिण्णा संकमपासङ्गसंठिआ केसरिणो॥९४॥

[शैलातिक्रमपतिताः सलिलार्द्रितगुरुककेसरभराक्रान्ताः।
दृश्यन्ते दरोत्तीर्णाः संक्रमपार्श्वसंस्थिताः केसरिणः॥]

केसरिणो गिरिसिंहा दृश्यन्ते। किंभूताः। सेतुनियोजनकाले शैलस्यातिक्रमेणा-

कर्षणेन पतिताः । जले इत्यर्थात् । अथ सलिलेनार्द्रितानामत एव गुरूणां केसराणां भरेण गौरवेणाक्रान्ताः सन्तो दूरोत्तीर्णाः किंचिदुत्थिताः । अत एव संक्रमपार्श्वे संस्थिताः । आर्द्रकेसरगौरवेणोर्ध्वमारोढुमशक्यत्वात् । इत्यतोऽपि सेतोरुत्तुङ्गत्वमुक्तम् ॥

अथ जलचरसंचारप्रतिरोधमाह—

पुव्वावरोअहिगआ दट्ठुं पुव्वावरोअहिसमुप्पण्णा ।
सेउपडिसिद्धपसरा पुणो ण पेच्छन्ति कुलहराइं जलअरा ॥९५॥

[पूर्वापरोदधिगता द्रष्टुं पूर्वापरोदधिसमुत्पन्नाः ।
सेतुप्रतिषिद्धप्रसरा पुनर्न पश्यन्ति कुलगृहाणि जलचराः ॥]

पूर्वश्चापरश्चोदधिः । उदधेर्भागद्वयमित्यर्थः । तदुत्पन्ना जलचरा जलसिंहादयः पुनरपि कुलगृहाणि स्वोत्पत्तिगृहाणि न पश्यन्ति । किंभूताः । पूर्वापरोदधिगता द्रष्टुं तद्भागावित्यर्थात् । ये पूर्वभागोत्पन्नास्ते पश्चिमभागं गताः, तदुत्पन्ना अपि पूर्वभागम् । अथ मध्यवर्तिना सेतुना प्रतिषिद्धः प्रसरो गतागतं येषां तथाभूताः । [तथाभूताः] सन्तः स्वस्वस्थानं परावृत्य नागच्छन्तीत्यर्थः । एतेन सेतोस्तलस्पर्शिताभङ्गुरताच्छिद्रता तुङ्गता शीघ्रोत्पन्नता च सूचिता ॥

सेतोर्मलयसुवेलौ मङ्गलध्वजावित्याह—

दीसन्ति धाउअम्बा मारुअविहुअधवलोज्झरपडद्धन्ता ।
सेउस्स तुङ्गसिहरा उहअतलपरिट्ठिआ धअ व्व महिहरा ॥ ९६ ॥

[दृश्येते धातुताम्रौ मारुतविधुतधवलनिर्झरपटार्धान्तौ ।
सेतोस्तुङ्गशिखरावुभयतटपरिस्थितौ ध्वजाविव महीधरौ ॥]

सेतोः उभयतटमुत्तरदक्षिणरूपं तत्र स्थितौ महीधरौ मलयसुवेलौ ध्वजाविव ध्वजस्तम्भाविव दृश्येते। अन्यत्रापि सेतोरुभयप्रान्तयोर्ध्वजो दीयत इति समाचारः । ध्वजतौल्यमाह—कीदृशौ । तुङ्गं शिखरं ययोस्तौ । एवं धातुभिर्गैरिकैस्ताम्रौ । एवं मारुतेन विधुताश्चालिता धवला निर्झरा एव पटार्धान्ता यत्र तौ । ध्वजोऽप्युच्चः कुङ्कुमालक्तकादिना ताम्रः पताकावांश्च भवतीत्याशयः । द्विवचने बहुवचनम् । नित्यत्वात् । नानापर्वता एव नानाध्वजरूपा इति सर्वत्रैव बहुत्वमिति वा ॥

अथ सैन्यप्रयाणमाह—

अह णिम्मिअसेउवहं सेउवहब्भहिअथलपइण्णमहिहरम् ।
चलिअं चलन्तराहवहिअअणिहिप्पन्तरणसुहं कइसेणम् ॥९७॥

[अथ निर्मितसेतुपथं सेतुपथाभ्यधिकस्थलप्रकीर्णमहीधरम् ।
चलितं चलद्राघवहृदयनिधीयमानरणसुखं कपिसैन्यम् ॥]

अथ सेतुसिद्धेरनन्तरं कपिसैन्यं चलितम्। लङ्कामवरोद्धुमित्यर्थात्। कीदृशम्। निर्मितः सेतुपथो येन तत्। एवं सेतुपथादभ्यधिका उद्वृत्ताः। अत एव स्थले समुद्राद्बहिः प्रकीर्णास्त्यक्ता महीधरा येन। तथा च ये ये यत्र यत्र शैलानाहरन्तः स्थितास्तेऽपि तत्र तत्र तांस्तान्क्षिप्त्वा चलिता इत्यर्थः। एवं चलतो राघवस्य हृदये निहितमर्पितं रणसुखं येन। इति सेतुसिद्धिसमकालमेवाज्ञानपेक्षसंचाराद्रुत्साहाधिक्यज्ञापनादिति चलतो रामस्य भाविन्यपि रणे तदानीं सुखोदयेन यात्राय मनोविशुद्धिरुक्ता। चलता राघवेण निहितं रणसुखं येषामिति केचित् ॥

अथ कपीनां समुद्रदर्शनमाह—

पेच्छन्ति अ वोलन्ता संकमदोहाइअक्खविअवित्थारम् ।
वलआमुहणिट्ठविएक्कपासवोच्छिण्णपाणिअं मअरहरम् ॥ ९८ ॥

[प्रेक्षन्ते च व्यतिक्रामन्तः संक्रमद्विधायितक्षपितविस्तारम् ।
वडवामुखनिष्ठापितैकपार्श्वव्यवच्छिन्नपानीयं मकरगृहम् ॥]

वानरा व्यतिक्रामन्तः सन्तो मकरगृहं प्रेक्षन्ते च। किंभूतम्। संक्रमेण सेतुना द्विधाकृतः। अत एव क्षपितोऽल्पीकृतो विस्तारो यस्य तम्। यद्दिशि दृश्यते तत्रैव क्षुद्रत्वप्रतिसंधानम्, अपरभागादर्शनादिति सेतुविस्तार उक्तः। एवं वडवामुखेन निष्ठापितं नाशितम्, अत एवैकपार्श्वे व्यवच्छिन्नमल्पीकृतं पानीयं यत्र। यद्दिशि वडवानलः पतितस्तत्र शोषणादिति सेतोरामूलत्वमुक्तम् ॥

यात्रायां सिन्धोरानुकूल्यं युग्मकेनाह—

सङ्खउलधवलकमले फुडमरगअहरिअवत्तभङ्गणिहाए ।
विद्दुममिलिअकिसलए उहअतडाबद्धसंकमम्मि णलवहे ॥ ९९ ॥

[शङ्खकुलधवलकमले स्फुटमरकतहरितपत्रभङ्गनिघाते ।
विद्रुममिलितकिसलये उभयतटाबद्धसंक्रमे नलपथे ॥]

उभयं तटं व्याप्याबद्धसंक्रमस्वरूपे नलपथे वानरबलं संचरति । उत्तरस्कन्धकेन संबन्धः । कीदृशे । शङ्खकुलवद्धवलानि कमलानि यत्र । द्वयोरपि सत्त्वात् । एवं स्फुटमरकतवत् हरितपत्त्रभङ्गानाम् । वृक्षसंबन्धिनामित्यर्थात् । निघातो यत्र । एवं विद्रुमेषु मिलितानि किसलयानि यत्र तादृशि । समानरूपत्वात् । तथा च समुद्रीयवस्तुभिः समं सेतुवस्तूनामतिमिश्रणेन समुद्रेण सह सेतोरैकात्म्यमुक्तम् ॥

**संचरइ वाणरबलं णमइ विसट्टन्तमहिहरो सेउवहो ।**
**ओआहिअपाआलं सव्वत्थामगुरुअं धारेइ समुद्दो ॥ १०० ॥**
**(जुग्गअम्)**

[संचरति वानरबलं नमति विशीर्यमाणमहीधरः सेतुपथः ।
अवगाहितपातालं सर्वस्थामगुरुकं धारयति समुद्रः ॥]
(युग्मकम्)

एवं सति विशीर्यमाणा कपिचरणसंक्रमेण क्वचित्त्रुट्यन्तो महीधरा यत्र तादृक् सेतुपथो नमति, उपरिभारबाहुल्यात् । अथावगाहितमाक्रान्तं पातालं येन, आमूलत्वात्कपियन्त्रणाद्वा तथाविधम् । अर्थात् सेतुपथं समुद्रो धारयति रक्षति । सर्वस्थाम्ना सर्वबलेन गुरुकमतिशयितमिति क्रियाया विशेषणम् । गौरवयुक्तमिति सेतुपथस्य वा ॥

सेतुसमुद्रयोरवस्थामाह—

**संचालेइ णिअम्बं धारेइ उअरि तरङ्गकरपब्भारम् ।**
**खम्भम्मि वणगओ विअ आबद्धो सेतुसंकमम्मि समुद्दो ॥१०१॥**

[संचालयति नितम्बं धारयत्युपरि तरङ्गकरप्राग्भारम् ।
स्तम्भे वनगज इवाबद्धः सेतुसंक्रमे समुद्रः ॥]

सेतुसंक्रमे आबद्धः संबद्धः समुद्रो नितम्बं सेतोरेव मूलभागं संचालयति । कल्लोलाद्यभिघातेनान्दोलयतीत्यर्थः । एवम् उपरि सेतोरेव तरङ्गरूपस्य करस्य शुण्डायाः प्राग्भारमेकदेशं धारयति । तत्रापि कल्लोलसंचारात् । क इव । वनगज इव । यथा स्तम्भे आबद्धो वनगजो नितम्बं स्तम्भस्यैव चालयति उत्पाटनायेत्यर्थात् । एवं तदुपरि भञ्जनाय करं धारयति । यद्वा—समुद्रः स्वस्यैव नितम्बं मूलं चालयति तरङ्गं करमुपरि धारयति सेतुना जलावरोधेन मूलक्षोभात्तरङ्गोत्थानाच्च । बद्धो वनगजोऽपि निर्गन्तुमस्थिरतया नितम्बं चालयति शुण्डामुत्थापयतीति गजसमुद्रयोः करतरङ्गयोः स्तम्भसंक्रामयोस्तौल्यमिति सेतोरतिदार्ढ्यमुक्तम् ॥

अथ पारगमनमाह—

उत्तिण्णा अ पवङ्गा सेलभरुव्वहणजणिअसेअतुसारा ।
धाउमइले करअले पासट्ठिअमहिहरोज्झरेसु धुवन्ता ॥ १०२ ॥

[उत्तीर्णाश्च प्लवङ्गाः शैलभरोद्वहनजनितस्वेदतुषाराः ।
धातुमलिनानि करतलानि पार्श्वस्थितमहीधरझरेषु धावयन्तः ॥]

प्लवङ्गा उत्तीर्णाश्च सागरमित्यर्थात् । किंभूताः । शैलानां भरः समूहस्तदुद्वहनेन जनिताः स्वेदानां तुषाराः शीकरा येषां ते । एतेन यावत्स्वेदो न शान्तस्तावदेव पारं गता इति गमने सत्वरता, उत्साहश्च सूचितः । एवं पर्वतोत्तोलनलग्नैर्धातुभिर्मलिनानि करतलानि सेतोः पार्श्वस्थितमहीधराणां निर्झरेषु धावयन्तः क्षालयन्त इति वर्तमानशत्रा क्षालनस्य पूर्वकालत्वमपि नापेक्षितवन्त इति क्षिप्रकारित्वमुक्तम् । 'शीकरे शीतले चूर्णे तुषारो निर्झरे हिमे' इति विश्वः ॥

अथ सुवेलप्राप्तिमाह—

पत्ता अ दहमुहाणिअणन्दणवणपाअवोइअवणुद्देसम् ।
जलभरणिसण्णजलहरभरमोडिअवणलअं सुवेलुच्छङ्गम् ॥१०३॥

[प्राप्ताश्च दशमुखानीतनन्दनवनपादपोचितवनोद्देशम् ।
जलभरनिषण्णजलधरभरमोटितवनलतं सुवेलोत्सङ्गम् ॥]

न केवलं सागरमुत्तीर्णाः, अपि तु सुवेलस्योत्सङ्गं प्राप्ताश्च । कीदृशम् । दशमुखेनानीतानां नन्दनवनपादपानां पारिजातादीनामुचितो योग्यो वनोद्देशस्तत्प्रदेशो यत्र । रावणेन पारिजातादीनामत्रैवानीय रोपितत्वादित्यर्थः । एवं जलस्य भरेणाधिक्येन निषण्णानां संचाराक्षमतयोपविष्टानां जलधराणां भरेण गौरवेण मोटिता वनलता यत्र तम् । जलं निपीय जलधरा यत्र सुखेनोपविशन्तीति निर्जनत्वम्, तेन च परप्रवेशाभावः, तेन च रावणैश्वर्यम् । तथापि तत्प्राप्त्या कपीनामभयत्वमुक्तम् ॥

अथ रावणे राक्षसानामनादरमाह—

सोऊण समुत्तिण्णं उअहिमविद्दविअविक्कमं कइसेण्णम् ।
जाओ रक्खसलोओ रक्खसणाहस्स पेलवाणत्तिअरो ॥ १०४ ॥

[श्रुत्वा समुत्तीर्णमुदधिमविद्रावितविक्रमं कपिसैन्यम् ।
जातो राक्षसलोको राक्षसनाथस्य पेलवाज्ञप्तिकरः ॥]

उदधिं समुत्तीर्णं कपिसैन्यं अविद्रावितः प्रत्यूहाभावेन रावणेनाप्यखण्डितो विक्रमः सुवेलातिक्रमरूपो यस्य तथाभूतं श्रुत्वा राक्षसलोको राक्षसनाथस्य रावणस्य पेलवा कोमलत्वेन भङ्गुरा या आज्ञप्तिराज्ञा तत्करो जात इति योजना। रावणस्याज्ञा पूर्वमभङ्गुरासीत्, तदानीं कपीनां समुद्रसुवेलातिक्रमाभ्यां भङ्गुराभूदिति प्रतापभङ्ग उक्तः॥

अथ रावणस्य कृतान्तवशतामाह—

जाव अ महोअहिअडे आवासग्गहणवावडं कइसेण्णम् ।
ताव कअन्तेण कओ रावणसीसम्मि वामहत्थप्फंसो ॥ १०५ ॥

[यावच्च महोदधितटे आवासग्रहणव्यापृतं कपिसैन्यम् ।
तावत्कृतान्तेन कृतो रावणशीर्षे वामहस्तस्पर्शः ॥]

कपिसैन्यं यावन्महोदधेस्तटे कूले आवासग्रहणे उत्तारस्थानात्मीकरणे व्यापृतम्, तावदेव कृतान्तेन यमेन रावणशीर्षे वामहस्तेन स्पर्शः कृतः। तथा च यत्र दक्षिणेनापि करेण स्पर्शो न संभावितः, तत्र वामेन कृत इति रावणस्य हठादेव मृत्युर्व्यञ्जितः॥

अथ रामरावणयोः प्रतापमाह—

रामस्स रावणस्स अ लोआलोअन्तरालसरिसामण्णे ।
वड्ढन्तणिअअन्ते पाआरन्तरदहाइअम्मि पआवे ॥ १०६ ॥

[रामस्य रावणस्य च लोकालोकान्तरालनिस्सामान्ये ।
वर्धमाननिवर्तमाने प्राकारान्तरद्विधायिते प्रतापे ॥]

रामे उत्तीर्णे सति। समुद्रमित्यर्थात्, रामस्य रावणस्य च प्रतापे इत्थंभूते च सति मथितस्य पर्वतक्षेपादिना क्षोभितस्य सागरस्य लक्ष्म्या संपत्त्या समं प्रसन्नोज्ज्वला शोभा कान्तिर्जातेति द्वितीयस्कन्धकेन सह संदानितकम्। वानराणामुत्तीर्णत्वादवस्कन्दाभावाद्रत्नादिसौष्ठवमपि जातम्। प्रसन्नतापि जातेत्यर्थः। सहोक्तिरलंकारः। प्रतापे कथंभूते। लोकालोकस्य गिरेरन्तराले मध्ये निस्सामान्येऽसाधारणे। अतुल्ये इति यावत्। एवं सत्यपि प्राकारो लङ्कावरणरूपस्तद्रूपेणान्तरेण व्यवधानेन द्विधाकृते प्रतापयोर्जगति तुल्यरूपत्वेऽपि तदानीं रामस्य प्रतापः प्राकाराद्बहिः सर्वव्यापी बभूव, रावणस्य तु प्राकाराभ्यन्तर एव स्थित इत्यर्थः। न केवलमेतावदेव, अपि तु वर्धमाननिवर्तमाने रामस्य वर्धमाने, रावणस्य तु निवर्तमाने, इति यथासंख्यमन्वयः। लोक्यतेऽनेनेति लोकस्तेजः, अलोकस्तिमिरं तयोरन्तरालं

मध्यं तन्निर्विशेषे। तेजोन्तरालतुल्यो रामस्य प्रतापः, प्रकाशकत्वात्, तिमिरान्तरालतुल्यस्तु रावणस्य म्लानत्वादित्यर्थः। आत्यन्तिकताद्रूप्यलाभार्थमन्तरालपर्यन्तधावनम्। अत एवोत्तरविशेषणद्वयमपि सम्यक्। तेजसि वर्धमाने तिमिरं क्षीयते इति आकाराद्बहिर्विषये भूयसि विद्यमानो रामप्रतापो यथा यथा वर्धते तथा तथाल्पीयसि प्राकाराभ्यन्तरे वर्तमानो रावणप्रतापः क्षीयते इति वयम्॥

जाणा लच्छीअ समं सोहा महिअस्स साअरस्स पसण्णा।
तिअसजणिआणुराए उत्तिण्णम्मि मअलञ्छणम्मि व रामे॥१०७॥

इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे
अट्ठमो आसासओ।

[जाता लक्ष्म्या समं शोभा मथितस्य सागरस्य प्रसन्ना।
त्रिदशजनितानुरागे उत्तीर्णे मृगलाञ्छन इव रामे॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्येऽष्टम आश्वासः।

रामे कस्मिन्निव मृगलाञ्छने चन्द्र इव आह्लादकत्वात्। एवं त्रिदशानां जनितोऽनुरागः प्रेम येन तथाभूत इति राममृगाङ्कयोर्विशेषणम्। अथ च मन्दरेण मथितस्य सागरस्य चन्द्रे उत्तीर्णे उत्क्षिप्ते सति लक्ष्म्या विष्णुपत्न्या समं शोभयतीति शोभारूपा प्रसन्ना मदिरा। अथवा शोभानाम्नी काचिदप्सरःश्रेष्ठा। वारुणीव जातेति ध्वनिः॥

सेतुनिष्पत्तिदशाया रामदासप्रकाशिता।
रामसेतुप्रदीपस्य पूर्णाभूदष्टमी शिखा॥

---

नवम आश्वासः।

अथाश्वासकेनैव सुवेलं वर्णयति—

अह पेच्छन्ति पवङ्गा सअलजअक्कमणवड्ढिअमहासिहरम्।
णिट्ठविअदाहिणदिसं सेसदिसामुहपहाविअं व सुवेलम्॥ १॥

[अथ प्रेक्षन्ते प्लवङ्गाः सकलजगदाक्रमणवर्धितमहाशिखरम्।
निष्ठापितदक्षिणदिशं शेषदिङ्मुखप्रधावितमिव सुवेलम्॥]

अथ सुवेलप्राप्त्यनन्तरं प्लवङ्गाः सुवेलं प्रेक्षन्ते। कोटिकोटिशः पर्वता उत्पा-

टिताः, ईदृशः कोऽपि न दृष्ट इति विस्मयादिति भावः । किंभूतम् । सकलजगता- माक्रमणं येभ्यस्तथाभूतानि वर्धितानि महान्ति शिखराणि यस्य, त्रिकूटत्वादिति केचित् । सकलजगदाक्रमणाय वर्धितानि महान्ति शिखराणि यस्येत्यपरे । वस्तु- तस्तु—आक्रमण इति कर्तरि ल्युट् । तथा च सकलजगदाक्रमणकर्ता मूलेन पाता- लस्य, मध्येन मर्त्यस्य, मस्तकेन स्वर्गस्याक्रमणात् । तथाभूतश्चासौ वर्धितमहाशिख- रश्चेति कर्मधारयः । कश्चित्तु 'सअलजअक्कमण' इत्यादिप्रकृतौ 'सकलस्य जयाय यत्क्रमणमतिक्रमस्तेन वर्धितानीत्यादि पूर्ववत्' इत्याह । एवं निष्ठापिता नाशिता दक्षिणदिग्येन तिरोधायकत्वात् । एवं शेषा याः पूर्वाद्या दिशस्तन्मुखेन तत्संमुखी- भूय प्रधावितं तत्तद्दिग्व्यापकनानाशिखरद्वाराकृतवेगमिवेत्युत्प्रेक्षाव्यञ्जनयारोहपरि- णाहाभ्यां विस्तार उक्तः ॥

पुनः सुवेलस्य महत्त्वमाह—

**भुवणस्स व महुमहणं भुवणभरज्झीणमहुमहस्स व सेसम् ।**
**सेसस्स व सलिलणिहिं सरिआवइणो विसम्मिअव्वभरसहम् ॥ २ ॥**

[भुवनस्येव मधुमथनं भुवनभरक्षीणमधुमथनस्येव शेषम् ।
शेषस्येव सलिलनिधिं सरित्पतेर्विश्रमितव्यभरसहम् ॥]

किंभूतं सुवेलम् । सरित्पतेः समुद्रस्य विश्रमितव्यं विश्रामः । भावे तव्यः । तत्र भरसहं भारक्षमम् । समुद्रस्याप्यवलम्बनमित्यर्थः । कस्य कमिव । भुवनस्य मधुमथनमिव । 'विश्रमितव्यभरसहम्' इति सर्वत्र योज्यम् । तथा च त्रैलोक्यस्य विश्रामभरसहो विश्वंभरः, तस्य तदुदरवृत्तित्वात् । एवं भुवनस्य भरेण धारण- गौरवेण क्षीणस्य विह्वलस्य मधुमथनस्य शेषमिव । यथा तथाभूतविश्वंभरस्य शेष- नागस्तस्य तदङ्कशायित्वात् । एवं शेषस्य सलिलनिधिमिव । यथा शेषस्य समुद्रः, तस्य तदभ्यन्तरवर्तित्वात् । तथा सरित्पतेरयमपीति विश्रामयोग्यता परिमाणप्रक- र्षेण भवति । तथा चोत्तरोत्तरमुत्कर्षालंकारेण भुवनापेक्षया विष्णोः, तदपेक्षया शेषस्य, तदपेक्षया सिन्धोः, तदपेक्षया सुवेलस्य परिणामप्रकर्ष इति भुवनविष्णुशे- षव्यापकसमुद्राश्रयत्वेन सर्वाश्रयत्वमुक्तं सुवेलस्य । एवं च सर्वत्र सुवेलक्रोडवर्ति- त्वमेव समुद्रस्येति कटाक्षितम् । भरसहत्वेन च कल्लोलाद्यभिघातानुपद्रुतत्वेन सुवेलस्य दार्ढ्यमपीति मालोपमालंकारः । 'सहः शक्ते क्षमायुक्ते तुल्यार्थे च सहा- व्ययम्' इति कोषः ॥

भूजलाकाशवायूनामाधारतामाह—

धरणिहरेअव्वसहं उअहिभरेअव्वपवलणइप्पवहम् ।
णहमाअव्वसमत्थं खअमारुअरुम्भिअव्वजोग्गणिअम्बम् ॥ ३ ॥

[धरणीधर्तव्यसहमुदधिभर्तव्यप्रबलनदीप्रवाहम् ।
नभोमातव्यसमर्थं क्षयमारुतरोद्धव्ययोग्यनितम्बम् ॥]

एवं धरण्या धर्तव्ये धारणे सहं शक्तम् । अवष्टम्भभूतत्वात् । एतेन भूम्युत्सेधव्यापकमूलकत्वमुक्तम् । सर्वत्र भावे तव्यः । एवम्—उदधेर्भर्तव्ये पूरणे प्रबलाः समर्था नदीप्रवाहा यस्येति समुद्रसमानैकैकबहुनदीप्रवाहाधारत्वेन समुद्रादप्यधिकपरिमाणत्वेन विस्तीर्णत्वं दीर्घत्वं च । एवं नभसो मातव्ये माने समर्थमिति नभोपेक्षयाप्यतिमहत्त्वेनामूलोत्सेधस्य पूर्वापरायतिरूपदैर्घ्यस्य तिर्यग्दक्षिणोत्तरदिग्व्यापिनानाशिखरत्वेन विस्तारस्य च प्रकर्षः । एवं क्षयमारुतानां रोद्धव्यमवरोधनम् । संचारप्रतिरोध इति यावत् । तत्र योग्यः समर्थो नितम्बो यस्य तम् । एतेन मूलमूर्ध्नोरप्यतिमहत्त्वं दार्ढ्यं विस्तारो दैर्घ्यं च सूचितम् । प्रलये मिलितानामूनपञ्चाशतोऽप्यनिलानां नितम्ब एव पर्याप्तिरित्यपि ॥ यद्वा कर्मणि तव्यः । तेन धरणीरूपे धर्तव्ये सहम् । एवम् उदधिरूपे भर्तव्य इत्यन्यत्राप्यूह्यम् ॥

ऊर्ध्वाधस्तिर्यग्व्याप्तिमाह—

दूरपरिपेल्लिअदिसं दूरोणामिअसमत्थपाआलअलम् ।
दूरअरुक्खित्तणहं णवर करासण्णपाअवप्फलकुसुमम् ॥ ४ ॥

[दूरपरिप्रेरितदिशं दूरावनामितसमस्तपातालतलम् ।
दूरतरोत्क्षिप्तनभः केवलं करासन्नपादपफलकुसुमम् ॥]

एवं दूरं परिप्रेरिता दिशो येन । तिर्यक्सानुभिर्व्यापनात् । एवं दूरमवनामितमधःपातितं पातालतलं येन । तद्व्यापकमूलभागत्वात् । एवमतिदूरमुत्क्षिप्तमुत्तोलितं नभो येन । गगनातिक्रामकमस्तकत्वात् । केवलं करासन्नानि हस्तप्राप्याणि पादपानां फलकुसुमानि यत्र तमिति समृद्धवृक्षव्याप्तत्वम् । अत्रैव दूरत्वव्यभिचार इति परोपकृतिरूपगुणशालित्वम् ॥

पुनर्मूलमौलिप्रकर्षमाह—

**पासल्लागअसरिअं अमुक्कपाआलसाअरजलुच्छङ्गम् ।**
**आइवराहुव्वत्तणखणपडिउद्धट्ठिअं व मेइणिवेढम् ॥ ५ ॥**

[पार्श्वागतसरितममुक्तपातालसागरजलोत्सङ्गम् ।
आदिवराहोद्वर्तनक्षणपतितोर्ध्वस्थितमिव मेदिनीवेष्टम् ॥]

एवं पार्श्वेनागताः सरितो यस्य तम् । उपरि मेघादीनामपि संचाराभावात्सरितामत्यभाव इति । एवम् अमुक्तोऽत्यक्तः पातालसागरस्योत्सङ्गो येन । तदन्तर्वर्तिमूलकत्वात् । एवं कमिव । पूर्वनिपातवैपरीत्येन पतितस्यादिवराहस्योद्वर्तनक्षणे ऊर्ध्वीभूय स्थितं मेदिनीवेष्टं भूम्येकदेशमिव । यदा आदिवराहः पातालपङ्के पतितः सन्पार्श्वपरिवर्तनं कृतवान्, तदा तत्पार्श्वप्रेरितः पङ्कोत्करो गगनमभिव्याप्य स्थितः । स एवेदानीमपि सरिद्बुद्धिसमर्पकप्रसरज्जलः पातालस्थसमुद्रजलस्पर्शात्पिण्डीभूय सुवेलत्वेन प्रतिभासत इति तद्देहे महत्त्वानुसारेण पङ्कोत्करमहत्त्वं सुवेलस्यैव महत्त्वं गमयति । सर्वमिदमौत्प्रेक्षिकमिति भावः ॥ यद्वा आदिवराहस्योद्वर्तनमितस्ततः परिभ्रमणं, तत्क्षणे पतितं सदूर्ध्वं व्याप्य स्थितं दन्तस्थं मेदिन्या वेष्टं मण्डलमिवेत्यर्थः । उद्वर्तनक्षणे वलितोर्ध्वं स्थितं मेदिनीवेष्टमिवेत्यपि कश्चित् ॥

मूलदार्ढ्यमाह—

**पाआलभरिअमूलं वज्जमुहाओडणट्ठविअणिक्कम्पम् ।**
**आलाणक्खम्भं विअ सुरहत्थिक्खन्धणिहसमसिणिअपासम् ॥६॥**

[पातालभृतमूलं वज्रमुखाकोलनस्थापितनिष्कम्पम् ।
आलानस्तम्भमिव सुरहस्तिस्कन्धनिघर्षमसृणितपार्श्वम् ॥]

भृतं व्याप्तं पातालं येनैतादृशम् । पाताले भृतं पूर्णं वा मूलं यस्येति स्थौल्यं दैर्घ्यं च मूलस्योक्तम् । एवं वज्रस्य मुखेन यदाकोलनं मृत्तिकामभिहत्य दृढीकरणं तेन स्थापितम् । अत एव निष्कम्पम् । एवं सुरहस्तिनामैरावतादीनां स्कन्धस्य निघर्षणेन कण्डूयनादिव्यापारेण मसृणितं श्लिष्टम्, न तु भग्नम्, पार्श्वं यस्य तमिति तेषां स्कन्धस्य पार्श्वं एव पर्याप्तेस्तेभ्योऽप्युच्चत्वं दृढत्वं चोक्तम् । अत्रोत्प्रेक्षते— तेषामालानस्तम्भमिव । बन्धनस्तम्भस्तु बन्धन्यापेक्षया प्रायस्तुङ्ग एव भवतीति भावः । स्तम्भमपि किंभूतम् । उक्तविशेषणत्रयविशिष्टम् ॥

पुनर्मूलमौलिप्रकर्षमाह—

विमलिअरसाअलेण वि विसहरवइणा अदिट्ठमूलच्छेअम् ।
अप्पत्ततुङ्गसिहरं तिहुअणहरणपरिवड्ढिएण वि हरिणा ॥ ७ ॥

[विमर्दितरसातलेनापि विषधरपतिनादृष्टमूलच्छेदम् ।
अप्राप्ततुङ्गशिखरं त्रिभुवनभरणपरिवर्धितेनापि हरिणा ॥]

विमर्दितमितस्ततः संचारेण घृष्टं रसातलं येन तादृशेनापि विषधराणां पत्या शेषेणादृष्टो मूलच्छेदो मूलभागो यस्य तमिति । पातालादप्यधोवर्तिमूलप्रदेशमित्यर्थः । द्विसहस्रदृष्टिना दूरादपि द्रष्टुं न शक्यते, किं पुनः स्प्रष्टुमिति भावः । एवं त्रिभुवनस्य भरणं स्वदेहेन पूरणं हरणमाक्रमणं वा तदर्थं परिवर्धितेनापि हरिणा त्रिविक्रमेणाप्राप्तानि हस्तेनाप्यस्पृष्टानि तुङ्गानि शिखराणि यस्येत्यनवच्छिन्नमस्तकमित्यर्थः । 'मूलुच्छङ्गम्' इति पाठे 'मूलोत्सङ्गम्' इत्यर्थः ॥

पुनर्दार्ढ्यमेवाह—

विच्छूढोअहिसलिलं कडअभमन्तभुअइन्ददिण्णावेढम् ।
पासट्ठिएण रइणा करेहिँ हरिणा व मन्दरं उवऊढम् ॥ ८ ॥

[विक्षिप्तोदधिसलिलं कटकभ्रमद्भुजगेन्द्रदत्तावेष्टम् ।
पार्श्वस्थितेन रविणा करैर्हरिणेव मन्दरमुपगूढम् ॥]

एवं विक्षिप्तं तटेन प्रतिहत्य परावर्तितमुदधिसलिलं येन तम् । एतेन तीरवृत्तित्वेऽपि समुद्रेणाप्यनुन्मूलनीयम् । एवं कटके भ्रमता भुजगेन्द्रेण वासुकिना दत्तमावेष्टमालिङ्गनं यस्मै । तथा च तस्यापि कटक एव संचारो न तु शिरःपर्यन्तप्राप्तिरिति भावः । एवं पार्श्वस्थितेन न तूपरि गन्तुं शक्तेन रविणा करैस्तेजोभिरुपगूढमालिङ्गितम् । अन्यत्रापि पार्श्वस्थितेन करेणैवालिङ्गनं क्रियत इति ध्वनिः । कमिव । पार्श्वस्थितेन हरिणा चतुर्भिरपि करैरुपगूढं समुद्रमथनसमये समाश्लिष्टं मन्दरमिव । तमपि किंभूतम् । विक्षिप्तं स्वभ्रमणेन परितश्चालितमुदधिसलिलं येन । एवं कटके भ्रमता नेत्रीभूतेन शेषेण दत्तमावेष्टं वलयीभावो यत्रेत्युपमा ॥

पुनर्मूलमौलिमहत्त्वमाह—

**सेससिररअणघट्टिअमणिमूलुज्जोअहअरसाअलतिमिरम् ।**
**विसमुद्धसिहरसंकडपणट्ठरविमण्डलन्धआरिअगअणम् ॥ ९ ॥**

[शेषशिरोरत्नघट्टितमणिमूलोद्द्योतहतरसातलतिमिरम् ।
विषमोर्ध्वशिखरसंकटप्रनष्टरविमण्डलान्धकारितगगनम् ॥]

एवं शेषस्य शिरोरत्नैर्घट्टितानां घृष्टानां मणीनां अर्थात् स्वमूलस्थानां मूलोद्द्योतैर्घृष्टाधोभागतेजोभिर्हतं रसातलस्य तिमिरं येन तम् । यदा यदा शेषस्य शिरसि सुवेलमूलस्थित्या भारो भवति तदा तदा शिरःसंचारेण तद्रत्नैः सहैतन्मणीनां संघट्टो जायते इति मूलमहत्त्वं मणीनामाकरत्वं चोक्तम् । एवं विषमाणां वक्रकोटरादिमताम् । ऊर्ध्वानामुच्चानां शिखराणां संकटेषु मिथोऽन्तरालेषु प्रनष्टेनाकस्मात्तिरोभूतेन रविमण्डलेनान्धकारितं गगनं येन । तथा च पार्श्वत एव सूर्यस्य संचारो न तु मौलाविति कदाचित्कोटरप्रविष्टत्वेनान्धकार इत्युच्चत्वमिति भावः ॥

पुनरुच्चतामाह—

**ससिबिम्बपासणिहसणकसणसिलाभित्तिपसरिआमअलेहम् ।**
**जोण्हाजलपव्वालिअविसमुम्हाअन्तमुणिअरविरहमग्गम् ॥ १० ॥**

[शशिबिम्बपार्श्वनिघर्षणकृष्णशिलाभित्तिप्रसृतामृतलेखम् ।
ज्योत्स्नाजलप्रप्लावितविषमोष्मायमाणज्ञातरविरथमार्गम् ॥]

एवं शशिबिम्बस्य पार्श्वनिघर्षणेन कृष्णशिलाभित्तिषु प्रसृता अमृतलेखा यत्र तम् । शशिबिम्बस्य मृदुत्वेन पार्श्वशिलाभित्तेः कठिनतया मिथःसंबन्धादमृतक्षरणमिति भावः । एवं ज्योत्स्ना चन्द्रकान्तिः सैव जलं हिमरूपत्वात्, तेन प्रप्लावितः पूरितः । अत एव विषमं यथा स्यात्तथोष्मायमाणो बाष्पायमाणः, तत एव ज्ञातो रविरथस्य मार्गो यत्र । रविरथस्य वह्निमयत्वेन देध्मीयमानस्तन्मार्गो विधुकरस्वरूपजलसंबन्धोद्भूतबाष्परूपधूमेनानुमीयत इत्यर्थः । न केवलं रविरेवाधस्तादस्य संचरति, किं तु द्विगुणोपरिवर्ती चन्द्रोऽपीति भावः । लतादिव्यवहितत्वेन तन्मार्गस्य क्वचित्क्वचिज्ज्योत्स्नासंबन्धेनोष्मायमाणत्वमिति सूचयितुं विषमपदोपादानम् ॥

पुनस्तदेवाह—

सिहरालीणमिअङ्कं विरलट्ठिअगहिअसलिलजलअक्खण्डम् ।
खुडिउव्वूढमुणालं णिसासु विसमहिअकद्दमं व सुरगअम् ॥ ११ ॥

[शिखरालीनमृगाङ्कं विरलस्थितगृहीतसलिलजलदखण्डम् ।
खण्डतोद्व्यूढमृणालं निशासु विषमहितकर्दममिव सुरगजम् ॥]

एवं निशासु ज्योत्स्नोत्कर्षकाले शिखरे आलीनः संबद्धो मृगाङ्को यत्र तम् । एवं विरलस्थिताः क्वचित्क्वचिदवस्थिता गृहीतसलिला जलदखण्डा यत्र । जलपूर्णा अपि जलदा व्याप्तुं न क्षमन्ते इति महत्त्वमस्य विरलस्थितपदेन सूचितम् । कमिव । सुरगजमिव । किंभूतम् । खण्डितं सत् उद्व्यूढमुपरिधृतं मृणालं येन तम् । एवं विषमं यथा स्यात्तथा हितः क्वचित्क्वचित्तनावारोपितः कर्दमो येन गजस्वाभाव्यात् । तथा च भूधारणक्षमतासूचनाय तुङ्गत्वादिना सुरगजसुवेलयोः, श्वैत्येन बिसचन्द्रयोः, श्यामतया च कर्दमजलदयोः साम्यमित्युपमा ॥

नदीसंबन्धमाह—

हरिअवणराइपिसुणिअदूरअरालोअसिहरसरिआमग्गम् ।
पवणुक्खुडिअकिलामिअमिअङ्कपुट्ठिपडिउस्ससन्तकिसलअम् १२

[हरितवनराजिपिशुनितदूरतरालोकशिखरसरिन्मार्गम् ।
पवनोत्खण्डितक्लाम्यन्मृगाङ्कपृष्ठप्रत्युच्छ्वसत्किसलयम् ॥]

एवं हरितया वनराज्या पिशुनितो ज्ञापितो दूरतरादालोको दर्शनं यस्य तथाभूतः शिखरः सरितां मार्गो यत्र तम् । नित्यं जलसंपर्केण हरिद्वर्णतृणवृक्षादिलेखया तटयोर्दूरादेव दृश्यमानया ज्ञायते नदीसंचारपथोऽयमिति भावः । एतेन रमणीयत्वम् । एवं पवनेनोत्खण्डितानि अतः क्लाम्यन्ति शुष्यन्ति सन्ति मृगाङ्कस्य पृष्ठे संबद्धे इत्यर्थात् प्रत्युच्छ्वसन्ति प्रत्युज्जीवन्ति किसलयानि यत्र । चन्द्रपृष्ठे त्रुटित्वा पतितानां किसलयानां सुधासंबन्धेन पुनर्नवकान्त्युदयादिति भावः । एतेन चन्द्रपृष्ठस्यापरभागरूपस्य पतितपत्रसंबन्धादुच्चैस्त्वमुक्तम् । त्रुटितपत्राणां शोषणं चिरेण भवतीति विदूरपतनसूचनेनाप्युच्चतरत्वम् ॥

सिन्धौ तत्प्रतिबिम्बमाह—

दूरुद्धाइअसिहरं जलणिहिजलदिट्ठविअडपाअडपडिमम् ।
उप्पाआसणिपहअं उद्धप्फुडिअपडिएक्कपासं व ठिअम् ॥ १३ ॥

[दूरोद्धावितशिखरं जलनिधिजलदृष्टविकटप्रकटप्रतिमम् ।
उत्पाताशनिप्रहतमूर्ध्वस्फुटितपतितैकपार्श्वमिव स्थितम् ॥]

एवं दूरं व्याप्योद्धावितानि दिशि दिशि गन्तुं कृतवेगानीव शिखराणि यस्य तम् । एवं जलनिधेर्जले दृष्टा विकटा महती प्रकटा व्यक्ता प्रतिमा प्रतिबिम्बो यस्य । अत्रोत्प्रेक्षते—उत्पाताशन्या वज्रेण प्रहतं ताडितम् अत एवोर्ध्वमुपरि स्फुटितं सत्पतितमेकं पार्श्वं यस्य तमिव स्थितम् । समुद्रव्यापी तत्प्रतिबिम्बः स्फुटिततदेकदेशत्वेनोत्प्रेक्षित इति प्रतिबिम्बस्य तदेकदेशभ्रमविषयतया महत्त्वं सुवेलस्यैव महत्त्वं ज्ञापयति । सुवेलस्यैकदेशत्रुटिरुत्पातादेव भवतीति तथोक्तम् । वज्रमुपर्येव पततीत्यूर्ध्वपदम् ॥

गुरुत्वमाह—

गुरुभरसेसाहिप्फणवारंवारपडिरुद्धमूलुच्छङ्गम् ।
खअमारुउक्खआणिअतुङ्गअडावडिअभिण्णसेसमहिहरम् ॥१४॥

[गुरुभरशेषाहिफणवारंवारप्रतिरुद्धमूलोत्सङ्गम् ।
क्षयमारुतोत्खातानीततुङ्गतटापतितभिन्नशेषमहीधरम् ॥]

गुरुणा भरेण गौरवेण गुरुभरेण वा शेषाहिना फणैर्वारंवारं प्रतिरुद्धौ धृतो मूलोत्सङ्गो यस्य तम् । तथा च फणसहस्रेऽपि दया यैः कियद्भिर्धारणं तदा तदितरेषां विश्रामः, यदा तु विश्रान्तैरमीभिर्धारणं तदा तेषां विश्राम इति यन्त्रण-भिया संभूय सर्वैः कदापि न धारयतीति वारंवारपदद्योत्यं गौरवाधिक्यम् । एवं क्षयमारुतैरुत्खाता उत्पाटिता अथानीता उद्धूय प्रापिताः, तदनु तुङ्गतटे आपतिताः सन्तो भिन्नाश्चूर्णाः शेषा महीधरा यत्रेत्युपरिप्रान्तयोरप्यवकाशाभावादत्रैव तेषां पात इति विस्तीर्णता तुङ्गता दृढता दृढमूलता प्रलयेऽप्यनुच्छेद्यता च सूचिता ॥

श्वापदसंकीर्णतामाह—

गहिअजलमेहपेल्लिअणिवाअन्तणिहुअट्ठिअमहामहिसम् ।
णिहअगअकुम्भलोहिअसिलाअलोसुक्खबद्धमुत्तावडलम् ॥ १५ ॥
[गृहीतजलमेघप्रेरितनिर्वाप्यमाणनिभृतस्थितमहामहिषम् ।
निहतगजकुम्भलोहितशिलातलावशुष्कबद्धमुक्तापटलम् ॥]

गृहीतजलैर्मेघैः प्रेरिताः सन्तो निर्वाप्यमाणाः सुखीक्रियमाणा अत एव निभृतस्थिताः सुखवशान्निःस्पन्दस्थिता महान्तो महिषा यत्र तम् । उपरि सूरकरतप्तेषु महिषेषु सजातीयबुद्ध्या मेघैर्यथा यथा यन्त्रणलक्षणं प्रेरणं क्रियते तथा तथा महिषाणां शैत्यलाभादधिकनिश्चलत्वमिति निभृतपदद्योत्यं वस्तु । एवं निहतानां गजानां कुम्भयोर्लोहितेन हेतुना शिलातलेष्ववशुष्काणि सन्ति बद्धानि दृढलग्नानि मुक्तापटलानि यत्र । तथा च सिंहविदारितगजकुम्भस्थमुक्ताः शिलासु पतित्वा संनिहितसूरकरशोषणादतिस्त्यानीभूतरुधिरतया दृढीभूय स्थिता इत्यर्थः । इति राक्षसैरप्यगम्यकतिपयदेशकत्वं सूचितम् ॥

पुनस्तदेवाह—

लवणजलसीहराहअदरुब्भमन्तदुममुद्धपल्लवराअम् ।
सींहरवभीपअत्थिअणिउञ्चिएक्कचलणट्ठिउक्कण्णमअम् ॥ १६ ॥
[लवणजलशीकराहतदरोद्भ्रमद्द्रुममुग्धपल्लवरागम् ।
सिंहरवभीतप्रस्थितनिकुञ्चितैकचरणस्थितोत्कर्णमृगम् ॥]

एवं लवणरूपं जलम्, अर्थात्समुद्रस्य, तच्छीकरैराहतः स्पृष्टोऽत एव दरोद्भ्रमन्नीषदन्यरूपतां गच्छन् किंचिदेव प्रादुर्भवन्निति वा । द्रुमस्य मुग्धानां नूतनानां पल्लवानां रागो लौहित्यं यत्र तम् । एवं सिंहरवेण भीताः सन्तः प्रस्थिताः पलायिता अथ निकुञ्चितमीषद्भुग्नितमेकं चरणं येषां तथाभूताः सन्तः स्थिता उत्थितमौलित्वादुत्कर्णा उत्थितकर्णा मृगा यत्र तम् । पुरतोऽपि तत्प्रतिरवशङ्कावशात्पश्चादवलोकनाय वेति भावः । जातिरलंकारः ॥

पुनर्विस्तारमाह—

कडअपरिपेल्लिआणं रइअरपाअडिअकन्दराभरिआणम् ।
अब्भन्तरट्ठिआणं परिल्लपासपरिसंठिअं व दिसाणम् ॥ १७ ॥

[कटकप्रतिप्रेरितानां रविकरप्रकटितकन्दराभृतानाम् ।
अभ्यन्तरस्थितानामपरपार्श्वपरिसंस्थितमिव दिशाम् ॥]

एवं दिशामपरपार्श्वे दक्षिणपार्श्वे परिसंस्थितमिव । दक्षिणदिगनुपलम्भादिति भावः । किंभूतानाम् । कटकेन प्रतिप्रेरितानामुत्तरदिगभिमुखीकृत्यापसारितानाम् । एवं रविकरैः प्रकटितासु कन्दरासु भृतानां व्याप्तानाम् । अत एवाभ्यन्तरे स्थितानाम् । तथा च यथा यथा दक्षिणाशातः कटकवृद्धिः, तथा तथोत्तराशां प्रति प्रेरिता दिशो दैवादुत्तराशावर्त्यैकैककन्दरासु पर्यवसन्नाः, तथैव रवेरपि तत्र प्रविष्टस्य तेजोभिरतिप्रकटं लक्ष्यन्त इति व्यञ्जनागम्यं सर्वमिदमौत्प्रेक्षिकं विस्तीर्णतां गमयति ॥ वयं तु दिशामपरपार्श्वे परितो बहिःस्थितमिव । किंभूतानाम् । पूर्वनिपातानियमात्प्रतिप्रेरितं कटकं याभिस्तासां प्रतिप्रेरितकटकानामित्यर्थः । तथा च दशभिरपि दिग्भिः कन्दरायां प्रविश्य कटकं प्रतिप्रेरितम् । अतो दशदिक्प्रान्तेषु ब्रह्माण्डगोलवत्तत्स्थितम् । दिशस्तु कन्दरायामेव पर्याप्ताः । तदुक्तम्—अभ्यन्तरस्थितानामिति ब्रूमः ॥

उदात्ततामाह—

रअणिआसु[1] दूरुग्गअसिहरअणंतअं
सुहणिसण्णमअखण्डिअसिहरअणन्तअम् ।
कुविअरामभिण्णोअहिदढसरणोल्लिअं
सिहरलग्गससिमण्डलणीसरणोल्लिअम् ॥ १८ ॥

[रजनिकासु[2] दूरोद्गतशिखररत्नैस्ततं
सुखनिषण्णमृगखण्डितशिखरतृणान्तम् ।
कुपितरामभिन्नोदधिदृढशरनोदितं
शिखरलग्नशशिमण्डलनिःसरणार्द्रितम् ॥]

१. 'रअणीसु' ख. २. 'रजनीषु' ख.

कीदृशम् । रजनीषु दूरादुद्गतैः प्रकाशितैः शिखराणां रत्नैस्ततं व्याप्तम् । उद्गतमिति शिखरविशेषणं वा । यद्वा—दूरोद्गतशिखररत्नान्तं दूरोद्गता शिखा तेजोधारा येषां तथाभूतानि रत्नानि अन्ते स्वरूपे प्रान्ते वा यस्य तम् । तै रत्नैरन्तं मनोहरमिति वा । यद्वा दूरोद्गतशिखरानन्तकं दूरमुद्गतैरुत्थितैः शिखरैरनन्तमपर्यवसानं कं मस्तकं यस्य । अत्युच्चत्वात् । अथवा दूरोद्गतशिखराण्येवानन्तानि बहुसंख्यानि कानि मस्तकानि यस्य । शिखराणामेव मस्तकरूपत्वादित्यर्थः । अतः परं रजनीष्विति चरमपदान्वितमेव । तथा सति व्याख्या—दूरोद्गतशिखरगणान्तदं दूरोद्गतशिखरगणस्यान्तमवसानं द्यति खण्डयति । अनवसानशिखरगणमित्यर्थः । शिखरगणे अन्तं मनोहरं कं जलं यस्येति वा । यद्वा दूरोद्गतशिखरचणान्तकम् । चणप्प्रत्ययेन दूरोद्गतशिखरख्यातोऽन्तः स्वरूपं यस्य । स्वार्थे कन् । यद्वा शिखरजनान्तगम् । शिखरैर्जनस्य लोकस्यान्तगं पर्यन्तगामिनम् । यद्वा दूरोद्गतशिखरचनान्तगम् । दूरोद्गता शिखा शिरो यत्र तादृशी या रचना सृष्टिस्तस्या अन्तगं पारगामिनम् । तया अन्तकं मनोहरमिति वा । प्रशंसायां कन् । एवं सुखनिषण्णैर्मृगैः खण्डितश्चर्वितः शिखरतृणानामन्तोऽग्रं यत्र तम् । अथवा मृगैः खण्डितानि शिखराण्यग्राणि यस्य(येषां) तथाभूतानि तृणान्यन्ते प्रान्ते यस्येत्यर्थः । यद्वा मृगखण्डितशिखरतृणं ततं विस्तीर्णमित्यर्थः । यद्वा सुखनिषण्णमृगखण्ड्यसिधरजनान्तकम् । सुखनिषण्णमृगखण्डिनोऽसिधराः खड्गपाणयो जना एव अन्तको यमो यत्र मृगयायां मृगनाशकत्वादित्यर्थः । एवं कुपितरामस्य भिन्नोदधिस्ताडितसमुद्रो दृढो यः शरस्तेन नोदितं प्रेरितम् । रामशरः समुद्रं भित्त्वा तत्र लग्न इत्यर्थः । तथा च तादृशशराभेद्यत्वेन सारवत्त्वं सूचितम् । यद्वा कुपितरामेण भिन्नो य उदधिः स एव दृढशरस्तेन नोदितम् । शराभिघातोद्वृत्तसमुद्रेणाक्रान्तत्वात् । एवं शिखरे लग्नस्य शशिमण्डलस्य निःसरणेन शिखरवेधतः सुधाक्षरणेनार्द्रीकृतम् । सजलमित्यर्थः । यद्वा शिखरे लग्नानां शशिमण्डलानां चन्द्रकान्तचक्रवालानां निःसरणेन जलनिःस्यन्देनार्द्रीकृतम् । 'रजनीषु' इत्यनुवृत्तेर्निशि चन्द्रकान्ता जलं स्रवन्तीति भावः।'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहरे' इति विश्वः॥उपग(?)लितकम्॥

अत्युच्चतामाह—

**दूरोवाहिअमूलं रविअरवोलीणसिहरणट्ठालोअम् ।**
**अद्धत्थमिआआमं जहेअ उअहिसलिले तहेअ णहअले ॥ १९ ॥**

[दूरापवाहितमूलं रविकरव्यतिक्रान्तशिखरनष्टालोकम् ।
अर्धास्तमितायामं यथैवोदधिसलिले तथैव नभस्तले ॥]

एवं दूरं व्याप्यापवाहितमधःप्रापितं मूलं येन तम् । पातालाक्रान्तमूलमित्यर्थः । एवं रविकरव्यतिक्रान्तेषु शिखरेषु नष्ट आलोकस्तेजो यत्र । तेन तेषु तमोमयम् । आलोको दर्शनं वा यस्य । तेन वा तदवच्छेदेनादृश्यम् । 'आलोकौ दर्शनोद्योतौ' इत्यमरः । अत एव यथैवोदधिसलिले मूलावच्छेदेनार्धास्तमितायामं अर्धेऽस्तमितो नष्ट इवायामो दैर्घ्यं यस्य तथा तथैव नभस्तलेऽपि शिखरावच्छेदेनेत्यर्थः । एकत्र सलिलच्छन्नतया परतस्तेजोविरहेणादृश्यत्वात् । तथा च मध्यावच्छेदेनैव दृश्यमिति भावः ॥

चन्दनवत्तामाह—

पवणन्दोलिअचन्दणसंघट्टुट्ठिअसुगन्धिधूमुप्पीडम् ।
दरपीओअहिगरुइअसेसद्धन्तजलआवलम्बिअसिहरम् ॥ २० ॥

[पवनान्दोलितचन्दनसंघट्टोत्थितसुगन्धिधूमोत्पीडम् ।
दरपीतोदधिगुरुकितशेषार्धान्तजलदावलम्बितशिखरम् ॥]

एवं पवनेनान्दोलितानां चन्दनानां मिथः संघट्टेनोत्थितः सुगन्धिधूमस्योत्पीडो यत्र तम् । धूममयमित्यर्थः । एवं दरपीतोदधिरीषत्पीतसमुद्रजलोऽत एव गुरुकितः शेषार्धान्तः पश्चाद्भागो यस्य तथाविधेन जलदेन अवलम्बितं शिखरं यस्य । जलपानहेतुकगुरुत्वनिबन्धनपतनभयादिति भावः ॥

नानावस्तुसंबन्धमाह—

तलपडिहअसाअरअं उद्धोज्झरविहुअसीहरोसाअरअम् ।
गहमालामेलिअअं सिहरट्ठिअचन्दमण्डलामेलिअअम् ॥ २१ ॥

[तलप्रतिहतसागरकमूर्ध्वनिर्झरविधुतसिंहरोषाकरम् ।
ग्रहमालामेलितकं शिखरस्थितचन्द्रमण्डलापीडम् ॥]

एवं तलेन मूलेन प्रतिहतमवष्टब्धं सागरस्य कं जलं येन तम् । एवमूर्ध्ववर्तिना निर्झरेण विधुतस्य निपत्याहतस्य सिंहस्य रोषाणामाकरमुत्पत्तिस्थानम् । उपरितः केन ताडितोऽस्मीत्याशयात् । एवं ग्रहाणां नक्षत्राणां मालया मेलितं योजितं कं शिरो यस्य, तावदुच्चत्वात् । एवं शिखरस्थितं चन्द्रमण्डलमापीडः पुष्पमाला यस्य तम् ॥

पुनस्तदेवाह—

ससिपुरओ पसरिअअं कुहरेसु णिवाअणिप्पअम्पसरिअअम् ।
मणिमअपासुत्तमअं कणअसिलासीणसुहिअपासुत्तमअम् ॥ २२ ॥
[शशिपुरतः प्रसृतकं कुहरेषु निवातनिष्प्रकम्पसरित्कम् ।
मणिमयपार्श्वोत्तमं कनकशिलासीनसुखितप्रसुप्तमृगम् ॥]

एवं शशिनः पुरतः प्रसृतं गतं कं मस्तकं यस्य तम् । चन्द्रमण्डलातिक्रान्तमौलिमित्यर्थः । एवं कुहरेषु निम्नप्रदेशेषु निवातेन पवनाभावेन निष्प्रकम्पाः सरितो यत्र । स्वार्थे कन् । निष्प्रकम्पं सरितां कं जलं यत्रेति वा । एवं मणिमयेन पार्श्वेन उत्तमं रमणीयम् । यद्वा मणिमयपार्श्वोत्तमतम् । मणिमयेन पार्श्वेन उत्तमता यस्य । यद्वा मणिमयपार्श्वोत्तमस्कम् । मणिमयपार्श्वेन तेजोमयतया उत्सारितं तमो यस्मात् । यद्वा मणिमयपार्श्वोत्तमदम् । मणिमयपार्श्वेन उत्तो दत्तो मदो यस्मै । आत्त इतिवदुत्पूर्वाद्दुत्त इत्यपि । यद्वा मणिमयपार्श्वोत्तमकम् । मणिमयपार्श्वेन उत्तमः, तद्द्युतिसंपर्कात्तेजस्विकः । सूर्यो यत्र पार्श्वे एव, तस्य भ्रमणमित्यर्थः । अथवा मणिमयपार्श्वेन उत्तमं कं शिरो यस्य, जलं सुखं वा यत्रेत्यर्थः । एवं कनकशिलासु आसीना अत एव सुखिताः सुहिता वा सन्तः प्रसुप्ता मृगा यत्र तम् ॥

श्वापदपदतामाह—

भिण्णुक्खित्तपरम्मुहवलन्तसद्दूलगहिअगअकुम्भअडम् ।
बिलपासुत्तभुअंगमजलधाराआरणिग्गअमणिच्छाअम् ॥ २३ ॥
[भिन्नोत्क्षिप्तपराङ्मुखवलमानशार्दूलगृहीतगजकुम्भतटम् ।
बिलप्रसुप्तभुजंगमजलधाराकारनिर्गतमणिच्छायम् ॥]

एवं भिन्नैर्दन्ताभ्यां विद्धैरर्थात्पृष्ठोत्क्षिप्तैरूर्ध्वमुत्तोलितैः ततः तत्रैव पराङ्मुखं पश्चादभिमुखं वलमानैः वक्रीभवद्भिः शार्दूलैः गृहीतानि कवलितानि गजानां कुम्भतटानि यत्र तम् । दन्तविद्धपृष्ठोत्तोलितशार्दूलकवलितकरिकुम्भस्थलमित्यर्थः । एवं बिलेषु विवरेषु प्रसुप्तानां भुजंगमानां जलधाराकारा निर्गता बिलेभ्यो बहिर्भूताः फणावर्तिनां मणीनां छाया रुचयो यत्र । पर्वतविवरादकस्माद्दण्डाकारं जलमुत्तिष्ठतीति फणामणितेजोवीचिरपि तथैव प्रतिभासत इति भावः ॥

पुनस्तदेवाह—

**अट्ठिअसमुद्दसीहरदुप्परिमासणिहकण्टअन्तमणिअडम् ।**
**णहलग्गमोत्तिआफलगअसीसारूढणीहरन्तमइन्दम् ॥ २४ ॥**

[अस्थितसमुद्रशीकरदुष्परिमर्षनिभकण्टकायमानमणितटम् ।
नखलग्नमौक्तिकफलगजशीर्षारूढनिर्ह्रादमृगेन्द्रम् ॥]

अस्थितैरनवरतैश्चञ्चलैर्वा समुद्रशीकरैर्दुष्परिमर्षनिभं दुःस्पर्शनीयतुल्यं कण्टकायमानं दुरन्तत्वात्कण्टकप्रायं मणिमयं तटं यत्र तम् । तथा च मणिमयप्रदेशस्य तुङ्गतया शीकरैरप्यगम्यत्वमिति प्रतिपादयितुं कण्टकसमानाकारत्वेन शीकरकर्तृकमस्पृश्यत्वमुत्प्रेक्षितम् । यद्वा तेषां शीकराणां दुष्परिमर्षः कण्टकप्रधानो वृक्षविशेषस्तन्निभं कण्टकायमानमित्याद्यर्थस्तेनाप्यस्पृश्यत्वमेवोक्तम् । एवं नखेषु लग्नानि मौक्तिकफलानि येषां तथाभूतानां गजानां शीर्षेष्वारूढा निर्ह्रादशालिनो मृगेन्द्रा यत्र तम् ॥

**ओवड्ढकोमलाइं वहमाणं मेहविमलिअविमुक्काइं ।**
**कप्पलआवसुआइअपवणुद्धुअधवलअंसुआइ वणाइं ॥ २५ ॥**

[अववर्षकोमलानि वहमानं मेघविमर्दितविमुक्तानि ।
कल्पलताशोषितपवनोद्धूतधवलांशुकानि वनानि ॥]

एवं वनानि वहमानम् । किंभूतानि । मेघेन विमर्दितानि अथ त्यक्तानि अत एवाववर्षेण वृष्ट्या कोमलानि जलसंपर्कात् । एवं कल्पलतायां शोषितानि पवनोद्धूतानि धवलान्यंशुकानि येषु । वृष्ट्या आर्द्रीकृतत्वात् कल्पलतासु वस्त्राणामपि सत्त्वात् । 'धअवडंसुआणि' इति पाठे ध्वजपटरूपाण्यंशुकानि येष्वित्यर्थः । वस्त्रं लतादौ शोष्यत इति समाचारः ॥

नदीप्रवाहमाह—

**आरूढोअहिसलिले अद्धुक्खअसरसविसमपासद्दुमे ।**
**कुसुमभरिए वहन्तं फलिहअडुत्ताणपत्थिए णइसोत्ते ॥ २६ ॥**

[आरूढोदधिसलिलान्यर्धोत्खातसरसविषमपार्श्वद्रुमाणि ।
कुसुमभृतानि वहन्तं स्फटिकतटोत्तानप्रस्थितानि नदीस्रोतांसि ॥]

एवं नदीस्रोतांसि वहन्तम् । कीदृशानि । आरूढानि प्रविष्टानि अतिक्रान्तानि

वा उदधिसलिलानि येषु यैर्वा । उभयेषामुभयत्र प्राचुर्यादुभयथापि नदीनां प्रकर्षः । प्रथमे महत्त्वाद् द्वितीयेऽभिभावकत्वात् । एवमर्धे उत्खाता जलवेगापनीतभूमितया उत्पाटिताः सरसा जलसंपर्काद् विषमा मृत्तिकापगमादीषद्द्रुमाः पार्श्वद्रुमा येषु तानि । अत एव तद्द्रुमाणामेव कुसुमैर्भृतानि पूर्णानि । एवं स्फटिकतटे उत्तानानि अगभीराणि सन्ति प्रस्थितानि प्रसृतानि । तत्र खातं कर्तुमशक्तत्वादिति भावः । 'अगाधमतलस्पर्शमुत्तानं तद्विपर्यये' ॥

पुनरुत्तुङ्गतामाह—

रविरहतुरंगमाणं वाआइद्धसिहरोज्झरेहि धुवन्तम् ।
थोओल्लपग्गहाइं लालाफेणलवगब्भिणाइ मुहाइं ॥ २७ ॥

[रविरथतुरंगमाणां वातोद्धूतशिखरनिर्झरैर्धावयन्तम् ।
स्तोकार्द्रप्रग्रहाणि लालाफेनलवगर्भितानि मुखानि ॥]

एवं रविरथतुरंगमाणां मुखानि वातोद्धूतैः शिखरनिर्झरैर्धावयन्तं क्षालयन्तम् । कीदृशानि । स्तोकमल्पमार्द्रप्रग्रहाणि । प्रग्रहो वल्गा । एवं लाला मुखनिष्ठ्यूतक्लेदः तद्रूपस्य फेनस्य लवाः खण्डा गर्भिता अन्तःस्थिता येषु तानि अन्यत्राप्यश्वानां संचारश्रमे सति फेनिलानि मुखानि क्षाल्यन्त इति ध्वनिः ॥

तदेवाह—

दीहरसिहरालग्गं पज्जिलओसहिसिहाहअं वहमाणम् ।
पाअडिअमअकलङ्कं णिसासु कज्जलइओअरं व मिअङ्कम् ॥ २८ ॥

[दीर्घशिखरालग्नं प्रज्वलितौषधिशिखराहतं वहमानम् ।
प्रकटितमृगकलङ्कं निशासु कज्जलितोदरमिव मृगाङ्कम् ॥]

एवं दीर्घेषु शिखरेषु आलग्नं मृगाङ्कं निशासु प्रज्वलितानामोषधीनां शिखराभिहतं स्पष्टं वहमानम् । किंभूतम् । प्रकटितो मृगरूपः कलङ्को यत्र तम् । उत्प्रेक्ष्यते—कज्जलितं सकज्जलमुदरं यस्य तथाभूतमिव । अन्यदपि शरावादिकं निशि लोष्टत्रये दीपोपरि निधीयमानं सकज्जलं भवतीति ध्वनिः । प्रकृते महत्त्वादेकदैव त्रिकूटस्य तस्य त्रिष्वपि लोष्टप्रायेषु शृङ्गेषु लग्नो विधुः शरावस्तदधोवृत्तिरोषधिदीपः कलङ्कः कज्जलमिति भावः ॥

नदीनामाधिक्यमाह—

उद्धरिअधरणिविअडं आइवराहहिअवङ्कदूरोआढम् ।
णइसोत्तिहिंभरन्तं खअरइसंतावसोसिअं मअरहरम् ॥ २९ ॥

[उद्धृतधरणीविकटमादिवराहहृतपङ्कदूरावगाढम् ।
नदीस्रोतोभिर्भरमाणं क्षयरविसंतापशोषितं मकरगृहम् ॥]

मकरगृहं नदीनां स्रोतोभिर्भरमाणं पूरयन्तम् । तत्र बीजमाह—किंभूतम् । उद्धृताया धरण्या विकटं तुच्छम् । तथा च भूमिप्रमाणाधिकगर्भमित्यर्थः । अथादिवराहेण हृतैः पङ्कैर्दूरं व्याप्य अवगाढं गभीरम् । एवं क्षयकालीनरविभ्यः संतापाच्छोषितम् । अयं भावः—प्रथमं वराहेण भूमिराकृष्टा, तदनु अङ्गलेपात्पङ्कमाहितम्, पश्चात्प्रलयरविकरैः स्थितमपि जलं शोषितम्, इत्थमतितुच्छसमुद्रपूरणक्षमनदीप्रवाहशालितया विस्तारायामतुङ्गत्वान्युक्तानि ॥

कंदरागाम्भीर्यमाह—

अण्णाआगमणदिसे पुरओ पडिसद्दभेसिअणिअत्तमए ।
विवरभरिए वहन्तं उक्कणिअवणगए मइन्दणिणाए ॥ ३० ॥

[अज्ञातागमनदिशः पुरतः प्रतिशब्दभीषितनिवृत्तमृगान् ।
विवरभृतान्वहन्तमुत्कर्णितवनगजान्मृगेन्द्रनिनादान् ॥]

एवं मृगेन्द्रस्य निनादान् वहन्तम् । किंभूतान् । अज्ञाता आगमनदिग्येषां तान् । एतेन शब्दादीनां सर्वत्र गाम्भीर्यतौल्यमुक्तम् । एवं पुरतः प्रतिशब्देन भीषिता अत एव निवृत्ता मृगा यैस्तान् । तथा च विशिष्य शब्दानामुत्पत्तिदिग्ज्ञानाभावाद्यत्रैव येऽवस्थितास्ततः संमुखमेव ते पलायितुमारब्धाः । अथ प्रतिरवस्यापि सर्वत्र तौल्येन पुनस्ततोऽपि परावृत्ता इति भावः । एवं विवरे कन्दरादौ भृतान् व्याप्तान्, अथवा विवरैर्भृतान् धृतान् । अत्यक्तानिति यावत् । तेन चिरकालव्यापकत्वमुक्तम् । एवमुत्कर्णिता वनगजा यैः । त्रासादिति भावः ॥

पुनस्तदेवाह—

तामरसरआअम्बं सरेसु सुवन्तमुहुरसरआअम्बम् ।
गहिआमिसहरिअइअं वेलाणिलसीहरोल्लवणहरिअइअम् ॥ ३१ ॥

[तामरसरजआताम्रं सरस्सु श्रूयमाणमधुरस्वरकादम्बम् ।
गृहीतामिषहरिदयितं वेलानिलशीकरार्द्रवनहरितायितम् ॥]

एवं सरस्सु तामरसरजोभिराताम्रम् । एवं तत्रैव श्रूयमाणाः सन्तो मधुरा हृद्याः स्वरा येषां तथाभूताः कादम्बा हंसा यत्र तम् । एवं गृहीतमामिषं मांसं यया तथाभूता हरेर्दयिता सिंही यत्र । यद्वा गृहीतामिषाणां हरीणां सिंहानां दयितं प्रीतिविषयः । यद्वा गृहीतं प्राप्तमामिषं लोभनीयं भक्ष्यं यत्र तथाभूतम् । अत एव हरीणां दयितं प्रीतिविषयो दयापात्रं वा । यद्वा गृहीता आमिषवल्लोभनीया, आमिषं सुन्दरी वा, हरे रामस्य दयिता सीता यत्रेत्यर्थः । एवं वेलानिलशीकरैणार्द्रैर्वनैर्हरितायितं हरिद्वर्णीकृतम् । यद्वा हरितान्वितम् । आर्द्रेषु वनेषु हरिताभिर्दूर्वाभिराचितं व्याप्तमिति विश्रामयोग्यतोक्ता । 'आमिषं सुन्दराकारे रूपादिविषयेऽपि च' इति विश्वः ॥

पुनः कंदरागाम्भीर्यमाह—

**मिलिअसमुद्दद्धन्ते पाअडणहमण्डले पहुत्तदसदिसे ।**
**उइअत्थमिअदिणअरे भुवणविहाए व कंदरे वहमाणम् ॥ ३२ ॥**

[मिलितसमुद्रार्धान्तान्प्रकटनभोमण्डलान्प्रभूतदशदिशः ।
उदितास्तमितदिनकरान्भुवनविभागानिव कंदरान्वहमानम् ॥]

एवं कंदरान्वहमानम् । कीदृशान् । मिलिताः प्रविष्टाः समुद्रस्यैकदेशा येषु तान् । एतेन विकटत्वेन पातालरूपत्वमुक्तम् । वस्तुतस्तु मिलितः समुद्रो यत्र तादृशोऽर्धान्त एकदेशो येषामिति । समुद्रादप्याधिक्यमुक्तम् । एवं प्रकटं नभोमण्डलं येषु । एतेनोर्ध्वलोकस्वरूपत्वम् । एवं प्रभूताः पर्याप्ता दशदिशो येषु । अनेन मर्त्यरूपत्वम् । एवमुदितः सन्नस्तमितो दिनकरो येषु । अनेन विस्तीर्णत्वम् । इदमेवोत्प्रेक्ष्यते—भुवनानां विभागो येषु तानिव भुवनविभागस्वरूपानिवेति वा । त्रिभुवनस्य तत्रैव पर्याप्तिरिति भावः । यद्वा भुवनविभागानिवेति सहोपमा । यथा स्वशरीरेणावष्टभ्य त्रिभुवनं वहमानं तथा कंदरानपीत्यर्थः । 'भुवनविघातानिव' इत्यपि कश्चित् । विघातो विस्तारः समूहो वा । भुवनविभागेऽपि विशेषणानां योजना पूर्ववत् ॥

निर्झरस्वादमाह—

**उच्छलिओअहिभरिए थोअत्थोओसरन्तणिव्वूढजले ।**
**आइमुहरे वहन्तं पुरओहुत्तलखणे सिहरणीसन्दे ॥ ३३ ॥**

[उच्छलितोदधिभृतान्स्तोकस्तोकापसरन्निर्व्यूढजलान् ।
आदिमधुरान्वहन्तं पुरतोऽभिमुखलक्षणाञ्शिखरनिःस्यन्दान् ॥]

एवं शिखराणां निःस्यन्दान्निर्झरान्वहन्तम् । कीदृशान् । उच्छलितेनोदधिना भृतान् तज्जलेन पूर्णान् । एवं स्तोकं स्तोकमपसरन्ति शिखरेभ्यो बहिर्भवन्ति पश्चान्निर्व्यूढानि संभूयोपचितानि जलानि येषु तान् । अल्पमल्पं निःसृत्य प्रचितत्वादित्यर्थः । अत एवादौ मूलभागे निर्झररूपत्वेन मधुरान् पुरतोऽभिमुखेऽग्रे समुद्रक्षारयोगात् । अथवा दशायामादौ मधुरान् । निर्झरजलबाहुल्यात् पश्चाल्लवणाब्धिजलसंपर्कादेवेत्यर्थः ॥

रत्नच्छविमाह—

रअणच्छविहुव्वन्तं वलन्तसेसपिहुलप्फणविहुव्वन्तम् ।
सरपरिवड्ढिअकमलं कडअलआलग्गसूररहअक्कमलम् ॥ ३४ ॥

[रत्नच्छविधाव्यमानं वलच्छेषपृथुलफणविधूयमानम् ।
सरःपरिवर्धितकमलं कटकलतालग्नसूररथचक्रमलम् ॥]

एवं रत्नच्छविभिर्धाव्यमानं प्रक्षाल्यमानम् । एवं तद्गौरवादेव वलद्भिः वक्रीभवद्भिः शेषस्य पृथुलैः फणैर्विधूयमानम् । यदा फणसंचारस्तदा केवलं कम्पमानमित्यर्थः । सरसि परिवर्धितानि कमलानि यत्र तम् । कटकवर्तिलतासु लग्नः सूररथचक्रस्य मलो मालिन्यं यत्र । चक्रान्मलः श्यामिका यत्र । निघर्षणादिति वा । कटक एव रविः संचरतीति भावः ॥

मणितटमाह—

णहणीले वहमाणं उम्हाहअमहिसमग्गिओवरणवहे ।
पासपसरन्तकिरणे मअतण्हावेढिए सरे व्व मणिअडे ॥ ३५ ॥

[नभोनीलान्वहमानमुष्माहतमहिषमार्गितावतरणपथान् ।
पार्श्वप्रसरत्किरणान्मृगतृष्णावेष्टितान्सरांसीव मणितटान् ॥]

एवं मणितटान्वहन्तम् । किंभूतान् । नभोवन्नीलान्, नभसि नीलानिति वा । इन्द्रनीलमयत्वात् । एवमुष्मणा आतपेन आहतैर्महिषैर्मार्गिता अन्विष्टा अवतरणाय अधःप्रदेशगमनाय पन्थानो यत्र । एवं पार्श्वेषु प्रसरन्तः किरणाः कान्तयो येषाम् ।

एवं मृगतृष्णया आवेष्टितान् व्याप्तान्। 'मृगतृष्णा मरीचिका'। 'सरांसीव' इति साधर्म्योपमा। सहोपमा वा। तान्यपि वहमानमित्यर्थः। तानि कीदृशानि। नभोवन्नीलानि, जलोत्कर्षात्। द्वितीयपदे जलपानमज्जनार्थं महिषावतरणम्। तृतीयपदे किरणाः सूर्यस्य। चतुर्थपदे मृगैस्तृष्णया जलपानस्पृहया आवेष्टितानीति सर्वं क्लीबं सरोविशेषणमिति विशेषः॥

अनुरूपसंगतिमाह—

गअमलिअतमालवणं सीहमुहोरुद्धरअअसिहरक्खण्डम्।
महिसाहअकसणसिलं अणुरूअट्ठाणमुक्कवणअररोसम्॥ ३६॥

[गजमृदिततमालवनं सिंहमुखावरुद्धरजतशिखरखण्डम्।
महिषाहतकृष्णशिलमनुरूपस्थानमुक्तवनचररोषम्॥]

गजैर्मृदितानि तमालवनानि यत्र। सिंहमुखेनावरुद्धानि कवलीकृतानि रजतशिखराणां खण्डानि यत्र महिषैराहताः शृङ्गाभ्यामित्यर्थात्कृष्णा शिला यत्र। अत एवानुरूपस्थाने मुक्तः प्रसृतो वनचराणां रोषो यत्र तम्। समानवर्णत्वेन गजसिंहमहिषरूपसजातीयभ्रमात्प्रतिपक्ष्येण तेषां तत्तदुपमर्दकव्यापारोदयादिति सत्त्वबहलत्वमुक्तम्॥

गजमुक्तावत्तामाह—

केसरिचलणतलाहअभिण्णपइण्णगअकुम्भमोत्तारअणम्।
वणदवभीअपहाविअगअउलमलिअणइसंगमोत्तारअणम्॥ ३७॥

[केसरिचरणतलाहतभिन्नप्रकीर्णगजकुम्भमुक्तारत्नम्।
वनदवभीतप्रधावितगजकुलमृदितनदीसंगमोत्तारतृणम्॥]

केसरिणां चरणतलैराहतास्ताडिता अत एव भिन्ना विदीर्णा ये गजकुम्भास्ततः प्रकीर्णानि व्याप्तानि मुक्तारूपरत्नानि यत्र तम्। पूर्वनिपातानियमात्। यद्वा केसरिचरणतलैराहतान्यत एव भिन्नानि स्वस्थानाद्बहिर्भूतानि सन्ति प्रकीर्णानि व्याप्तानि गजकुम्भानां मुक्तारत्नानि यत्र। यद्वा गजकुम्भमुक्तारचनास्ताडिताः सत्यो भिन्नाः शतखण्डीभूताः अत एव विप्रकीर्णा विच्छिद्य विष्वक्पतिता ये गजकुम्भास्तन्मुक्तानां रचनाविन्यासो यत्र। एवं वनदावाद्भीतेनातः प्रधावितेन गजकुलेन मृदितानि नदीनां संगमप्रवेशे उत्ताराणि उत्तालानि उद्भटानि यत्र। संतापशान्त्यै नदीषु

प्रवेशादिति भावः । यद्वा पूर्वनिपातानियमाद्गजकुलेन नदीसंगमस्रोत्तारेण उल्लङ्घनेन मृदितानि तृणानि यत्रेत्यर्थः ॥

पुनरुच्चैस्त्वमाह—

कडअवलन्तरविरहं तलवणराइपडिघोलिरुब्भडतारम् ।
पासल्लणिसण्णस्स वि उअरि वीअभुअणस्स व णिस्संमन्तम् ३८

[कटकवलद्रविरथं तालवनराजिप्रतिघूर्णमानोद्भटतारम् ।
पार्श्वनिषण्णस्याप्युपरि द्वितीयभुवनस्येव निषीदन्तम् ॥]

एवं कटके वलन्वक्रीभवन्रविरथो यत्र, ऋजुमार्गाभावात् । तालवनस्य राज्यां प्रतिघूर्णमाना उद्भटास्तारा यत्र, तालप्रतिरुद्धमार्गत्वात् । 'तडवण' इति पाठे तटवनराज्यामित्यर्थः । अत्रोत्प्रेक्ष्यते—पार्श्वे निषण्णस्य द्वितीयभुवनस्य भुवर्लोकस्याप्युपरि निषीदन्तमिव । सूर्यताराद्यधिष्ठाननक्षत्रलोकरूपस्य तस्य पार्श्ववर्तित्वादिति भावः ॥

तदेवाह—

अद्धच्छिण्णरविअरे असमत्तपहुत्तसअलचन्दमऊहे ।
छिण्णकडए वहन्तं उद्धाअणिअत्तगरुडमग्गिअसिहरे ॥ ३९ ॥

[अर्धच्छिन्नरविकरानसमाप्तप्रभूतसकलचन्द्रमयूखान् ।
छिन्नकटकान्वहन्तमुद्धावितनिवृत्तगरुडमार्गितशिखरान् ॥]

एवं छिन्नकटकाञ्शृङ्गविशेषान्वहन्तम् । किंभूतान् । अर्धे छिन्ना अवच्छिन्ना रविकरा यत्र तान् । अर्ध एव पर्याप्तत्वाद् एवमसमाप्ते एकदेश एव प्रभूताः सकलाः, सकलस्य पूर्णस्य वा, चन्द्रस्य मयूखा यत्र । एवमुद्धावितेन ऊर्ध्वं प्रस्थितेन, अथ निवृत्तेन, गरुडेन मार्गितमन्विष्टं शिखरमग्रं यस्य । तथा च सुवेलस्योर्ध्वं प्रस्थाय गन्तुमशक्यत्वान्निवृत्तेन गरुडेनाप्यन्तरावर्तिच्छिन्नकटस्यैव शिखरं विश्रमाय न लभ्यत इति मार्गितपदसूचितमत्युच्चत्वम् । 'उप्पइअणिअत्त' इति पाठे उत्पत्तिनिवृत्तेनेत्यर्थः । 'दुरालोकं दुरारोहं कटकान्तरसंगतम् । भृगुप्रायं गिरेः शृङ्गं तच्छिन्नकटकं विदुः' ॥

रत्नाधिक्यमाह—

सुरवहूण हिअअट्ठिअरअणवसारअं
साअरस्स रइअं मिव रअणवसारअम् ।
णलिणिवत्तउडजाअमहुरसामोअअं
वउलवणणिम्महन्तमुहुरसामोअअम् ॥ ४० ॥
[सुरवधूनां हृदयस्थितरत्नप्रसाधकं
सागरस्य रचितमिव रत्नप्रसारकम् ।
नलिनीपत्रपुटजातमधुरसामोदकं
बकुलवननिर्यन्मधुरसामोदकम् ॥]

एवं सुरवधूनां हृदयस्थितै रत्नैः प्रसाधकं प्रसाधनकर्तारम् । अभीष्टरत्नानां तत्रैव लाभात् । वस्तुतस्तु—हृदयस्थितरतनवसारकम् । हृदयस्थितस्य रतस्य नवं सारकं साधकम् । अभिनवसंपादकमित्यर्थः । तासामपि केलिस्थानत्वात् । यद्वा रतनवसारदम् । हृदयस्थितं रतरूपं नवं सारं धनं ददाति यस्तम् । यद्वा रतन-वसारतम् । तादृशरतस्य नवा स्तव्या सारता यत्र तम् । एवं सागरस्य रत्नाकरस्य रचितं रत्नानां प्रसारकं हट्टमित्यर्थः । तत्संनिहितत्वे सति रत्नबहुलत्वात् । एवं नलिनीपत्रपुटैर्जातं मधुरमास्वाद्यं मनोज्ञं वा श्याममुदकं यत्र । श्यामत्वमुत्कृष्टत्व-ख्यापनार्थम् । एवं बकुलवनान्निर्यन्मधुरूपस्य रसस्यामोदो यत्र तादृशं कं शिरो यस्य । यद्वा बकुलवने निर्यता पुष्पेभ्यः पतता मधुरसेन आमोदकं सौरभजनक-मानन्दकं वा तादृशमधुरस्यामोदं ददाति यस्तम् । बकुलवननिर्यन्मधुरसामोददं वा ॥

धातुमत्तामाह—

तिव्वजरढाअवाहअहरिआलामोअविम्हराइअहरिणम् ।
संखोओअहिसीअरलवणरसासाअमहिसलिब्भन्तसिलम् ॥ ४१ ॥
[तीव्रजरठातपाहतहरितालामोदविमूर्च्छितहरिणम् ।
संस्त्यानोदधिशीकरलवणरसास्वादमहिषलिह्यमानशिलम् ॥]

एवं तीव्रेण दुःसहेन जरठेन माध्यंदिनीयेन आतपेनाहतानां स्पृष्टानां हरिताला-नामामोदेन सौरभेण मूर्च्छिता, मूर्च्छाहेतुतया विस्मापिता वा हरिणा यत्र तम् ।

आतपे सति हरितालस्य द्रवीभावादामोदत्तेन च मृगा मूर्च्छन्तीति प्रसिद्धिः । एवं संस्थानस्य आतपयोगादेव घनीभूतस्योदधिशीकरस्य यो लवणरसस्तदास्वादान्महिषैर्लिह्यमाना जिह्वया स्पृश्यमाना शिला यत्र । आतपशुष्कक्षारोदशीकरलवणरसलोभान्महिषा यत्र शिलां लिहन्तीत्यर्थः ॥

रौप्यं शिखरमाह—

तुङ्गरअअसिहरुग्गमेहि तारं गअं
सीहणिहअगअलोहिअमोत्तारङ्गअम् ।
गरुअधीरणिव्वाहिअबहुजुअसंखअं
उअहिसलिलसंकन्तसरुज्जुअसङ्खअम् ॥ ४२ ॥

[तुङ्गरजतशिखरोद्गमैस्तारां गतं
सिंहनिहतगजलोहितमुक्तारङ्गदम् ।
गुरुकधैर्यनिर्वाहितबहुयुगसंक्षय-
मुदधिसलिलसंक्रान्तसरऋजुकशङ्खकम् ॥]

तुङ्गानां रजतशृङ्गाणामुद्गमैरुच्छ्रायैस्तारां नक्षत्रं गतं मिलितम्, समानवर्णत्वात्संगतं वा । मिश्रितमित्यर्थः । एवं सिंहनिहितस्य गजस्य लोहितेन रुधिरेण मुक्तानां रङ्गदं रागप्रदम् । एवं गुरुकेण धैर्येण स्थिरतया निर्वाहितोऽतिवाहितो बहूनां युगानां संक्षयो नाशो येन तम् । बहुतरप्रलयेऽप्यनष्टमित्यर्थः । एवमुदधिसलिलात्संक्रान्ताः सरसि ऋजुकाः संमुखाः शङ्खका यत्र । सरःप्रविष्टैकमुखसमुद्रशङ्खमित्यर्थ इति संप्रदायः ॥ वयं तु—ताराङ्गकम्, तुङ्गरजतशिखरोद्गमैस्तारमुद्भटमङ्गकं वपुर्यस्य तम् । यद्वा ताराङ्गदम्, तुङ्गरजतशिखरोद्गमैस्ताराणामङ्गं द्यति खण्डयति यस्तम् । शिखरैस्तारादेहभेदकम् । दो अवखण्डने धातुः । यद्वा ताराङ्गदम्, 'तकारस्तरणिः प्रोक्तः' इति कोषः । तस्य सूर्यस्य अरङ्गदम् । तादृशशिखरैर्वर्त्मावरोधकत्वादरङ्गप्रदमित्यर्थः । रङ्ग उल्लासः । यद्वा ताराङ्गतम् । तादृशशिखरोद्गमैस्ताराणामङ्गता गुणीभावो यस्मात्तम् । रजतशिखरकान्तिभिस्ताराणां तिरोहितत्वादित्यर्थः । अथवा तुङ्गे उच्चप्रदेशे रजतं रूप्यं, शिखरं माणिक्यं, तदुद्गमैस्तारं निर्मलं, गतम् । ज्ञातमित्यर्थः । तथा च—'निर्मले तारमाहुः' इति कोषः । यद्वा 'तुङ्गरजतशिखरोप्रमेधिताङ्गतम्, तुङ्गं यद्रजतशिखरं

तदेव उग्रो मेधिर्भ्रमिकर्मावलम्बनस्तम्भस्तेन ताराणामङ्गता अप्राधान्यं यस्मात्। शिखरस्यैव महत्त्वेन प्राधान्यं, ताराणां तु शिखरलग्नत्वेन क्षुद्रत्वादिति भावः। यद्वा तुङ्गरजतशिखारुग्गमैस्ताराङ्गदम्, तुङ्गा रजतस्य शिखा शिखरं तस्या रुक्कान्तिस्तद्गमैस्तत्संचारैस्तारमुद्भटमङ्गदं यस्य तम्। वलयीभूतरजतकान्तेरङ्गदत्वेन शिखरस्य बाहुत्वमित्यर्थः। यद्वा तुङ्गरयासिधरोद्गमैस्ता रङ्गकम्, तुङ्गो रयो वेगो येषां तथाभूता असिधरा मृगयाशालिनो राक्षसास्तेषामुद्गमैरूर्ध्वसंचारैः। ता तावदित्यर्थे। रङ्गकं रङ्गजनकमस्तकम्। अथवा तारङ्गं तरङ्गसमूहः तद्विशिष्टमस्तकमित्यर्थः। समूहे अन्(अण्)। यद्वा तुङ्गरतकशिखारुग्णमेधितारम्, तुङ्गे उच्चप्रदेशे रतं स्थितं यत्कं शिखरं तस्य शिखया रुग्णा विद्धा मेधिनी मेघविशिष्टा तारा येन तम्। गतम्। ज्ञातमित्यर्थः। एवं द्वितीयपदे—सिंहनिधागतलोहितमुक्तारङ्गदम्, सिंहान्निःशेषतो दर्शयति ये अगा वृक्षाः प्रत्यन्तपर्वता वा सिंहाधिष्ठानभूतास्तेषां सिंहनिधानानां तले ऊहिताभिर्लक्षिताभिरर्थात्सिंहनिहतकरिकुम्भस्खलिताभिर्मुक्ताभी रङ्गदं कौतूहलप्रदम्। तृतीयपदे—गुरुकधैर्यनिर्बाधितबहुयुगसखगम्, गुरुणा धैर्येण निर्बाधितमपीडितम्, अखण्डितमिति यावत्, निर्व्याधितं वा व्याधिशून्यम्। अथ च बहूनि युगानि स्यति खण्डयति अतिवाहयति यस्तम्। षो धातुः। कर्मधारयः। निजविपत्तिं विनैव चातिक्रान्तनानायुगमित्यर्थः। खमाकाशं गच्छतीति खगः। अत्युच्चमित्यर्थः। चतुर्थे पदे—उदधिसलिलशङ्कमानसरऋजुकशङ्खकम्, उदधिसलिलं शङ्कमाना अत एव सरसि ऋजुकानि मुखानि येषां तथाभूताः शङ्खाः के शिरसि यस्य तम्। समुद्रजलबुद्ध्या नदीवर्त्मना शिरःसरःप्रविविक्षु शङ्खकुलमित्यर्थः। यद्वा उदधिसलिलशङ्कान्तःसरऋजुकशङ्खकम्, उदधिसलिलशङ्कया अन्तःसरोमध्यप्रविष्टा ऋजुकाः संमुखीकृतमुखाः शङ्खा यत्र एतादृशं कं पानीयं यस्य, नद्यादीनामित्यर्थात्, तम्। समुद्रशङ्कास्पदत्वेन नद्यादिजलानां महत्त्वात्सुवेलस्य महत्त्वम् इति ब्रूमः। विस्तरभयादन्यदुपेक्षितम्॥

गुणान्तरमाह—

**मणिपहम्मसामोअअं मणिपहम्मसामोअअम्।**
**सरसरण्णणिद्दावअं सरसरण्णणिद्दावअम्॥ ४३॥**

[मणिप्रहर्म्यश्यामोदकं मणिपहर्म्यसामोदकम्।
सरःशरण्यनिर्दावकं स्मरशरज्ञनिद्रापदम्॥]

एवं प्रथमपदे—मणिप्रहर्मश्यामोदकम्, मणीनां प्रहर्मो मणिमयं विवरं तत्र श्याममुदकं यत्र तम् । इन्द्रनीलादिसंबन्धाच्छिन्नतया कुञ्जबहुलत्वेनातपाद्यभावाच्च । यद्वा मणीनां प्रथमः खात इति देशी । तत्र श्यामोदकम् । श्यामत्वादुत्कर्षो जलस्य । द्वितीयपदे—मणिपहर्म्यसामोदकम्, मणीन्पान्तीति मणिपाः यक्षाः, सर्पा वा तेषां हर्म्यं क्रीडागृहं यत्र स मणिहर्म्यः । एवं सह आमोदेन वर्तते सामोदः । मणिपश्चासौ सामोदश्चेति तम् । तथा प्रशंसायां कन् । अथवा मणिपानां हर्म्यं सौधरूपं, सामोदकम् आमोदसहितमस्तकम् । कर्मधारयः । आमोदः सौरभं हर्षो वा । अथवा मणिपानां हर्म्ये ससौरभं कं जलं यत्र तथाभूतम् । तृतीयपदे—सरःशरण्यनिर्दावकम्, सरःशरण्यानां सरोवरमाश्रितानां निर्दावकम् । न तु तापकम् । शैत्यप्रदत्वात् । टुदुङ् उपतापे । ण्वुल् । यद्वा सरसारण्यनिर्दावकम्, सरसारण्ये सजलवने निर्दावकम् । निर्गतो दावो यस्मात्तम् । दावानलशून्यमित्यर्थः । अथवा सरसारण्ये निर्गतो दावस्य को वह्निर्दावानलरूपो यत्र तम् । अथवा सरसारण्ये निःशेषितो दावो वनं यत्र, तादृशं कं शिरो यस्येत्यर्थः । यद्वा सरसारण्यनिद्राप्रदम्, सरसमरण्यं यस्मात्स सरसारण्यः समुद्रस्तस्य निद्राप्रदं निद्रया स्वापकम् । अवष्टम्भहेतुत्वात् । चतुर्थपदे—स्वरशरज्ञनिद्राप्रदम्, स्वरशरं जानन्तीति स्वरशरज्ञा गन्धर्वास्तेषां निद्राप्रदं निद्राप्रदं स्थानं वा । यद्वा सरसारण्यनिद्रातकम्, सरसारण्ये निद्रातो जातनिद्रः को मयूरो यत्र तम् । यद्वा सरसारण्यनिर्दावकम्, सरसारण्ये निर्गताः सुमेरोरागता द्रावा देवा यत्र तादृशं कं मस्तकं यस्य तम् । 'को ब्रह्माग्न्यनिलार्केषु शिखरे सर्वेनात्रि च । पानीये च मयूरे च मुखशीर्षसुखेषु कम् ॥ दावो देव इति ख्यातो वनाग्निवनयोरपि ।' इत्युभयत्रापि विश्वः । 'आमोदो हर्षगन्धयोः' इति धरणिः ॥

गुणान्तरमाह—

दरिअरक्खसामोअअं दरिअरक्खसामोअअम् ।
विसअरुप्पहाअन्तअं विसअरुप्पहाअन्तअम् ॥ ४४ ॥
[दृप्तराक्षसामोदकं दरीवराख्यश्यामोदकम् ।
विशदरूप्यप्रभातान्तं विषतरुप्रभान्तकम् ॥]

एवं प्रथमपदे—दृप्तराक्षसामोदकम्, दृप्तस्य बलवतो राक्षसस्य रावणस्यामोदकमानन्दजनकम् । यद्वा दृप्तराक्षसामोदकम्, रावणस्यैव आमोदः सौरभं तत्प्रदम् । नानासुगन्धिद्रव्यसत्त्वात् । यद्वा दृप्तराक्षसामोदयम्, दृप्तराक्षसाद्रावणादेरामः पीडा

तस्योदयो यस्य । नित्यमुपमर्दात् । अम रोगे धातुः । द्वितीयपदे—दरीवराख्य-श्यामोदकम्, दर्यां कंदरायां वरा आख्या नाम यस्यास्तया त्रिफलया श्याममुदकं यस्य तम् । यद्वा दरीवराख्यसामोदकम्, दर्यां वराख्येन शिल्हकनाम्ना सुरभि-द्रव्येण सामोदकं ससौरभं कं मस्तकं जलं वा यस्य तम् । यद्वा दरीवराक्षसामो-दकम्, दर्यां वनमक्षमिन्द्रियं येषां ते वराक्षाः श्रेष्ठेन्द्रिया योगिनो यक्षा वा तेषा-मामोदेन आनन्देन सह वर्तते यस्तम् । यद्वा दरीचराक्षश्यामोदकम्, दरीचरेण अक्षेण बिभीतकनाम्ना वृक्षेण श्याममुदकं यस्य तम् । यद्वा दरीचराणां किंनराणा-मक्षस्येन्द्रियस्यामोदेन सह वर्तते यस्तम् । यद्वा दरीचराणामक्षेण द्यूतेन य आमो-दस्तेन सहितम् । आधारभूतत्वात् । यद्वा दरीवराक्षसामोदयम्, दरीवराक्षाणां योगिनां, साम्नां वेदानामुदयो यत्र तम् । तृतीयपदे—विशदरूप्यप्रभातान्तम्, विशदेन स्पष्टेन रूप्येण रजतेन प्रभातो दीप्यमानोऽन्तः स्वरूपं यस्य तम् । विश-दरूप्यप्रभाभिः कान्तम् । कमनीयमित्यर्थः । चतुर्थपदे—विषतरुप्रभान्तकम्, विषतरूणां प्रभाभिरनुभावैरन्तकं नाशकम् । यद्वा विषतरुप्रभातान्तम्, विषतरु-प्रभाभिस्तान्तं ग्लानम् । अथवा विषतरुभिः प्रभातोऽन्तोऽवसानं यस्मात्तम् । यद्वा विषतरुप्रभाततम्, प्राकृतत्वात्, प्रभातो दीप्तो विषतरुर्यत्र तम् । ततं विस्ती-र्णम् । 'रूप्यं प्रशस्तरूपे स्याद्रूप्यं रजतमिष्यते । वरोऽभीष्टे देवतादेर्वरो जामातृ-सिल्हयोः ॥ त्रिफलायां वरा प्रोक्ता शतावर्यां वरीवरा । श्रेष्ठेऽन्यवत्परिवृतौ वरं कश्मीरजे मतम्' ॥

चन्दनवत्तामाह—

जरढविसोसहिवेढिअभुअंगपरिहरिअचन्दणदुमक्खन्धम् ।
वोलन्तविसहरप्फणमणिप्पहाहअविराइअदुमच्छाअम् ॥ ४५ ॥

[जरठविषौषधिवेष्टितभुजंगपरिहृतचन्दनद्रुमस्कन्धम् ।
व्यतिक्रामद्विषधरफणमणिप्रभाहतविराजितद्रुमच्छायम् ॥]

जरठाभिर्विषौषधिभिर्वेष्टिताः परिवृता अत एव भुजंगैः परिहृता विषनाशक-ज्वालादुःस्थतया त्यक्ताश्चन्दनद्रुमाणां स्कन्धाः प्रकाण्डानि यत्र तम् । अत एव व्यतिक्रामतामन्यत्र गच्छतां विषधराणां फणामणिप्रभाभिराहताः स्पृष्टाः अत एव विराजिता द्रुमाणां च्छाया यत्र । सर्पसंचारेण फणामणिकान्तिप्रसरणाद्द्रुमच्छायापि कान्तिमती भवतीत्यर्थः ॥

स्फटिकवत्तामाह—

फडिहकिरणणिवहेहिँधरणिधवलाअअं
सुव्वमाणसुरसुन्दरिमुद्धवलाअअम् ।
पलअसमअसलिलेण वि असअलधोअअं
विवरणिन्तणवचन्दसरिसअलधोअअम् ॥ ४६ ॥

[स्फटिककिरणनिवहैर्धरणीधवलायकं
श्रूयमाणसुरसुन्दरीमुग्धप्रलापकम् ।
प्रलयसमयसलिलेनाप्यसकलधौतं
विवरनिर्यन्नवचन्द्रसदृशकलधौतम् ॥]

एवं स्फटिकानां किरणनिवहैर्धरण्या धवलायकं धवलत्वकारकम् । सकलपृथिवीधावल्यक्षमकान्तिमत्तया स्फटिकभूमेर्महत्त्वमुक्तम् । एवं श्रूयमाणाः सुरसुन्दरीणां मुग्धा मनोहरा, मोहमया वा प्रलापा यत्र तम् । बन्दीकृतानां कारागृहत्वात् । एवं प्रलयसमयसलिलेनापि असकल एकदेश एव धौतम् । तदानीमुद्वेलसमुद्रेणापि सकलावच्छेदेन क्षालयितुमपारितमित्यर्थः । एवं विवरात्कंदरातो निर्यन्नुद्गच्छन्नवश्चन्द्रस्तत्सदृशं कलधौतं सुवर्णं यत्र । नव इत्युदयकालीनया पिञ्जरत्वात् । कलधौतं रजतं यत्रेति वा । तत्र नवो नव्य इत्यर्थः । नातिधवलत्वलाभात् । 'कलधौतं रूप्यहेम्नोः कलधौतं कलध्वनौ' इति विश्वः ॥

पद्मरागादिमत्तामाह—

रम्मअन्दराअच्छअं रम्म अन्दराअच्छअम् ।
सग्गग्गहणिसामग्गअं सग्गग्गहणिसामग्गअम् ॥ ४७ ॥

[रम्यचन्द्रागच्छदं रम्यकंदरावृक्षकम् ।
साग्रग्रहनिःश्यामाग्रकं स्वर्गग्रहणीसामग्र्यम् ॥]

प्रथमे—रम्यचन्द्ररागच्छदम्,......पद्मरागादिमणितेजस्तेन छद आवरणं यस्य तम् । यद्वा रम्याश्चन्द्ररागच्छदाः, चन्द्रः कर्पूरः, रागः पद्मरागादिलौहित्यम्, छदो वृक्षादिपत्रम्, यत्र तादृशम् । यद्वा रम्येण चन्द्ररागेण चन्द्रकान्तेन च्छद आवरणं यस्य तम् । यद्वा रम्यचन्द्ररागाच्छकम्, रम्यचन्द्रस्य रागेण उद्द्योतेन

अच्छं निर्मलं कं शिरो यस्य तम्। अथवा रम्यचन्द्ररागवद् अच्छं कं जलं यत्र। यद्वा रम्येण चन्द्ररागेण उदयकालीनचन्द्रकान्त्या छदा यस्य तम्। इति चन्द्रोदयाधारत्वेनोच्चत्वमुक्तम्। द्वितीये—रम्यकंदरावृक्षकम्। रम्याः कंदरावृक्षा यत्रेत्यर्थः। यदा वृक्षशब्दस्य रित्वं न भवति तत्र च वलोपे अकारस्तिष्ठति तेन 'अच्छ' इति वृक्षवाची। यद्वा रम्यौ कंदरावृक्षौ, कंदराकच्छौ वा यत्र। 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः। 'कच्छस्तृणं सताकच्छे' इत्यन्यत्र। यद्वा रम्यकंदराच्छकम्, रम्यकंदरासु अच्छं निर्मलं कं जलं यत्र। यद्वा रम्यकंदराक्षकम्, रम्याः कंदरासु अक्षका विभीतका यत्र। यद्वा रम्यचन्द्ररागच्छन्दकम्, रम्यकर्पूरस्य रागेण तद्विषयकानुरागेण च्छन्दकम्। अन्यत्र गमनवारकम्। यद्वा रम्यकंदराकक्षकम्, रम्येण चम्पकेन कंदरया च कक्षा अभिमानं यस्य तम्। तृतीये—साग्रग्रहनिःश्यामाग्रकम्, साग्रैः श्रेष्ठैः ग्रहैर्नक्षत्रैर्निःश्यामं तेजःशालितया श्यामताशून्यमग्रकं शिरःप्रदेशो यस्य। अथवा सह अग्रग्रहेण मुख्यग्रहेण वर्तते यत्तत्साग्रग्रहम्। अत एव निःश्याममग्रकं यस्य। धवलशृङ्गमित्यर्थः। चतुर्थे—स्वर्गग्रहणीसामग्र्यम्, स्वर्गग्रहणीनां स्वर्गवन्दीनां सामग्र्यं साकल्यं यत्र। रावणेन तासां तत्रैव धारणात्। 'चन्द्रः सुधांशुकर्पूरधम्मिल्लस्वर्णवारिषु। रम्यं मनोहरे रम्या रात्रौ रम्यश्च चम्पकः॥' इति। सुन्दरीछन्दः॥

पङ्कबाहुल्यमाह—

पङ्कुत्तरन्तलङ्घिअपरिवत्तवराहवञ्चिआहअसीहम्।
सरसलिलोअरणिवडिअणिअअभरत्थमिअकणअपल्लवगोच्छम्॥४८॥

[पङ्कोत्तीर्णलङ्घितपरिवृत्तवराहवञ्चिताहतसिंहम्।
सरःसलिलोदरनिपतितनिजभरास्तमितकनकपल्लवगुच्छम्॥]

पङ्कादुत्तरन्सन् लङ्घितोऽर्थात्सिंहेन, अथ परिवृत्तः, पुनः पङ्क एव प्रविष्टो यो वराहस्तेन वञ्चितो निष्फलीकृतप्रयत्नः अत एवाहतस्ताडित इव सिंहो यत्र तम्। पङ्कादुत्तीर्णो वराहः सिंहेनाक्रान्तोऽपि तदगम्ये पङ्क एव परावृत्य प्रविष्ट इत्यर्थः। एवं सरःसलिलोदरे निपतितोऽथ निजभरेणैवास्तमितो मग्नः कनकस्य हिरण्मयवृक्षस्य पल्लवगुच्छो यत्र तम्॥

१. प्राकृतशब्दानुशासनेनेदं साधितम्, अन्यथोदितरीत्या तादृशरूपानिष्पत्तिः.

शिखरोत्कर्षमाह—

णहसिरिं सअलणीलमेहलावण्णिअं
बद्धजोइसाउव्वमेहलावण्णिअम् ।
सिहरेहिं बाहूहि व पच्छाअन्तअं
मण्णुअं दिसाणं मिव पच्छा अन्तअम् ॥ ४९ ॥

[नभःश्रियं सजलनीलमेघलावण्यां
बद्धज्योतिषापूर्वमेखलावर्णितम् ।
शिखरैर्बाहुभिरिव प्रच्छादयन्तं
मन्युं दिशामिव पश्चादायान्तम् ॥]

किंभूतम् । बाहुभिरिव बाहुप्रायैः शिखरैर्नभःश्रियं प्रच्छादयन्तं तिरोदधतम् । एतावता शिखराणां गगनाधिकदेशत्वमुक्तम् । नभःश्रियं कीदृशीम् । सजलनीलमेघैर्लावण्यं सौन्दर्यं तद्विशिष्टाम् । यद्वा सजलमेघस्येव लावण्यं यस्याः । श्यामत्वात् । अत्र समासोक्त्या सुवेलस्य नायकत्वं नभःश्रियो नायिकात्वं प्रतीयते । तत्र नायिकामपि किंभूताम् । सकलमेघलावण्याम् । सकलः कलया सह वर्तते यो मेघः कालागुरुस्तेन लावण्यं यस्यास्ताम् । 'मेघः कालागुरुर्मतः' इति कोषः । एवं बद्धं ज्योतिर्येन तेन बद्धज्योतिषा नक्षत्रेण अपूर्वो मेखलाया वर्णो विच्छित्तिस्तां प्रापितम् । इति नक्षत्रलोकस्य मेखलावर्तित्वमुक्तम् । नायिकापि बद्धज्योतिरपूर्वमेखलया वर्णिता स्तुता भवति । उत्प्रेक्षते—पश्चादायान्तमागच्छन्तमागमिष्यन्तं वा वर्तमानसामीप्ये लट् । दिशां मन्युमिव प्रच्छादयन्तमित्यन्वयः । नभःश्रीरूपनायिकां मत्समीपवर्तिनीं दृष्ट्वा प्रतिनायिकारूपा दिशो मन्युमाचरिष्यन्तीति नायिकागोपनं तन्मन्युगोपनपर्यवसन्नमेवेत्यर्थः । कामुकोऽपि प्रतिनायिकां दृष्ट्वा निकटस्थां नायिकां भुजादिना गोपयतीति ध्वनिः ॥

गुणान्तरमाह—

असुरबन्दिसाहारणं असुरवं दिसाहारणम् ।
सूरअं तमणिवालअं सूरअन्तमणिवालअम् ॥ ५० ॥

[असुरबन्दिसाधारणमसुरवं दिगाधारकम् ।
सूरगं तमोनृपालयं सूरकान्तमणिपालकम् ॥]

एवमसुरबन्दिसाधारणम्, न सुरबन्दीनां देवस्त्रीणां साधारणम्। तुल्योपभोग्यम्। यथा राक्षसीनामुपभोगविषयस्तथा न देवस्त्रीणामित्यर्थः। यद्वा असुरबन्दिसाधारणम्। असुरं रावणं बन्दितुं शीलमेषां तेऽसुरबन्दिनो राक्षसास्तेषां साधारणम्। सर्वेषामपि तुल्योपभोग्यम्। द्वितीयपदे—असुरवं, न शोभते रवः शब्दो यत्र तम्। सिंहादिराक्षसरवाधारत्वात्। अथवा असुरं रावणं वाति याति, वाधातोः कप्रत्ययः। रावणगामिनम्। तदाक्रमणविषयत्वादित्यर्थः। एवं दिगाधारकम्। दिशामाधारभूतम्। दिगाहारकं वा। दिशामाहारकम्, आकर्षकमित्यर्थः। तत्रैव समाप्तेर्दिशां धारणं धारकं वा। यद्वा दिश्याधारकम्। दिश्यं दिग्भवं तस्याधारकम्। 'दिश्यं तु त्रिषु दिग्भवे'। तृतीयपदे—सूरगं, सूरं सूर्यं गच्छतीति यस्तम्। उच्चत्वात्। अथवा शोभना उरगाः सर्पा यत्र तम्। एवं तमोनृपालयम्। तम एव नृपः। परैरपरिभूतत्वात्तस्यालयं गृहम्। कुञ्जकंदराबहुलत्वात्। यद्वा तमोनिर्वापकम्। अन्धकारशमकम्। रत्नादिमयत्वात्। चतुर्थपदे—सूर्यकान्तमणिपालकम्। सूर्यकान्तमणीनां चालयम्। यद्वा सूर्यतान्तमणिपालयम्। सूर्यतान्तो ग्लानो यत्र। मणिपो रत्नाकरस्तदालयः। पश्चादेतयोः कर्मधारयः। तम्॥

देहमहत्त्वमाह—

**हरिणा बलिमहिहरणे समए जलएहि जलणिहोहि जुअन्ते।**
**जं ण चइअं भरेउं तं देहेण भुअणं भरेऊण ठिअम्॥ ५१॥**

[हरिणा बलिमहीहरणे समये जलदैर्जलनिधिभिर्युगान्ते।
यन्न शकितं भर्तुं तद्देहेन भुवनं भृत्वा स्थितम्॥]

किंभूतम्। तद्भुवनं देहेन शरीरेण भृत्वा व्याप्य स्थितम्। यद्बलेर्महीहरणे विष्णुना, समये वर्षासु जलदैर्युगान्ते प्रलये जलनिधिभिः सप्तभिरपि भर्तुं व्याप्तुं न शकितं न पारितम्। तथा च विष्णुप्रभृतिभ्योऽपि व्यापकशरीरमित्यर्थ इत्यतिशयोक्तिः॥

तदेवाह—

**अत्थाअं व वहन्तं जालन्तरणिग्गउद्धअम्बमऊहम्।**
**आसण्णसिहरवणदवबोलीण पणट्ठमण्डलं दिअसअरम्॥ ५२॥**

[अस्तायमानमिव वहन्तं ज्वालान्तरनिर्गतोर्ध्वताम्रमयूखम्।
आसन्नशिखरवनदवव्यतिक्रान्तं प्रणष्टमण्डलं दिवसकरम्॥]

एवं दिवसकरं वहन्तम् कीदृशम्। आसन्नस्य निकटवर्तिनः शिखरस्य द्वन्द्वेन व्यतिक्रान्तमाक्रान्तम्। अत एव प्रणष्टमदृश्यं मण्डलं यस्य तम्। एवं ज्वालानामन्तरेण निर्गता बहिर्भूता ऊर्ध्ववर्तिनः सन्त आताम्रा मयूखा यस्य। तथा चाताम्रोर्ध्वगतिदावानलज्वालाभिः प्रेरितानां दावाग्निप्रविष्टस्य रवेरपि किरणानामूर्ध्वगतित्वमाताम्रत्वं चात एवोत्प्रेक्षते। अस्तायमानमिव अस्तं प्रयातमिव। अस्तमनेऽपि मण्डलस्यादृश्यता किरणानामूर्ध्वता लौहित्यं चेति भावः॥

सिन्धुतरङ्गाभिघातमाह—

**वडवामुहसंतावे भिण्णअडेअ गरुए तरङ्गप्पहरे।**
**अविरहिअकुलहराण व सरिआण कए ण साअरस्स सहन्तम् ५३**

[वडवामुखसंतापाद्भिन्नतटान्गुरुकांस्तरङ्गप्रहारान्।
अविरहितकुलगृहाणामिव सरितां कृते न सागरस्य सहमानम्॥]

एवं कुलगृहं जनकगृहम्। अत्यन्तकुलगृहाणां सरितां पुत्रीणामिव कृते न सागरस्य जामातुरिव वडवामुखसंतापात्तटभेदजनकान् गुरुकांश्च तरङ्गप्रहारान्सहमानमिव। अन्योऽपि श्वशुरः जनकगृहमत्यजन्त्याः पुत्र्याः कृते जामातुः परुषाभिधानरूपं सुखसंतापं प्रहारं च सहत इति ध्वनिः। तथा च समुद्रतरङ्गप्रहारात्तटभेदेऽप्यभङ्गुरत्वं वडवानलसंनिधावप्यनुपतप्तत्वं च सुवेलस्येति भावः॥

पुनरुच्चत्वमाह—

**रअणीसु उव्वहन्तं एक्कका अम्बमणिसिलासंकन्तम्।**
**मुद्धमिअङ्कच्छाअं खुरमुहमग्गं व रइतुरंगाण ठिअम्॥ ५४॥**

[रजनीषूद्वहन्तमेकैका ताम्रमणिशिलासंक्रान्ताम्।
मुग्धमृगाङ्कच्छायां खुरमुखमार्गमिव रवितुरङ्गाणां स्थितम्॥]

एवं रजनीषु मुग्धस्य बालस्य मृगाङ्कस्य छायां प्रतिबिम्बमुद्वहन्तम्। किंभूताम्। एकैकस्यामाताम्रायां शिलायां संक्रान्तां संगताम्। उत्प्रेक्षते—रवितुरङ्गाणां स्थितं खुरमुखस्य खुराग्रस्य मार्गमिव। तथा च शिरसि स्थितस्य बालचन्द्रस्य स्फटिकादौ प्रतिबिम्बाः, तत्रैव संचरतां रविहयानां खुरचिह्नविशिष्टमार्गत्वेनोत्प्रेक्षिताः। वस्तुतस्तु खुरमुखमार्गमिव खुराग्रपातमिवेत्यर्थः साधीयान्। यद्वा मुग्धमृगाङ्कच्छायां खुरमुखमार्गमिवेति सहोपमा। द्वयमपि वहन्तमित्यर्थः। एकैकेत्यपि द्वितीयविशेषणम्॥

काञ्चनभूमिमाह—

विसमपरिसंठिएहिं विसमुद्धाइअलआहरोत्थइएहिं ।
कंचणसिलाअलेहिं छिण्णाअवमण्डलेहिं व परिक्खित्तम् ॥ ५५ ॥

[विषमपरिसंस्थितैर्विषमोद्धावितलतागृहस्थगितैः ।
काञ्चनशिलातलैश्छिन्नातपमण्डलैरिव परिक्षिप्तम् ॥]

एवं काञ्चनशिलातलैः परिक्षिप्तं व्याप्तम् । किंभूतैः । विषमं यथा स्यादेवं परिसंस्थितैर्नतोन्नतैः । विषमं यथा स्यादेवमुद्धावितैरूर्ध्वमुद्गतैर्लतागृहैः स्थगितैराच्छादितैः । कैरिव । छिन्नातपस्य खण्डातपस्य मण्डलैरिव । तथा च विषमलतागृहादिसंधिप्रवेशात्क्वचित्क्वचित्त्रुटित्वास्थिता एव रविकराः काञ्चनशिलाबुद्धिं जनयन्ति । कपिशत्वात् । इत्युत्प्रेक्षा ॥

तुङ्गत्वमेवाह—

अप्पत्तदिणअराइं आअवभअसिहरसंठिअभुअंगाइं ।
कडएहि उव्वहन्तं वणाइ उद्धपरिवड्ढिअच्छाआइं ॥ ५६ ॥

[अप्राप्तदिनकराण्यातपभयशिखरसंस्थितभुजंगानि ।
कटकैरुद्वहन्तं वनान्यूर्ध्वपरिवर्धितच्छायानि ॥]

एवं कटकैर्वनान्युद्वहन्तम् । किंभूतानि । अप्राप्तो दिनकरो यानि तानि । अधःस्थितसूर्यकत्वात् । एवमातपभयेन शिखरे उपरि संस्थिता भुजंगा येषु । रवेरधःस्थितत्वेन तत्रातपसंबाधाभावात् । एवम्, ऊर्ध्वं परिवर्धिता छाया येषाम् । अत एव भुजंगानामुपरि स्थितिः । छाया हि तरणिपराङ्मुखी भवतीति रवेरुपरिस्थितावधो गच्छेत्, इह त्वध एव स्थिता उपरि गच्छतीति भावः । तत्रापि यथा यथा रविव्यवधानं तथा तथा तस्या वृद्धिरिति परिवर्धितपदादत्यन्तमधोवर्तित्वं रवेरवगम्यते ॥

तदेवाह—

तुङ्गत्तणपज्जन्ते वित्थअविक्खम्भसिट्ठमुहवित्थारे ।
तिअसगआण वहन्तं दन्तप्फलिहजुअलंकिए कडअअडे ॥ ५७ ॥

[तुङ्गत्वपर्याप्तान्विस्तृतविष्कम्भशिष्टमुखविस्तारान् ।
त्रिदशगजानां वहन्तं दन्तपरिघयुगलाङ्कितान्कटकतटान् ॥]

एवं त्रिदशगजानामैरावतादीनां परिघाकारदन्तयुगलेनाङ्कितान् चिह्नितान् कट-

कृतटान् वहन्तम् । कीदृशान् । तुङ्गत्वे पर्याप्तान् । एवं विस्तृतेन विष्कम्भेण दन्तयोर्मध्यभागेन शिष्टः कथितो मुखस्य विस्तारो यैः । तथा च कृतदन्ताघातानां दिग्गजानामतिव्यवहितदन्तद्वयप्रान्तचिह्नेनानुमीयते मुखस्यैतावान्विस्तार इति । तदभिघातेनाप्यभङ्गुरत्वं सूचितम् ॥

पारिजातसंबन्धमाह—

तिअसगआण वहन्तं हत्थुम्हाहअकिलन्तपल्लवराए ।
कडपरिघोलणकविले चिरवूढविमुक्कपारिआअविडवे ॥ ५८ ॥

[त्रिदशगजानां वहन्तं हस्तोष्माहतक्लाम्यत्पल्लवरागान् ।
कटकपरिघूर्णनकपिलांश्चिरव्यूढविमुक्तपारिजातकविटपान् ॥]

एवं चिरं व्याप्य व्यूढानुपचितानथ विमुक्तान्मिथः प्रविभक्तान् पारिजातविटपान् वहन्तम् । कीदृशान् । त्रिदशगजानां कटकपरिघूर्णनेन गण्डयोः कण्डूयनेन कपिलान् । त्वगपगमात् । एवं हस्तस्य शुण्डाया ऊष्मणा निःश्वासगमनोत्थेन आहत अत एव क्लाम्यन् प्राप्तरूपान्तरः पल्लवानां रागो लौहित्यं येषु तान् । 'विटपः पल्लवे खिङ्गे विस्तारे स्तम्बशाखयोः' इति [ वि ] श्वः ॥

पासाअअं वहन्तं मणिकडअमऊहधवलिअमिअच्छाअम् ।
पुट्ठोवइअमहोज्झरजलघाउव्वत्तमण्डलं व मिअङ्कम् ॥ ५९ ॥

[पार्श्वागतं वहन्तं मणिकटकमयूखधवलितमृगच्छायम् ।
पृष्ठावपतितमहानिर्झरजलघातोद्वृत्तमण्डलमिव मृगाङ्कम् ॥]

एवं पार्श्वेन मेखलया आगतं मृगाङ्कं वहन्तम् । कीदृशम् । मणिमयस्य कटकस्य मयूखेन धवलिता मृगस्य कलङ्करूपस्य छाया कान्तिर्यत्र तम् । हीरकादिकान्तिसंपर्कादुत्प्रेक्षते—पृष्ठेऽवपतितस्य ऊर्ध्वादागतस्य महानिर्झरस्य जलाघातेन उद्वृत्तं विपरीतस्थितं मण्डलं यस्य तादृशमिव । चन्द्रस्य पृष्ठे निर्झरपातादधोवर्तितत्वम्, उद्वृत्तत्वेन च मृगस्योपरिगतत्वादलक्ष्यत्वेन धवलत्वमिति भावः ॥

वनसमृद्धिमाह—

सलिलदरधोअकुसुमं दीसन्तोवरिपरिल्लजरढालोअम् ।
मअरहरस्स वहन्तं अब्भासब्भहिअसामलं वणराइं ॥ ६० ॥

[सलिलदरधौतकुसुमां दृश्यमानोपर्युपरिजरठालोकाम् ।
मकरगृहस्य वहन्तमभ्याशाभ्यधिकश्यामलां वनराजिम् ॥]

एवं वनराजिं वहन्तम् । कीदृशीम् । मकरगृहस्य समुद्रस्य अभ्याशात्सामीप्यादधिकश्यामलाम् । नित्यं जलसंपर्कादुपचितत्वात् । एवं सलिलेन समुद्रस्यैव किंचिद्धौतानि क्षालितानि कुसुमानि यस्यास्ताम् । एवं दृश्यमान उपर्युपरि जरठ आलोको दर्शनं यस्याः । उपर्युपरि वृक्षान्तरव्यवधानाभावात् । अथवा जरठ आलोकः सूर्यतेजो यत्र । उपर्युपरि बाहुल्येन तत्संबन्धादिति भावः ॥

देवगजानां गतागतमाह—

तिअसगआण वहन्तं दूरुण्णिअमग्गे णहणिअत्तमुहुअरे ।
ओवअणपअत्तन्ते उप्पअणपणट्ठणिग्गमे गइमग्गे ॥ ६१ ॥

[त्रिदशगजानां वहन्तं दूरोन्नीतमार्गान्नभोनिवृत्तमधुकरान् ।
अवपतनप्रवर्तमानानुत्पतनप्रणष्टनिर्गमान्गतिमार्गान् ॥]

एवं त्रिदशगजानां गतिमार्गान् संचारमार्गान् वहन्तम् । कीदृशान् । दूरोन्नीतमार्गान् । दूरं व्याप्य तर्कितपथाः सन्तो नभसो निवृत्ता मधुकरा येभ्यस्तान् । अत एव अवपतनेऽवसरणे प्रवर्तमानान्भ्रमररूपचिह्नसत्त्वाद्व्यक्तान् । पुनरुत्पतनेन प्रणष्टो निर्गमो येषामलीनाम् । पूर्वमेव गतत्वात् । तथा च कुम्भलग्ना भ्रमरा अपि दूरबुद्ध्या सुवेलतलं नागताः, किंतु तदर्ध एव निवृत्ता इति महोच्चत्वं सूचितम् ॥

रत्नाङ्कुरोद्गममाह—

थोआअहतिमिराइं वहमाणं थोअणिग्गअमऊहाइं ।
णिंतग्गिगब्भिणाइ व थोउत्तिण्णरअणङ्कुरट्ठाणाइं ॥ ६२ ॥

[स्तोकाहततिमिराणि वहमानं स्तोकनिर्गतमयूखानि ।
निर्यदग्निगर्भितानीव स्तोकोत्तीर्णरत्नाङ्कुरस्थानानि ॥]

एवं स्तोकमीषदुत्तीर्णानामुद्गतानां रत्नाङ्कुराणां स्थानानि वहमानम् । किंभूतानि । स्तोकं निर्गतो मयूखो येभ्यस्तानि । अत एव स्तोकमाहतं नाशितं तिमिरं यत्र । रत्नाङ्कुराणां स्तोकोद्गमेन मयूखस्यापि स्तोकोद्गमस्तेन च तिमिरस्यापि स्तोक एव नाश इत्यर्थः । उत्प्रेक्षते—निर्यन्निर्यस्मात्तादृशगर्भविशिष्टानीव । गर्भान्निर्यत्पावकानीवेत्यर्थः । रत्नाङ्कुरस्याग्नितुल्यत्वाद्गर्भितवह्निस्थानस्यापि स्तोकशिखोद्गमेन स्तोकतिमिरनाश एव भवतीत्याशयः ॥

वनगजयुद्धचिह्नमाह—

मोडिअपवाअदुमे उव्वेल्लावेढभग्गपुञ्जइअलए ।
वणगअजुज्झपरिमले वहमाणं पहरपडिअदन्तप्फलिहे ॥ ६३ ॥

[मोटितप्रवानद्रुमानुद्वेलावेष्टभग्नपुञ्जितलतान् ।
वनगजयुद्धपरिमलान्वहमानं प्रहारपतितदन्तपरिघान् ॥]

किंभूतम् । वनगजानां युद्धपरिमलान्युद्धविमर्दान्वहमानम् । किंभूतान् । मोटिताः सन्तः प्रवानाः शुष्कद्रुमा येभ्यस्तान् । एवम्, उद्वेलवेष्टेन गजशरीरस्खेलथोद्भग्नाः सन्तः पुञ्जिता वर्तुलीभूता लता येभ्यः । उद्वृत्ता लता हस्तिशरीरमावेष्ट्य स्थिताः । अथ तदाकृष्ट्या उत्पाटनेन पुञ्जीकृता इत्यर्थः । एवं प्रहारेण पतिताः परिघाकारा दन्ता येभ्यस्तान् ॥

समुद्रजलसत्तामाह—

मन्दरपहरुच्छलिए अज्जवि वित्थिण्णमणिपहम्मणिहत्ते ।
जलणिहिजलवोच्छेए अणिग्गआमअरसे समुव्वहमाणम् ॥ ६४ ॥

[मन्दरप्रहारोच्छलितानद्यापि विस्तीर्णमणिप्रहर्म्यनिहितान् ।
जलनिधिजलव्यवच्छेदाननिर्गतामृतरसान्समुद्वहमानम् ॥]

मथनसमये मन्दरप्रहारेण उच्छलितान् जलनिधिजलस्य व्यवच्छेदाननेकदेशानद्यापि समुद्वहमानम् । किंभूतान् । विस्तीर्णे मणिप्रहर्म्ये मणिविशिष्टे विवरे निम्नप्रदेशे निहितान् । एवम्, अनिर्गतोऽमृतरसो येभ्यः तानद्यापि सत्तानुमितमहत्त्वस्य मन्दरोच्छलितजलस्याधारतया विवरस्य महत्त्वेन सुवेलस्य महत्त्वं सुधामयतज्जलपानं च तत्रत्यानामुक्तम् ॥

रामशरसत्तामाह—

जलसंखोहालग्गं वहमाणं विसमलग्गपत्तणणिवहम् ।
राहवसरसंघाअं वज्जमुहक्खुडिअपक्खसेसं व ठिअम् ॥ ६५ ॥

[जलसंक्षोभालग्नं वहमानं विषमलग्नपत्रणानिवहम् ।
राघवशरसंघातं वज्रमुखोत्खण्डितपक्षशेषमिव स्थितम् ॥]

एवं जलसंक्षोभात्समुद्रजलप्रेरणादालग्नं तटे संबद्धं राघवशरसंघातं वहमानम् ।

किंभूतम् । विषमं यथा स्यात्तथा लग्नः पत्रणायाः पक्षरचनाया निवहो यत्र तम् । जलतटयोरभिघातात्पत्रणाभङ्ग इति भावः । उत्प्रेक्षते—इन्द्रस्य वज्रमुखेन उत्खण्डितं पक्षशेषमिव स्थितम् । तथा च भग्नपत्रणाविशिष्टो राघवशरो न भवति, किंतु वज्रखण्डितः सुवेलपक्षशेष एवेत्यर्थः । पत्रणायाः पक्षसाम्येन तद्वत्तया शरेऽपि तदुपचारोऽत एव तट एव तत्स्थितिरिति भावः ॥

करिकेसरियुद्धमाह—

कुम्भोवग्गणणिवडिअकरिहत्थुक्खुडिअसीहकेसरभारम् ।
सहअरिविरुआअण्णणवलन्तभमरपरिवत्तिअलआकुसुमम् ॥ ६६ ॥

[कुम्भावक्रमणनिपतितकरिहस्तखण्डितसिंहकेसरभारम् ।
सहचरीविरुताकर्णनवलद्भ्रमरपरिवर्तितलताकुसुमम् ॥]

एवं कुम्भयोरवक्रमणादतिक्रमणान्निपतितेन करिणा हस्तेन खण्डितः सिंहस्य केसरभारो यत्र तम् । कुम्भारूढस्य केसरिणः केसरकर्तनं तलपतितेनापि करिणा करेण क्रियत इत्यर्थः । एवं सहचरीविरुतस्याकर्णनाद्वलता वक्रीभवता भ्रमरेण परिवर्तितं लताकुसुमं यत्र तम् । विदूरस्थापि भ्रमरी सकामा यद्दिशि संज्ञाशब्दं करोति परिचित्य तद्दिशा वलमानस्य मधुपस्याश्रयीभूतकुसुमपरिवर्तनमुत्कण्ठातिशयं व्यञ्जयतीति कामोद्दीपकत्वमुक्तम् ॥

चन्द्रकान्तसत्तामाह—

हिमसीअले वहन्तं पवणोमासविसमोससिअसेआले ।
दिअसासारक्खुडिए दरवसुआअसलिले ससिमणिप्पवहे ॥ ६७ ॥

[हिमशीतलान्वहन्तं पवनावमर्षविषमोच्छ्वसितशैवालान् ।
दिवसासारखण्डितान्दरशुष्कसलिलाञ्शशिमणिप्रवाहान् ॥]

एवं शशिमणीनां प्रवाहाञ्जलनिस्पन्दान् वहन्तम् । किंभूतान् । हिमवच्छीतलान् । एवं पवनस्यावमर्षेण संबन्धेन विषममुच्छ्वसितानि किंचित्किंचिच्चञ्चलानि शैवालानि यत्र नित्यं तज्जलसंबन्धादुत्पन्नानां शैवालानां पवनेन दरकम्पनमित्यर्थः । एवं दिवसस्यासारेण आगमनेन खण्डितान्विच्छिन्नान् । अत एव दरशुष्काणि सलिलानि यत्र तान् । चन्द्रकान्तस्य निशि जलोद्गमो दिवा शुष्कता भवतीति भावः । 'आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले' इति विश्वः ॥

पारदसत्तामाह—

विसमुल्ललिअपरिमले कमलिणिवत्तपरिघोलिरजलच्छाए ।
मरगअसिलाअलोवरि पवित्तपारअरसे समुव्वहमाणम् ॥ ६८ ॥

[विषमोल्लुलितपरिमलान्कमलिनीपत्रपरिघूर्णनजलच्छायान् ।
मरकतशिलातलोपरि प्रवृत्तपारदरसान्समुद्वहमानम् ॥]

एवं मरकतशिलातलस्योपरि प्रवृत्तान् संगतान् पारदरूपान् रसान् समुद्वहमानम् । किंभूतान् । विषममुल्ललित उद्गतः परिमलो विमर्दो येषां तान् । परिमलः सौरभं वा । एवं कमलिनीपत्रे परिघूर्णमानस्य जलस्येव छाया कान्तिर्येषाम् । हरिद्वर्णत्वेन कमलिनीदलमरकतयोः, श्वैत्यादस्थिरत्वाच्च जलपारदयोः साम्यमित्युपमा ॥

सूर्यसंचारक्रममाह—

आरुहइ व दिवसमुहे उद्धाअन्तुद्धमण्डलाउरतुरओ ।
सममण्डलवोलीणो ओअरइ व जं दिणावसाणम्मि रई ॥ ६९ ॥

[आरोहतीव दिवसमुखे उद्धावमानोर्ध्वमण्डलातुरतुरगः ।
सममण्डलव्यतिक्रान्तोऽवतरतीव यं दिनावसाने रविः ॥]

रविर्दिवसमुखे यं पर्वतमारोहतीव प्रातः स्वाभाविकं रवेरूर्ध्वगमनं दैवादाधारीभूतसुवेलस्योद्देश्यकतयोत्प्रेक्षितम् । तथा च सुवेलमारोहतीति प्रतिभासत इत्यर्थः । तदुक्तम्—उद्धावमानं वेगशालि यदूर्ध्वमूर्ध्वगामि मण्डलं तेनातुराः क्लिष्टास्तुरगा यस्य । भास्वतामूर्ध्वारोहणे श्रम एव भवतीत्याशयः । एवं समे सुवेलमूर्धनि समेन मण्डलेन व्यतिक्रान्तः सन् दिनावसाने सायमवतरतीव । यस्मादित्यर्थात् । पूर्ववदेव स्वभावसिद्धावतरणे तदवतरणत्वमुत्प्रेक्षितम् । तेन तस्माल्लम्बित इति प्रतीयत इत्यर्थः । एतेन चरमाचरमशैलापेक्षयाप्युच्चत्वं तावद्दूरदीर्घत्वं च सूचितम् । पाठान्तरे ऊर्ध्वायमानं यदर्धमण्डलं मण्डलस्योपरिभागस्तेनातुरतुरग इत्यर्थः ॥

तारकासंचारमाह—

छुन्दन्ति जत्थ वन्थे णिसासु विसमपरिहारपरिअत्तन्ता ।
कडएसु कउज्जोआ पुरओ बोलन्ततारआहि वणअरा ॥ ७० ॥

[क्षुदन्ति यत्र पथो निशासु विषमपरिहारपरिवर्तमानाः ।
कटकेषु कृतोद्योताः पुरतो व्यतिक्रान्ततारकाभिर्वनचराः ॥]

यत्र पर्वते वनचरा निशासु पथः क्षुदन्ति व्यतिक्रामन्ति। किंभूताः। कटकेषु विषमस्य प्रदेशस्य परिहाराय त्यागाय परिवर्तमानाः। एवं पुरतो व्यतिक्रान्ताभिर्गच्छन्तीभिस्तारकाभिः कृतोद्योताः। अन्योऽपि निशि परिभ्राम्यन् पुरोगामिदीपिकोद्योतेन गच्छतीति ध्वनिः। तारकावनचरयोस्तुल्यवत्संचार इत्युक्तम्॥

चन्द्रसंचारमाह—

पिअअमविओइआणं जत्थ अ सिहरमिलिअं चिलाअहूवणम्।
बोलेइ वाहमइलिअकुसुमञ्जलिसमुअताडिअं ससिबिम्बम्॥७१॥
[प्रियतमवियोजितानां यत्र च शिखरमिलितं किरातवधूनाम्।
व्यतिक्रामति बाष्पमलिनितकुसुमाञ्जलिसंमुखताडितं शशिम्बिबम्॥]

यत्र च पर्वते शिखरे मिलितं शशिबिम्बं प्रियतमेन वियोजितानां विश्लेषितानां किरातवधूनां बाष्पेण श्वासेन अश्रुणा वा मलिनितो यः कुसुमाञ्जलिस्तेन संमुखेऽग्रतः ताडितं सह व्यतिक्रामति। गच्छतीत्यर्थः। अञ्जलिसमूहेन ताडितमिति वा। विरहिणीनां व्यवहितोऽपि चन्द्रस्तापकः, किं पुनरतिसंनिहित इति हृदयावेगोद्गतश्वासमलिनेन तापशान्त्यर्थमानीतेनापि पुष्पेणानुषङ्गिकं चन्द्रताडनमित्यर्थः॥

गगनतौल्यमाह—

णहअलं व गहसोहिअं सविआणअं
सिहरुद्धखअमारुअरहसविमाणअम्।
रअणसिहरकिरणुग्गमेहि वणराअअं
दरिमुहेसु गुप्पन्तसीहघणराअअम्॥ ७२॥
[नभस्तलमिव ग्रहशोभितं सविमानकं
शिखररुद्धक्षयमारुतरभसविमानदम्।
रत्नशिखरकिरणोद्गमैर्घनरागदं
दरीमुखेषु व्याकुलायमानसिंहघनरावकम्॥]

किंभूतम्। नभस्तलमिव ग्रहैर्नक्षत्रैः शोभितम्। उच्चत्वात्। एवं विमानं व्योमयानं तत्सहितम्। वितानं विस्तारस्तत्सहितं वा। यद्वा सविमानम् विगतं मानं यस्य। तद्भावो विमानता तत्सहितम्। अपरिमेयमित्यर्थः। सविमानकं वा।

विमानगा देवास्तत्सहितम् । सर्वमिदं द्वयोरप्यन्वेति । एवं शिखरे रुद्धो यः प्रलयमारुतस्तद्भ्रमस्य तद्वेगस्य विमानदमपमानदम् । प्रसरभञ्जकत्वात् । अपमानमाकर्तारं वा । वितानदं वा । मारुतरभसवितानस्य तत्समूहस्य खण्डकमित्यर्थः । एवं रत्नशिखराणां किरणोद्गमैर्घनेभ्यो मेघेभ्यो रागदं लौहित्यदम् । पद्मरागादिकान्तिसंक्रमात् घनो रागोऽनुरागो यत्र । रत्नादित एव तादृशं वा । वस्तुतस्तु रत्नशिखरकिरणोद्भटम् । रत्नशिखराणां किरणेन दिशि दिशि प्रसारणेन उग्रमुद्भटम् । एवमेधिघनराजकम् । एधः समृद्धिस्तद्विशिष्ट एधी, एधिनौ समृद्धौ घनौ मेघौ राजानौ वा यत्र तादृशं कं मस्तकं यस्य तम् । तयोः समत्वात् । एवं कंदरामुखेषु व्याकुलायमानो विमूर्च्छनशीलः सिंहस्य घनो रावो नादो यत्र तम् । प्राशस्त्ये कन् ॥

व्यापकत्वमाह—

जम्मि समत्त व्व दिसा झीण व्व मही कआवसाणं व णहम् ।
अत्थमिओ व्व समुद्दो णट्ठं व्व रसाअलं णिसण्णं व जअम् ॥७३॥

[यस्मिन्समाप्ता इव दिशः क्षीणेव मही गतावसानमिव नभः ।
अस्तमित इव समुद्रो नष्टमिव रसातलं निषण्णमिव जगत् ॥]

यस्मिन्पर्वते दिशः समाप्ताः पर्याप्ता इव । तद्व्यतिरेकेणान्यत्रानवलोकनात् । मही क्षीणेव क्षुद्रेव । नितम्बपर्याप्तत्वात् । नभः कृतावसानमिव । कृतमवसानमन्तो यस्येत्यर्थः । यावदाकाशस्य तेनैव व्याप्तत्वेन व्यवच्छेद्यवृत्त्यभावात् । अस्तमित इव समुद्रः । बृहत्कटकाक्रान्तत्वेन कंदरान्तर्गतत्वेन चादृश्यमानत्वात् । रसातलं नष्टमिव । बृहन्मूलावष्टब्धत्वात् । जगन्निषण्णमिव । मूलमौलिपार्श्वेषु पर्यवसितत्वात् ॥

विकटकूटतामाह—

जस्स सिहरेसु बहुसो वलन्ति वलमाणजुअवलन्तक्खन्धा ।
भीआरुणपरिवत्तिअघोणाघोलन्तचामरा रइतुरआ ॥ ७४ ॥

[यस्य शिखरेषु बहुशो वलन्ति वलमानयुगवलत्स्कन्धाः ।
भीतारुणपरिवर्तितघोणाघूर्णमानचामरा रवितुरगाः ॥]

रवितुरगा यस्य शिखरे बहुशो बलन्ति वक्रीभवन्ति । किंभूताः । वलमानेन

विकटप्रदेशे लगित्वा वक्रीभवता युगकाष्ठेन वलन्तो वक्रीभवन्तः स्कन्धा येषां ते। वक्रयुगाक्रान्तत्वात्स्कन्धस्य वक्रत्वमिति भावः। अत एव स्कन्धयुगभङ्गाद्भावणाद्वा भीतारुणेन सारथिना परिवर्तिता ऋजुमार्गलाभाय भ्रामयित्वा पश्चात्कृता अत एव घोणायां घूर्णमानं चामरं येषाम्। तिर्यङ्मुखतया चामरभ्रमणमिति भावः। 'घोणा तु प्रोथमस्त्रियाम्' इति॥

ज्योतिर्लोकसत्तामाह—

दीसन्ति जोइसवहे णिसासु वोढूण कुसुमणिवहं व जहिं।
गहिअपढमुच्चआइ व पहाअवोच्छिण्णतारआइ वणाइं॥ ७५॥

[दृश्यन्ते ज्योतिःपथे निशासूढ्वा कुसुमनिवहमिव यत्र।
गृहीतप्रथमोच्चयानीव प्रभातव्यवच्छिन्नतारकानि वनानि॥]

यत्र गिरौ ज्योतिःपथे नक्षत्रलोके प्रभाते व्यवच्छिन्ना रविरोचिषाभिभवाद्विरलास्तारका यत्र तथाभूतानि वनानि दृश्यन्ते। कानीव। कुसुमनिवहमूढ्वेव धृत्वेव। निशासु गृहीतः प्रथमोच्चयः प्रथमत्रोटनं येषु तानीव। पुष्पाणां प्रथमावचये किंचिदवशिष्टं तिष्ठत्येवेति। निशायामेव किंचिद्धृत्वा किंचिद्गृहीतमिति प्रभाते शाखापत्रान्तरालदृश्याः कतिपयतारकाः पुष्पतुल्यतया तथोत्प्रेक्षिताः। तथा च द्वितीयावचय इव मध्यंदिने ता अपि न स्थास्यन्तीत्युच्चत्वमुक्तम्। यद्वा निशासु कुसुमनिवहं धृत्वेव गृहीतप्रथमोच्चयानीव। अवचयशब्दस्यावचितार्थकत्वेन गृहीतप्रथमावचितानि निशासु धृत्वा प्रभाते त्रोटितपुष्पाणीत्यर्थः॥

महिषाणां निद्रामाह—

जत्थ अ गमेन्ति णिद्दं णिसासु णीसासविहुअपेलवजलआ।
चन्दपरिमासपअडिअससिमणिसलिलोज्झराहआ वणमहिसा ७६

[यत्र च गमयन्ति निद्रां निशासु निःश्वासविधुतपेलवजलदाः।
चन्द्रप्रतिमर्षप्रकटितशशिमणिसलिलनिर्झराहता वनमहिषाः॥]

यत्र च पर्वते वनमहिषा निशासु निद्रां गमयन्ति अतिवाहयन्ति। किंभूताः। चन्द्रस्य प्रतिमर्षेण स्पर्शेन प्रकटितं यच्चन्द्रकान्तमणिसलिलं तस्य निर्झरेण आहताः स्पृष्टाः, अत एव निःश्वासेन विधुता दूरं प्रेरिताः पेलवाः कोमलाः जलदा यैः। प्रेरणे पेलवत्वं हेतुः। तथा च दिवा संनिहितरविसंतप्ततया निशि तथाविधशैत्यलाभान्निर्वृत्य निद्राधिक्यं निःश्वासप्रकर्षेण सूचितम्॥

महोरगसत्तामाह—

जत्थ अ सिहरावडिअं वलइ सिलाभित्तिविसमपासल्लइअम् ।
भुअइन्दमणिणिहंसणपणट्ठउज्जोअसंचअं ससिबिम्बम् ॥ ७७ ॥
[यत्र च शिखरापतितं वलति शिलाभित्तिविषमपार्श्वायितम् ।
भुजगेन्द्रमणिनिघर्षणप्रणष्टोद्योतसंचयं शशिबिम्बम् ॥]

यत्र च गिरौ शिखरे आपतितं सच्छशिबिम्बं वलति । अप्रतिहतपथलाभाय भ्रमति । किंभूतम् । शिलाभित्तौ विषमं यथा स्यात्तथा पार्श्वायितं तिर्यग्विवृत्तम् । पुरतः प्रतिरोधादित्यर्थः । एवं तत्रैव भुजगेन्द्रमणेर्निघर्षणेन प्रणष्ट उद्योतानां संचयो यस्य तत् । तथा च शशितेजोऽभिभावकतेजःशालितया चन्द्रादपि फणामणेराधिक्यमुक्तम् ॥

कम्पोत्कर्षमाह—

आमोइअपाआलो जस्स खउप्पाअकम्प णिद्दअविहुओ ।
पव्वालेइ महिअलं अवलिच्छिअसेससाअरो मअरहरो ॥ ७८ ॥
[आमोचितपातालो यस्य क्षयोत्पातकम्पो निर्दयविधुतः ।
प्लावयति महीतलमप्रतिष्ठशेषसागरो मकरगृहः ॥]

क्षयः प्रलयः तद्रूपोत्पातकृतकम्पः येन । निर्दयं विधुतः आन्दोलितः । मकरगृहः समुद्रो यस्य महीतलं तटभूमिं प्लावयति । किंभूतः । आमोचितं त्यक्तं पातालं येन । कम्पकृतोच्छलनात् । तथा च विश्वव्यापनक्षमोऽप्येतत्कृतप्रतिरोधादन्यत्र गन्तुं न शक्नोतीति भावः । तदुक्तम्—अप्रतिष्ठा अनासादिताः शेषसागरा येन । एतत्कृतव्यवधानादेवेति तुङ्गत्वदृढत्वदृढमूलत्वानि कथितानि । वस्तुतस्तु यस्य क्षयोत्पातकं येन विधुतः समुद्रो महीतलं प्लावयतीत्यन्वयः । तथा च सागरान्तरनैरपेक्ष्येणापि प्रलये महीं यद्व्याप्नोति तत्सुवेलकम्पादुच्छलितः सन्नित्युत्प्रेक्षितम् । तेन समुद्रक्षोभजनककम्पाधारत्वेन महत्त्वमुक्तमिति मदुन्नीतः पन्थाः ॥

मेघसिंहयोः सहावस्थितिमाह—

जत्थ भमन्ति णहंकुससिहरसमासण्णमुहलकड्ढिअजलआ ।
मुहपडिअविज्जुमण्डलदरपज्जलिअधुअकेसरा केसरिणो ॥ ७९ ॥
[यत्र भ्रमन्ति नखाङ्कुशशिखरसमासन्नमुखरकृष्टजलदाः ।
मुखपतितविद्युन्मण्डलदरप्रज्वलितधुतकेसराः केसरिणः ॥]

यत्र केसरिणः सिंहा भ्रमन्ति । किंभूताः । अङ्कुशाकारनखशिखरे समासन्ना लग्नाः । बिद्धत्वात् । अत एव मुखराः पीडावशेन शब्दायमानाः सन्त आकृष्टा जलदा यैः । अत एव संमुखतया मुखे पतितेन विद्युन्मण्डलेन किंचित् प्रज्वलिता अत एव धुताः केसरा यैस्ते । तथा च करिभ्रमान्नखविपाटितजलधरोदरनिर्गतविद्युज्ज्वलितानां केसराणां निर्वापणाय यथा यथा पतनं तथा तथाधिकमम्बुत्तेजनम् । अतः परिभ्रमणमिति भावः ॥

हरिचन्दनेषु गजस्थितिमाह—

ओज्झरमज्जणसुहिआ जत्थ पुणो वि दिवसाअवकिलिम्मन्ता ।
णिव्वाअन्ति णिसण्णा खन्धुग्घुट्ठहरिचन्दणदुमेसु गआ ॥ ८० ॥

[निर्झरमज्जनसुखिता यत्र पुनरपि दिवसातपक्लाम्यमानाः ।
निर्वान्ति निषण्णाः स्कन्धोद्घृष्टहरिचन्दनद्रुमेषु गजाः ॥]

यत्र गजाः स्कन्धेषु प्रकाण्डेषु स्कन्धेन स्वांसेन वा उद्घृष्टाः कण्डूमार्जनाय कृतघर्षणा ये हरिचन्दनद्रुमास्तेषु निषण्णाः सन्तः शैत्यान्निर्वान्ति सुखीभवन्ति । किंभूताः । निर्झरेषु मज्जनेन सुखिताः पुनरपि दिवसातपेन क्लान्तिं नीयमानाः । तथा च प्रथमतापेन मज्जनं तदनुतापेन छायाश्रयणमिति सर्वथा सुखजनकत्वमुक्तम् । 'निर्वाणमस्तं गमने निर्वृतौ जलमज्जने । निर्वाणमपवर्गेऽपि निर्वाणं निर्वृतिं विदुः ॥' इति धरणिः ॥

रविगतागतमाह—

जत्थ अ भमिरमहुअरं कडअलआलग्गधवलचामरपम्हम् ।
ससिउद्धुअकुसुमरअं णज्जइ तुरिआण रइतुरंगाण गअम् ॥८१॥

[यत्र च भ्रमणशीलमधुकरं कटकलतालग्नधवलचामरपक्ष्मम् ।
श्वसितोद्धूतकुसुमरजो ज्ञायते त्वरितानां रवितुरङ्गाणां गतम् ॥]

यत्र च दक्षिणायने त्वरितानां रवेस्तुरङ्गाणां गतं ज्ञायते । कथमित्याह—किंभूतम् । कटकलतासु लग्नानि धवलानि चामराणामर्थात्कण्ठादिनिबद्धानां पक्ष्माणि रोमाणि यत्र । अत एव तत्संघट्टाद्दूरे भ्रमणशीला मधुकरा यत्र । लतावर्तिन एवेत्यर्थात् । एवं श्वसितेन हयानामेव उद्धूतमुत्थापितं कुसुमानां रजो यत्र लतानामेव । तथा चोड्डीनमधुकरचामरपक्ष्मकुसुमपरागोद्गमैरेवानुमीयते रविरनेन पथागत इति । न तु दृश्यते । कुञ्जकंदरादिवशादिति भावः । 'पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि' इति विश्वः ॥

सुरवन्दीसत्तामाह—

अञ्जणराएण सइ धूसरन्तआइं
गण्डअलेसु खलिअविसमोसरन्तआइं ।
सुरबन्दीण णअणगलिआइं अंसुआइं
कप्पलआण जत्थ मइलेन्ति अंसुआइं ॥ ८२ ॥

[अञ्जनरागेण सदा धूसरायमाणानि
गण्डतलेषु स्खलितविषमापसरन्ति ।
सुरबन्दीनां नयनगलितान्यश्रूणि
कल्पलतानां यत्र मलिनयन्त्यंशुकानि ॥]

यत्र सुरबन्दीनां रावणेन बन्दीकृत्य स्थापितानां देवस्त्रीणां नयनयोर्गलितान्यश्रूणि । कर्तॄणि । कल्पलतानामंशुकानि वस्त्राणि मलिनयन्ति । सकलपदार्थाकरत्वेन तत्र वस्त्राणामपि सत्त्वात् । तैरेवाश्रुप्रोञ्छनात्, सांनिध्येनाश्रूणां स्वत एव पतनाद्वेति भावः । कथमित्यत आह—अश्रूणि किंभूतानि । अञ्जनस्य रागेण वर्णेन सदा धूसरायमाणानि । कज्जलसंपर्काद्धूसरच्छवीनीत्यर्थः । धूसरोऽन्तःस्वरूपं येषामिति वा । अत एव मालिन्यहेतुत्वमिति भावः । सकज्जलाश्रुसंपर्कादुभयथाप्यंशुकविशेषणं वा । पुनः किंभूतानि अश्रूणि । विरहात्संतापाच्च दौर्बल्यान्नतोन्नतत्वेन गण्डतलेषु स्खलितानि सन्ति विषममपसरन्ति । दिशि दिशि पतन्तीत्यर्थः ॥

दैर्घ्योत्कर्षमाह—

एक्कसिहरे समप्पइ जस्स अ सोसविअमलिअदुमसंघाओ ।
सइ दक्खिणुत्तराअणणहगमणागमणविलुलिओ रइवन्थो ॥८३॥

[एकशिखरे समाप्यते यस्य च शोषितमृदितद्रुमसंघातः ।
सदा दक्षिणोत्तरायणनभोगमनागमनविलुलितो रविपथः ॥]

यस्य चैकस्मिन्नेव शिखरे रविपथः समाप्यते सदा । कीदृक् । दक्षिणोत्तरायणाभ्यां नभसि गमनागमनेन विलुलितः घृष्टः । तथा चायनद्वयेऽप्यध्वनां मिथो व्यवधानोत्कर्षेऽप्येकशिखर एव सदा पर्यवस्यतीति शिखरस्य बृहत्त्वम् । पुनः कीदृक् । शोषितः सन्मृदितो द्रुमाणां संघातो यत्र । नित्यसंचारादिति भावः ॥

वृद्धिमाह—

जेण भरभिण्णवसुहं अप्फुण्णरसाअलं समोत्थइअणहम् ।
सव्वदिसाविच्छूढं परिवड्ढन्तेण वड्ढिअं व तिहुअणम् ॥ ८४ ॥

[येन भरभिन्नवसुधमाक्रान्तरसातलं समवस्थगितनभः ।
सर्वदिग्विक्षिप्तं परिवर्धमानेन वर्धितमिव त्रिभुवनम् ॥]

परि सर्वतो भावेन वर्धमानेन येन गिरिणा त्रिभुवनं वर्धितमिव । दूरदेशव्यापिकृतमित्यर्थः । तदुपपादयति—किंभूतम् । येन गिरिणा भरेण देहपरिणाहेन भिन्ना वसुधा यत्र । आ मूलनिखाततत्वात् । अथ येन आक्रान्तं रसातलं यत्र । मूलविस्तारात् । तथा येन समवस्थगितमतिव्याप्तं नभो यत्र । शिरसो महत्त्वात्तथाभूतम् । अत एव सर्वासु दिक्षु विक्षिप्तं प्रेरितम् । तथा चोपरि शिखरसमृद्ध्या नभः समुत्तोलनं परितो मूलस्थौल्येन पृथिव्याः प्रसारणमधस्ताच्च मूलवृद्ध्या पातालयन्त्रणमित्येवं क्रमादेकस्यैव त्रैलोक्यप्रेरणक्षमत्त्वेन महत्त्वमुक्तम् ॥

सदा सर्वर्तुसत्तामाह—

गन्धावद्धमहुअरा वसन्ति जत्थ समअं सुरअणाणुगआ ।
अण्णोण्णं पडिऊला एक्कक्खम्भणिआसुरगअ व्व उऊ ॥ ८५ ॥

[गन्धाबद्धमधुकरा वसन्ति यत्र समकं सुरवनानुगताः ।
अन्योन्यं प्रतिकूला एकस्तम्भनिगलितसुरगजा इवर्तवः ॥]

यत्रान्योन्यं प्रतिकूलाः परस्परविरुद्धा अपि ऋतवः सममेकदैव सन्ति । रावणप्रभावाद्देशभेदाद्वा । एवं एकस्तम्भनिगलिताः सुरगजा इव । यथा ते मिथो विरुद्धा अपि वसन्तीत्यर्थः । उभये किंभूताः । गन्धेन सौरभेण, ऋतुपक्षे-पुष्पस्य, गजपक्षे-दानस्य, आबद्धाः संबद्धा मधुकरा यैस्ते । ऋतुपक्षे-गन्धाबद्धमधूनां कर्तार इत्यप्यर्थः । एवं सुरवनेन नन्दनादिनानुगतास्तत्सहितास्तान्यपि वसन्तीत्यर्थः । यद्वा सुरजनानुगताः । सुरगणानुगता वा । सुरवनानुगता वा । सुरवनं शोभनवाप्यादि । सुरचनानुगता वा । रचना संस्थानविशेषः । सर्वत्र तृतीया समास इति ऋतुपक्षे । गजपक्षेऽपि सर्वमिदं समानमेव । सुरवनमनुगता आश्रिता इति विशेषः । सुरत्नानुगता इत्यधिकम् । सुरत्नेन मुक्ताफलेनानुगता इत्यर्थः । वयं तु—'एकस्तम्भे सुवेल एव निगलिताः सुरगजा इव यत्र ऋतवो वसन्तीति सहोपमा । तथा च

यथा दिग्गजा इह वसन्ति तथा ऋतवोऽपीत्यर्थः । तेन 'नानादिग्वर्तिसकलदिग्गजाधिकरणत्वेन महत्त्वम्' इति ब्रूमः ॥

शिखरोच्चतामाह—

दीसइ वि वलाअन्तो जत्थ समासण्णदहमुहभआविग्गो ।
सिहरन्तरालपडिलग्गमोइआणिक्कमण्डलो दिवसअरो ॥ ८६ ॥

[दृश्यतेऽपि पलायमानो यत्र समासन्नदशमुखभयाविग्नः ।
शिखरान्तरालप्रतिलग्नमोचिततिर्यङ्मण्डलो दिवसकरः ॥]

यत्र दिवसकरोऽपि पलायमानो दृश्यते । कुत इत्यत आह—समासन्नो निकटवर्ती दशमुखस्तद्भयादाविग्न उद्विग्नः । एवम्—शिखरयोरन्तराले मध्ये प्रतिलग्नं सन्मोचितं संमुखीकृतं तिर्यग्भूतं मण्डलं येन । अन्योऽपि पलायमानः कण्टकादिलग्नं वस्त्रादि यथातथा मोचयित्वा गच्छतीति ध्वनिः ॥ आणिक्क तिर्यगर्थे देशी ॥

किंनराणां गानमाह—

जत्थ अ मिआण मणहरकिंणरगीअसुहिओणिमिल्लच्छाणम् ।
विसमिअरोमन्थाणं एइ विउद्धं चिरेण रोमं त्थाणम् ॥ ८७ ॥

[यत्र च मृगाणां मनोहरकिंनरगीतसुखितावमीलदक्षाणाम् ।
विश्रमितरोमन्थानामेति विबुद्धं चिरेण रोम स्थानम् ॥]

यत्र च मनोहरेण किंनराणां गीतेन गानेन सुखितानाम्, सुहितानां तृप्तानां वा, अत एव सुखवशादवमीलती मुकुलायमाने अक्षिणी येषां तथाभूतानां सतां विबुद्धं भाववशादुत्फुल्लं रोम कर्तृ चिरेण स्थानं एति पूर्वावस्थां प्राप्नोति सुखस्याधिकसमयव्यापित्वादिति भावः । कीदृशानाम्—विश्रामं नीतो रोमन्थोऽलीकचर्वणं यैः । भावनाख्याभाव्याद्विस्मृतरोमन्थानामिति वा । विषमितरोमन्थानामिति वा । विषमितोऽन्तरान्तरा विच्छेदित इत्यर्थः ॥

सदा कुमुदविकासमाह—

तीरपवित्तमुहलकलहंसरोअएसुं
कुविअगइन्दबद्धकलहं सरोअएसुं ।
कुमुअवणाण जत्थ णहअन्दलग्गआणं
रविअरदंसणे वि ण हअं दलग्गआणम् ॥ ८८ ॥

[तीरप्रवृत्तमुखरकलहंसरोचकेषु
कुपितगजेन्द्रबद्धकलहं सरोवरेषु (सर उदकेषु, उदरेषु, वा) ।
कुमुदवनानां यत्र नभश्चन्द्रलग्नानां
रविकरदर्शनेऽपि न हृतं दलाग्रतानम् ॥]

यत्र गिरौ सरः कर्तृ उदकेषु, उदरेषु वा जलपानार्थमागताभ्यां कुपिताभ्यां गजेन्द्राभ्यां बद्धः कलहो यत्र तज्जातयुद्धमित्यर्थः । तथाभूतं तिष्ठतीत्यर्थात् । कथंभूतेषु । तीरप्रवृत्तैस्तीरसंचारिभिः मुखरकलहंसै रोचकेषु रुचिकारकेषु । तेषां रोचकेष्विति वा । एवं यत्र कुमुदवनानां दलाग्रेषु तानं विकासो रविकराणां दर्शनेऽपि सूर्योदयेऽपि न हृतं नापगतमित्यर्थः । अत्र हेतुमाह—किंभूतानाम् । नभसि चन्द्रे लग्नानां मिलितानाम् । तथा च मुद्रणसामग्रीसत्त्वेऽपि नित्यं विकाससामग्रीसत्त्वं सूर्यादप्युपरिवर्तित्वं च कुमुदानां चन्द्रमिलनेनोक्तम् ॥ [तदुक्तम्] रविकरस्य दर्शनमात्रम्, अत एव दर्शनमिलनयोर्मिलनस्य बलवत्त्वात्कार्यो विकासो भवति, नतु दर्शनकार्यं मुद्रणमिति भावः । यद्वा सरोवरेषु कुमुदवनानां दलाग्रतानं न हृतम् । किंभूतम् । गजेन्द्राभ्यां बद्धः कलहो यस्मै तथाभूतम् । एकमेव कुमुदं ग्रहीतुमुद्यतयोर्युद्धमित्यर्थ इति मद्व्याख्या । संप्रदायस्तु—सरोवरेषु कुपितगजेन्द्रबद्धकलहमिति वा सुवेलविशेषणं 'यत्र गिरौ' इत्यग्रेतनेन संबन्धि—इति व्याचष्टे ॥

शेषनागावष्टम्भतामाह—

वलमाणम्मि महुमहे जत्थ अ पाउच्छलन्तरअणुज्जोअम् ।
विअडं फणपब्भारं गाढभरुत्ताणिअं णिमेइ अणन्तो ॥ ८९ ॥

[वलमाने मधुमथने यत्र च पादोच्छलद्रत्नोद्योतम् ।
विकटं फणप्राग्भारं गाढभरोत्तानितं नियोजयत्यनन्तः ॥]

अनन्तः शेषः फणाशयाने मधुमथने वलमाने कृतपार्श्वपरिवर्तने सति गाढभरेण विश्वंभर(श्वभार)गौरवेणोत्तानीकृतं विकटं महान्तं फणप्राग्भारं यत्र गिरौ नियोजयति पतनभयेन यन्मूले[न] अवस्थापयतीत्यर्थः । किंभूतम् । पादेषु प्रत्यन्तपर्वतेषूच्छलद्रत्नानामुद्योतो यस्मात्तम् । फणस्योत्तानीभावात् । तथा च पादपर्वता अप्यस्यापातालमूलाः । अयं च विश्वंभरा विश्वंभरभारेऽप्यनन्तस्यावष्टम्भ इति भावः ॥ फणानामुत्तानीभावेन तन्मणीनामधःपतितत्वेन तत्कान्तीनां फणाभिरेव

व्यवधानादूर्ध्वगमनागमने सुवेलस्यैव पादे मूले उच्छलनमिति तावद्दूरमूलकत्वमस्योक्तमिति मदुन्नीतः पन्थाः ॥

चन्द्रस्यावस्थामाह—

दीसइ कडअल्लीणो जस्स अ विवरसरिसुब्भडमअच्छाओ ।
अवहोवासमऊहो सिहरुज्झरभिण्णमण्डलो व्व मिअङ्को ॥ ९० ॥

[दृश्यते कटकालीनो यस्य च विवरसदृशोद्भटमृगच्छायः ।
उभयावकाशमयूखः शिखरनिर्झरभिन्नमण्डल इव मृगाङ्कः ॥]

यस्य च कटक आलीनो मृगाङ्कः शिखरनिर्झरेण भिन्नं ताडितं मण्डलं यस्य तादृश इव दृश्यते । अत्र बीजमाह—विवरसदृशी उद्भटा मृगस्य च्छाया यत्र । अत एव उभयावकाशे पार्श्वद्वये मयूखा यस्य । तथा च—मृगाङ्कस्य कटकावरुद्धत्वेन मध्यभागः श्यामिकायाः प्रकटतया तुच्छ इव लक्ष्यते । शुभ्रकान्तिस्तु कटकावरोधादेव संमुखमगच्छन्ती पार्श्वयोर्द्विधाभूयोर्ध्वं गच्छतीति पतन्निर्झरत्वेन भासत इति भावः ॥

त्रैलोक्याधारतामाह—

मज्झकरालाइ जहिं तिण्णि वि समअं णिरन्तरपहुत्ताइं ।
थोरुण्णए हरिभुए वलआइ व भुअणमण्डलाइ ठिआइं ॥ ९१ ॥

[मध्यकरालानि यत्र त्रीण्यपि समकं निरन्तरप्रभूतानि ।
स्थूलोन्नते हरिभुजे वलयानीव भुवनमण्डलानि स्थितानि ॥]

यत्र त्रीण्यपि भुवनमण्डलानि मण्डलाकाराणि भुवनानि स्थितानि । कीदृशानि । मध्ये करालानि सच्छिद्राणि । सुवेलेनैव विद्धत्वात् । एवम्—समकं तुल्यं निरन्तरं निःसंधि प्रभूतानि मिलितानि । कानीव । स्थूले उन्नते हरिभुजे वलयानीव । यथा यथोक्तविशेषणविशिष्टानि वलयानि त्रिविक्रमस्य भुजे स्थितानीति रसातलभूतलनभस्तलानि भित्त्वा निर्गतोऽयमिति भावः । हरिभुजसुवेलयोर्वलयभुवनयोः साम्यम् ॥

नक्षत्राणां गतागतमाह—

सोसिअदुमा रइवहा णववणराइसुहसीअरा ससिवन्था ।
जत्थ वणन्तरतणुआ णवर ण णज्जन्ति तारआगइमग्गा ॥९२॥

[शोषितद्रुमा रविपथा नववनराजिसुखशीतलाः शशिपथाः ।
यत्र वनान्तरतनुकाः केवलं न ज्ञायन्ते तारकागतिमार्गाः ॥]

यत्र गिरौ शोषिता द्रुमा यत्र तथाभूता रविपथाः, एवं नूतना या वनराजिस्तया तद्द्वा सुखदाः शीतलाः शशिपथा अपि ज्ञायन्ते। केवलं वनान्तरे वनमध्ये तनुकाः कृशास्तारकाणां गतिमार्गा न ज्ञायन्ते द्रुमशोषणशैत्ययोरनुमापकत्वाद्रविचन्द्रयोः पन्था ज्ञायते । तारकाणां तु तथाविधचिह्नाभावात्स्वतः कृशत्वाच्च न ज्ञायत इत्यर्थः ॥

देवस्त्रीसंचारमाह—

**अलअपडिलग्गगन्धं तिअसवहूणं सिलाअलोत्थअमलिअम् ।**
**अक्खिवइ जत्थ पवणो ओसुक्खन्तसुरहिं तमालकिसलअम् ९३**

[अलकप्रतिलग्नगन्धं त्रिदशवधूनां शिलातलावस्तृतमृदि(मलि)तम् ।
आक्षिपति यत्र पवनोऽवशुष्यत्सुरभिं तमालकिसलयम् ॥]

यत्र पवनस्त्रिदशवधूनां तमालकिसलयमाक्षिपति । कर्णोत्पातयतीत्यर्थः । कीदृशम् । अलकेषु प्रतिलग्नः संक्रान्तो गन्धो यस्य । सहवासादलकान्प्रतिलग्नो गन्धो यत्रेति वा । गन्धतैलादिसंबन्धात् । अतएवावशुष्यत् सुरभिम् । एवम् शिलातलेऽवस्तृतम् । अत एव शयनेन गण्डघृष्ट्या मृदितम् । अथवा—त्रिदशवधूनामिति तृतीयार्थे षष्ठी । तथा च यत्र गिरौ पवनस्त्रिदशवधूभिः शिलातलेऽवस्तृतं शयनपरिस्तरणीकृतं सन्मृदितं घृष्टं तमालकिसलयमाक्षिपति । दिशि दिशि प्रेरयतीत्यर्थः । विशेषणान्तरं तु पूर्ववत् ॥

मेघानां गतागतमाह—

**पवणाहअपल्हत्था दरीसु जस्स अ पुणो वि लग्गन्ति णहम् ।**
**पडिसोत्तपत्थिउम्मुहमुहुत्तपीअसलिलोज्झरा सलिलहरा ॥ ९४ ॥**

[पवनाहतपर्यस्ता दरीषु यस्य च पुनरपि लगन्ति नभः ।
प्रतिस्रोतःप्रस्थितोन्मुखमुहूर्तपीतसलिलनिर्झराः सलिलधराः ॥]

सलिलधरा मेघा यस्य च दरीषु पवनेनाहतास्ताडिताः सन्तः पुनरपि नभो लगन्ति । मिलन्तीत्यर्थः । किंभूता । प्रतिस्रोतसा विपरीतमार्गेण प्रस्थिताः । अत एव उन्मुखा ऊर्ध्वमुखाः । एवं मुहूर्तं व्याप्य पीतः सलिलनिर्झरो यैस्ते ।

यद्दरीजलपानार्थं गता मेघास्तत्रत्यपवनोद्धूतत्वादीषदेव जलं निपीय येनैवागतास्तेनैव पथा गगनं गच्छन्तीति दरीवायोरूर्ध्वगतित्वेन विकटोदरत्वमुक्तम् ॥

श्वापदबाहुल्यमाह—

अदिट्ठगअपणोल्लिअपडन्ततडघाअमुच्छिउट्ठिअसीहे ।
सद्दूलरवविसंठुलणिवडिअअण्णोण्णलग्गकिंणरमिहुणे ॥ ९५ ॥
तुङ्गअडोज्झरमुहले जस्स अ कसणमणिगण्डसेलद्धन्ते ।
सेवन्तीण ण पत्तो तिअसवहूण सिढिलत्तणं अणुराओ ॥ ९६ ॥

(जुग्गअम्)

इति सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे सुवेलवण्णणो णवमो आसासओ ॥

[अदृष्टगजप्रणोदितपतत्तटघातमूर्च्छितोत्थितसिंहान् ।
शार्दूलरवविसंष्ठुलनिपतितान्योन्यलग्नकिंनरमिथुनान् ॥
तुङ्गतटनिर्झरमुखरान्यस्य च कृष्णमणिगण्डशैलार्धान्तान् ।
सेवमानानां न प्राप्तस्त्रिदशवधूनां शिथिलत्वमनुरागः ॥]

(युग्मकम्)

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये सुवेलवर्णनो नवम आश्वासः ॥

यस्य 'कृष्णमणिमयानां गण्डशैलानामर्धान्तान्सेवमानानामाश्रितानां त्रिदशवधूनामनुरागो मनोभिनिवेशः शिथिलत्वं न प्राप्तः' इत्यग्रिमस्कन्धके योजना । कीदृशान् । अदृष्टेनाज्ञातेन गजेन प्रणोदिताः सिंहनाशाय प्रेरिताः । अत एव पतन्तस्तटाः पर्वतैकदेशास्तदभिघातेन प्रथमं मूर्च्छिता अथोत्थिताः सिंहा येषु तान् । एवं शार्दूलरवेण विसंष्ठुलं संभ्रान्तम्, अत एव निपतितम्, अथान्योन्यलग्नं मिलितं किंनराणां मिथुनं येषु तान्, किंभूतान् तुङ्गस्य तटस्य पर्वतैकदेशस्य निर्झरेण मुखरान् ऊर्ध्वतः पतता शब्दायमानान् ॥ आदिकुलकम् ॥

सुवेलोत्कर्षदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णाभून्नवमी शिखा ॥

---

दशम आश्वासः ।

अथ सुवेलारोहणमाह—

अह णिअअमहिहरेसु व सुवेलसिहरेसु णिव्वडिअवीसत्थम् ।
परिसंठिअं हअम्मि व अहअम्मि वि दहमुहे पवंगमसेण्णम् ॥१॥

[अथ निजकमहीधरेष्विव सुवेलशिखरेषु निर्वलितविश्वस्तम् ।
परिसंस्थितं हत इवाहतेऽपि दशमुखे प्लवंगमसैन्यम् ॥]

अथ सुवेलदर्शनोत्तरं प्लवंगमसैन्यं सुवेलशिखरेषु परिसंस्थितमावासग्रहणं चकारेत्यर्थः । निजकेषु महीधरेष्विव । यथा स्वीयशैलेषु स्थितिः क्रियते । एतेन स्वेच्छाचारविहारक्षोभामोटनादिना वानराणामभयत्वं रावणस्य च प्रतापभङ्गः सूचितः । तदुक्तम्—अहतेऽपि सकलसामग्रीसचिवे विद्यमानेऽपि दशमुखे हत इव सति निर्वलितं सानौ सानौ पृथग्भूतं विश्वस्तमक्षुब्धमिति सैन्यक्रिययोरन्यतरविशेषणम् । यद्वा निजकेति साहचर्येण निर्वलितेति हत इवेति साहचर्येण परिसंस्थितमिति योज्यम्(?)। अत्र निर्वलितेतिपदेन कपीनामुत्साहगर्वयोः सुवेलविस्तारस्य च प्रकर्ष उक्तः । निजमहीधरसुवेलशिखरयोरुपमासंभवेत्युत्प्रेक्षा चमत्कारिणी ॥

अथ सुवेलोपमर्दमाह—

रइणा वि अणुक्खुण्णा वीसत्थं मारुएण वि अणालिद्धा ।
तिअसेहिँ वि परिहरिआ पवंगमेहिँ मलिआ सुवेलुच्छङ्गा ॥ २ ॥

[रविणाप्यनुत्क्षुण्णा विश्वस्तं मारुतेनाप्यनालीढाः ।
त्रिदशैरपि परिहृताः प्लवंगमैर्मृदितः सुवेलोत्सङ्गाः ॥]

ये रविणाप्यनुत्क्षुणा ऊर्ध्वमनाक्रान्ताः किरणानामगम्यत्वात् । विश्वस्तं यथा स्यादेवं मारुतेनाप्यनालीढा अस्पृष्टाः । कुञ्जकन्दरादिबाहुल्येन भयात् । त्रिदशैर्विमानचारिभिरपि परिहृता अनाक्रान्ता रावणत्रासात् । ते सुवेलोत्सङ्गाः प्लवंगमैर्मर्दिताः क्षोभामोटनादिनाखिलीकृता इत्यर्थः । एतेन कपीनामुत्साहोत्कर्षो रावणापकर्षश्च सूचितः । यद्वा सर्वत्र 'कुञ्जकन्दरादिगहनत्वेन रावणादिभयेन च' इति योजनीयम् । विरोधालंकारः ॥

अथ लङ्कादर्शनमाह—

रिउणअरि त्ति सरोसं जणअसुआ एत्थ णिवसइ त्ति सहरिसम् ।
पहुणा लङ्काहिमुही उहअरसन्दोलिआ विइण्णा दिट्ठी ॥ ३ ॥

[रिपुनगरीति सरोषं जनकसुतात्र निवसतीति सहर्षम् ।
प्रभुणा लङ्काभिमुखी उभयरसान्दोलिता विकीर्णा(वितीर्णा,वा)दृष्टिः॥]

प्रभुणा रामेण लङ्कासंमुखी दृष्टिरार्द्रापकारस्य(?) रिपोरियं नगरीति सरोषं विकीर्णा विशेषतश्चाञ्चल्याहरायादिमती(?) क्षिप्ता । जनकसुता मत्प्रेयसी अत्रैव पुरि निवसतीति सहर्षं वितीर्णा दत्ता । प्रसादोत्फुल्लत्वादिधर्मविशिष्टा समर्पितेति यावत् । अत एवोभयरसेन परस्परविरोधिना क्रोधोत्साहरूपेणान्दोलिताविभाव्यमानकमलदलशतव्यतिभेदवत्समयसौक्ष्म्येण स्वस्वचेष्टावैशिष्ट्यनैरन्तर्यादेकमुपमृद्यापरेणावगाढुमारब्धाप्यनवगाहिता सत्प्रतिपक्षानुमानाभ्यां पक्ष इवेति क्रोधहर्षरूपभावसंधिः ॥

रावणक्षोभमाह—

तो सुअरामागमणो पवअक्कन्तसिहरेण जाआमरिसो ।
रोसेण गलिअधीरो समं सुवेलेण कम्पिओ दहवअणो ॥ ४ ॥

[ततः श्रुतरामागमनः प्लवगाक्रान्तशिखरेण जातामर्षः ।
रोषेण गलितधैर्यः समं सुवेलेन कम्पितो दशवदनः ॥]

ततोऽनन्तरं प्लवगैराक्रान्तानि शिखराणि यस्य तथाभूतेन सुवेलेन समं दशवदनः कम्पितः क्षोभात्, सुवेलोऽपि कपिचङ्क्रमेण कम्पित इत्यर्थः । किंभूतो दशवदनः । श्रुतं रामस्यागमनं येन । तथा जातोऽमर्षः परोत्कर्षासहिष्णुता यस्येति रोषाद्भेदः । एवम् रोषेण गलितं धैर्यं यस्य प्रस्वेदाधरस्पन्दननयनारुण्यादिवैक्लव्योदयादिति धैर्यरूपभावशान्तिः त्रासरूपभावोदयश्च । गिरिरपि श्रुतं विश्रुतं ख्यातं रामागमनं यत्र । जात आमर्षौ मर्षणं प्लवगविमर्दनं यत्र । गलितं धैर्यं स्थिरता यस्यैतादृशः । रावणस्य क्षोभवर्णनमनुचितमिति रोषेण कम्पित इति वा ॥

अथ दिवसापयानमाह—

ताव अ आसण्णट्ठिअकइबलणिग्घोसकलुसिअस्स भअअरम् ।
दसवअणस्स समोसरिअपरिअणं मुअइ दिट्ठिवाअं दिवसो ॥ ५ ॥

[तावच्चासन्नस्थितकपिबलनिर्घोषकलुषितस्य भयंकरम् ।
दशवदनस्य समपसृतपरिजनं मुञ्चति दृष्टिपातं दिवसः ॥]

यावत्सुवेलावस्थितिं कपयः कुर्वन्ति तावदेव आसन्नस्थितस्य निकटवर्तिनः कपिबलस्य निर्घोषेण कलुषितस्य मदग्रेऽपि कपयः प्रगल्भन्त इति सक्रोधचित्तस्य दशमुखस्य दृष्टेः पातो यत्रेति दृष्टिसंमुखं दिवसो मुञ्चति । दशमुखस्वात्क्वाप्यवस्थाने दृष्टिपातः परिहृतो न स्यादिति सर्वथा बहिर्गमनमेव वरमिति संध्योपक्रमोऽभूदिति भावः । किंभूतम् । भयंकरं द्रष्टुमशक्यम् । एवम् समपसृताः पलायिताः परिजना यस्मात्तम् । अस्मासु विद्यमानेष्वेव कपीनामेवं प्रसर इति संमुखपतितानस्मानेव व्यापादयिष्यतीति तात्पर्यादत्राचेतनस्यापि दिनस्य भयोत्प्रेक्षया रावणस्यातिदुर्धर्षत्वमुक्तम् ॥

अथ रविकराणां पिञ्जरतामाह—

सुरगअणिहस्स रइणो कड्ढन्तस्स णलिणिं व दिअसच्छाअम् ।
वलइ हरिआलकविलो कमलरअक्खउरिओ व करपब्भारो ॥ ६ ॥

[सुरगजनिभस्य रवेः कर्षतो नलिनीमिव दिवसच्छायाम् ।
वलति हरितालकपिलः कमलरजःकलुषित इव करप्राग्भारः ॥]

रवेः करसमूहो वलति परावर्तते । सर्वतो वर्तुलीभवतीत्यर्थः । किंभूतस्य । सुरगज ऐरावणस्तत्तुल्यस्य सहजशौक्ल्यात् । एवं रविप्रकाश्यत्वेन नलिनीमिव दिवसच्छायां कान्तिं कर्षतः स्वेनैव सार्धं नयतः । करप्राग्भारः कीदृक् । हरितालवत्कपिलः । तत्रोत्प्रेक्षते—कमलरजोभिः कलुषित इव च्छन्न इव । नलिन्याः कर्षणे तदुचितमेवेति रविरपि तत एव तदानीं कपिलोऽभूदिति भावः । सुरगजस्यापि दिवसे छाया कान्तिर्यस्यास्तादृशीं नलिनीमाकर्षतः शुण्डारूपकराग्रभागो वक्रीभवति कमलरजःसंबन्धादुक्तवत्कपिलश्चेति साम्यम् ॥

अथ द्रुमच्छायानां दैर्घ्यमाह—

ओलुग्गप्फरिसाणं झिज्जन्तपसारिआअवणिराआणम् ।
आआमिज्जन्तीण व जाअं तलिणत्तणं दुमच्छाआणम् ॥ ७ ॥

[अवरुग्णस्पर्शानां क्षीयमाणप्रसारितातपनिरायतानाम् ।
आयम्यमानानामिव जातं तलिनत्वं द्रुमच्छायानाम् ॥]

क्षीयमाणो यः प्रसारित आतपस्तन्मध्ये निरायतानां यथायथा आतपक्षयः तथा तथा दीर्घाणां द्रुमच्छायानां तलिनत्वं तुच्छत्वं जातम् । तुच्छत्वे हेतुमाह—अवरुणः स्पर्शो यासां तथाभूतानां प्रचण्डातप इव तदानीं तथा शैत्यानुपलम्भादिदमुपलक्षणम् । तथा श्यामिकानुपलम्भाच्च दीर्घत्वमुत्प्रेक्षते । आयम्यमानानामिव केनचिदाकृष्य दीर्घीक्रियमाणानामिव जलौकादिवदित्यर्थः । यद्वा प्राकृतत्वात्क्षीयमाणदिवसेन हेतुना निरायतं यथा स्यात्तथा प्रसारितानामायम्यमानजलौकादीनामिवेति पूर्वं धर्मस्य, इह तु धर्मिणः संभावनादुत्प्रेक्षा ॥

अथ रविमण्डलमाह—

**दीसइ विद्दुमअम्बं सिन्दूराहअगइन्दकुम्भच्छाअम् ।**
**मन्दरधाउकलङ्किअवासुइमण्डलनिअक्कलं रइबिम्बम् ॥ ८ ॥**

[दृश्यते विद्रुमाताम्रं सिन्दूराहतगजेन्द्रकुम्भच्छायम् ।
मन्दरधातुकलङ्कितवासुकिमण्डलनिश्चक्रलं रविबिम्बम् ॥]

रविबिम्बं विद्रुमवदाताम्रं दृश्यते । कीदृक् । सिन्दूरेणाहतस्य स्पृष्टस्य गजेन्द्रकुम्भस्येव च्छाया कान्तिर्यस्य लोहितत्वात् । एवं मन्दरधातुभिः कलङ्कितस्य मथनसमये रज्जुभावेन घर्षणाद्रक्तीकृतस्य वासुकेर्मण्डलं वलयीभावस्तद्वन्निश्चक्रलं वर्तुलमिति संध्याराग उक्तः ॥

अथ दिवसावशेषमाह—

**मउलेन्ति दिसाहोआ छाआसामलइओअरं महिवेढम् ।**
**दिअसो कलावसेसो सिहरालग्गतणुआअवा धरणिहरा ॥ ९ ॥**

[मुकुलायन्ते दिगाभोगाश्छायाश्यामलितोदरं महीवेष्ट(पृष्ठ)म् ।
दिवसः कलावशेषः शिखरालग्नतनुकातपा धरणिधराः ॥]

कला अवशेषो यस्य तथाभूतो दिवसः स्थित इत्यर्थात् । अत एव दिशामाभोगा विस्तारा मुकुलायन्ते संकुचन्ति प्रान्तेषु प्रकाशाभावात् । एवं छाया आतपाभावस्तया श्यामलितमुदरं यस्य तादृग्महीपृष्ठं जातमित्यर्थात् । एवं शिखरेषु आ ईषल्लग्नास्तनुकाः कृशा आतपा येषाम्, उच्चत्वात्, तथाभूता महीधरा जाताः । 'काष्ठा, त्रिंशत्तु ताः कलाः' इत्यमरः ॥

अथ सूर्यावतरणमाह—

अत्थणिअम्बपरिणए हिआअवरअम्मि सुरगअम्मि व दिअसे।
दीसहि पल्हत्थन्तं विहडिअधाउसिहरं व दिणअरविम्बम् ॥१०॥

[अस्तनितम्बपरिणते हृतातपरजसि सुरगज इव दिवसे।
दृश्यते पर्यस्यद्विघटितधातुशिखरमिव दिनकरविम्बम् ॥]

दिनकरबिम्बं विघटितं गैरिकशिखरमिव पर्यस्यत्पतद्दृश्यते। कुत्र सति। सुरगज ऐरावत एव दिवसे श्वैत्यात्प्राचीतः प्रतीचीगतत्वाच्च अस्तस्य चरमाचलस्य नितम्बे परि सर्वतोभावेन नते उपनते प्राप्ते। दिनस्य तत्रैव पर्यवसानात्। पक्षे परिवृत्य कृताघातत्वान्निविष्टदन्ते सति। कीदृशि। हृतं पातितम् आतप एव रजो येन। गैरिकस्येत्यर्थात्। अत एव आतपस्य रक्तता लभ्यते तदुद्धूलनादेव च तदानीं दिनदिग्गगनादीनामपि रक्तत्वमिति भावः। अन्योऽपि परिणतः करी उद्धूलिताभिर्धूलिभिः खं दिगादीनि च पूरयञ्शिखरं पातयतीति ध्वनिः। 'करदन्तकृताघातो गजः परिणतो भवेत्' इति कोषः। अत्र दिनगजयोः, किरणरजसोः, रविशिखरयोश्च साम्यम्॥

अथ कमलानां संकोचमाह—

कमलाण दिअसविगमे संवज्झन्ति गलिआअवकिलिन्ताइं।
मअरन्दमत्तमहुअरचलपक्खुप्पुसिअमहुरसाइ दलाइं॥ ११ ॥

[कमलानां दिवसविगमे संबध्यन्ते गलितातपक्लाम्यन्ति(क्लान्तानि)।
मकरन्दमत्तमधुकरचलपक्षोत्प्रोञ्छितमधुरसानि दलानि ॥]

दिवसस्य विगमे सायं कमलानां दलानि संबध्यन्ते संकुचन्ति। किंभूतानि। गलितेनातपेन क्लाम्यन्ति निष्प्रभाणि। तेषां दिन एव कान्त्युदयात्। एवं मकरन्देन मत्तस्य मधुकरस्य चलपक्षाभ्यामुत्प्रोञ्छितो मधुरसो येषु तानि। मकरन्दतुन्दिलतयोड्डयितुमपारयतोऽबहिर्भवतोऽपि दलेषु पतनेन पक्षयोरसंवरणादिति भावः। मत्तस्य पतनमुचितमेवेति ध्वनिः॥

अथ रविरावणयोरवस्थातौल्यमाह—

दीवन्ति दो वि सरिसा कइचलणाइद्धमहिरअसमकन्ता।
अत्थाअन्तो अ रई आसण्णविणासणिप्पहो दहवअणो॥ १२॥

[दृश्येते द्वावपि सदृशौ कपिचरणाविद्धमहीरजःसमाक्रान्तौ ।
अस्तायमानश्च रविरासन्नविनाशनिष्प्रभो दशवदनः ॥]

अस्तायमानोऽस्तं गच्छन् रविः, निकटवर्तिना विनाशेन निष्प्रभो रावणश्च द्वावपि सदृशौ दृश्येते । बीजमाह—कपीनां चरणैराविद्धान्युत्थापितानि यानि सुवेलमहीरजांसि तैः समाक्रान्तौ । अत्र धूलीनां रविपर्यन्तगमनेन कपीनामुद्धतचलनम् । रवेरपि निष्प्रभत्वं च सूच्यते । शिरसि कपिचरणोद्भूतधूलिपतनं सहत एवेत्यस्तायमानरविसाम्येन रावणस्याचिरेण मृत्युरुक्तः । आसन्नमृत्युः स्वत एव निष्प्रभो भवतीति ध्वनिः ॥

अथ रवेरस्तमनमाह—

अद्धत्थमिअदिणअरो तुङ्गोवासपरिसंठिआअवसेसो ।
गअणे मुक्कमहिअलो परिप्पवन्ततलिणो किलिम्मइ दिअसो ॥ १३ ॥

[अर्धास्तमितदिनकरस्तुङ्गावकाशपरिसंस्थितातपशेषः ।
गगने मुक्तमहीतलः परिप्लवमानतलिनः क्लाम्यति दिवसः ॥]

मुक्तं भूतलं येन स दिवसो गगने परिप्लवमान इव तलिनस्तनुः क्लाम्यति विच्छिन्नप्रकाशाभावात् । कीदृक् । अर्धेनास्तमितो जले मग्नो दिनकरो यत्र । एवं तुङ्गावकाशे उच्चप्रदेशे गिरिशिखरादौ परिसंस्थितमातपशेषं यत्र । बहूनामस्तमितत्वादिति भावः । अत्र प्लवनकर्तृवृश्चिकत्वेनोत्प्रेक्षितस्य दिनस्य रविरर्धमग्नो मूर्धा, उपरि संचरन्नातपशेषः करचरणादिः, गगनं च समुद्रः इति व्यञ्जनयोत्प्रेक्षितम् । प्लवनकर्तापि जलोपर्येव मज्जन्मूर्धा चलत्करचरणादिः क्लाम्यतीति ध्वनिः ॥

अथ रविकिरणानामूर्ध्वतामाह—

दिअसेण वणगएण व परंमुहाइद्धपाअवस्स व रविणो ।
दीसइ थोरकरालो उद्धो मूलणिवहो व करपब्भारो ॥ १४ ॥

[दिवसेन वनगजेनेव पराङ्मुखाविद्धपादपस्येव रवेः ।
दृश्यते स्थूलकराल ऊर्ध्वो मूलनिवह इव करप्राग्भारः ॥]

रवेः करप्राग्भार ऊर्ध्वो दृश्यते । रवेरधोवृत्तितया तेजसामूर्ध्वगमनमिति भावः । क इव । मूलनिवह इव । मूलं शिरा । एवं स्थूलः प्रौढः पुञ्जीभूतो वा । करालो मध्ये मध्ये सच्छिद्रः, तुङ्गो वा । प्राग्भारनिवहयोरपि विशेषणम् । रवेः

किंभूतस्येव। वनगजेनेव दिवसेन पराङ्मुखमन्यतोमुखं प्रेरितस्य सतः पादपस्य वृक्षस्येव। अत्र दिनगजयोः, रविपादपयोः, करशिरासमूहयोश्च साम्यम्। विदिक्पातितत्वात्स्थूलः, तुङ्गतया विरलत्वेन च करालः शिरास्तोम एव दृश्यो न तु वृक्ष इति किरणा एव दृश्यन्ते, न रविरिति भावः॥

अथ संध्यागमनमाह—

णवरि अ दिणअरबिम्बं संझामइअम्मि णिअअरुहिरप्पङ्के।
दहवअणस्स भअअरं पढमसिरच्छेअमण्डलं व णिउड्डम्॥ १५॥

[अनन्तरं च दिनकरबिम्बं संध्यामये निजकरुधिरपङ्के।
दशवदनस्य भयंकरं प्रथमशिरश्छेदमण्डलमिव निमग्नम्॥]

दिवसपतनान्तरं च दशवदनस्य मण्डलाकारप्रथमशिरःखण्डमिव दिनकरबिम्बं संध्यामये निजकरुधिरपङ्के निमग्नम्। लौहित्यात्तद्रुधिरस्वरूपत्वेनोत्प्रेक्षिता संध्या। तथा च संध्या बभूवेति भावः। भयंकरमित्युभयविशेषणम्। रविपतनस्यापि रात्रिहेतुत्वेन तत्त्वात्। अत्र प्रथमपदेन प्रधानीभूतं शिवाराधनेऽप्यकृत्तमिति रावणमृत्योरावश्यकत्वादचिरकर्तनीयत्वेनाकृत्तमपि कृत्तत्वेनोत्प्रेक्षितमिति भावः। यद्वा तदानीमेव शिवाराधनाय यत्प्रथमं निकृत्तवान् तेन समं सहोपमा॥

अथ कमलानां मुकुलीभावमाह—

भमरभरोवत्ताइं परिणअकेसरपलोट्टरअगरुआइं।
रविविरहमिलन्ताइं वि होन्ति करालाइ पङ्कआण दलाइं॥ १६॥

[भ्रमरभरापवृत्तानि परिणतकेसरप्रलुठितरजोगुरुकाणि।
रविविरहमिलन्त्यपि भवन्ति करालानि पङ्कजानां दलानि॥]

पङ्कजानां दलानि करालानि सच्छिद्राणि भवन्ति। किंभूतानि। रविविरहे सति परस्परं मिलन्त्यपि। बन्धुविरहे सर्वे मिलन्त्येवेति ध्वनिः। अपिरत्र मिलतां सच्छिद्रता न तिष्ठतीति विरोधाभाससूचनाय। सच्छिद्रत्वे हेतुमाह—भ्रमराणां भरेणापवृत्तान्यवनतानि। बहिर्भवतामपि मकरन्दतुन्दिलत्वेनोड्डयनासमर्थत्वात्। एवं परिणतानां केसराणां प्रलुठितरजोभिर्गुरुकाणि। केसराणां परिणत्या भ्रमराणां किंचिदभिघातेनैव रजःस्खलनात्पत्त्रेषु गुरुत्वम्। अतोऽप्यवनतिः सच्छिद्रताहेतुरिति भावः॥

अथ प्रतीच्या रविकान्तिच्छटामाह—

**अवरदिसाविच्छिण्णो दीहमऊहविसमप्पहासंघाओ ।**
**रअणिब्भरो व्व दीसइ कालमुहक्खित्तदिअसकड्ढणमग्गो ॥ १७ ॥**

[अपरदिशाविस्तीर्णो दीर्घमयूखविषमप्रभासंघातः ।
रजोनिर्भर इव दृश्यते कालमुखक्षिप्तदिवसकर्षणमार्गः ॥]

दीर्घाणां मयूखानां विषमा नतोन्नता या प्रभा रूपं तस्याः संघातः समूहः अपरा दिक् प्रतीची तत्र विस्तीर्णः प्रौढो दृश्यते, सर्वेषामेव तदा तत्र वर्तुलीभावात् । कीदृक् । रजः परागः तद्वन्निर्भरः पूर्णः । पिञ्जरत्वात् । क इव । कालो यमः संध्यासमयश्च तन्मुखादाक्षिप्तस्य दिवसस्य कर्षणमार्ग इव । कालेन कवलितस्य दिवसस्य निजबुद्ध्या रविणातिक्रम्य गृहीत्वाकृष्टस्य खेनैव सार्धं नीयमानस्य कर्षणमार्ग इत्यर्थः । अन्यत्रापि कस्यचिन्मुखादाकृष्टस्य भूम्यादौ कर्षणमार्गो दीर्घो विषमो रजो धूलिस्तन्निर्भरश्च भवतीति ध्वनिः ॥

अथ संध्यारागमाह—

**उद्धोवअत्तबिम्बे वेएण महिं व दिणअरम्मि अइगए ।**
**उच्छलिआअवअम्बा संझाराअमिहिआ णहम्मि णिहित्ता ॥१८॥**

[ऊर्ध्वापवृत्तबिम्बे वेगेन महीमिव दिनकरेऽतिगते ।
उच्छलितातपाताम्रा संध्यारागमेघिका नभसि निहिता ॥]

संध्यारागविशिष्टा मेघिका स्वल्पमेघो नभसि निहिता लग्ना । उत्प्रेक्षते— कीदृशी । ऊर्ध्वादपवृत्तं स्खलितं बिम्बं यस्य तादृशि दिनकरे वेगेन महीमिवातिगतेऽपगते सत्युच्छलितेनाताम्रा । अन्यस्यापि वृक्षादितो भूमौ पतित्वा चूर्णितस्य रुधिरादिकमूर्ध्वमेवोच्छलतीति ध्वनिः ॥

अथ संध्यारागप्रौढिमाह—

**अत्थसिहरम्मि दीसइ मेरुअडुग्घुट्ठकणअकद्दमअम्बो ।**
**वलमाणतुरिअरविरहपडिउट्ठिअधअवडो व्व संझाराओ ॥ १९ ॥**

[अस्तशिखरे दृश्यते मेरुतटोद्घृष्टकनककर्दमाताम्रः ।
वलमानत्वरितरविरथपतितोत्थितध्वजपट इव संध्यारागः ॥]

अस्ताचलस्य शिखरे संध्यारागो दृश्यते । क इव । वल्मानोऽवतरणाय वक्रीभवन् सन् त्वरितो यो रविरथस्तस्य पतितः समुत्थितो ध्वजपट इव । अस्ताचलादवतीर्णस्यैव रथस्यातिनिम्ने पतनात्पतितः, पुनरुच्चारोहणादुत्थितः । तत एव न दृश्यते । किं तु पताकामात्रमिति भावः । लौहित्ये हेतुमाह—ध्वजपटः कीदृक् । मेरुतटे उद्धृष्टो मृष्टो यः कनककर्दमः । सूर्यतेजःसंबन्धेन द्रवीभावात् । तेन आ ईषत्ताम्रः ॥

अथ कुमुदविकासमाह—

**विअसइ धवलाअम्बं गअरुहिरालिद्धकेसरिसडच्छाअम् ।**
**पवणन्दोलणचडुलं संझारज्जन्तकेसरं कुमुअवणम् ॥ २० ॥**

[विकसति धवलाताम्रं गजरुधिरालीढकेसरिसटाच्छायम् ।
पवनान्दोलनचटुलं संध्यारज्यमानकेसरं कुमुदवनम् ]

कुमुदवनं विकसति । कीदृक् । धवलमाताम्रं च । अत एव गजरुधिरेणाश्लिष्टा या केसरिसटा तद्वच्छाया कान्तिर्यस्य तत् । एवं पवनकृतेनान्दोलनेन चञ्चलम् । संध्यया रज्यमानानि रागं प्राप्तानि केसराणि यस्य । तदानीं शोणत्वेनोपलम्भादिति भावः ॥

अथ च्छायामाह—

**होइ अपाअडदीहा दरवोच्छिज्जन्तविसमसंझाराआ ।**
**ओधूसरिअदसदिसा अबद्धतिमिरा दिणावसाणच्छाआ ॥ २१ ॥**

[भवत्यप्रकटदीर्घा दरव्यवच्छिद्यमानविषमसंध्यारागा ।
अवधूसरितदशदिक् अबद्धतिमिरा दिनावसानच्छाया ॥]

दिनावसाने छाया । वृक्षादीनामित्यर्थात् । भवति । कीदृशी । अप्रकटा सती दीर्घा । सायं सर्वैव च्छाया पूर्वाभिमुखी दीर्घा । किंतु विशिष्य न गृह्यते, आगन्तुकच्छाययास्ताचलच्छायया वा सर्वासामेकीकरणात् । एवं दर ईषद् व्यवच्छिद्यमानः क्वचित्क्वचिन्नष्टत्वात् अत एव विषमः संध्यारागो यत्र सा । एवम् अवधूसरिता दश दिशो यत्र सा । प्रकाशप्रौढिविरहात् एवम् अबद्धमसंबद्धं तिमिरं यत्र । द्वित्रिक्षणोत्तरमागन्तुकत्वेन तदा विरलत्वात् । केचित्तु—भवति च प्रकटदीर्घा प्रकटा सती दीर्घा भवति चेत्यर्थमाहुः ॥

अथ संध्याशान्तिमाह—

**संझाअवमुच्चन्तं जलिअपसम्मन्तहुअवहट्ठाणणिहम् ।**
**दूरत्थमिअदिणअरं जाअं संवत्तसरिसरूअं गअणम् ॥ २२ ॥**

[संध्यातपमुच्यमानं ज्वलितप्रशाम्यद्धुतवहस्थाननिभम् ।
दूरास्तमितदिनकरं जातं संवर्तसदृशरूपं गगनम् ॥]

दूरे अस्तमितो दिनकरो यत्र तद्गगनं संवर्तेन प्रलयेन सदृशं रूपं यस्य तादृग्जातम् । कीदृक् । संध्याकालीनेन संध्यारूपेण वा आतपेन मुच्यमानम् । अत एव प्रथमं ज्वलितं पश्चात्प्रशाम्यन्निर्वाणतां गच्छद्वह्निस्थानं तत्तुल्यम् । यथा यथा संध्यातपत्यागः, तथा तथा श्यामिकोदयात् । संध्यातपदहनयोर्विपदग्निस्थानयोश्च साम्यम् । प्रलयोऽपि संध्यातपरविशून्यः कालानलोपशमान्निर्वाणालातनीलीकृतविश्वश्चेति समता । प्रलयतुल्यतया चागन्तुकतमसा नीलिमातिशयः सूचितः । सव्वत्थेति पाठे सर्वत्र सदृशरूपमित्यर्थः । भविष्यत्तमःप्रागल्भ्यादित्यर्थः ॥

अथ दीपोद्योतमाह—

**संझाराअत्थइआ दरसंरूढन्धआरकअपरभाआ ।**
**दिअसच्छविपरिसेसे झिज्जन्ते णिव्वलन्ति दीवुज्जोआ ॥ २३ ॥**

[संध्यारागस्थगिता दरसंरूढान्धकारकृतपरभागाः ।
दिवसच्छविपरिशेषे क्षीयमाणे निर्वलन्ति दीपोद्योताः]

दिवसस्य च्छविः शोभा तत्परिशेषेऽवशिष्टभागे क्षीयमाणे सति दीपानामुद्योता निर्वलन्ति अभिभावकाभावात्पृथग्भवन्ति । किंभूताः । संध्यारागेण स्थगिताः किंचित्प्रकाशसत्त्वेनावरुद्धप्रसाराः अनन्तरं ईषत्संरुद्धेनान्धकारेण कृतः परभागः अन्यतः शोभा येषां ते ॥

अथ चक्रविघटनमाह—

**विहडन्तराअणिअलं उहअतडट्ठिअमिलन्तदिट्ठिरइसुहम् ।**
**अवसं चक्काअजुअं हुंकाराअत्तजीविअं वोच्छिण्णम् ॥ २४ ॥**

[विघट्टमानरागनिगडमुभयतटस्थितमिलदृष्टिरतिसुखम् ।
अवशं चक्रवाकयुगं हुंकारायत्तजीवितं व्यवच्छिन्नम् ॥]

चक्रवाकयुगं व्यवच्छिन्नं विश्लिष्टम्। कीदृक्। विघटमानो निरोधात्मो रागोऽनुरागरूपो निगडो यस्य तत्। निगडविघटने व्यवच्छेदो युज्यत एवेति भावः। एवं नद्यादेरुभयकूलस्थितं सद्दूरत एव मिलन्तीभ्यां दृष्टिभ्यां रतिसुखं यस्य तथाभूतम्। स्थितान्तं दृष्टिविशेषणं वा। एवम् अवशमस्वतन्त्रं हुंकाराधीनं जीवितं यस्य तथा। तथा च दृष्टिमिलनेऽपि स्पन्दनिमेषयोरभावेन परस्परं संशयितस्य जीवितस्य स्वस्वन्नस्तपरिज्ञापनाय कृतेन विरहपीडोद्गमजनितेन वा हुंकारेणानुमित्या धारणमिति भावः॥

अथ तिमिरप्रादुर्भावमाह—

**ताव अ तमालकसणो कञ्चणकडअं व बहलसंझाराअम्।**
**परिपेल्लिऊण अ तमो हिअकद्दमसुरगइन्दणिहसो ब्व ठिओ॥२५॥**

[तावदेव तमालकृष्णं काञ्चनकटकमिव बहलसंध्यारागम्।
प्रतिप्रेर्य च तमो हृतकर्दमसुरगजेन्द्रनिघर्ष इव स्थितम्॥]

यावत्संध्या गच्छति तावदेव तमालवत्कृष्णं तमः कर्तृ बहलं संध्यारागं काञ्चनकटकमिव प्रतिप्रेर्य अवपात्य स्थितम्। क इव। हृतकर्दमस्य सुरगजेन्द्रस्य निघर्षो गात्रघर्षणस्थानमिव। सोऽपि गात्रसंबद्धकर्दमसंबन्धात्कृष्णः, कण्डूयनादिविधिना गिरिकटकं भङ्क्त्वा तिष्ठतीति साम्यम्। सुरगजगात्रीयत्वेन महत्त्वमप्युक्तम्। हृतकर्दमो निघर्ष इवेति वा॥

अथ तमसः प्रसरणमाह—

**आसण्णम्मि पविरलं बहलं थोअन्तरम्मि दूरम्मि घणम्।**
**ओभग्गदिट्ठिपसरं सव्वत्थ समट्ठिअं पि दीसइ तिमिरम्॥ २६॥**

[आसन्ने प्रविरलं बहलं स्तोकान्तरे दूरे घनम्।
अवभग्नदृष्टिप्रसरं सर्वत्र समस्थितमपि दृश्यते तिमिरम्॥]

सर्वत्र समतया स्थितमपि तिमिरमीदृशं दृश्यते। कीदृशम्। आसन्ने निकटे प्रविरलं स्तोकव्यवधानं बहलं निकटापेक्षया बहुलं दूरे घनम्, तदपेक्षयापि निबिडम्। अत एव अवभग्नो दृष्टिप्रसरो यत्र विषयाणामग्रहात्। सर्वत्रासन्नादिषु भग्नदृष्टिप्रसरमिति वा॥

अथ द्रुमादीनामदृश्यतामाह—

**घणविडवट्ठिअतिमिरा तिमिरालिद्धमइलन्तमुद्धकिसलआ ।**
**किसलअणिसण्णकुसुमा कुसुमामोएण णवर णज्जन्ति दुमा ॥२७॥**

[वनविटपस्थिततिमिरास्तिमिरालीढमलिनायमानमुग्धकिसलयाः ।
किसलयनिषण्णकुसुमाः कुसुमामोदेन केवलं ज्ञायन्ते द्रुमाः ॥]

द्रुमाः केवलं कुसुमानामामोदेन ज्ञायन्ते । किंभूताः । घनेषु वनानि वा विटपेषु स्थितान्यनुच्छेदनीयानि तिमिराणि येषु ते । एवं तिमिरैरालीढानि स्पृष्टानि, अत एव मलिनायमानानि मुग्धानि किसलयानि येषाम् । एवं किसलयेषु निषण्णानि न तु दृष्टानि कुसुमानि येषामिति । शाखापत्रकुसुमेषु सत्स्वपि दृष्टिप्रसराभावेन सौरभमेवानुमापयतीति भावः ॥ शृङ्खलाबन्धोऽयम् ॥

अथ सर्वत्र तिमिरस्याभिव्याप्तिमाह—

**मेलविअसव्वदिसं आसण्णम्मि वि पणट्ठणआलोअम् ।**
**सूएअव्वमहिअलं जाअं सूरवडणाणुरूअं तिमिरम् ॥ २८ ॥**

[मेलितसर्वदिगासन्नेऽपि प्रनष्टनयनालोकम् ।
सूचयितव्यमहीतलं जातं सूरपतनानुरूपं तिमिरम् ॥]

मेलिता एकीकृताः सर्वा दिशो येन, भेदज्ञापकचिह्नाभावात् । आसन्नेऽपि प्रनष्टो नयनस्यालोकस्तेजो, नयनेनालोको दर्शनं वा यस्मात्, विषयतिरोधायकत्वात् । अत एव सूचयितव्यं चक्षुरन्यप्रमाणवेदनीयं स्पर्तव्यं वा महीतलं यत्र तादृशं तिमिरं सूर्यपतनस्यानुरूपं योग्यं जातम् । यथा सूर्ये सत्यत्यन्तप्रकाशोत्कर्षहेतुरत्यन्तमन्धकारापकर्षः, तथा तत्पतने सत्यत्यन्तप्रकाशापकर्षहेतुरत्यन्तमन्धकारोत्कर्षः । किं वा सूर्यपतनं प्रलय इति तदनुरूपमिति भावः ॥

अथ गाढतामाह—

**ओक्खण्डेअव्वदढो पसरइ उक्खम्मिअव्वबहलुग्घाओ ।**
**अवलम्बिअव्वजोग्गो ससिणा भेअव्वसंवओ तमणिवहो ॥ २९ ॥**

[अवखण्डयितव्यदृढः प्रसरत्युत्खनितव्यबहलोद्धातः ।
अवलम्बितव्ययोग्यः शशिना भेत्तव्यसंहतस्तमोनिवहः ॥]

तमोनिवहः प्रसरति । कीदृक् । वृक्षादिवदवखण्डयितव्यः सन्दृढः । तथा च

नावखण्डयितव्यः । पृथिव्यादिवदुत्खनितव्यः सन् बहलोद्धातो निबिडावयवसंस्थानः, तथा च नोत्खनितव्यः । अवलम्बितव्यः सन् भित्त्यादिवद्योग्यो यदवष्टम्भेन स्थीयते । शशिना भेत्तव्यः सन् वज्रादिवत्संहतो निःसंधि मिलितः, तथा च तेनापि न भेत्तव्य इति भावः । भेदनं द्विधाकरणम्, तेन तिर्यक्छेदनरूपादवखण्डनाद्भेदः । सर्वत्र कर्मणि तव्यः । अवखण्डयितव्येऽवखण्डने वृक्षादिवद्दृढ इत्येवंरूपेण सर्वत्र भावे वा । शशिना परं भेत्तव्यः संहतो मिलितश्चेत्यपि कश्चित् ॥ संप्रदायस्तु—अवखण्डयितव्यः सन् दृढः इति क्रमेण व्याचष्टे ॥

अथ गुरुतामाह—

**वहइ व महिअलभरिओ णोल्लेइ व पच्छओ धरेइ व पुरओ ।**
**पेल्लेइ व पासगओ गरुआइ व उवरिसंठिओ तमणिवहो ॥ ३० ॥**

[वहतीव महीतलभृतो नोदयतीव पश्चाद्धारयतीव पुरतः ।
प्रेरयतीव पार्श्वगतो गुरुकायत इवोपरिसंस्थितस्तमोनिवहः ॥]

तमसो निवहो महीतले भृतो व्याप्तः सन् भूमिष्ठं वस्तुजातं वहत्युद्वहतीव भूमिवदाधारीभूतत्वात् । पश्चात्पृष्ठतो नोदयतीव पृष्ठचर इव पुरोवर्तिनम् । पुरतोऽग्रे धारयतीव पृष्ठपातुकं पुरोवर्तीव पृष्ठतोऽनोदनेऽप्यपतनात् । पार्श्वयोः स्थितः सन् प्रेरयतीव यन्त्रयतीव यन्त्रवत्सिद्धार्थम् । तेषामेवोपरि स्थितः सन् गुरुकायत इव पतितगृहवदिति वहननोदनधारणप्रेरणगुरुत्वानुभवेन व्यापकत्वविशिष्टमूर्तत्वमुत्प्रेक्षितम् ॥

अथ शशिकरोद्गममाह—

**दीसइ अ तिमिरमिलिओ कसणसिलाभिण्णसलिलसीभरधवलो ।**
**थोउम्मिल्लन्तदिसो उअअन्तरिअतणुओ ससिअरुज्जोओ ॥ ३१ ॥**

[दृश्यते च तिमिरमिलितः कृष्णशिलाभिन्नसलिलशीकरधवलः ।
स्तोकोन्मीलद्दिगुदयान्तरिततनुकः शशिकरोद्द्योतः ॥]

उदयेनोदयाचलेनान्तरितः, अत एव तनुकः कृशः । शशिकराणामुद्द्योतः पुरःप्रकाशो दृश्यते च । कीदृक् । तिमिरेण मिलितोऽतएव कृष्णशिलया भिन्नः संभिन्नो यः सलिलशीकरस्तद्वद्धवलः । शिलातिमिरयोः श्यामत्वेन शीकरोद्द्योतयोः श्वैत्येन साम्यम् । तत एव स्तोकमल्पमुन्मीलन्ती प्रकाशं गच्छन्ती दिक्प्राची यस्मात्स तथा । किंचिदवच्छेदेन धवलिम्ना तिमिरापहारादिति भावः ॥

अथ पूर्वदिक्प्रकाशमाह—

**दीसइ जुअक्खअम्मि व महिअलपरभाअससिअराहअतिमिरा ।**
**णिव्वडिअधूमहुअवहडज्झन्तसमुद्दसंणिहा पुव्वदिसा ॥ ३२ ॥**

[दृश्यते युगक्षय इव महीतलपरभागशशिकराहततिमिरा ।
निर्वलितधूमहुतवहदह्यमानसमुद्रसंनिभा पूर्वदिक् ॥]

पूर्वा दिक् दृश्यते । कीदृशी । महीतलस्य परभाग एकदेशः । अर्थात्प्राच्यवच्छिन्न एव । तत्र शशिकरैराहतं स्पृष्टं ईषद्विघटितं वा तिमिरं यत्र तादृशी । तदवच्छेदेनैव तदानीं भूमेः शशिकरसंबन्धात् । उत्प्रेक्षते—युगक्षय इव निर्वलितः पृथग्भूतो धूमो यस्मादेतादृशो यो हुतवहः प्रलयाग्निस्तेन दह्यमानो यः समुद्रस्तत्संनिभा । तथा च रात्रेस्तमोमयतया प्रलयेन, शशिकराणां क्वचित्किंचित्तिमिरसंबन्धाद्धूम्रतया धूमेन, चन्द्रोदयकालीनलौहित्यस्य दहनेन, पूर्वदिशश्च तिमिरपूर्णत्वेन श्यामतया दह्यमानसमुद्रेण साम्यम् ॥

अथ चन्द्रकलोद्गममाह—

**णवरि अ अच्छालोआ उअअगिरिक्खलिअबहलजोह्णाणिवहा ।**
**जाआ पणट्ठतिमिरा मुद्धमिअङ्कपरिपण्डुला पुव्वदिसा ॥ ३३ ॥**

[अनन्तरं चाच्छालोका उदयगिरिस्खलितबहलज्योत्स्नानिवहा ।
जाता प्रनष्टतिमिरा मुग्धमृगाङ्कपरिपाण्डुरा पूर्वदिशा ॥]

चन्द्रालोकदर्शनानन्तरं च पूर्वदिक् मुग्धेन बालेन लेखारूपेण मृगाङ्केन परिपाण्डुरा जाता । धूसरत्वे हेतुमाह—कीदृशी । उदयगिरौ स्खलितः प्रतिहतो बहलो निबिडो ज्योत्स्नासमूहो यत्र सा सकलतेजसामनागमनाद्धूसरत्वमिति भावः । अत एव किंचिज्ज्योत्स्नासंबन्धात्प्रनष्टं तिमिरं यत्र । अत एव तिमिराभावादच्छो निर्मल आलोको दर्शनं यस्याः । 'गूढमिअङ्क—' इति क्वचित्पाठः । तत्र गूढः संयुक्तः ॥

अथ शशिबिम्बोदयमाह—

**णवकमलोअरअम्बं केसरसउमारसंगलन्तमऊहम् ।**
**विरलेइ समासण्णं णीसेसेइ तिमिरं ण ता ससिबिम्बम् ॥३४॥**

[नवकमलोदराताम्रं केसरसुकुमारसंगलन्मयूखम् ।
विरलयति समासन्नं निःशेषयति तिमिरं न तावच्छशिबिम्बम् ॥]

शशिबिम्बं कर्तृ यावत्प्रौढं न जातम्, तावत्समासन्नं निकटवर्ति तिमिरं विरलयति, न तु नाशयति। तथा च यथा यथा विधुव्यवधानं तथा तथा घनमेव तमः स्थितमिति भावः। किंभूतम्। नवकमलोदरवदीषत्ताम्रं उदितमात्रत्वात्। एवं केसरवत्सुकुमाराः सुखस्पर्शाः संगलन्तः पतन्तो मयूखा यस्य। तथा च शोणकमलकेसरसाम्यं चन्द्रतत्किरणयोरित्युपमा॥

अथ मण्डलप्रौढिमाह—

तो उअअसिहरमिलिअं जाअं उप्पुसिअतिमिरधवलच्छाअम्।
इअहुत्तच्छिअसुरगअदन्तच्छेअपरिमण्डलं ससिबिम्बम्॥ ३५॥

[तत उदय(गिरि)शिखरमिलितं जातमुत्प्रोञ्छिततिमिरधवलच्छायम्।
इतोऽभिमुखस्थितसुरगजदन्तच्छेदपरिमण्डलं शशिबिम्बम्॥]

तत उद्गमानन्तरमितोऽभिमुखः पश्चिमाभिमुखः सन् स्थितो यः सुरगज ऐरावतस्तद्दन्तच्छेदवत्परिमण्डलं वर्तुलं शशिबिम्बमुदयगिरिशिखरे मिलितं सदुत्प्रोञ्छितमपसारितं तिमिरं येन तथाभूतत्वेन धवलच्छायं जातम्। तिमिराभावादिति भावः॥

अथ नभोनीलिमोत्कर्षमाह—

णवरि अ ससिअरणिसुद्धिअविवलाइअतिमिरकलुसताराणिवहम्।
जाअं बहुकुसुमोत्थअसिलाआरसंणिहं गअणअलम्॥ ३६॥

[अनन्तरं च शशिकरनिपातितविपलायिततिमिरकलुषतारानिवहम्।
जातं बहुकुसुमावस्तृतशिलाकारसंनिभं गगनतलम्॥]

चन्द्रधावल्यानन्तरं गगनतलं जातम्। कीदृशम्। शशिना करैर्निपातितम्। अत एव विपलायितं तिमिरं यस्मात्तथाभूतं च तत्कलुषम्। चन्द्रातपेनाभिभूतत्वान्मन्दच्छविस्ताराणां निवहो यत्र तादृशं चेति कर्मधारयः। अत एव बहुकुसुमेनावस्तृतं व्याप्तं यच्छिलातलं तस्याकारं स्वरूपं तत्तुल्यम्। तथा च श्यामत्वेन शिलागगनयोः, श्वैत्येन ताराकुसुमयोस्तौल्यमित्युपमा॥

अथ द्रुमच्छायामाह—

दरमिलिअचन्दकिरणा दरधुवन्ततिमिरपरिपण्डुरालोआ ।
दरपाअडतनुविडवा दरबद्धच्छाहिमण्डला होन्ति दुमा ॥ ३७ ॥

[दरमिलितचन्द्रकिरणा दरधाव्यमानतिमिरपरिपाण्डुरालोकाः ।
दरप्रकटतनुविटपा दरबद्धच्छायामण्डला भवन्ति द्रुमाः ॥]

द्रुमा भवन्ति । कीदृशाः । ईषन्मिलिताश्चन्द्रकिरणा येषु । अत एव ईषद्धाव्यमानं क्षाल्यमानं यत्तिमिरं तेन परिपाण्डुरा आलोकाश्चन्द्रकान्तिच्छटा यत्र । किंचित्तिमिरसत्त्वेन पाण्डुरत्वमित्यर्थः । अत एव चन्द्रकरतिमिरयोरुभयोरपि सत्त्वादीषत्प्रकटाः कृशा विटपा येषाम् । प्रौढविटपानां तु प्रकटत्वमेवेति भावः । एवम् ईषद्बद्धं छायामण्डलं यैस्ते । 'ईषदर्थे दरोऽव्ययम्' इति विश्वः ॥

अथेन्दुमण्डलप्रौढिमाह—

होइ णहलङ्घणसहं जाअत्थामकिरणाहउक्खअतिमिरम् ।
विअलिअमुद्धसहाअं जरठाअन्तधवलं णिसाअरबिम्बम् ॥ ३८॥

[भवति नभोलङ्घनसहं जातस्थामकिरणाहतोत्खाततिमिरम् ।
विगलितमुग्धस्वभावं जरठायमानधवलं निशाकरबिम्बम् ॥]

विगलितो मुग्धस्वभावो बालत्वं यस्य तत्प्रौढं निशाकरबिम्बं नभोलङ्घने क्षमं भवति । कीदृक् । जातं स्थाम स्थैर्यं येषां तैः किरणैराहतं ताडितं सदुत्खातमुत्पाटितं तिमिरं येन । अत एव जरठायमानं वर्धमानं चिरंतनं वा सद्धवलम् ॥

अथ ज्योत्स्नाप्रौढिमाह—

तहपरिसंठिअसेलं वित्थिण्णदिसं तहुज्जुअणइप्पवहम् ।
खन्तूण व उक्किण्णं ससिणा तमसंचअं पुणो वि महिअलम् ॥३९॥

[तथापरिसंस्थितशैलं विस्तीर्णदिक्तथर्जुकनदीप्रवाहम् ।
खनित्वेवोत्कीर्णं शशिना तमःसंचयं पुनरपि महीतलम् ॥]

शशिना तमःसंचयं खनित्वा महीतलं पुनरप्युत्कीर्णमिव काण्डीकारितमिव । कीदृक् । तथा पूर्ववत्परिसंस्थिताः शैला यत्र । एवम् तथा पूर्ववदेव विस्तीर्णा दिशो यत्र । तथा पूर्ववदेव ऋजवो नदीनां प्रवाहा यत्र तादृशम् । तथा च यथा काष्ठादिकं खनित्वानपेक्षितभागमपसार्य करचरणचिबुकादिमत्प्रतिमादिकं क्रियते, तथा

तमोलिप्तमपि गिरिगहनगृहादिसहितं भूतलं तिमिरमपसार्य तत्तदवयवसंस्थानविशिष्टं शशिना प्रकाशितमिति भावः ॥ अथवा—'तथापरिसंस्थितशैलम्' इत्यादि क्रियाविशेषणम्। तथा च महीतलं खनित्वेव तमःसंचय उत्कीर्णः क्षितिगर्भे निक्षिप्त इत्यर्थः। तत एवावरकाभावाच्छैलादीनां प्रकाश इत्यभिप्रायः ॥

पुनश्छायामेवाह—

**बहलम्मि वि तमणिवहे णिव्वालेऊण सव्वविअरूवाओ।**
**अणुबन्धन्ति ससिअरा घेत्तुं ण चअन्ति पाअवच्छाआओ ॥४०॥**

[बहलेऽपि तमोनिवहे निर्वाल्य सत्यापितरूपाः।
अनुबध्नन्ति शशिकरा ग्रहीतुं न शक्नुवन्ति पादपच्छायाः ॥]

शशिकराः पादपानां छायाः कर्माणि ग्रहीतुं स्प्रष्टुं नाशयितुमित्यर्थः। न शक्नुवन्ति वृक्षतले तासामतिघनत्वात्। किं तु—अनुबध्नन्ति वेष्टयन्ति। किंभूताश्छायाः। बहलेऽपि तमोनिवहे निर्वाल्य पृथक्कृत्य सत्यापितं रूपं यासां ताः। प्राह्यत्वेन स्थिरीकृतरूपा इत्यर्थः। यथा कोऽपीश्वरो धाटिकया विद्राविताारिसैन्यात्पृथक्कृत्य किं च म्रियमाणमरण्याश्रितं ग्रहीतुमपारयन्वेष्टयति तथा शशिकरा अपि तमोनिवहमुन्मूल्य ततः पृथक्कृत्यापि वृक्षतलमाश्रितां छायां स्प्रष्टुमपारयन्तः परितो वेष्टयन्तीत्यर्थः ॥

अथ कुमुदोत्फुल्लतामाह—

**णवर करालेइ ससी मुहपरिहट्टणसमूससन्तदलउडम्।**
**अवडिच्छिएक्कमेक्का विसअं फालेन्ति महुअर च्चिअ कुमुअम् ४१**

[केवलं करालयति शशी मुखपरिघट्टनसमुच्छ्वसद्दलपुटम्।
अप्रतीष्टैकैके विशदं पाटयन्ति मधुकरा एव कुमुदम् ॥]

शशी कुमुदं केवलं करालयति सच्छिद्रयति मुखं दलानामीषद्विभागात्। किं तु विशदं स्पष्टं यथा स्यादेवं अप्रतीष्टैकैकेऽनपेक्षितपरस्परा मधुकरा एव पाटयन्ति। विकासयन्तीत्यर्थः। किंभूतम्। मुखे परिघट्टनेन करचरणाद्यभिघातेन समुच्छ्वसन्ति दलपुटानि यस्य तत्। स्वस्यैव मुखेन परिघट्टनादिति वा। हठादेव मधुलब्धीच्छया स्वभावतो वा मुखेनैव प्रवेश इति तन्मुखमुद्दल्य प्रविशन्तीत्यर्थः। तथा च—मुकुलीकरणेन वर्त्मप्रदर्शकत्वमात्रं चन्द्रस्य, विकासस्तु सहजसिद्धस्तत्कालानपेक्ष एव। मधुकरोत्कण्ठाधीन इत्यनेन परस्परानपेक्षया च मधूनामाधिक्यं व्याञ्जि ॥

अथ सर्वत्र तमःशून्यतामाह—

**पुसिओ णु णिरवसेसं समअं थोरकरपेल्लिओ णु विराओ ।**
**ओत्थइओ णु समत्तो ससिणा पीओ णु णिद्दअं तमणिवहो ४२**

[प्रोञ्छितो नु निरवशेषं समं स्थूलकरप्रेरितो नु विशीर्णः ।
अवस्तृतो नु समस्तः शशिना पीतो नु निर्दयं तमोनिवहः ॥]

शशिना तमोनिवहः अवशेषशून्यं यथा स्यात्तथा प्रोञ्छितो नु । करैरित्यर्थात् । यत्कर्दमादि प्रोञ्छयते तत् किंचिदपि करे लगति, तमस्तु न तथा, इत्यत आह— सममेकदैव स्थूलकरैः प्रेरितो नु । प्रेरितमपि निकटं त्यक्त्वा दूरे तिष्ठति, प्रकृतं तु न तथा, इत्यत आह—विशीर्णः खण्डखण्डीभूतः । विशीर्णमप्येकदेशे तिष्ठति, इत्यत आह—समस्त एव समन्ताद्वावस्तृतो नु । विकीर्ण इत्यर्थः । अवस्तृतमपि खण्डस्फुटितं दिशि दिशि तिष्ठत्येव, इत्यत आह—पीतो नु । यद्वा—समन्तत इत्यत्रैवानेतव्यम्, तेन पीतो नु समास्तः कथाशेषं गत इत्यर्थः । पीतावशिष्टमपि चषकादौ लगति, इत्यत उक्तम्—निर्दयमिति क्रियाविशेषणम् । तेन शत्रुवत्किमपि न रक्षितमिति भावः ॥

अथ गगनोज्ज्वलतामाह—

**मंसलचिक्खिल्लणिहं हत्थग्गेज्झं व मइलिअदिसाअक्कम् ।**
**खन्तूण व तमणिवहं चन्दुज्जोएण खउरिअं व णहअलम् ॥४३॥**

[मांसलकर्दमनिभं हस्तग्राह्यमिव मलिनितदिक्चक्रम् ।
उत्खायेव तमोनिवहं चन्द्रोद्द्योतेन मुण्डित(धवलित)मिव नभस्तलम् ]

चन्द्रोद्द्योतेन तमोनिवहमुत्खाय केशादिवच्छित्त्वा नभस्तलं मुण्डितमिव धवलितमिवेति वा । तमोनिवहं किंभूतम् । चिक्खिल्लशब्दः कर्दमे देशी । तेन घनीभूतकर्दमनिभम् । अत एव हस्तेन ग्राह्यमिव निबिडत्वात् । एवं मलिनितं दिक्चक्रं येन तत्तथा । 'शशिना' इति पूर्वस्कन्दकादनुषञ्जनीयम् । तेन शशिना नापितेनेवेत्यर्थात् । चन्द्रोद्द्योतेन क्षुरादिवत्करणीभूतेन नभस्तलं मुण्डितमित्यन्वय इति वयम् ॥

वनमाह—

भिण्णतमदुद्दिणाइं विडवन्तरविरलपडिअचन्दकराइं।
थोअसुहालोआइं पअडन्ति व मुद्धपल्लवाइं वणाइं॥ ४४॥

[भिन्नतमोदुर्दिनानि विटपान्तरविरलपतितचन्द्रकराणि।
स्तोकसुखालोकानि प्रकट्यन्त इव मुग्धपल्लवानि वनानि॥]

शशिना वनानि प्रकट्यन्ते स्फुटीक्रियन्त इव। किंभूतानि। विटपानामन्तरेण रन्ध्रेण विरलं यथा स्यात्तथा पतिताश्चन्द्रस्य करा येषु। अत एव भिन्नं खण्डितं तम एव, तमसा वा, दुर्दिनं येषु। अत एव स्तोकमल्पं सुखालोकानि। ईषत्कर-पातात्। आलोकस्तेजश्छटा वा। अत एव छटासंबन्धान्मुग्धं मनोरमं पल्लवं येषां तानि। यद्वा—वनानि कर्तॄणि मुग्धपल्लवानि क्षुद्रपल्लवान्यपि कर्माणि प्रकटयन्ति प्रकाशयन्ति चन्द्रोत्कर्षादित्यर्थः। विशेषणानि वनवत्पल्लवानामपीति ध्येयम्। विट-पान्तरपतितचन्द्रकरत्वात्किरणैरेव प्रगलन्ति स्रवन्तीवेति केचित्॥

कुमुदसाम्राज्यमाह—

परिमलिअद्दुमकुसुमा उअहुत्तदिसागइन्दमअणीसन्दा।
निव्विट्ठपङ्कअवणा ओवग्गन्ति कुमुओअराइ महुअरा॥ ४५॥

[परिमृदितद्रुमकुसुमा उपभुक्तदिग्गजेन्द्रमदनिस्यन्दाः।
निर्वृष्टपङ्कजवना आक्रामन्ति कुमुदोदराणि मधुकराः॥]

परिमृदितानि द्रुमाणां कुसुमानि यैः, उपभुक्ता दिग्गजेन्द्राणां स्यन्दमाना मदा यैः, एवं निर्वृष्टमुपभुक्तं पङ्कजवनं यैः, तेऽपि मधुकराः कुमुदानामुदराण्याक्रामन्ति, न तु दलानि। विलासोत्कर्षेण दलानामधोगमनात्प्रसह्योदर एव पतनादिति भावः। एतेन रात्रौ द्रुमकुसुमाद्यपेक्षया सामायिकत्वेन कुमुदमधूनामास्वादसाम्राज्यं सूचितम्॥

अथ चन्द्रस्योर्ध्वारोहणमाह—

होइ णिराअअलम्बो गवक्खपडिओ दिसागअस्स व ससिणो।
कसणमणिकुट्टिमअले गेह्णन्ती सरजलं व करपब्भारो॥ ४६॥

[भवति निरायतलम्बो गवाक्षपतितो दिग्गजस्येव शशिनः।
कृष्णमणिकुट्टिमतले गृह्णन्सरोजलमिव करप्राग्भारः॥]

दिग्गजस्येव शशिनः करप्राग्भार इन्द्रनीलघटितकुट्टिमतले गवाक्षेण पतितः

सन् सरोजलमिव गृह्णच्चिरायतलम्बो भवति । गजस्य करः शुण्डा तदग्रभागः सरोजलं गृह्णन् दीर्घीकृतः संलम्बो भवत्येवेत्याशयः । तथा च—श्लेत्येन दिग्गजचन्द्रयोः, श्यामत्वेन सरोजलकुट्टिमयोः, दैर्घ्येण करपदश्लेषेण च शुण्डाकिरणयोः साम्येनोत्प्रेक्षा ॥

अथेन्दोरूर्ध्वस्थितिमाह—

दीसन्ति गअउलणिहे ससिधवलमइन्दविद्दुए तमणिवहे ।
भवणच्छाहिसमूहा दीहा णीसरिअकद्दमपअच्छाआ ॥ ४७ ॥

[दृश्यन्ते गजकुलनिभे शशिधवलमृगेन्द्रविद्रुते तमोनिवहे ।
भवनच्छायासमूहा दीर्घा निःसृतकर्दमपदच्छायाः ॥]

भवनानां छायासमूहा दीर्घा दृश्यन्ते । चन्द्रस्य तिर्यगूर्ध्वस्थितत्वादित्याशयः । किंभूताः । श्यामत्वाद्गजकुलतुल्ये तमोनिवहे चन्द्र एव धवलो मृगेन्द्रस्तेन विद्रुते सति निःसृतः कर्दमो यत्र तादृशं यत्पदं पदार्पणस्थानं तद्वच्छाया शोभा येषां तथाभूताः । तथा च पङ्कादुत्तीर्णस्य करिणः पदपङ्क्तिः पङ्कमयी भवतीति तथाभूतस्य विधुसिंहभिया पलायितस्य तमोगजस्य पदपङ्क्तितुल्यत्वं गृहच्छायानामित्यर्थः । सिंहस्य स्वभावत एव धवलत्वमिति निरर्थकत्वमाशङ्क्य पूर्वनिपातानियमेन मृगेन्द्रवद्धवलशशिविद्रुते इति योजयन्ति केचित् । केचित्तु—तमोगजाविनाशक्षमत्वसूचनाय धवलो धुरंधरः इत्यर्थमाहुः ॥

अथेन्दोर्नभोमध्येऽवस्थितिमाह—

तंसुण्णमन्तबिम्बो जालन्तरणिग्गओसरन्तमऊहो ।
भिण्णविवरन्धआरो भग्गच्छाहिपसरो विलग्गइ चन्दो ॥ ४८ ॥

[तिर्यगुन्नमद्बिम्बो जालान्तरनिर्गतापसरन्मयूखः ।
भिन्नविवरान्धकारो भग्नच्छायाप्रसरो विलगति चन्द्रः ॥]

चन्द्रो विलगति नभोमध्यमारोहतीत्यर्थः । कीदृक् । तिर्यग्देशादुन्नमदूर्ध्वमुपरिगच्छद्बिम्बं यस्य । मस्तकोपरिस्थितेरिति भावः । यद्वा—प्रथमं तिर्यग्भूतं सत्पश्चादुपरिगच्छद्बिम्बं यस्य । ऊर्ध्वारोहणेन तिर्यग्भावादप्यसमत्वादित्यर्थः । एवं प्रथमं जालान्तरेण निर्गता निःशेषतो गृहं प्रविष्टाः, अथापसरन्तो गृहाद्बहिर्निर्गच्छन्तो मयूखा यस्य । यदा चन्द्रस्तिर्यक्स्थितः, तदा तिर्यग्वर्तिजालसांमुख्येन निःशेषतो

गृहं प्रविष्टा रुचयः, संप्रति गृहमस्तकोपरिस्थित इति गृहं न प्रविशन्तीत्यर्थः। एवं भिन्नो विवरस्थान्धकारो येन। संमुखतया किरणानां तत्र प्रवेशात्। एवं च भग्नच्छायानां प्रसरो बहिर्गमनं येन। तथा निशामध्ये छायानां वृक्षादिमूल एव स्थितेरिति भावः॥

पुनर्ज्योत्स्नामाह—

**विच्छड्डिअचुण्णनिहा आवीअंसुअविसेसिअब्भच्छाआ।**
**विअडगवक्खोवइआ दीवुज्जोअमिलिआ किलिम्मइ जोह्णा॥४९॥**

[विच्छर्दितचूर्णनिभा आपीतांशुकविशेषिताभ्रच्छाया।
विकटगवाक्षावपतिता दीपोद्योतमिलिता क्लाम्यति ज्योत्स्ना॥]

विकटेति हेतुगर्भम्। तथा च प्रौढोपरिस्थगवाक्षेणावपतिता गृहं प्रविष्टा ज्योत्स्ना दीपोद्योतेन मिलिता सती क्लाम्यति। स्वल्पत्वादभिभवेन मन्दीभवतीत्यर्थः। अत एव पुञ्जीकृतचूर्णनिभा प्रभाविरहात्। एवं दीपरुचिसंबन्धादापीतेनेषत्पीतच्छविना अभारूपेणांशुकेन विशेषिता सदृशीकृताभ्रस्य छाया कान्तिर्यया। मृष्टत्वादीषत्पीतवस्त्रसदृशीकृताभ्रतुल्यकान्तिर्वा। यद्वा—आपीतांशुकेन पीतवस्त्रेण विशेषितं विशिष्टं यदभ्रकं तद्वच्छाया यस्याः। वस्त्रपीतिमप्रतिबिम्बादभ्रकस्यापि किर्मीरितत्वादिति भावः। 'अच्छच्छाआ' इति पाठे आपीतोंऽशुकेषत्पानविषयीकृतप्रभा सती विशेषिताल्पीकृताच्छा निर्मला छाया कान्तिर्यस्याः सा। ईषत्पीतवस्त्रवदच्छा निर्मला छाया यस्येत्यर्थो वा॥

पुनः कुमुदविशेषमाह—

**परिणामदरुम्मिल्लं ओवत्तेअव्वबहलजोह्णाभरिअम्।**
**थोअत्थोअमउलिअं भरवित्थारिअदलं व वेवइ कुमुअम्॥ ५०॥**

[परिणामदरोन्मीलमपवर्तयितव्यबहलज्योत्स्नाभृतम्।
स्तोकस्तोकमुकुलितं भरविस्तारितदलमिव वेपते कुमुदम्॥]

स्तोकस्तोकक्रमेण मुकुलितं जातमुद्रम्। दिवसे इत्यर्थात्। कुमुदं निशि परिणामेन क्रमजरठतया ईषदुन्मीला उन्मीलनं तद्विशिष्टं सद्वेपते। अत एव अपवर्तयितव्यया घनीभावेन हस्तादिना बहिष्करणयोग्यया बहलज्योत्स्नया भृतं पूर्णम्। अत एव भरेण ज्योत्स्नागौरवेण विस्तारितपत्रमिव। अयमर्थः—दिवाजातमुद्रमपि

कुमुदं स्वभावादेव निशि किंचिद्विकसितम् । अथ वर्त्मलाभेन ज्योत्स्नया पूरितत्वात्तदुदरेण दलानामधोगमनादुत्फुल्लमासीदित्युन्मीलनकारणस्य वा तद्धेतुकस्य वा स्पन्दस्य भरहेतुकत्वोत्प्रेक्षया मुकुलनसमकालमेव विकासोत्कर्ष इति व्यज्यते । अन्योऽपि वयःपरिणामेनेषदुन्मीलः कम्पत इति ध्वनिः ॥

वृक्षावस्थामाह—

पवणाअम्पिअसिहरा गओणिअत्तन्तविडवविहुअच्छाआ ।
ससिकिरणपरिक्खित्ता जोह्णावेअवडिआ पवन्ति व रुक्खा ॥५१॥
[पवनाकम्पितशिखरा गतापनिवर्तमानविटपविधूतच्छायाः ।
शशिकिरणपरिक्षिप्ता ज्योत्स्नावेगपतिताः प्लवन्त इव वृक्षाः ॥]

शशिकिरणैः परिक्षिप्ता वेष्टिताः, अत एव ज्योत्स्ना नवसलिलमिव तस्या वेगे प्रवाहे पतिताः सन्तो वृक्षाः प्लवन्ते इव प्लवनं कुर्वत इव । किंभूताः । पवनेनाकम्पितं शिखरं येषाम् । अत एव । गतैः, अथापनिवर्तमानैरागतैर्विटपैर्विधूताः कम्पिताश्छाया येषां ते । अन्योऽपि प्रवाहे पतितः करचरणादिव्यापारेण प्लवत इति वृक्षाणां शाखाकम्पहेतुकच्छायाचाञ्चल्येन प्लवनमुत्प्रेक्षितमिति ज्योत्स्नाबाहुल्यम् ॥

पुनर्ज्योत्स्नामाह—

घरमणिमऊहभिण्णो सलिलाहअबहलचन्दणरसच्छाओ ।
उद्देसुल्ललिअतमो दीसइ विवरविसमो व्व जोह्णाणिवहो ॥ ५२ ॥
[गृहमणिमयूखभिन्नो सलिलाहतबहलचन्दनरसच्छायः ।
उद्देशोल्लुलिततमो दृश्यते विवरविषम इव ज्योत्स्नानिवहः ॥]

गृहमणीनां दीपानां मयूखैर्भिन्नः संगतः सन् । गृह इत्यर्थात् । सलिलेनाहतस्य सिक्तस्य चन्दनरसस्येव च्छाया कान्तिर्यस्य पीतधवलत्वात् । तथाभूतो ज्योत्स्नानिवहः । उद्देशे क्वचित्क्वचिदुल्लुलितं विपर्यस्य स्थितं तमो यत्र, शाखापत्रादिच्छायारूपत्वात् । तथाभूतः सन् । विवरैर्निम्नप्रदेशैर्विषमो विसदृश इव दृश्यते । बहिरित्यर्थात् । क्वचित्क्वचिदवस्थिता शाखापत्रादिच्छाया विवरबुद्धिं जनयतीत्यर्थः । 'दशेन्धनो गृहमणिः स्नेहाशः कज्जलध्वजः' इति हारावलिः ॥

अथ ताराणां तानवमाह—

**विअलिअणिअअच्छाअं जाअं जोह्णापरिप्पवन्तमिअङ्कम् ।**
**विच्छूढबमऊहं अविभाविअसह्णतारअं गगणअलम् ॥ ५३ ॥**

[विगलितनिजकच्छायं जातं ज्योत्स्नापरिप्लवमानमृगाङ्कम् ।
विक्षेप्तव्यमयूखमविभावितश्लक्ष्णतारकं गगनतलम् ॥]

गगनतलं जातम् । कीदृशम् । विगलिता अपगता निजकच्छाया श्यामरूपता यत्र, ज्योत्स्नाबाहुल्यात् । एवं ज्योत्स्नासु परिप्लवमान इव तरन्निव मृगाङ्को यत्र, जले फेनवत्संचारशीलत्वात् । एवं विक्षेप्तव्या हस्तादिस्फेटनीया मयूखाश्चन्द्रकान्तयो यत्र, घनीभूतत्वात् । अत एव अविभाविता अलक्षिताः श्लक्ष्णाश्चन्द्रालोकेनाभिभूतत्वात्कृशास्तारका यत्र तथाभूतम् ॥

पर्वतावस्थामाह—

**णिव्वडिअतुङ्गसिहरा धवला दीसन्ति दिट्ठमहिअलबन्धा ।**
**णहमज्झट्ठिअससहरवोच्छिण्णच्छाहिमण्डला धरणिहरा ॥ ५४ ॥**

[निर्वलिततुङ्गशिखरा धवला दृश्यन्ते दृष्टमहीतलबन्धाः ।
नभोमध्यस्थितशशधरव्यवच्छिन्नच्छायामण्डला धरणीधराः ॥]

धरणीधरा धवला दृश्यन्ते ज्योत्स्नाबाहुल्यात् । कीदृशाः । निर्वलितानि पृथग्भूतानि तुङ्गानि शिखराणि येषाम् । एवं दृष्टो महीतले बन्धः संधिर्येषाम् । एवं नभोमध्यस्थितेन शशधरेण व्यवच्छिन्नोऽपनीतश्छायामण्डलो येषां ते । चन्द्रस्योपरिस्थित्या तल एव छायाव्यवस्थितिरिति भावः ॥

ज्योत्स्नाप्रकर्षमाह—

**विवरं ति परिहरिज्जइ बहलदुमच्छाहिमण्डलागअतिमिरम् ।**
**ओच्छुन्दइ वीसत्थं जोह्णाणिवहभरिअं थलं विअ विवरम् ॥५५॥**

[विवरमिति परिह्रियते बहलद्रुमच्छायामण्डलागततिमिरम् ।
आक्रम्यते विश्वस्तं ज्योत्स्नानिवहभृतं स्थलमिव विवरम् ॥]

बहलं बहुलं यद्द्रुमाणां छायामण्डलं तेनागतं प्राप्तं तिमिरं यत्र तत्स्थानमित्यर्थात् । 'निवरमिदम्' इति बुद्ध्या परिह्रियते रन्ध्रस्यापि तमोमयत्वात् । एवं ज्योत्स्नानिवहेन भृतं पूर्णं विवरं रन्ध्रप्रदेशो विश्वस्तं निःशङ्कं यथा स्यादेवं स्थलमिवाक्रम्यते गम्यते तमोविरहात् । अत्र भ्रान्तिमानलंकारः । तदुक्तं कण्ठाभरणे—'भ्रान्तिविंपर्ययज्ञानं द्विधा सा प्रतिपद्यते । अतत्त्वे तत्त्वरूपा वा तत्त्वे वातत्त्वरूपिणी ॥'

अथ निशाचरीणां संभोगवर्णनमुपक्रमते युग्मकेन—

इअ वम्महजग्गाविअतीरविसूरन्तणिव्वलिअचक्काए ।
जाअम्मि मउलिउप्पलदुक्खपहुप्पन्तमहुअरम्मि पओसे ॥ ५६ ॥
वम्महपरव्वसाइं रामागमणपरिवड्ढिआवेआइं ।
अहिलक्खन्ति मुअन्ति अ रइवावारं विलासिणीहिअआइं ॥५७॥
( जुग्गअम् )

[इति मन्मथजागरिततीरखिद्यमाननिर्वलितचक्रवाके ।
जाते मुकुलितोत्पलदुःखप्रभवन्मधुकरे प्रदोषे ॥
मन्मथपरवशानि रामागमनपरिवर्धितावेगानि ।
अभिलषन्ति मुञ्चन्ति च रतिव्यापारं विलासिनीहृदयानि ॥]
(युग्मकम्)

इत्यनेन प्रकारेण प्रदोषे निशाभागे जाते सतीत्युत्तरस्कन्धकेनान्वयः । वस्तुतस्तु—प्रदोषे रजनीमुखे जातेऽतीते सतीत्यर्थः । तेन निशामध्यभागो लभ्यते । कीदृशि—मन्मथेन जागरितावुज्जागरितौ जागरितमन्मथौ वा । अत एव तीरयोर्नदीकूलयोः खिद्यमानौ संगमाभावान्निर्वलितौ विश्लिष्टौ चक्रवाकौ यत्र । एवं मुकुलितेषूत्पलेषु दुःखेन प्रभवन्तो मान्तो मधुकरा यत्र । रात्रौ तेषां मुद्रणाद्दलितुल्यप्रमाणोदरत्वाच्चेति भावः । विलासिनीनां हृदयानि प्रदोषसाम्राज्यान्मन्मथे परवशान्यस्वतन्त्राणि सन्ति रतिव्यापारं सुरतोत्सवं अभिलषन्ति, रामागमनेन परिवर्धित आवेगः कष्टं यत्र तथाभूतानि सन्ति मुञ्चन्ति च । निजनिजस्वामिविधुरशङ्कित्वादिति हर्षत्रासभावयोः संधिः ॥

तदेवोपपादयति—

लद्धगलन्तासाअं आवेअविहिण्णवम्महुल्ललिअसुहम् ।
छिण्णवटिज्जन्तरसं णावज्जइ दइअचुम्बणं जुवईणम् ॥५८॥

[लब्धगलदास्वादमावेगविभिन्नमन्मथोल्ललितसुखम् ।
छिन्नघट्यमानरसं नावध्यते दयितचुम्बनं युवतीनाम् ॥]

युवतीनां स्वविषये दयितकर्तृकं दयितविषये स्वकर्तृकं वा चुम्बनं नावध्यते चिरं न तिष्ठति। विषादोदयाद्धृदये न लगतीति केचित्। वस्तुतस्तु—गाढं न संबध्यते। विरोधिरसोपस्थित्याधरोष्ठशैथिल्यादित्यर्थः। कीदृशम्। प्रथमं कामवशाल्लब्धस्तदैवावेगवशाद्गलन्नपगच्छन्नास्वादः सौहित्यं यत्र। एवं आवेगेनोद्वेगेन विभिन्नं संबद्धं खण्डितं वा मन्मथेनोल्ललितमुत्तरलीकृतं सुखं यत्र। यद्वा आवेगेन विभिन्नः संबद्धः खण्डितो वा मन्मथस्तेनोल्ललितमुत्तरलीकृतं सुखं यत्र। एवं छिन्नः सन्घट्यमानः स्थाप्यमानो रसः शृङ्गारादिको यत्र। हर्षविषादयोस्तुल्यत्वादिति भावः॥

पुनस्तदेवाह—

वेवइ ससइ किलिम्मइ सअणे आमुअइ णीसहो अङ्गाइं ।
ण विणज्जइ किं भीओ ओ मअणपरव्वसो विलासिणिसत्थो ॥५९

[वेपते श्वसिति क्लाम्यति शयने आमुञ्चति निःसहोऽङ्गानि ।
न विज्ञायते किं भीत उत मदनपरवशो विलासिनीसार्थः ॥]

विलासिनीनां सार्थो वेपते श्वासं त्यजति क्लान्तिं याति, निःसहः सञ्छयनेऽङ्गान्यामुञ्चति त्यजति तन्न विशिष्य ज्ञायते किं रामाद्भीत उत पक्षान्तरे मदनपरतन्त्रः। वेपनादिकार्याणां भयमदनोभयसाधारणत्वादिति भावः॥

राक्षसीनां कातरतामाह—

पिअअमवच्छेसु वणे ओवइअदिसागइन्ददन्तुल्लिहिए ।
वेवइ दट्ठूण चिरं संभाविअसमरकाअरो जुवइजणो ॥ ६० ॥

[प्रियतमवक्षःसु व्रणानवपतितदिग्गजेन्द्रदन्तोल्लिखितान् ।
वेपते दृष्ट्वा चिरं संभावितसमरकातरो युवतिजनः ॥]

संभावित उपस्थितो यः समरस्तेन कातरो युवतिजनश्चिरं वेपते। किं कृत्वा।

प्रियतमवक्षःसु व्रणान्दृष्ट्वा । किंभूतान् । अवपतितस्य प्रहर्तुमागतस्य दिग्गजेन्द्रस्य दन्ताभ्यामुल्लिखितान्कृतचिह्नान् । तथा च वक्षःक्षतदर्शनेन शूरत्वनिर्णयात्तत्क्रामावश्यकत्वज्ञानसचिवेन पूर्वमिन्द्रयुद्धे सक्षता अपि भाग्येन जीविताः संप्रति किं स्यादिति संदेहेन कम्प इति त्रासरूपभावोदयः ॥

पुनस्त्रासमेवाह—

**सुरअसुहद्धमउलिअं भमरदरकन्तमालईमउलणिहम् ।**
**साहइ समरुप्पेसं उप्पित्थुम्मिल्लतारअं णअणजुअम् ॥ ६१ ॥**

[सुरतसुखार्धमुकुलितं भ्रमरदराक्रान्तमालतीमुकुलनिभम् ।
शास्ति समरोत्पेषमुत्पित्सोन्मीलत्तारकं नयनयुगम् ॥]

तासां नयनयुगं कर्तृ समरोत्पेषं समरत्रासं शास्ति कथयति । कीदृक् । सुरतसुखेनार्धमुकुलितं किंचिन्मुद्रितम् । अत एव भ्रमरेण ईषदाक्रान्तं यन्मालतीमुकुलं तत्तुल्यम् । मुकुले दरप्रविष्ट एव भ्रमर इति मुकुलिताक्षितारकातौल्यम् । अथोत्पित्सया उद्वेगेनोन्मीलन्ती बहिर्भवन्ती तारका यस्य तत् । तथा च प्रथमं कामवशात्सुखभावनया किंचिदन्तर्हितापि तारका पुनरुद्वेगवशात्सुखविच्छेदादुन्मीलिताभूत् । अत एव भयं ज्ञापयतीति भावः ॥

अथासां त्रासोपमर्दकस्य शृङ्गारस्योत्कर्षमाह—

**अह ससिजणिआमोए मअपरिवड्ढिअपिआहिसारणसोक्खे ।**
**मअणुम्मूलिअमाणे राअपराहीणरइसुहम्मि पओसे ॥ ६२ ॥**
**वलइ[1] अ दूमिअकुविओ अवसाइअहरिसिओ अईइ सरीरम् ।**
**ससइ अ चुम्बिअसुहिओ मअपाअडिअहिअओ विलासिणिसत्थो**
**(जुग्गअम्)**

[अथ शशिजनितामोदे मदपरिवर्धितप्रियाभिसारणसौख्ये ।
मदनोन्मूलितमाने रागपराधीनरतिसुखे प्रदोषे ॥
वलति च दूनकुपितोऽप्रसादितहर्षितोऽत्येति शरीरम् ।
श्वसिति च चुम्बितसुखितो मदप्रकटितहृदयो विलासिनीसार्थः ॥]
(युग्मकम्)

---

१. अत्र 'दूमिअकुविओ' इत्यस्य व्याख्या त्रुटिता प्रतीयते.

अथ रतिभयविरुद्धभावोत्पत्त्यनन्तरं प्रदोषे सतीति संदंशकेनोत्तरस्कन्धके क्रिया कर्तृसमन्वयः कर्तव्यः । कीदृशे । शशिना जनितः प्रहर्षो यत्र । एवं मदेन परिवर्धितानि प्रियाभिसारणरूपसौख्यानि यत्र । यद्वा मदेन कामोत्कर्षेण परिवर्धितं प्रियाभिसारणेन प्रियस्यानयनेन सौख्यं यत्र । 'मदाज्ञया सकामः प्रिया स्वयमेवाभिसरति' इति नायिकायाः, 'मदुत्कण्ठासमकालमेवाहमनयाहूतः' इति नायकस्य चेति भावः । यद्वा परिवर्धितेन मदेन नायिकाया यदभिसारणं तेन सौख्यं यत्र, द्वयोरित्यर्थात् । 'सकामोऽयमभिसारयति माम्' इति नायिकायाः, 'मदं कृतार्थयितुमाहूतेयमागतैव' इति नायकस्य चेति भावः । एवं मदनेनोन्मूलितो मानो यत्र । यद्वा मदनस्योन्मूलितं मानमियत्ता यत्र । एवं रागोऽनुरागस्तत्पराधीनं रतिसुखं यत्र । कदाचिदनुरागं विनापि रतिसुखमुत्पद्यत इति, तदानीं चन्द्रिकासाम्राज्येन सर्वेषां सर्वत्रानुरागपूर्वकमेव तदासीदिति भावः । यद्वा 'राजपराधीन-' इति [पाठे] राज्ञो रावणस्य पराधीनं रतिसुखं यत्रेत्यर्थः । यदीदानीं रावणो योद्धुमाकारयेत्, तदा सर्वेऽपि तत्र गच्छेयुरिति रतिसुखं न भवेदिति भावः । विलासिनीनां स्वार्थो वलति च परावर्तते च । त्रासमुत्सृज्य शृङ्गारे प्रवर्तते इत्यर्थः । मानमुत्सृज्य नायकसंमुखीभवतीति वा । तदेवाह—( १............ ) प्रियतमैरप्रसादितोऽपि हर्षितः सन् शरीरमल्लेति । प्रियतमोपरि समर्पयतीत्यर्थः । अथ नायकेन चुम्बितस्तेन सुखितः सन् श्वसिति श्वासं त्यजति च सुखवशात् । कीदृक् । मदेन प्रकटितं व्यक्तं हृदयं यस्येति सर्वत्र हेतुः । स्वायत्त्यभावादिति भावः ॥ वयं तु—'पूर्वस्कन्धकविशेषणचतुष्टयेन सह क्रमेणोत्तरस्कन्धकवाक्यार्थचतुष्टयस्य समन्वयः । तथाहि—यतः शशिजनितामोदे, अत एवादूनकुपितः, कुपितोऽप्यदूनोऽनुपतप्तः सन्वलति चन्द्रजनितानन्देन कोपजन्योपतापशान्त्या नायकानयनोद्योगमाचरतीत्यर्थः । एवं यतो मदपरिवर्धितेत्यादि अत एव प्रियागमनानन्तरं प्रियैरप्रसादितोऽपि हर्षितः सन् शरीरमल्लेति । तदुपरि पातयतीत्यर्थः । एवं यतो मदनोन्मूलितमाने अत एव प्रियेणाचुम्बितोऽपि सन् सुखितः श्वसिति तदीयपरिरम्भणजनितसुखाविष्कारात्श्वासं मुञ्चतीत्यर्थः । एवं यतो रागपराधीनेत्यादि अत एव मदप्रकटितहृदयोऽनुरागसाम्राज्यात्' इति ब्रूमः ॥

नवोढाकोपमाह—

रोसपुसिआहराणं दइअवलामोलिचुम्बणपरुण्णाणम् ।
णिवलिअमण्णुगरुअं हरइ पराहुत्तजम्पिअं जुअईणम ॥ ६४ ॥

[रोषप्रोञ्छिताधराणां दयितबलामोटितकचुम्बनप्ररुदिता(दती)नाम् ।
निर्वलितमन्युगुरुकं हरति पराङ्मुखजल्पितं युवतीनाम् ॥]

दयितस्य बलादामोटितकेन बलादामोट्य । बलात्कारेणेत्यर्थः । कृतं यच्चुम्बनं तेनानभिमत्या प्ररुदतीनां पराङ्मुखेन दयितसांमुख्यपरिहारेण जल्पितं सोपालम्भ-वचनं निर्वलितेन स्पष्टेन मन्युना ईर्ष्यारोषेण गुरुकं परिपुष्टं सत् हरति । दयितस्य चित्तमित्यर्थात् । यथा यथा किंचिदुक्त्वा स्मारयति तथा तथा मनोहारि भवती-त्यर्थः । किंभूतानाम । रोषेण प्रोञ्छितोऽधरो याभिस्तासाम् । त्वच्चुम्बनमिदमस्वी-कृतमिति ज्ञापयितुमञ्चलेन हस्तेन वाधरोष्ठं प्रोञ्छतीति स्त्रीणां स्वभावः ॥

अभिसारिकाणां विषादमाह—

**अहिसारणं ण गेह्णइ ण संठवेइ अलअं ण पुच्छइ दूइम् ।**
**चन्दालोअपडिहओ वेवइ मूढहिअओ विलासिणिसत्थो ॥ ६५ ॥**

[अभिसारणं न गृह्णाति न संस्थापयत्यलकं न पृच्छति दूतीम् ।
चन्द्रालोकप्रतिहतो वेपते मूढहृदयो विलासिनीसार्थः ॥]

चन्द्रस्यालोकेन दर्शनेन तेजसा वा प्रतिहतो निवारितगमनोत्साहो विलासिनीनाम-भिसारिणीनां सार्थः अभिसारणं न गृह्णाति कर्तव्यतया न स्वीकरोति, न च अलकं संस्थापयति संयमयति नायकनिकटगमनाय प्रसाधनभावेनेत्यर्थः । न च दूतीं पृच्छति कथं गमनं स्यादित्यादिकमित्यर्थः । किं तु ममावज्ञामवैदग्ध्यमस्थायित्वं वा किं ज्ञास्यति प्रियः कथं वा तत्समागमः स्यादिति मूढहृदयः केवलं वेपते मदना-गमनेन स चेदन्यमाश्रयेत्, अथ वा मामन्यानुरक्तामवगच्छेत्, तदा मया न जीवितव्यमिति भावः ॥

अथ शृङ्गारसाम्राज्यमाह—

**अवमाणिअरामकहं जहापुरपअट्टजुअइजणवावारम् ।**
**सोहइ रअणिअराणं आसङ्घिअदहमुहं पओसागमणम् ॥ ६६ ॥**

[अवमानितरामकथं यथापुरःप्रवृत्तयुवतीजनव्यापारम् ।
शोभते रजनीचराणामध्यवसितदशमुखं प्रदोषागमनम् ॥]

रजनीचराणां प्रदोषो रात्रिस्तदागमनं शोभते प्रीतिं जनयतीत्यर्थः। कीदृक्। अध्यवसितो विपक्षनिवारकत्वेनावधारितो दशमुखो यत्र तादृशम्। यतः, अत एव—अवमानितानादरविषयीकृता रामस्य कथा यत्र तथाभूतम्। सति रावणे को राम इत्येवंरूपनिश्चयात्। अत एव यथापुरो यथापूर्वं प्रवृत्तो युवतीजनानां व्यापारः संभोगादिर्यत्रेति रतिभावस्योदयः॥

स्त्रीणामनुरागातिशयमाह—

**पिअपासाहि णिअत्तो समुहं अलिअं पि जं भणइ दूइजणो।**

**तं च्चिअ कामिणिसत्थो दूमेन्तिं पि बहुसो णिअत्तेइ कहम्॥६७॥**

[प्रियपार्श्वान्निवृत्तः संमुखमलीकमपि यद्भणति दूतीजनः।

तामेव कामिनीसार्थो दुन्वन्ती(ती)मपि बहुशो निवर्तयति कथाम्॥]

प्रियस्य पार्श्वात्समीपान्निवृत्त आगतो दूतीजनः संमुखमग्रत एव अलीकमपि 'स न स्वयमेष्यति न वा त्वां नेष्यति, किं तु तवापराधानुक्त्वा परस्यामनुरज्यति' इत्यादि मिथ्यापि यद्भणति दुन्वन्ती(ती)मुपतापयन्तीमपि तामेव कथां कामिनीसार्थो बहुशो निवर्तयति रसनिर्भरत्वात्परुषरूपामपि 'दूति, स मां प्रति किमुक्तवान्, किं वा करिष्यति मया किंचिदत्र न श्रुतम्, किंचिदत्र न बुद्धम्' इत्यादिव्याजेन शतधा परावर्त्य शृणोतीत्यर्थः॥

तासां वैदग्ध्यमाह—

**सअणेसु पणअकलहे समुहणिसण्णपिअवेलविज्जन्तीहिं।**

**परिवत्तिउं ण चइअं णवरं णअणेसु विअलिअं बाहजलम्॥६८॥**

[शयनेषु प्रणयकलहे संमुखनिषण्णप्रियव्यावर्त्यमानाभिः।

परिवर्तितुं न शकितं केवलं नयनयोर्विगलितं बाष्पजलम्॥]

प्रणयकलहे सति शयनेषु संमुखनिषण्णैः संमुखस्थैः प्रियैर्व्यावर्त्यमानाभिः। 'इतो बहिर्व्रज, किं तव प्रयोजनम्' इत्याद्युक्त्वा कराभ्यामन्यतोऽभिमुखीकर्तुं प्रेरिताभिः कामिनीभिः परिवर्तितुं पराङ्मुखीभवितुं न शकितम्। तथा सति चेदयं न वादयेत्तदा रसविच्छेद एव स्यादिति परामर्शात्। किं तु केवलं नयनयोर्बाष्पजलं विगलितं त्यक्तम्। एवमनुरक्तामपि मामयमित्थं गञ्जयतीति भावः। रोदनादप्य-

१. 'अलीकामपि यां भणति' इति भवेत्.

यमनुरज्यत्विति वा ॥ यद्वा कलहे सति पराङ्मुखीभूय सुप्ताया एव प्रियायाः प्रसादनाय गत्वा संमुखीभूय स्थितस्य प्रियस्य वृत्तान्तो वर्ण्यते । तथाहि—अत्र पक्षे 'वेलविज्जन्तीहिं' व्याकुलीक्रियमाणाभिरित्यर्थः ॥ तथा च संमुखानेषणैः प्रियैरालिङ्गनचुम्बनादिव्यापारेण व्याकुलीक्रियमाणाभिः परिवर्तितुं न शकितम्, मनसा किंचित्प्रसन्नत्वात् । अन्यथा रसाभासः स्यात् । किं तु नयनयोर्बाष्पजलं त्यक्तं तदा तथापराधं कृत्वा संप्रति प्रसादयतीति भावः । तथाभूतापराधस्यापि संमुखीभूयत इति वा ॥

मानिनीमानभङ्गमाह—

अणुणअखणलद्धसुहे पुणो वि संभरिअमण्णुदूमिअविहले ।
हिअए माणवईणं चिरेण पणअगरुओ पसम्मइ रोसो ॥ ६९ ॥

[अनुनयक्षणलब्धसुखे पुनरपि संभृतमन्युदुःखितविह्वले ।
हृदये मानवतीनां चिरेण प्रणयगुरुकः प्रशाम्यति रोषः ॥]

मानवतीनां हृदये रोषश्चिरेण प्रशाम्यति । किंभूते । अनुनयः प्रसादनं तत्क्षणे लब्धं सुखं येन । अनुनयेन क्षणं व्याप्य लब्धसुखे इति वा । पुनरपि संभृतेन मन्युनापराधेन दुःखिते अत एव विह्वले व्याकुलीभूते । रोषः कीदृक् । प्रणयेन गुरुकोऽनुन्मूलनीयः । तथा च यथा यथा प्रणयाधिक्यं तथा तथापराधे सति कोपाधिक्यमित्यनुनयेन प्रसादोन्मुखमपि हृदयं मन्युबीजस्मरणेन निवर्तत इति चिरकालेन प्रसादो भवतीति भावः ॥

स्त्रीणां वैलक्ष्यमाह—

अलअं छिवइ विलक्खो पडिसारेइ वलअं जमेइ णिअत्थम् ।
मोहं आलवइ सहिं दइआलोअणडिओ विलासिणिसत्थो ॥७०॥

[अलकं स्पृशति विलक्षः प्रतिसारयति वलयं यमयति निवसनम् ।
मोघमालपति सखीं दयितालोकनर्तितो विलासिनीसार्थः ॥]

कुतश्चिदकस्मादागतस्य दयितस्यालोकेन दर्शनेन नर्तितश्चलीकृतो विलासिनीसार्थो विलक्षः प्रतिभाशून्यः । सलज्ज इति वा । अलकं स्पृशति । एवं वलयं प्रतिसारयति स्थानान्तरं प्रापयति, निवसनं संयमयति इतस्ततः समाकृष्य संवृणोति, मोघमफलं यथा स्यात्तथा सखीमालपति सख्या सह तुच्छमालापं करोतीत्यर्थः । तथा च क्षोभहेतुकं सर्वमिदं नायिकाया दयितेऽनुरागं व्यनक्ति । तदुक्तं कण्ठाभरणे—'आत्मप्रकाशनपरा चेष्टा चपलतोच्यते' ॥

नायकौत्कण्ठामाह—

**अब्भुट्ठणतुरिआणं सोहइ दइओवऊहणविराआणम्।**
**असमत्तमण्डणाणं तहेअ सअणगमणं विलासवईणम्॥ ७१॥**

[अभ्युत्थानत्वरितानां शोभते दयितोपगूहनविशीर्णानाम्।
असमाप्तमण्डनानां तथैव शयनगमनं विलासवतीनाम्॥]

असमाप्तमपूर्णं मण्डनं प्रसाधनं यासां तासां विलासवतीनां तथैव असमाप्तमण्डनावस्थमेव शयने गमनं शोभते रसनीयतां याति। नायकस्य प्रीतिं जनयतीत्यर्थः। किंभूतानाम्। अभ्युत्थाने प्रियतमागमने सति विनयविशेषेण त्वरितानाम्। तदैव दयितस्योपगूहनेनालिङ्गनेन विशीर्णानां व्याकुलानाम्। अस्वायत्तानामिति यावत्। तथा चाकस्मादागतं वल्लभमवलोक्यासमाप्तप्रसाधनापि कामिनी यावदभ्युत्थानमाचरति तावदेव तेन शय्यायामारोपितेति नायिकायाः सौभाग्यं व्यज्यते॥

नवोढामानमाह—

**अवसाइअदिण्णसुहो सहीहिँ थिरदिट्ठिणिहुअवारिअविडिओ।**
**हित्थहिअओ सुणिज्जइ पिएहिँ अलिअकुविओ विलासिणिसत्थो ७२**

[अप्रसादितदत्तसुखः सखीभिः स्थिरदृष्टिनिभृतवारितव्रीडितः।
त्रस्तहृदयो ज्ञायते प्रियैरलीककुपितो विलासिनीसार्थः॥]

विलासिनीनां सार्थः प्रियैरलीकं मिथ्या तेन कुपित इति ज्ञायते। कुत इत्यत आह—कीदृक्। अप्रसादितः सन् संभाषणादौ दत्तसुखः प्रत्युत्तराद्याचरणात्। दिण्णमुहो दत्तमुखो वा वैमुख्यत्यागात्। अथ सखीभिः परावेद्य किंचिद्भ्रूकुट्यादिचेष्टाविशिष्टया स्थिरदृष्ट्या निवारितः सन् व्रीडितो लज्जितः। अहमिदानीममूभिरेव मानं कर्तुमुपदिष्टा तथा कृतवत्यपि रक्षितुमजानती दयितवशत्वेन सकामा संभावितास्मीति भावः। अत एव त्रस्तहृदयः पश्चादेता रूक्षं वदिष्यन्तीत्याशयात्। तथा च संभाषणादौ प्रवृत्तापि सखीमुखमवलोक्य निवृत्तेति शिक्षया कोपोऽयम्। न तु पारमार्थिक इति प्रियैर्ज्ञायीति निगर्वः॥

प्रौढस्त्रीणां मदमदनोत्कर्षमाह—

सहवड्ढिअं सहिं विअ वड्ढन्तिं पिअअमाहिसारणविग्घे ।
वारेइ चिरेण मओ लज्जं विच्छुहइ वम्महो च्चिअ पढमम् ॥ ७३ ॥

[सहवर्धितां सखीमिव वर्धमानां प्रियतमाभिसारणविघ्ने ।
वारयति चिरेण मदो लज्जां विक्षिपति मन्मथ एव प्रथमम् ॥]

मदश्चिरेण लज्जां वारयति, प्रथमं मन्मथ एव विक्षिपति । लज्जापगमसाध्यस्य प्रियाभिसारणरूपमन्मथव्यापारस्य प्रथमत एवोत्पत्तेः, आलिङ्गनचुम्बनादिरूपमदव्यापारस्य च प्रियसमागमोत्तरकालीनत्वेन पश्चादिति भावः । किंभूताम् । प्रियतमेन यदभिसारणं नायिकायाः स्वसमीपनयनं तद्विघ्ने सखीमिव वर्धमानाम् । 'वट्टन्तीम्' इति पाठे वर्तमानाम् । यथा प्रियाभिसारणविघ्नहेतुः सखी लज्जाभूमित्वात्, तथा लज्जापीत्युपमा प्रियतमस्य यदभिसारणं नायिकया समानयनं तद्विघ्ने इति वा । एवं सहवर्धितां सह प्रौढिमागतामिति सख्यामपि । तथा चाजन्मसंगतापि लज्जा कामिनीभिरभिसरणे संगमे च मुच्यत इति शृङ्गारोत्कर्षः । मम तु व्याख्या— 'मन्मथ एव प्रथमं लज्जां विक्षिपति दूरं प्रापयति येनाभिसारः संपद्यते । मदस्तु चिरेण प्रियसमागमोत्तरं वारयति मन्मथविक्षिप्तामेव लज्जां प्रियदर्शनेन सत्यागन्तुमुत्कण्ठितामपितामपि दूरत एव निषेधतीत्यर्थः । तत एव निर्भरमालिङ्गनचुम्बनादिकं जायत इति भावः । अत्र मदनैरपेक्ष्यवाचिना मन्मथसंगतैवकारेण प्रियसमागमोत्तरमेव मदस्योत्पत्तिः, तदानीं च मदकृत्ये कामस्यापि सहकारित्वमित्येवकारशून्यमदशब्दसाहचर्याद्व्यञ्जयता(नया) नाय(यि)काया धीरत्वं व्यज्यते । 'मदो विकारः सौभाग्ययौवनाद्यवलेपजः' ॥

दूतीषु शिक्षामाह—

सहिअलहत्थाहि मुहं दररइअविसेसअं समक्खेतूण ।
जुवईहि वलिअविसमं अप्पाहिज्जइ ससंभमं दूइजणो ॥ ७४ ॥

[सखीजनहस्तान्मुखं दररचितविशेषकं समाक्षिप्य ।
युवतीभिर्वलितविषममध्याप्यते ससंभ्रमं दूतीजनः ॥]

युवतीभिर्दूतीजनः ससंभ्रमं सादरमध्याप्यते शिक्ष्यते । किं कृत्वा । ईषद्रचितं विशेषकं यत्र तन्मुखं वलितं साचीकृतम् । अत एव विषमं तिर्यग्यथा स्यादेवं

सखीजनहस्तात्समाक्षिप्याकृष्य । तथा च—प्रियसमीपगमनाय मुखमण्डनं कारयन्तीभिः प्रसाधकसखीहस्तान्मुखमाकृष्य तिर्यकृत्वा प्रथमप्रेषित एव दूतीजनः पुनराहूय 'तदैव स्फुरितं किं चित्प्रियस्त्वया मद्वाचिकमित्थं वक्तव्यो मदागमनं च हठान्न वक्तव्यम्' इत्यादिकमतिनिभृतमुपदिश्यत इति वैदग्ध्यं सूचितम् । 'तमालपत्रं तिलकं मुखबिन्दुविशेषकम्' ॥

अथासां रसमत्ततामाह—

**अण्णं सहिअणपुरओ अप्पाहेन्तो अ अण्णहा दूइजणम् ।**
**जम्पइ विमुक्कधीरं अण्णं चिअ दइअदंसणे जुवइजणो ॥ ७५ ॥**

[अन्यत्सखीजनपुरतोऽध्यापयंश्चान्यथा दूतीजनम् ।
जल्पति विमुक्तधीरमन्यदेव दयितदर्शने युवतिजनः ॥]

युवतीजनः सखीजनस्य पुरतोऽन्यद् अन्यथा च दूतीजनमध्यापयन्नभिमन्त्र्य-मुपदिशन्नन्यदेव विमुक्तधैर्यं यथा स्यात्तथा दयितदर्शने जल्पतीति मूढतया रसमत्तत्वं व्यज्यत इति संप्रदायः । वस्तुतस्तु—युवतीजनः सखीजनस्य पुरतः प्रतारणायाचाञ्चल्यमपहस्तयन्गुरुपरतन्त्रा भवामि, संप्रति मदागमनं तत्र न स्यादित्यादिकमन्यदेव दूतीजनं जल्पति संप्रत्येताः प्रतारिताः, मया तत्रावश्यमेतासामक्षि वारयित्वा समागन्तव्यम्, तेन च तावदमुकस्थाने स्थातव्यमित्यादिक्रमेण सखीभ्योऽपि संगोप्य दूतीजनमध्यापयन्नुपदिशन्नक्षिभ्रुवादिविकारेणान्यथा जल्पति तथाकृते च दयितदर्शने सत्यतःपरं भवन्तो दृष्टा गुरुजनमसंबोध्यैवागतास्मीत्यनुज्ञायतां गमनायेत्यादिकं विमुक्तधैर्यतया तात्कालिकसंभोगतात्पर्यकमन्यदेव जल्पतीति चातुर्यचतुरस्रता सूचितेति मदुन्नीतः पन्थाः ॥

नवोढासंगममाह—

**कहं वि सम्मुहाणिअङ्के कह कह वि वलन्तचुम्बिओवत्तमुहो ।**
**देइ खलन्तुल्लावे णववहुसत्थे विसूरिअरअं पि धिइम् ॥ ७६ ॥**

[कथमपि संमुखानीताङ्के कथं कथमपि वलच्चुम्बितापवृत्तमुखे ।
ददाति स्खलदुल्लापे नववधूसार्थे खिन्नरतमपि धृतिम् ॥]

नववधूनां सार्थे विषये खिन्नता व्याकुलता तत्प्रधानं रतमपि धृतिं प्रीतिं ददाति यूनामित्यर्थात् । किंभूते । पूर्वनिपातानियमात् कथमपि कष्टसृष्ट्या संमुखं यथा स्यात्तथाङ्कानीते मुक्तादिसमर्पणदिव्यदानकाकूक्तिबलात्कारादिनाङ्कमुत्सङ्गमानीतेऽन-

न्तरं वलच्चुम्बितं सदपवृत्तं तिर्यग्भूतं मुखं यस्य तत्र । चुम्बनासहत्वात् । एवं चुम्बनसमकालमेव स्खलन् व्रीडापीडाकामैर्भङ्गुरत्वादव्यक्त उल्लापो निषेधादिवचनं यत्र । तथा च यथा यथा वास्यमासामधिकं तथा तथा कामोद्दीप्त्या नायकस्य परा निर्वृत्तिरिति । उक्तं च कण्ठाभरणे—'अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः' ॥

मानिनीभङ्गाभिव्यक्तिमाह—

**सासइ विमुक्कमाणो बहलुब्भिण्णपुलउग्गमेण पिआणम् ।**
**पुरओहुत्तणिसण्णो गओणिअत्तहिअओ विलासिणिसत्थो ॥७७॥**

[शास्यते विमुक्तमानो बहलोद्भिन्नपुलकोद्गमेन प्रियाणाम् ।
पुरतोऽभिमुखनिषण्णो गतापनिवृत्तहृदयो विलासिनीसार्थः ॥]

प्रसादनया विमुक्तमानो विलासिनीसार्थः प्रियाणां कृते । प्रियेभ्य इत्यर्थः । बहलो घन उद्भिन्नः स्फुटो यः पुलकोद्गमस्तेन प्रथमं गतम्, अथ मानच्युताव-पनिवृत्तं नायकाभिमुखमागतं हृदयं यस्य तथाभूतः शास्यते कथ्यते । वधूजनः प्रसन्न इति पुलकेन प्रियैरनुमीयते इत्यर्थः । कीदृक् । पुरतो नायकस्याग्रे तदभि-मुखनिषण्णोऽपि प्राचीमुखस्य प्रियस्य पुरः प्राचीमुख एव स्थित इति मानसमये पराङ्मुखीभूत इत्यर्थं इति हृदयापरिज्ञानसामग्री । यद्वा पुरतो नायकस्याग्रेऽभि-मुखस्थितोऽपि । तथा च हृदयज्ञापकसंमुखावस्थितिसत्त्वेऽपि पुलकेनैव हृदयं ज्ञायत इत्यर्थः ॥

विश्रब्धनवोढारतमाह—

**ण पिअइ दिण्णं पि मुहं ण पणामेइ अहरं ण मोएइ बला ।**
**कह वि पडिवज्जइ रअं पढमसमागमपरम्मुहो जुवइजणो ॥७८॥**

[न पिबति दत्तमपि मुखं न प्रणामयत्यधरं न मोचयति बलात् ।
कथमपि प्रतिपद्यते रतं प्रथमसमागमपराङ्मुखो युवतिजनः ॥]

प्रथमसमागमेन पराङ्मुखो लज्जया विरुद्धवृत्तिर्युवतिजनः प्रियेण दत्तमपि तन्मुखे विन्यस्तमपि मुखं न पिबति । प्रियस्याधरपानं न करोतीत्यर्थः । प्रियेण चुम्ब-नाय याचितमप्यधरं न प्रणामयति नोन्नतं करोति । न प्रणाययति न ददातीति वा । न च बलान्मोचयति प्रियस्याधरौष्ठेनाकृष्टमपि बलान्न त्याजयतीत्यर्थः । एवं कथमप्यनिर्वचनीयप्रकारेण कष्टेन वा रतं प्रतिपद्यते । न तु व्यक्तं स्वीकरोतीत्यर्थः ।

प्रियेणालिङ्गितं शरीरं न मोचयतीति केचित्। 'पढमसमागमपरव्वसो' इति पाठे परवश इत्यर्थः ॥

सख्यां दूतीपरिहासमाह—

**अवलम्बिज्जउ धीरं ण अ सो एहिइ इह्णुग्गए वि पओसे।**
**इअ दूईहि तुलिज्जइ पढमाणिअपिअअमो विलासिणीसत्थो ७९**

[अवलम्ब्यतां धैर्यं न च स एष्यति इहोद्गतेऽपि प्रदोषे।
इति दूतीभिस्तुल्यते(?) प्रथमानीतप्रियतमो विलासिनीसार्थः ॥]

प्रथममानीतः प्रियतमो यस्य तादृशो विलासिनीसार्थो दूतीभिरित्यनेन प्रकारेण तुल्यते(?)। किं वदति किं वा चेष्टत इत्यादिहृदयनिरूपणाय पूर्वमानीतस्यापि प्रियस्य संगोपनादुपहस्यत इत्यर्थः। इति कथमित्यत आह—हे सखि, धैर्यमवलम्ब्यताम्। सः। तव प्रिय इत्यर्थात्। उद्गतेऽपि प्रदोषे इह न च एष्यति। तथा च त्वयैव तत्र गम्यताम्। तेन यत्स्यात्तत्स्यादित्यर्थः॥ अथ च सत्यमेवोक्तम्। त्वया धैर्यमवलम्ब्यताम्। स इह प्रदोषे नैष्यति, किंतु संप्रत्येवागत इति च्छलोक्तिः॥

मदिरायोगमाह—

**देइ विलासवईणं सुहे अ दुक्खे अ पाअडिअसब्भावा।**
**अणवेक्खिअलज्जाइं सहि व्व वीसत्थजम्पिआइं पसण्णा ॥ ८०॥**

[ददाति विलासवतीनां सुखे च दुःखे च प्रकटितसद्भावा।
अनपेक्षितलज्जानि सखीव विश्वस्तजल्पितानि प्रसन्ना ॥]

प्रसन्ना वारुणी विलासवतीनामिति चतुर्थ्यर्थे षष्ठी। विलासवतीभ्यः विश्वस्तजल्पितानि ददाति। मादकतया सदसद्विश्रम्भवचनानि वादयतीत्यर्थः। कीदृशानि। अनपेक्षिता लज्जा यत्र तानि। सखीव। यथा सखी लज्जानपेक्षाणि विश्रम्भजल्पितानि ददातीत्यर्थः। सहोपमा। कीदृशी। प्रसन्ना। सुखे च संभोगरूपे दुःखे च विप्रलम्भरूपे प्रकटितः प्रकाशितः सद्भावः श्रेष्ठो भावः कामजनितो यया सा। [तथा सा] उभयदशायामपि वारुण्या सात्त्विकभावोदयात्॥ सख्यपि सुखदुःखयोरपि प्रकाशितसौहार्दा प्रसन्ना चेति साम्यम्॥

उद्दीपनविभावानाह—

**चन्दुज्जोएण मओ मएण चन्दाअवो णु वड्ढिअपसरो ।**
**दोहिं वि तेहिं णु मअणो मअणेण णु दो वि ते णिआ अइभूमिम् ॥**

[चन्द्रोद्द्योतेन मदो मदेन चन्द्रातपो नु वर्धितप्रसरः ।
द्वाभ्यामपि ताभ्यां नु मदनो मदनेन नु द्वावपि तौ नीतावतिभूमिम् ॥]

नुशब्दो वितर्के। चन्द्रोद्द्योतेन मदः किं वर्धितप्रसरो वृत्तः। मदेन किं चन्द्रातपो वर्धितप्रसरः। द्वाभ्यामपि ताभ्यां चन्द्रोद्द्योतमदाभ्यां मदनः किं वर्धितप्रसरः। मदनेन च द्वावपि तौ चन्द्रोद्द्योतमदौ किमतिभूमिमुत्कर्षकाष्ठां नीतौ। यद्वा वर्धितप्रसरो मदश्चन्द्रोद्द्योतेन किमतिभूमिं नीतः। तथाभूतश्चन्द्रातपो मदेन किमतिभूमिं नीतः। द्वाभ्यामपि ताभ्यां तथाभूतो मदनः किमतिभूमिं नीतः। द्वावपि तथाभूतौ तौ मदनेन किमित्यादि योजनीयम्। परस्परोद्दीपकत्वादिति भावः। परिवृत्तिरलंकारः। 'संमोहानन्दसंभेदो मदो मद्यप्रयोगजः ॥'

आश्वासं विच्छिन्दन्नाह—

**चन्दअरेण पओसे णिज्जइ मअणेण महुमएण अ समअम् ।**
**दूरं दूरारूढो जुवईण पिएसु बहुरसो अणुराओ ॥ ८२ ॥**

**इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे**
**महाकव्वे दसमो आसासओ ॥**

[चन्द्रकरेण प्रदोषे नीयते मदनेन मधुमदेन च समम् ।
दूरं दूरारूढो युवतीनां प्रियेषु बहुरसोऽनुरागः ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये दशम आश्वासः ॥

युवतीनां प्रियेषु बहुरसोऽनुरागः प्रदोषे रात्रौ चन्द्रकरेण मदनेन मधुमदेन च सममेकदैव दूरमारूढः परां वृद्धिमुपागतः सन् दूरं नीयते उत्कर्षकाष्ठां प्राप्यत इत्यर्थः। यद्वा मदनेन मधुमदेन च समं सह चन्द्रकरेण नीयत इति संबन्धः ॥

कामिनीकेलिदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णाभूद्दशमी शिखा ॥

एकादश आश्वासः ।

अथ जानकीदर्शनोद्दीपितमदनस्य रावणस्य विरहावस्थामाह—

इअ पडिसारिअचन्दे दूरुक्खण्डिअणिसापअत्तविरामे ।
चित्तविअकामिणिअणे जामच्छेअविसमं गअम्मि पओसे ॥ १ ॥
दीहं रक्खसवइणा चिन्तारेअविअधीरदाविअहिअअम् ।
दसहि वि मुहेहि समअं आलोइअसुण्णदसदिसं णीससिअम् ॥२॥
(जुग्गअम्)

[इति प्रतिसारितचन्द्रे दूरोत्खण्डितनिशाप्रवृत्तविरामे ।
चेतितकामिनीजने यामच्छेदविषमं गते प्रदोषे ॥
दीर्घं राक्षसपतिना चिन्तारेचितधैर्यदर्शितहृदयम् ।
दशभिरपि मुखैः समकमालोकितशून्यदशदिग्निःश्वसितम् ॥]
(युग्मकम्)

इत्यनेन दूतीप्रेषणप्रसाधनसंभोगादिना प्रकारेण प्रदोषे गते सतीत्यग्रिमस्कन्धकेन समन्वयः । कीदृशे प्रदोषे । प्रतिसारितो दूरं प्रापितश्चन्द्रो येन । तत्र । यामिनीशेषत्वात् । एवं दूरमुत्खण्डितोनीकृता या निशा तया प्रवृत्तः प्रदत्तो वा विरामोऽवसानं संभोगव्यतिरेको वा यत्र । एवं चेतितः प्राप्तचैतन्यः कामिनीजनो यत्र पूर्णकामतया मदापगमात् । यामस्य च्छेदेनापगमेन विषमं यथा स्यादिति क्रियाविशेषणम् । यामच्छेदेन निशाह्रासात्संभोग(?)साम्राज्याभावेनोद्वेजकत्वादिति भावः । राक्षसपतिना दशभिरपि मुखैः सममेकदैव दीर्घं यथा स्यात्तथा निःश्वसितम् । सीतालाभोपायाभावादिति भावः । 'रामः संनिहितः, सीता न संमुखी वृत्ता' इत्यादिचिन्तया रेचितं शून्यीकृतं यद्धैर्यं तेन दर्शितं व्यक्तीकृतं हृदयमान्तरं यत्र तद्यथा स्यात् । अवलम्बितमपि धैर्यं तुच्छतया गोपनं न जनयतीत्यर्थः । एवं दशभिरपि मुखैरित्यर्थात् । आलोकिताः शून्या दश दिशो यत्र तद्यथा स्यात् । सीतां विना सर्वमेव शून्यं भासत इत्यर्थः । यद्वा सीतागतमनस्कतया शून्यं यदालोकितं तद्विषयीकृतदशदिगित्युभयमपि क्रियाविशेषणम् । 'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्' इति चिन्तारूपावस्थोक्ता ॥

रावणस्योन्मादावस्थामाह—

चिन्तेइ ससइ जूरइ बाहुं परिपुसइ धुणइ मुहसंघाअम् ।
हसइ परिओससुण्णं सीआणिप्पसरवम्महो दहवअणो ॥ ३ ॥

[चिन्तयति श्वसिति खिद्यते बाहुं परिप्रोञ्छति धुनोति मुखसंघातम् ।
हसति परितोषशून्यं सीतानिष्प्रसरमन्मथो दशवदनः ॥]

सीतायां निष्प्रसरो निरुद्धवृत्तिर्मन्मथो यस्य । सीताया वैमुख्यात् । तादृशो दशवदनश्चिन्तयति सीतालभोपायमर्थात् । तं चालभमानः श्वसिति रम्भाशापस्मृत्या बलात्कारोऽपि न संपद्यत इति मनःखेदात् । एवं रामावष्टम्भात्सीता मामपि रावणं न गणयतीति खिद्यते । अत एव बाहुं परिप्रोञ्छति परिमार्ष्टि । रामं चेदेभिर्हनिष्यामि तदा सीता मामासादयिष्यामीति भावः । यद्येभिः कैलासमिव सर्वपर्वतानालोड्य नष्टानकरिष्यम्, तदा सेतुरेव न स्यादिति वा । एवं मुखसंघातं धुनोति । यद्येतानि मुखानि प्रीतं पिनाकिनं मनुष्यादप्यवध्यत्वमयाचिष्यन्त तदा रामावध्योऽहमभविष्यमिति राम एव मया हते सीता सुलभा भवेदित्यसंतोषादिति भावः । तथा परितोषशून्यं हसति धिक् त्रिदशान्, अमी यत्स्वयमसमर्था मनुष्यद्वारा मामभिभवितुमिच्छन्तीति हेलावशादिति भावः । यद्वा दूरस्थितेऽपि रामे या न वशीकृता सा कथमिदानीं सविधस्थिते वशमेष्यतीति नैराश्याच्छ्वसिति । अत एव सीताहरणप्रयासो मम निष्फलो भविष्णुरिति खिद्यते । अथ धन्योऽयं बाहुः, येनाहरणसमये सीतां वक्षःस्थलमारोप्य किंचिदपि जन्मसाफल्यमर्जितमिति सत्कुर्वन्बाहुं परिप्रोञ्छति परामृशतीत्यर्थः । अत एवालब्धसीतामुखचुम्बनत्वादवज्ञाविषयत्वेन मुखसंघातं धुनोति । तथा जटाचीरपरिग्रहेऽपि रामे दृढानुरागेयमुत्तमनायकं मामवजानातीत्यहो सीताया मौग्ध्यमिति परितोषशून्यं हसति । 'जूरइ' इत्यत्र 'कुप्पइ' इति पाठे रामे दत्तभरेयमिति कुप्यतीत्यर्थः । तत्र बाहुं परिप्रोञ्छति रामाद्यभिभावकत्वेन बाहोरेव सहायत्वात् । अत एव मुखसंघातं धुनोति । एकमुखोऽपि मादृक् पराभवितुमयोग्यः, किं पुनर्दशमुख इति भावः । एवं परितोषशून्यं हसति अहो रामस्य मौग्ध्यं यत्कपिभिर्मत्पराभवमिच्छतीति भावः । शिरःकम्पहासौ क्रोधानुभावौ । क्रियादीपकम् । 'उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि' । तथा—'अस्थानहासरुदितगीतप्रलपनादिकृत्' ॥

स्मृतिरूपावस्थामाह—

**बहु मण्णइ वच्छअडं हीरन्तुवत्तजणअतणआलिद्धम्।**
**णिन्दइ अ वअणणिवहं अप्पत्तपिआमुहामअरसासाअम्॥ ४॥**

[बहु मन्यते वक्षस्तटं ह्रियमाणोद्वृत्तजनकतनयाश्लिष्टम्।
निन्दति च वदननिवहमप्राप्तप्रियामुखामृतरसास्वादम्॥]

रावणो वक्षस्तटं बहु मन्यतेऽभिनन्दति। कुतस्तदाह—कीदृक्। ह्रियमाणया सत्या उद्वृत्तया संमुखीकरणायोद्वर्तितया। अन्तर्भावितणिच्। जनकतनयया आश्लिष्टम्। यतः। वदननिवहं निन्दति च। कुतस्तदाह—अप्राप्तः प्रिया सीता तन्मुखामृतरसस्यास्वादो येन तम्। बहुष्वपि सत्सु मुखेष्वेकस्यापि कृतकार्यत्वं नाभूदिति हर्षविषादरूपभावसंधिः॥

चिन्तासंगममाह—

**पडिरुद्धन्तस्स वि से भग्गणिअत्तपरिसंठविअभिज्जन्ते।**
**विसमुद्धाइअकम्पे हिअए उल्ललइ अलहुअम्मि वि धीरम्॥ ५॥**

[प्रतिरुन्धतोऽप्यस्य भग्ननिवृत्तपरिसंस्थापितभिद्यमाने।
विषमोद्धावितकम्पे हृदये उच्छलत्यलघुन्यपि धैर्यम्॥]

अस्य रावणस्यालघुन्यपि धैर्यशालित्वाद्गुरुण्यपि हृदये धैर्यमुल्ललति चञ्चलीभवति। ततो बहिर्भवतीति यावत्। कीदृशस्य। प्रतिरुन्धतोऽपि। चलितं धैर्यमित्यर्थात्। निवर्तयतोऽपि। धैर्यं रक्षतोऽपि न तिष्ठतीत्यर्थः। किंभूते। प्रथमं सर्वतोऽपि भग्ने सीतां प्रत्यनुरूपबुद्ध्या गते अनन्तरं विवेकान्नलकूबरशापस्मरणाद्वा निवृत्ते सति परिसंस्थापिते स्थिरीकृते। पुनः सीतासौन्दर्यातिशयोपलम्भाद्भिद्यमाने स्थैर्यं त्यजतीत्यर्थः। यद्वा मनुष्य एवायं महाबल इति चिन्तया भग्ने ततोऽसौ विष्णुरूपेणापि मां प्रत्यशक्तः कथं मनुष्यरूपेण शक्तो भवेदित्यवष्टम्भान्निवृत्ते साध्यवसाये ततो मया रामे सर्वथा विक्रम्य निहते सीता वशीकर्तव्येति परिसंस्थापिते स्थिरीकृते पश्चाद्वालिखरादिविनाशजलधिलङ्घनादिस्मृत्या रामस्यातिबलत्वज्ञानाद्भिद्यमानेऽध्यवसायं त्यजतीत्यर्थः। अत एव विषमं यथा स्यात्तथोद्धावित उद्गतः कम्पो यत्र। चिन्तावेगादिति धैर्यरूपभावशान्तिः॥

विषादरूपभावोदयमाह—

तो से विसमुव्वत्तिअविरलपसारिअकरङ्गुलिदरत्थइअम् ।
खलिअं अंसम्मि मुहं विअम्भिआआसगलिअबाहुप्पीडम् ॥६॥

[ततोऽस्य विषमोद्वर्तितविरलप्रसारितकराङ्गुलिदरस्थगितम् ।
स्खलितमंसे मुखं विजृम्भितायासगलितबाष्पोत्पीडम् ॥]

ततो धैर्यत्यागानन्तरमस्यांसे मुखं स्खलितं संबद्धम् । किंभूतम् । चिन्तासौष्ठवेन विषमं विसदृशं यथा स्यादेवमुद्वर्तितोत्तानीकृता । अथ च विरलं प्रसारिता याः कराङ्गुल्यस्ताभिरीषत्स्थगितमवष्टब्धम् । चिन्तावशात्करावष्टम्भेन स्कन्धे मुखं स्थापितमित्यर्थः । एवं विजृम्भितेन वर्धितेनायासेनोद्वेगेन गलितो बाष्पोत्पीडो यस्मादिति रोदनमुक्तम् । 'उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः । निश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥'

विषयनिवृत्तिमाह—

विसमुग्गाहिअमहुरं दूमिअदन्तवणाहरपरिक्खलिअम् ।
आअण्णेइ पिआणं वलन्तहिअआवहीरिअं जअसद्दम् ॥ ७ ॥

[विषमोद्ग्राहितमधुरं दूनदन्तव्रणाधरपरिस्खलितम् ।
आकर्णयति प्रियाणां वलमानहृदयावधीरितं जयशब्दम् ॥]

स प्रियाणां मन्दोदरीप्रभृतीनां जयशब्दं वलमानेन सीतां प्रति भजता हृदयेनावधीरितमवज्ञाविषयीकृतमाकर्णयति । सीतागतचित्ततया सम्यक्श्रवणाभावाद्वैरस्यापादकत्वाच्चानादर इत्याशयः । किंभूतम् । पूर्वनिपातानियमात् । दन्तव्रणेन दूनादधरात्परिस्खलितम् । ओष्ठ्यवर्णस्यासम्यगुच्चारणादपरिस्फुटमित्यर्थः । अत एव विषमं नानारूपतयोद्ग्राहितमुच्चारितं तत एव मधुरमास्वादनीयम् । तथा च च तथाविधजयशब्दस्याप्यवहेलया चिन्तासङ्गोऽप्युक्तः ॥

विषयान्तरेऽरतिमाह—

आमुअइ महइ सअणं मग्गइ रअणिविरमं जुउच्छइ दिअसम् ।
णीइ णिअत्तेइ पुणो रइलम्भोवाअमग्गणाउरहिअओ ॥ ८ ॥

[आमुञ्चति महति शयनं मार्गति रजनीविरामं जुगुप्सते दिवसम् ।
निरैति निवर्तते पुना रतिलम्भोपायमार्गणातुरहृदयः ॥]

रतिः सीतासंबन्धिसुरतं तत्प्राप्त्युपायस्य मार्गणमन्वेषणं तेन। यद्वा रतिः कामपत्नी तत्प्राप्त्युपायो यस्य स कामस्तस्य मार्गणैर्बाणैरातुरहृदयो व्याकुलचित्तो रावणः शयनममुञ्चति अधृतिवशात्त्यजति पुनरुत्थानखेदवशान्महति वाञ्छति। शेते इत्यर्थः। एवं रजन्या मादकत्वात्तद्विरामं मार्गति आकाङ्क्षति। जाते च रजनीविरामे दिवसं जुगुप्सते निन्दति। तदा आकारसंगोपनाभावात्। अतएव निरैति आकारसंगोपनाय लोकानामग्रतो बहिर्निर्गच्छति, ततः कुत्र गच्छामि बलात्कारेणैव सीतामानयामीति। निवर्तते पूर्वस्थानमेवायाति। यद्वा संकल्पोपनीतसीतालिङ्गनाय शयनं मुञ्चतीति हर्षः। पश्चाच्छ्रमशान्तौ स्वप्नेऽपि सीतां पश्यामीति शयनं महति शेते इति विबोधः। अथ निद्रानुत्पत्त्या मादकत्वेन रजन्या विराममेवेच्छतीति दैन्यम्। पुनस्तथासति लोकानामग्रतो बलात्कारोऽपि न स्यादिति दिवसं जुगुप्सते निन्दतीति व्रीडा। तदिदानीमेव निशि बलात्तामानयामीति निरैति निर्गच्छतीत्यर्थः। पुनर्निवर्तते रम्भाशापस्मरणादिति धृतिः। तथा च नानाभावशबलत्वमुक्तम्। क्रियादीपकम्॥

गोत्रस्खलनमाह—

**पच्छाअन्तस्स वि से बहुसो हिअअट्ठिओ पिआण वि पुरओ।**
**समअं मुहणिवहेम्मि वि सीआमइओ पअट्टइ समुल्लावो॥ ९॥**

[प्रच्छादयतोऽप्यस्य बहुशो हृदयस्थितः प्रियाणामपि पुरतः।
समकं मुखनिवहेऽपि सीतामयः प्रवर्तते समुल्लापः॥]

प्रच्छादयतोऽप्यर्थादालापमेव संगोपयतोऽप्यस्य रावणस्य हृदयस्थितः सीतामयः समुल्लापः प्रियाणां मन्दोदरीप्रभृतीनामप्यग्रे मुखनिवहेऽपि सममेकदैव बहुशः प्रवर्तते। सीता सीतेति बहुशो जल्पतीत्यर्थः। तेनावहित्था सूचिता। 'भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था। व्यापारान्तरशक्त्यन्यथा(भा)वभाषणविलोकनादिकरी॥'

रागाधिक्यमाह—

**तं पुलइअम्मि पेच्छइ उल्लावन्तो अ तीअ गेह्णइ गोत्तम्।**
**ठाइ अ तस्स समअणे अण्णम्मि वि चिन्तिअम्मि स च्चिअ हिअए १०**

[तां प्रलोकिते पश्यत्युल्लपंश्च तस्या गृह्णाति गोत्रम्।
तिष्ठति च तस्य समदनेऽन्यस्मिन्नपि चिन्तिते सैव हृदये॥]

चो हेतौ । यतस्तस्य रावणस्य समदने सकामे हृदयेऽन्यस्मिन्नप्यभीष्टवस्तुनि चिन्तिते सति सैव तिष्ठति । संकल्पवशात्सीतैव चिन्ताविषयीभवतीत्यर्थः । अतः अलोकिते दर्शने दर्शनकर्मणि वा तामेव पश्यति । रावण इत्यर्थात् । उल्लपंश्च तस्या एव गोत्रं नाम गृह्णाति जल्पतीति मनसि वचसि चक्षुषि सर्वत्रैव सैव स्फुरतीति विषयनिवृत्तिचिन्तासङ्गसंकल्पादीनां सांकर्यम् ॥

अथ व्याध्यवस्थामाह—

**साहइ से संतावं वासहरद्धन्तविसमपुञ्जिअकुसुमो ।**
**आअअणीसासहओ किलिन्तसग्गतरुपल्लवो उवआरो ॥ ११ ॥**

[शास्त्यस्य संतापं वासगृहार्धान्तविषमपुञ्जितकुसुमः ।
आयतनिःश्वासहतः क्लाम्यत्स्वर्गतरुपल्लव उपचारः ॥]

अस्य संतापमुपचारो विरहोपशान्तिहेतुत्वेनोपादीयमानः पदार्थसंचयः शास्ति कथयति । किंभूतः । वासगृहस्यावस्थितिगृहस्यार्धान्ते एकदेशे विषमं पुञ्जितानि कुसुमानि यत्र सः । एवं यत आयतनिःश्वासेन हतः अतः क्लाम्यन्तस्तत्संबन्धान्म्लायन्तः स्वर्गतरूणां पल्लवा यत्र । तथा च पुष्पाणां वर्तुलीकरणेन यानि कथंचिदपि न म्लायन्ति तेषामपि पारिजातपल्लवानां वैवर्ण्येन तापोत्कर्षोऽनुमीयत इत्यर्थः । 'व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः' ॥

देहविक्षेपादिना तदेवाह—

**देहपरिणाहविअडे वलइ भरोद्वत्तदलिअपासद्धन्ते ।**
**दूरोणामिअमज्झे विसमं भूमिसअणे पहोलिरहत्थो ॥ १२ ॥**

[देहपरिणाहविकटे वलति भरोद्वृत्तदलितपार्श्वार्धान्ते ।
दूरावनामितमध्ये विषमं भूमिशयने प्रघूर्णनशीलहस्तः ॥]

भूमौ यच्छयनं पुष्पपल्लवादिमयं तल्पं तत्र प्रघूर्णनशीला इतस्ततः क्षिप्यमाणा हस्ता यस्य तथाभूतो रावणो विषमं संतापवशाद्विपर्यस्तं यथा स्यात्तथा वलति । पार्श्वपरिवर्तनमाचरतीत्यर्थः । किंभूते शयने । देहो रावणशरीरं तस्य परिणाहो दैर्घ्यं तद्वद्विकटे तदनुसारित्वात् । एवं तस्य देहभरादेवोद्वृत्तौ विपर्यस्तौ अथ च दलितौ खण्डितौ पार्श्वयोरर्धान्तावेकदेशौ यत्र । एकपार्श्वे पूर्वं स्थित्वापरपार्श्वे च तदानीं गत्वा पार्श्वद्वयस्यापि विपर्यास इत्यर्थः । एवं दूरमवनामितमधः कृतं मध्यं

स्य । उदरस्याल्पत्वादत्यन्तसंबन्धाभावादवनमनमात्रमित्यर्थः । तथा च भूमिश्लेषेन 'विरक्तिः सुखहेतूनाम्' इत्यरतिरप्युक्ता ॥

दाक्षिण्यमाह—

दक्खिणणमेत्तदिण्णो जणअसुआहुत्तहिअअदिण्णुक्कण्ठो ।
उझलइ खणविलक्खो णिअअन्तेउरमुहेसु से मुहणिवहो ॥ १३ ॥

[दाक्षिण्यमात्रदत्तो जनकसुताभिमुखहृदयदत्तोत्कण्ठः ।
उल्ललति क्षणविलक्षो निजकान्तःपुरमुखेष्वस्य मुखनिवहः ॥]

अस्य मुखनिवहो निजकान्तःपुराणां मन्दोदरीप्रभृतीनां मुखेषूल्ललति चञ्चलीभवति । चुम्बनान्निवर्तत इत्यर्थः । क्षणं विलक्षो लज्जयाप्रसन्नः सन् । किंभूतः । दक्षिणो नायकस्तस्य भावो दाक्षिण्यं तन्मात्रेणानुरोधात्, न तु स्नेहात् । दत्तोऽर्पितः । एवं जनकसुता सीता तदभिमुखेन हृदयेन दत्तोत्कण्ठा यस्मै । सीतामेव द्रष्टुमित्यर्थात् । तथा च दाक्षिण्येन राक्षसीमुखे लग्नोऽपि सीतामुखदर्शनोत्कण्ठया कृष्यमाणः सम्यग्न संबध्यत इत्यर्थः । 'यो गौरवं भयं प्रेम सद्भावं पूर्वयोषिति । न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा ॥' इति कण्ठाभरणम् ॥

संतापोत्कर्षमाह—

जा अण्णेण हसन्तो गमेइ उमच्छरं विलासिणिसत्थम् ।
ता दूसहसंतावं अण्णं से सोअदुम्मणं होइ मुहम् ॥ १४ ॥

[यावदन्येन हसन्गमयत्युन्मात्सर्यं विलासिनीसार्थम् ।
तावद्दुःसहसंतापमन्यदस्य शोकदुर्मनस्कं भवति मुखम् ॥]

अन्येन मुखेन हसन्यावद्गमयति प्रतारयति रावणः, तावदेवास्य दुःसहः संतापो येन तादृशमन्यन्मुखं शोकेन दुर्मनस्कं भवति । सीतालाभोपायाभावादिति भावः । तथा च तासामीर्ष्याशान्त्यर्थमेकेन सकपटं हसतोऽप्यन्यन्मुखमालिन्येन संतापहेतुकेन संगोपनं तिष्ठतीत्यवहित्थाविषादरूपभावसंधिः ॥

सीतामग्नचित्ततामाह—

णिउणहसिआणुविद्धं सीआलम्भावहारणविसंवाअम् ।
सुणइ ण लक्खेइ फुडं अण्णविइण्णहिअओ पिआण दहमुहो १५

[निपुणहसितानुविद्धं सीतालम्भावधारणविसंवादम् ।
शृणोति न लक्षयति स्फुटमन्यवितीर्णहृदयः प्रियाणां दशमुखः ॥]

दशमुखः प्रियाणां निपुणं चातुर्येण यद्धसितं तेनानुविद्धं संबद्धं सीताया लम्भस्य प्राप्तेरवधारणमनेनोपायेन सीतालाभ इति निश्चयस्तस्य विसंवादमन्यथाकरणं साध्वी सीता कथमनेन लब्धव्येत्यादिवचनरूपं शृणोति किं तु स्फुटं न लक्षयति । तत्र हेतुमाह—अन्यत्र सीतायां वितीर्णं हृदयं येन । तथा च सोपहासमेताभिरुक्तं वचनं श्रुत्वापि सीतामग्नचित्ततया तत्तदर्थवत्तया न प्रतिसंधत्त इत्यर्थः । यद्वा—प्रियाणामुक्तरूपं विसंवादवचनमन्यचित्ततया शृणोति न, किं तु हसितानुबन्धास्स्फुटं लक्षयति । सीता मया न लब्धव्येति मामेता उपद्रावयन्तीति हसितेनानुमिनोतीत्यर्थः ॥

सीतापरतामाह—

ईसामच्छरगरुए साहिक्खेवपरिवड्ढिओवालम्भे ।
कह कह वि गमेइ खणं विलक्खहसिएहिं कामिणिसमुल्लावे १६

[ईर्ष्यामत्सरगुरुकान्साधिक्षेपपरिवर्धितोपालम्भान् ।
कथं कथमपि गमयति क्षणं विलक्षहसितैः कामिनीसमुल्लापान् ॥]

निजानां कामिनीनां समुल्लापान्कथं कथमपि कष्टसृष्ट्यानुरूपव्याजाभावाद्वैलक्ष्यमप्रतिभा तया हसितै रावणो गमयत्यतिवाहयति । वञ्चयतीति यावत् । कीदृशान् । ईर्ष्यया सीतागुणासहिष्णुतया यो मत्सरोऽमर्षस्तेन गुरुकानप्रतिक्षेप्यान् । एवम्—अधिक्षेपस्तर्जनासंवलिता निन्दा तत्सहितः परिवर्धित उपालम्भोऽपकारोक्तिर्यत्र तान् । तथा च यदा ताभिरुपालम्भादि क्रियते तदा सापराधत्वादाहार्यहास्येनैताः प्रसादयतीत्यर्थः । 'ईर्ष्यामाहुः समानेषु दानमानापकर्षणात्' इति कण्ठाभरणम् ॥

पुनश्चिन्तासंगममाह—

तस्स पडिरुद्धसेसं वाहोत्थअकण्ठविसमपअणिक्खेवम् ।
सङ्किज्जइ विमणाहिं फुडं ण णज्जइ पिआहि गोत्तक्खलिअम् १७

[तस्य प्रतिरुद्धशेषं बाष्पावस्तृतकण्ठविषमपदनिक्षेपम् ।
शङ्क्यते विमनोभिः स्फुटं न ज्ञायते प्रियाभिर्गोत्रस्खलितम् ॥]

तस्य गोत्रस्खलितं नामविपर्यासः सीतानामरूपस्तत एव विमनस्काभिः प्रियाभिः

शङ्क्यते परम्, किंतु स्फुटं व्यक्तं न ज्ञायते । कीदृशम् । प्रतिरुद्धं स्वरभङ्गरूपभावोदयाच्चैतन्ये सति एतासां त्रासाद्यनुचरितं शेषमेकवद्वर्णरूपं यत्र । एवम्— बाष्पावस्तृतेन कण्ठेन विषमः स्फुटास्फुटः पदनिक्षेपः पदोच्चारणं यत्र । अत एव शेषानुच्चारणेन गद्गदकण्ठतया च सीतां प्रति किमप्ययमुच्चरतीति तर्कयन्तीत्यर्थः ॥

पुनरवहित्थामाह—

कह वि ठवेइ दहमुहो किं ति अणालविअमोहदिण्णालावम् ।
दइआहि गलिअबाहं रोसणिरुत्तरपुलोइअं अप्पाणम् ॥ १८ ॥

[कथमपि स्थापयति दशमुखः किमित्यनालपितमोघदत्तोलापम् ।
दयिताभिर्गलितबाष्पं रोषनिरुत्तरप्रलोकितमात्मानम् ॥]

दशमुख आत्मानं स्वं कथमपि स्थापयति । किंभूतम् । किमिति कृत्वानालपितेऽवादिते । अप्रश्न इति यावत् । अत एव मोघः प्रश्नं विना कृतत्वान्निष्फलो मोहेनाज्ञानेन वा दत्त उल्लापो येन तम् । अतएव गलितं बाष्पं गलिताश्रु यथा स्यादेवं दयिताभी रोषेण निरुत्तरमवचनं यथा स्यादेवं प्रलोकितं दृष्टं संकल्पेनोपस्थितायाः सीतायाः प्रश्नभ्रमात् किमित्युक्ते रुष्टाभिर्मन्दोदरीप्रभृतिभिः सक्रोधकटाक्षनिरीक्षितमात्मानं ज्ञाने सति स्त्रीकृतामवहेलां सोढ्वा कृच्छ्रात्किंकर्तव्यतामूढः संवरणं कृत्वा प्रकृतिं प्रापयतीत्यर्थः ॥

भ्रमोत्कर्षमाह—

अणहिअओ वि पिआणं उम्मच्छरपसारिअग्घविअहुंकारम् ।
अहिणन्दइ दहवअणो समत्तणिवेल्लिआहरोट्ठपुलइअम् ॥ १९ ॥

[अन्यहृदयोऽपि प्रियाणामुन्मत्सरप्रसारितार्घितहुंकारम् ।
अभिनन्दति दशवदनः समस्तनिर्वेल्लिताधरोष्ठप्रलोकितम् ॥]

सीतागतचित्तत्वादन्यहृदयो दशवदनः प्रियाणां समस्तं संपूर्णं निर्वेल्लितं प्रस्फुरितमधरोष्ठं यत्र तादृशं प्रलोकितं दर्शनमभिनन्दति श्लाघते । कामविलासप्रसूतत्वभ्रमादिति भावः । किंभूतम् । उद्गतेन मत्सरेण प्रसारितः समुत्थापितः, अथ च—अन्यचित्तत्वाद्रावणेन विलासबुद्ध्यार्घितोर्चितः सत्कृतो हुंकारो यत्र तम् ॥ अयमर्थः— अनभिप्रेतकर्तारमोष्ठावीषत्पुरः प्रेर्य सभ्रूभङ्गि सहुंकारमालोक्योपहसन्ति लोका इति प्रियाभिरपि सीतायामस्यासक्तिमसहमानाभिस्तथाकृतमुपहासत्वेन न जानाति, प्रत्युत कामविलासप्रसूतत्वभ्रमाद्बहु मन्यते इति शून्यहृदयत्वाच्चित्तासङ्ग एवोक्तः ॥

अथ संकल्पमाह—

दुच्चिन्तिआवसेसं पिआहि उन्मच्छसंभमकआलोअम् ।
हसइ खणं अप्पाणं अणहिअअविसज्जिआसणणिअत्तन्तम् ॥२०॥

[दुश्चिन्तितापदेशं प्रियाभिरुन्मत्सरसंभ्रमकृतालोकम् ।
हसति क्षणमात्मानमन्यहृदयविसृष्टासननिवर्तमानम् ॥]

स क्षणमात्मानं हसति । कथंभूतम् । अन्यहृदयेन सीतारूपान्यगतचित्तत्वेन विसृष्टं संकल्पोपस्थितसीताभ्युत्थानाय त्यक्तं यदासनं तस्मान्निवर्तमानं बहिर्भूय भूमावेवोपविशन्तम् । 'निसम्मन्तम्' इति पाठे—विवेके सति पुनर्निषीदन्तम् । एवम्—प्रियाणां तथाबुद्धजनकत्वाद्दुश्चिन्तितोऽपदेशो विवेकोत्तरं किंचिन्मिथ्यादूषणमुद्भाव्य नैतदासनं मह्यं रोचत इत्यादिर्व्याजो येन तम् । अत एव प्रियाभिरुन्मत्सरेणोद्धतेर्ष्येण संभ्रमेणोद्वेगेन कृत आलोको दर्शनं यस्य । तथा च—स्वस्य वृथासनत्यागेन प्रियाणामीर्ष्यादृष्ट्या चैवंविधोऽहमसमीक्ष्यकारीत्यात्मानं निन्दतीत्यर्थः । यद्वा—कीटसत्त्वभ्रमादेतदासनं वृथैवोज्झितवानस्मीत्यहो मम मौग्ध्यमिति लब्धविवेकस्तासां प्रतारणाय स्वयमेव स्वमात्मानमुपहसतीत्यर्थः । अत एव दुश्चिन्तित एवंरूपो व्याजो येन तासां तथाप्रतीत्यजननात् । 'दुच्चिन्तिओवएसम्' इति पाठे—रम्भानलकूबरयोः शापतः स्वनाशहेतुत्वेन दुश्चिन्तितो बलादेव सीतामानयामीत्येवंरूप उपदेशः सीताप्राप्त्युपायो येनेत्यर्थः ॥

विप्रलम्भप्रकर्षमाह—

तह स गओ अइभूमिं जह ण विणिज्जन्तणं पिआहि ण णाओ ।
ण अ णाऊण ण हसिओ ण अ हसिऊण अणुसोइउं ण अ तिण्णो २१

[तथा स गतोऽतिभूमिं यथा न विनियन्त्रणं प्रियाभिर्न ज्ञातः ।
न च ज्ञात्वा न हसितो न च हसित्वानुशोचितुं न च तीर्णः ॥]

स रावणस्तथा तेन प्रकारेणातिभूमिं सीतां प्रत्यनुरागस्य परमकाष्ठां विरहवेदनातिमर्यादां वा गतो यथा प्रियाभिर्मन्दोदरीप्रभृतिभिर्विनियन्त्रणं सप्रकाशमव्याजं वा सीतानुरागमूर्च्छितोऽयमिति न न ज्ञातः, अपि तु ज्ञात एव । ज्ञात्वा च अहो मूढोऽयमननुरक्तायामप्येवमनुरज्यतीत्यादिरूपेण न न हसितः, अपि तु हसित एव । हसित्वा च हा कष्टम्, ईदृशी विरहवेदनामुष्य, कथं वा जीवेत्, अस्माभिरपि तथा क्रियतां येन सीता भजत्येनमित्यादिप्रकारेणानुशोचितुमनुकम्पितुं न च

न तीर्णः शकितः, अपि तु शकित एवेति। प्रकारान्तराचिकित्स्यत्वेन कादाचित्की मूर्च्छा सूचिता॥

अथ रावणस्य चिन्तामेवाह—

**चिन्तेउं अ पउत्तो अवहोवासपसरन्तणीसासहअम्।**
**दोसु णिमेऊण समं एक्कं आसण्णमुहकवोलेसु करम्॥ २२॥**

[चिन्तयितुं च प्रवृत्त उभयावकाशप्रसरन्निःश्वासहतम्।
द्वयोर्नियोज्य सममेकमासन्नमुखकपोलयोः करम्॥]

रावणश्चिन्तयितुं प्रवृत्तश्च। सीताप्राप्त्युपायमित्यर्थात्। किं कृत्वा। आसन्ने मुखकपोलस्य नानात्वेन तत्करस्य निकटवर्तिन्यनायासलभ्ये मुखे कपोले च द्वयोरेकं करं समं तुल्यवन्निक्षिप्य। करं कीदृशम्। उभयावकाशे उभयपार्श्वे प्रसरद्भिर्निःश्वासैर्हतं ताडितम्। मुखस्य नानात्वेनोभयदिशि वर्तमानत्वादिति निःश्वासाधिक्येन चिन्ताधिक्यम्। नच करस्याधेयत्वं लब्धम्, न त्वाधारत्वमिति वाच्यम्। संयोगमात्रस्य तदवस्थाया एव वा विवक्षितत्वादिति भावः। 'अभिलाषः स्पृहा चिन्ता प्राप्त्युपायानुचिन्तनम्' इति साहित्यदर्पणः॥

अथ सप्तभिश्चिन्ताप्रकारमाह—

**अङ्कागअं सहिज्जइ पओसरइविग्घसंकिएण कइबलम्।**
**तं कस्स वि सोअत्थं वलइ अलद्धसुरअं महं चिअ हिअअम्॥२३॥**

[अङ्कागतं सह्यते प्रदोषरतिविघ्नशङ्कितेन कपिबलम्।
तत्कस्यापि शोकार्थं वलत्यलब्धसुरतं ममैव हृदयम्॥]

प्रदोषे रजन्यां या रतिः सुरतं तद्विघ्नशङ्कितेन तद्विघ्नशङ्कावता मयाङ्के क्रोडे आगतं कपिबलं सह्यते क्षम्यते। तद्धेतोरलब्धसुरतं सन्ममैव हृदयं यद्वलति सुरताभावाकुलतया यच्चञ्चलीभवति तत्कस्यापि रामस्य वा सीताया वा ममैव वा शोकार्थम्। यदीदानीमीर्ष्यया युध्यामि तदा प्रदोषसुरतं विघ्नितं स्यादिति शङ्कया प्रदोषयुद्धं परिहृतम्। अथापि चेत्तन्न संपत्स्यते तदैतत्कालुष्येण क्रुद्धो रामं हनिष्यामि तदा सीतायाः शोकः। तदभावे सीतामेव व्यापादयिष्यामि तदा रामस्य शोकः स्यात्। अथ स्त्रीकृपया तदपि चेन्न करिष्यामि तदाहमेव विरहदुःखमितोऽपि लप्स्ये इति ममैव शोकः स्यादिति। तथोपायः क्रियताम्। येनैषा वशवर्तिनी भवेदिति भावः॥ यद्वा—प्रदोषसुरतार्थिना मया कपिबलं यत्सह्यते तत्कस्य

विशोकार्थं शोकाभावाय, अपि तु न कस्यापि । यतोऽलब्धसुरतं ममैव हृदयं वलति । तथा च यस्य सुरतार्थं क्षमा क्रियते तदलाभेन श्वः प्रातस्तथा रौद्रं कर्म करिष्यामि यथा रामादीनां सर्वेषामुपतापः स्यादिति भावः ॥ यद्वा—यत्सह्यते तत्कस्य विशोकार्थम्, अपि तु न कस्यापि राक्षसस्य । यत्र सुरतमात्रालाभेन ममैव धीरस्य हृदयं व्याकुलीभवति तत्र शत्रुकृतमुपरोधं दृष्ट्वा केषां राक्षसानां हृदयं व्याकुलं न स्यादितीदानीमेव युद्धं युज्यत इति भावः ॥

अतएव युद्धकोटिकं विकल्पमाह—

**किं भुअविवरपहोलिरसंखोहप्फिडिअगहिअकड्ढिअणिहअम् ।**
**अत्थाक्कासण्णठिअं णिप्फलचटुलमुहलं मलेमि कइबलम् ॥ २४ ॥**

[किं भुजविवरप्रघूर्णनसंक्षोभस्फेटितगृहीतकृष्टनिहतम् ।
अकस्मादासन्नस्थितं निष्फलचटुलमुखरं मृद्नामि कपिबलम् ॥]

अकस्मादकाण्डे आसन्नस्थितं निकटवर्ति कपिबलं किं मृद्नामि । करभुजादिना मर्दयामीत्यर्थः । कीदृशम् । भुजानां विवरेष्वन्तरालेषु प्रथमं प्रघूर्णमानं पश्चात्सं-क्षोभेण भयेन स्फेटितं भ्रष्टम् । पलायितमिति यावत् । ततो गृहीतं पुनर्धृतं ततः कृष्टमाकृष्टं पश्चान्निहतं ताडितम् । अत एव निष्फलं वृथा चटुलं चञ्चलं मुखरं शब्दायमानम् । तथा च तथा सति रामे भग्नमनोरथा सीता मामेवाश्रयेदिति भावः ॥

बलात्कारपक्षमाह—

**ओ ससिकराहउम्मिल्लोअणन्दोलमाणवाहतरङ्गम् ।**
**आसाएमि कअग्गहणिरुत्तरुत्ताणिआणणं जणअसुअम् ॥ २५ ॥**

[उत शशिकराहतोन्मीलल्लोचनान्दोलमानबाष्पतरङ्गाम् ।
आस्वादयामि कचग्रहनिरुत्तरोत्तानिताननां जनकसुताम् ॥]

उत यदि प्रथमः पक्षो न स्यात्, तदा कचग्रहेण केशाकर्षणेन निरुत्तरं निःशब्दं सत् उत्तानितमूर्ध्वमुखीकृतमाननं यस्यास्तां जनकसुतामास्वादयामि सकचग्रहं चुम्बनाद्युपभोगविषयीकरोमि नक्तमेवेत्यर्थात् । बलादिति भावः । आसादयामि वा । किंभूताम् । शशिकरैराहतयोः स्पृष्टयोः । अत एव मदतिक्रमजन्यमूर्च्छाविरामादुन्मीलतोर्लोचनयोरान्दोलमाना घूर्णमाना बाष्पतरङ्गा यस्यास्ताम् । अनभिमत्या रुदतीमित्यर्थः ॥

रम्भाशापादयमपि पक्षो नेत्याशयमाशङ्काह—

**कह विरहप्पडिऊला होहिइ समुहहिअआ पइम्मि उवगए ।**
**णेच्छइ इअरा वि ससिं किं पुण दिट्ठम्मि दिणअरम्मि कमलिणी २६**

[कथं विरहप्रतिकूला भविष्यति संमुखहृदया पत्यावुपगते ।
नेच्छतीतरथापि शशिनं किं पुनर्दृष्टे दिनकरे कमलिनी ॥]

पत्युर्विरहे प्रतिकूला मां प्रत्यसंमुखी सीता संप्रति पत्यावुपगते सति कथं संमुखहृदया भविष्यति । अर्थान्तरन्यासमाह—कमलिनी इतरथाप्यनुदितेऽपि दिनकरे शशिनं नेच्छति, किं पुनर्दृष्टे सति । तथा च तदानीमिच्छाशङ्कापि नास्तीत्यर्थः । अत्र कमलिनीप्राया सीता, शशिप्रायो रावणः, सूर्यप्रायो रामः ॥

अभ्यर्थनादिप्रकारोऽपि नास्तीत्याह—

**अब्भत्थणं ण गेह्णइ तिरई तिहुअणसिरीअ वि ण लोहेउम् ।**
**ण गणेइ सरीरवहं कह मण्णे होज्ज जाणई साणुणआ ॥ २७ ॥**

[अभ्यर्थनां न गृह्णाति शक्यते त्रिभुवनश्रियापि न लोभयितुम् ।
न गणयति शरीरवधं कथं मन्ये भवेज्जानकी सानुनया ॥]

जानकी अभ्यर्थनां काका याच्ञां न गृह्णाति न स्वीकरोति । त्रिभुवनश्रियापि दीयमानया लोभयितुं न शक्यते । किमपरमस्माभिः क्रियमाणं शरीरवधमपि न गणयति । तदेवं दैन्योक्तिदानप्राणग्रहणरूपोपायत्रयवैगुण्यान्मन्ये तर्कयामि कथं सानुनया गृहीतानुनया प्रसन्ना भवेत् । न भविष्यतीत्यर्थः । तथा च प्रकारान्तरमनुसरणीयमिति भावः ॥

अतस्तदेवाह—

**पइमाहप्पणिसण्णा अवमाणिअसेससप्पुरिससौंडीरा ।**
**जइ णवर होज्ज व वसा लुअराहवसीसदंसणा जणअसुआ ॥२८॥**

[पतिमाहात्म्यनिषण्णावमानितशेषसत्पुरुषशौटीर्या ।
यदि केवलं भवेद्वा वश्या लूनराघवशीर्षदर्शना जनकसुता ॥]

पत्युर्माहात्म्ये स्वाभाविके वालिवधादिजनिते च गौरवे निषण्णा दत्तभारा, अत एवावमानितमवज्ञाविषयीकृतं शेषस्य रामभिन्नस्य सत्पुरुषस्य शौटीर्यमहंकारो यया । तथा सा जनकसुता केवलं लूनस्य राघवशीर्षस्य दर्शनं यस्यास्तथाभूता सती ।

यदीति संभावनायाम् । तेन यदि वा वश्या भवेत्तदा भवेदित्यर्थः । प्रकारान्तरं नास्तीति भावः ॥

तत्रोपपत्तिमाह—

अदिट्ठलज्जणिज्जो भग्गपरित्ताणविअलिआसाबन्धो ।
अवसो अबन्धुलहुओ भएण ठिइभङ्गसाहसं कुणइ जणो ॥२९॥

[अदृष्टलज्जनीयो भग्नपरित्राणविगलिताशाबन्धः ।
अवशोऽबन्धुलघुको भयेन स्थितिभङ्गसाहसं करोति जनः ॥]

अदृष्टं लज्जनीयं लज्जास्थानं येन । लज्यतेऽस्मादस्मिन्निति वा । 'कृत्यल्युटो बहुलम्' इत्यनीयर् । एवं भग्नं यत्परित्राणं रक्षणं तेन विगलित आशाबन्धो मनोरथो यस्य । यद्वा भग्नपरित्राणश्चासौ विगलिताशाबन्धश्चेति कर्मधारयः । अवशोऽस्वाधीनः । अविद्यमानबन्धुत्वेन लघुकोऽनादरणीयः सुखसाध्यो वा जनो भयेन स्थितिरित्थंकर्तव्यतानिश्चयः स्वभावदार्ढ्यं वा तद्भङ्गरूपं साहसमशक्यानुष्ठानं कर्म करोति । तथा च राघवमृत्युज्ञानाल्लज्जास्थानाभावेन भयेन च मद्वशवर्तिनी भवेदिति भावः ॥

अथ सेवकाह्वानमाह—

णवरि अ णं खेआलसजिम्भाअन्तवलिउद्धमुहसंघाअम् ।
भुमआभङ्गाणत्तो समअं पासेसु परिअणो अल्लीणः ॥ ३० ॥

[अनन्तरं चैनं खेदालसजृम्भायमाणवलितोर्ध्वमुखसंघातम् ।
भ्रूभङ्गाज्ञप्तः समकं पार्श्वयोः परिजन आलीनः ॥]

एतच्चिन्तानन्तरं चैनं रावणं भ्रूभङ्गमात्रेणाज्ञप्तः परिजनः समकमेकदैव पार्श्वयोर्वामदक्षिणयोरालीनः संनिहितः । परमप्रभोर्विशिष्य व्याकुलचित्तस्य संमुखे स्थातुमशक्यत्वादिति भावः । सेवकाह्वानहेतुभ्रूसंज्ञासमकालीनं चेष्टान्तरमाह—किंभूतमेनम् । खेदेन विरहजन्यदुःखेनालसं यथा स्यादेवं जृम्भायमाणोऽथ च वलितः सेवकाह्वानाय तिर्यग्भूतः सन्नूर्ध्वो गगनाभिमुखो मुखानां संघातो यस्य तम् । कामोद्रेकाज्जृम्भादिमत्त्वमूर्ध्वमुखत्वं चेति भावः । नानादिग्वर्तिनानासेवकाह्वानाय नानामुखानामेकदैव भ्रूसंज्ञायामेषावस्थाभूदिति सूचयितुं संघातपदमुक्तम् ॥

अथाज्ञापूर्वावस्थामाह—

तो एक्कहिअअगुणिअं दसहि वि समअं मुखेहि अप्पाहेउम् ।
ण पहुप्पइ दहवअणो चिरकङ्खिअलम्भगब्भिणक्खरगुरुअम् ३१

[तत एकहृदयगुणितं दशभिरपि समकं मुखैरध्यापयितुम् ।
न प्रभवति दशवदनश्चिरकाङ्क्षितलम्भगर्भिताक्षरगुरुकम् ॥]

ततः सेवकागमनोत्तरमेकेन हृदयेन मनसा गुणितं चिन्तितं प्रमेयं दशभिरपि मुखैः समकमेकदैवाध्यापयितुं शिक्षयितुं दशवदनो न प्रभवति न क्षमते । अत्र हेतुमाह—कीदृशम् । चिरकाङ्क्षितो यः सीताप्राप्त्युपायस्तस्य लम्भेन प्राप्त्या गर्भितानि तत्कालोत्पन्नहर्षेण गद्गदकण्ठतयास्फुटीभूतानि यानि वक्तव्याक्षराणि तैर्गुरुकमतिशयितम् । तदुक्तम्—'हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः' इति । तथा च—बाष्पस्थगितकण्ठत्वेन बहुभिरपि मुखैर्वक्तव्यस्य न निष्पत्तिरिति स्वरभङ्गस्वरूपभावोदयः ॥

अथानन्दादौत्सुक्यमाह—

अण्णेण समारद्धं वअणं अण्णेण हरिसगहिअप्फिडिअम् ।
अण्णेण अद्धभणिअं मुहेण अण्णेण से कह वि णिम्मविअम् ३२

[अन्येन समारब्धं वचनमन्येन हर्षगृहीतस्फेटितम् ।
अन्येनार्धभणितं मुखेनान्येनास्य कथमपि निर्मि(र्मापि)तम् ॥]

अस्य रावणस्याज्ञारूपं तद्वचनमन्येन मुखेन समारब्धं वक्तुमिच्छाविषयीकृतम् । अन्येन मुखेन हर्षेण गृहीतं वक्तुमुपक्रान्तं सत्पश्चात्स्फेटितमानन्दोद्गतस्वरभङ्गेन गद्गदकण्ठतया भ्रष्टं वक्तुं न पारितमित्यर्थः । अन्येनार्धमेव भणितं सत्पश्चादस्य स्वरभङ्गादिरूपप्रतिबन्धकाभावेऽप्यन्येनोत्कण्ठावशादस्मादाच्छिद्य गृहीत्वा कथमप्यवशिष्टमर्धमुक्त्वा निर्मि(र्मापि)तं समापितम् । यद्वा—अन्येनार्धमेव भणितं पुनर्भावोदयादथान्येन कथमपि भावोदयादेव कष्टसृष्ट्यावशिष्टमर्धमुक्त्वा समापितमित्यर्थः । इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता । चित्ततापत्वराः स्वेददीर्घनिश्वसितादिकृत् ॥'

अथ वाक्योपक्रमे निःश्वासमाह—

तो उग्गाहिअसोअं तेण भणन्तेन मुहपहोलिरधूमम् ।
संताविएक्कहिअअं दसकण्ठक्खलिअपलहुअं णीससिअम् ॥ ३३ ॥

[तत उद्ग्राहितशोकं तेन भणता मुखप्रघूर्णनशीलधूमम् ।
संतापितैकहृदयं दशकण्ठस्खलितप्रलघुकं निश्वसितम् ॥]

ततो वक्तव्यस्थिरीकरणानन्तरं भणता वक्तुमुपक्रान्तेन तेन रावणेन निश्वसितं निश्वासः कृतः । सीतासमागमाय कातरकल्पनीयं कर्म चरामीति मनःखेदादिति भावः । उद्ग्राहितः प्रकाशितः शोको मनोदुःखं यत्र एवम्, मुखेषु प्रघूर्णमानो धूमो यत्र मनस्तापादेवम्, संतापितमेकं हृदयं चित्तं यत्र तद्यथा स्यादेवं दशसु कण्ठेषु स्खलितं हृदयादेकमेव प्रस्थितमन्तरा दशधाभूतम् अत एव प्रलघुकं स्वल्पं च यथा स्यादिति । सर्वं क्रियाविशेषणम् । सीतासमागमं प्रति कश्चिदुपायश्चिन्तितोऽस्ति स क्रियतामिति वाक्यपरत्वेन पूर्वस्कन्धकद्वयव्याख्यानं केचित्कुर्वन्ति । तत्प्रकृतस्यैव संगतत्वादुपेक्षणीयम् ॥

अथ रावणवचनं प्रस्तौति—

**आहासइ अ णिसिअरे आण्णासमकालदिण्णपडिसंलावे ।**
**महिणिमिओहअकरअलतंसट्ठिअतिअभरुण्णमिअदेहद्धे ॥ ३४ ॥**

[आभाषते च निशिचरानाज्ञासमकालदत्तप्रतिसंलापान् ।
महीनिवेशितोभयकरतलतिर्यक्स्थितत्रिकभरोन्नमितदेहार्धान् ॥]

स निशिचरानाभाषते च । किंभूतान् । आज्ञासमकालं दत्तः प्रतिसंलापः प्रत्युत्तरं यैस्तान् । अतिसंनिहितत्वात् । एवं मह्यां निवेशितं यदुभयकरतलं तेन तिर्यक्स्थितं यत्त्रिकं तत्र भरेणोन्नमितो देहार्धो देहपश्चाद्भागो नितम्बरूपो यैस्तान् । भूमिनिवेशितजानुकरतलशिरस्कान् । तदुक्तम्—'पश्चाङ्गचुम्बिभूमीकः प्रणमेदीश्वरं नरः' इति । प्रभुत्वमुक्तम् ॥

अथ तद्वचनस्वरूपमाह—

**तं माआणिअम्मविअं रिउदंसणविसमवलिअणिच्चलणअणम् ।**
**दावेह कण्ठरहिअं सीआइ विओअपण्डुरं रामसिरम् ॥ ३५ ॥**

[तन्मायानिर्मि(र्मापि)तं रिपुदर्शनविषमवलितनिश्चलनयनम् ।
दर्शयत कण्ठरहितं सीताया वियोगपाण्डुरं रामशिरः ॥]

हे निशाचराः, मायया निर्मितमनलीकवद्दर्शितं तत्कण्ठशून्यं रामशिरः सीतायाः कृते सीतायै वा दर्शयत । किंभूतम् । रिपुदर्शनाय विषमं क्रोधेन भयानकं यथा

स्यादेवं वलिते वक्रीभूते सती निश्चले स्थिरे नयने यत्र तत्। धनुःसंधानकालीन-चेष्टाविशिष्टलोचनमित्यर्थः। एवं वियोगेन सीताया विरहेण पाण्डुरमिति सर्वं विशे-षणमनलीकत्वज्ञापनार्थम्॥

अथ मायाशिरोघटनमाह—

तो अमरिसमेलाविअभुमउग्गाहिअतरङ्गिअणिलाडअडम्।
छिण्णाणिअं व तं चिअ ताहे च्चिअ तेहि णिम्मिअं रामसिरम्॥ ३६॥

[ततोऽमर्षमेलितभ्रूद्ग्राहिततरङ्गितललाटतटम्।
छिन्नानीतमिव तदेव तदेव तैर्निर्मितं रामशिरः॥]

ततस्तदाज्ञानन्तरं तैः सेवकैस्तदैव तत्क्षण एव तदेव साक्षादेव न तु कृतकत्वेन ज्ञाप्यमानम्, रामशिरश्छिन्नानीतमिव छिन्नं सद्यस्तदानीतं तदिव निर्मितम्। कीदृ-शम्। अमर्षेण मेलिताभ्यामेकीभूताभ्यां भ्रूभ्यामुद्ग्राहितमुत्क्षिप्तम्। अत एव तर-ङ्गितं सभ्रुकुटीकं ललाटतटं यत्र। तथा च युद्धकालीनावस्थाविशिष्टत्वेन पारमा-र्थिकमेव तदिति घटनायैवमुक्तम्॥

अथ सेवकानां प्रस्थानमाह—

संपत्थिआ अ संभमचलणोवडणविसमुट्ठिआ पमअवणम्।
कह वि समत्तप्पाहिअदसवअणाणत्तिवावडा रअणिअरा॥ ३७॥

[संप्रस्थिताश्च संभ्रमचरणावपतनविषमोत्थिताः प्रमदवनम्।
कथमपि समस्ताध्यापितदशवदनाज्ञप्तिव्यापृता रजनीचराः॥]

रजनीचराः प्रमदवनं सीतावस्थितिवनं प्राप्ताश्च। किंभूताः। संभ्रमेण भयेना-दरेण वा यच्चरणयोरवपतनं त्वरया विन्यासस्तस्मै विषमं युगपदुत्थितास्त्वरया गन्तुं सत्वरमुत्थिता इत्यर्थः॥ यद्वा—चरणयोरवपतनेनाधो विन्यासविशेषेण विष-ममुत्थिता इत्यर्थः। कथमपि लज्जानिबन्धनकष्टेन समस्तमध्यापिता। यथा राम-शिरः श्रद्धत्ते मां च स्वीकरोति सा, तथा कर्तव्यमित्याद्युपदिष्टाः सन्तो दशवद-नाज्ञप्तौ मायायां मस्तकोपनयनरूपायां व्यापृताः सयत्नाः॥ यद्वा—समस्तं यदध्या-पितमुपदिष्टरूपं वस्तु तदेव दशवदनाज्ञप्तिस्तत्र व्यापृता इत्यर्थः॥

अथ प्रमदवनप्राप्तिमाह—

पत्ता अ फुडिअमणिअडविवरुट्ठिअसलिलबद्धपङ्कअमउलम् ।
पवणसुअभग्गपाअवभङ्गुग्गअबालकिसलअं पमअवणम् ॥ ३८ ॥

[प्राप्ताश्च स्फुटितमणितटविवरोत्थितसलिलबद्धपङ्कजमुकुलम् ।
पवनसुतभग्नपादपभङ्गोद्गतबालकिसलयं प्रमदवनम् ॥]

ते प्रमदवनं प्राप्ताश्च । किंभूतम् । हनूमत्कृतोपमर्देन स्फुटितं यद्वापीषु मणितटं तद्विवरेणोत्थितं यत्सलिलं तत्र बद्धः संवद्ध उत्पन्नः पङ्कजानां मुकुलो यत्र । एवं पवनसुतेन भग्ना ये पादपास्तेषां भङ्गेषु भङ्गस्थानेषूद्गतानि बालकिसलयानि यत्र । एतेन हनूमद्विमर्दस्याचिरंतनत्वमुक्तम् । एवंविधमादकस्थानस्थित्यापि सीतायाः मनोविकारो नाभूदिति सतीत्वमुपदर्शितम् ॥

अथ द्वादशभिः स्कन्धकैरादिकुलकेन सीतावस्थामाह—

पेच्छन्ति अ सइसंठिअवअणविसंवइअथणणिसण्णकरअलम् ।
दहवअणागमसङ्किअपअसद्दुप्पित्थलोअणं जणअसुअम् ॥ ३९ ॥

[प्रेक्षन्ते च सदासंस्थितवदनविसंवादितस्तननिषण्णकरतलाम् ।
दशवदनागमशङ्कितपदशब्दोत्पित्सलोचनां जनकसुताम् ॥]

रजनीचराः जनकसुतां पश्यन्ति चेति समन्वयः । किंभूताम् । सदासंस्थिताद्वदनाद्विसंवादितं स्खलितं पश्चात्स्तनयोर्निषण्णं करतलं यस्यास्ताम् । एवं पूर्वनिपातानियमात्—शङ्कितदशवदनागमः शङ्कितः शङ्काविषयीकृतो दशवदनस्यागमो येन तथाभूतो यो राक्षसानां पदशब्दस्तेनोत्पित्सोद्विग्ने ययोस्ते उद्विग्ने लोचने यस्याः । रावणागमनजिज्ञासावशात् । तथा च निशाचराणां पदशब्दं श्रुत्वा रावणागमत्रासेन व्याकुलमालोकयन्त्या सीतया 'आः, किं वृत्तम्' इति क्षोभेण कपोलतः करो हृदि न्यस्त इत्यर्थः । दशवदनागमशङ्किता चासौ पदशब्दोद्विग्नलोचना चेति तामिति केचित् । 'उप्पित्थ' शब्दस्त्रस्तव्याकुलवाची देशीति कश्चित् ॥

पिअअमसहत्थपेसिअमणिसुण्णइअसिढिलद्धवेणीबन्धम् ।
धोअकलधोअपाण्डुरपडन्तबाहपहउण्णअत्थणअलसम् ॥ ४० ॥

[प्रियतमस्वहस्तप्रेषितमणिशून्यीकृतशिथिलार्धवेणीबन्धाम् ।
धौतकलधौतपाण्डुरपतद्बाष्पप्रहतोन्नतस्तनकलशाम् ॥]

पुनः किंभूताम् । प्रियतमस्य कृते स्वहस्तेनाभिज्ञानाय प्रेषितो यो मणिस्तेन शून्यीकृतोऽत एव शिथिलो ग्रन्थिशून्योऽर्धवेणीबन्धो यस्यास्ताम् । अद्याप्यसंस्कृतकेशीमित्यर्थः । एवं धौतं मार्जितं यत्कलधौतं रूप्यं कज्जलविरहात् । तद्वत्पाण्डुरैः पतद्भिर्बाष्पैरश्रुभिः प्रहतौ ताडितावुन्नतौ स्तनकलशौ यस्यास्ताम् । उन्नतत्वेन स्तनयोरेवाश्रूणां पात इत्यर्थः । यद्वा—धौतं जलेन क्षालितं यत्कलधौतं सुवर्णं तदाकृती पाण्डुरबाष्पप्रहतौ स्तनकलशौ यस्या इत्यर्थः । निरन्तरमश्रुपतनाज्जलक्षालितसुवर्णतुल्यत्वेन स्तनयोस्तस्या अतिगौराङ्गीत्वमुक्तम् ॥

**अजमिअपम्हलवेणिं बाहजलपहाविआलओत्थइअमुहिम् ।**
**रसणासुण्णणिअम्बं विच्छड्डिअमण्डणग्घविअलावण्णम् ॥ ४१ ॥**

[अयमितपक्ष्मलवेणीं बाष्पजलप्रधाविताल्कावस्तृतमुखीम् ।
रसनाशून्यनितम्बां विच्छर्दितमण्डनार्घितलावण्याम् ॥]

किंभूताम् । अयमिता असंयता, अत एव पक्ष्मला जातपक्ष्मा रूक्षा वेणी यस्यास्ताम् । एवं बाष्पजलैरश्रुभिः प्रधावितैः प्रक्षालितैर्बाष्पजलेषु प्रधावितैरितस्ततोगामिभिर्वा, अलकैरवस्तृतं व्याप्तं मुखं यस्याः । एवं रसनया शून्यो नितम्बो यस्याः । एवं विच्छर्दितं त्यक्तं यन्मण्डनमङ्गरागोऽलंकारश्च तेनार्घितमुत्कर्षितं लावण्यं शोभा यस्याः । औपाधिकरूपादपि स्वाभाविकरूपस्याह्लादकत्वमिति स्वभावसौन्दर्यमुक्तम् ॥

**थोअमउआअअट्ठिअपिअअमगअहिअअसुण्णणिच्चलणअणम् ।**
**कइवलसद्दाअण्णणवाहतरङ्गपरिघोलमाणपहरिसम् ॥ ४२ ॥**

[स्तोकमुकुलायतस्थितप्रियतमगतहृदयशून्यनिश्चलनयनाम् ।
कपिबलशब्दाकर्णनबाष्पतरङ्गपरिघूर्णमानप्रहर्षाम् ॥]

स्तोकमीषन्मुकुलिते, अत एवायतस्थिते दीर्घीभूते, अथ च प्रियतमे रामे गतं यद्धृदयं मनस्तेन हेतुना शून्ये विषयाग्राहके, अत एव निश्चले बाह्यसंवेदनाभावात्स्थिरे नयने यस्यास्ताम् । भावनोपस्थितरामदर्शनसमुत्थसुखास्वादेन नयनयोर्मुकुलनमिति भावः । एवं कपिबलस्य शब्दानां कोलाहलानामकर्णनाद्भावनाविच्छेदे सत्युपजातेषु बाष्पतरङ्गेषु परिघूर्णमानः प्लवमान इव प्रहर्षो यस्याः । मामपि रामः स्मरतीत्यश्रुजनकत्वेनानन्दस्य स्फुटत्वादिति भावः । वस्तुतस्तु—कोलाहलेन भावनाविच्छेदे रामदर्शनसुखविच्छेदाद्विषादेनोपजातेषु बाष्पेषु मदुद्धारायैते कपयः समागता इत्यानन्दाश्रुभिरुपचितेषु दोलायमान इव प्रहर्ष इत्याक्षिप्तविषादहर्षयोः संधिरिति मदुन्नीतः पन्थाः ॥

ईसरअभिण्णपाडलवसुआअप्फरुसवाहबिन्दुट्ठाणम् ।
विच्छड्डिअपरिधूसरणिअअसहावपरिसंठिआहरराअम् ॥४३॥

[ईषद्रजोभिन्नपाटलशुष्कपरुषबाष्पबिन्दुस्थानम् ।
विच्छर्दितपरिधूसरनिजकस्वभावपरिसंस्थिताधररागम् ॥]

एवम्—ईषद्रजोभिर्भिन्नं संबद्धम्, अत एव गौरिमसंबन्धात्पाटलं श्वेतरक्तम्। अस्रूणामभावाच्छुष्कं सत्परुषं रूक्षं बाष्पबिन्दूनां स्थानं यस्यास्ताम्। 'पाअड' इति पाठे प्रकटमित्यर्थः। अस्रुस्थानेषु धूलिसंबन्धाच्छुष्कत्वं पाटलत्वं प्रकटत्वं वा, रूक्षत्वं चेति भावः। एवं विच्छर्दितोऽलक्तकताम्बूलत्यागात्त्यक्तः अत एव परिधूसरः सन्निजकस्वभावे परिसंस्थितः कृत्रिमारुण्यरहितोऽधरस्य रागो यस्या इति कुलस्त्रीत्वमुक्तम्। केचित्तु—अग्रिमस्कन्धकस्थवदनविशेषणतया नपुंसकान्ततत्वेन सर्वमिदं योजयन्ति ॥

वअणं समुव्वहन्तिं ओलुग्गकओलणिवलन्ताआमम् ।
असमत्तकलादीहं कइदिअहासण्णपूरिअव्वं व ससिम् ॥ ४४ ॥

[वदनं समुद्वहन्तीमवरुग्णकपोलनिर्वलदायामम् ।
असमस्तकलादीर्घं कतिदिवसासन्नपूरयितव्यमिव शशिनम् ॥]

एवम्—अवरुग्णौ दुर्बलौ यौ कपोलौ ताभ्यां निर्वलन्स्पष्टीभवन्नायाम ऊर्ध्वाधःक्रमेण दैर्घ्यं यत्र तत् वदनं समुद्वहन्तीम्। अत्रोत्प्रेक्षते—असमस्ताभिरसमाप्ताभिरपूर्णाभिर्वा कलाभिर्दीर्घाकारं शशिनमिव। शशिनं कीदृशम्। कतिपयैर्दिवसैरासन्नं निकटवर्ति पूरयितव्यं पूरणं यस्य तम्। भावे तव्यः। कतिदिवसैरासन्ने निकट एव पूरयितव्यमिति कर्मणि वा। वदनमपि द्वित्रदिनैरेव रामसंदर्शनात् कलावृद्ध्या पूरयितव्यमित्यभिसंधिः ॥

देहच्छविणिव्वलिए भिण्णदरुव्वत्तरोअणासच्छाए ।
भूसणबन्धणमग्गे लक्खिज्जन्ततलिणत्तणे वहमाणम् ॥ ४५ ॥

[देहच्छविनिर्वलितान्भिन्नदरोद्वृत्तरोचनासच्छायान् ।
भूषणबन्धनमार्गांल्लक्ष्यमाणतलिनत्वान्वहमानाम् ॥]

एवम्—भूषणस्य वलयादेर्बन्धनं योजना तस्य मार्गान् स्थानानि वहमानाम् ।

भूषणशून्यामित्यर्थः। किंभूतान्। लक्ष्यमाणं तलिनत्वं स्तोकत्वं कार्श्यं येषां तान्। तत्तदलंकारस्थानानां तत्तदाकारेण कृशीभूय परिणतत्वादिति भावः। पुनः कीदृशान्। देहस्य स्वभावसिद्धा या छविर्गौरता तया निर्वलितान् पृथग्भूय प्रकाशमानान्। अन्यत्र छविमालिन्यादिपिहिता तत्र तत्रैव परं तदभावादुज्ज्वलेति भावः। यद्वा—देहच्छविभिर्निर्वलितान् अन्यदेहापेक्षया छविविशेषेण पृथग्भूतानित्यर्थः। अत एव भिन्ना संबद्धा पश्चादीषदुद्वर्तिता या रोचना तया सच्छायानिवेत्युत्प्रेक्षा व्यङ्ग्या। रोचनोद्वर्तनादिव कान्तिविशेषं गतानित्यर्थः। अन्यशरीरापेक्षया गौरिमविशेषोदयादिति भावः। भिन्ना पिष्टोद्वर्तिता लोडिता या रोचना तत्तुल्यकान्तीनिति केचित्। 'तलिनं विरले स्तोके' इति विश्वः॥

दट्ठव्वचडुलणअणं उवऊहणलालसप्फुरिअबाहुलअम्।
आसण्णट्ठिअदइअं रसेण एक्कसअणम्मि व विसूरन्तिम्॥ ४६॥

[द्रष्टव्यचटुलनयनामुपगूहनलालसस्फुरितबाहुलताम्।
आसन्नस्थितदयितां रसेनैकशयन इव खिद्यमानाम्॥]

एवम्—आसन्ने निकटे स्थितो दयितो रामो यस्यास्ताम्। अत एव—रसेनोत्कण्ठया द्रष्टव्ये रामे रामदर्शने वा चटुले चञ्चले नयने यस्यास्ताम्। एवम्—उपगूहने तदालिङ्गने लालसेन लोभेन स्फुरिते सस्पन्दे बाहुलते यस्याः। संनिहित एव प्रियः कदा द्रष्टव्यः कदा वा तदालिङ्गनं लब्धव्यमित्युत्कण्ठितामित्यर्थः। अत एव तदुभयप्राप्त्यभावात्खिद्यमानाम्। उत्प्रेक्षते—एकशयन इव। यथैकत्र शयने काचिदासन्नस्थितदयिता रसेन पूर्वोक्तविशेषणद्वयवती सती मानपरिग्रहादिना तदुभयालाभात्खिद्यत इत्यर्थः। यद्वा—भावनावशादासन्नस्थितदयितामुक्तविशेषणद्वयवतीं च। अत एव तदुभयासिद्ध्या रसेनैकशयन इव खिद्यमानाम्॥

दूसहमिअङ्कदंसणदुउणअरुक्कण्ठणीसहणिसण्णङ्गिम्।
गअजीविअपरिसङ्किअणिसिअरिहत्थपरिमट्ठणिच्चलहिअअम् ४७

[दुःसहमृगाङ्कदर्शनद्विगुणतरोत्कण्ठानिःसहनिषण्णाङ्गीम्।
गतजीवितपरिशङ्कितनिशिचरीहस्तपरिमृष्टनिश्चलहृदयाम्॥]

एवम्—विरहिणीनामतिपीडाकरत्वाद्दुःसहेन मृगाङ्कस्य दर्शनेन द्विगुणतरा योत्कण्ठा तया निःसहानि निश्चेष्टानि सन्ति निषण्णानि। भूमावित्यर्थात्। अङ्गानि

यस्यास्ताम् । मूर्च्छितामित्यर्थः । अत एव गतजीवितेयमिति परिशङ्किताभिः शङ्कावतीभिर्निशिचरीभिरवेक्षिताभिर्हस्तेन परि सर्वतोभावेन श्वासानवाप्त्या मृष्टं श्वासनिरोधान्निश्चलं हृदयं यस्यास्ताम् ॥

हत्थेण वाहगरुइअदूरपलम्बालओत्थएण वहन्तिम् ।
पिअपेसिणङ्गुलीअअमणिप्पहापाअडेक्कपासं व मुहम् ॥ ४८ ॥
[हस्तेन बाष्पगुरूकृतदूरप्रलम्बालकावस्तृतेन वहन्तीम् ।
प्रियप्रेषिताङ्गुलीयकमणिप्रभाप्रकटैकपार्श्वमिव मुखम् ॥]

एवम्—बाष्पैरश्रुभिः स्तिमितत्वाद्गुरूकृतैः, अत एव दूरं व्याप्य प्रलम्बैरलकैरवस्तृतेनाच्छादितेन हस्तेन मुखं वहन्तीम् । मुखं हस्ते कृत्वा तिष्ठन्तीमित्यर्थः । किमिव । प्रियेण रामेण प्रेषितं यदङ्गुलीयकं तन्मणिप्रभाभिः प्रकटं व्यक्तमेकं पार्श्वं यस्य तथाभूतमिव । तथा च—एकपार्श्वस्य करालकपिहितत्वादप्रकटत्वमेव, उपरिगतपार्श्वस्य तु प्रकटत्वम् । स्वच्छमुखान्तर्निर्गताभिरधःस्थितकराङ्गुलीयकप्रभाभिः कृतमिवेत्युत्प्रेक्षितम् । यद्वा—'पाविएक्कपासं व मुहम्' इति पाठः । तथा च—मणिप्रभाप्रावृतैकपार्श्वमिव । तेन मणिप्रभाभिः प्रावृतं छन्नमेकं पार्श्वं यस्येत्यर्थः । तथा च मणेरिन्द्रनीलत्वेन तत्प्रभावृतैकपार्श्वत्वमुत्प्रेक्ष्यमाणमलकेषु नीलतया तत्प्रभात्वमवगमयतीति निरवद्यम् ॥

आसण्णजुज्झविमणं रामभुआसङ्गणिट्ठविअसंतावम् ।
हिअआवलिअदहमुहं किं मण्णे होहिइ त्ति विमुहिज्जन्तिम् ॥४९॥
[आसन्नयुद्धविमनसं रामभुजाध्यवसायनिष्ठापितसंतापाम् ।
हृदयापतितदशमुखां किं मन्ये भविष्यतीति विमुह्यन्तीम् ॥]

एवम्—आसन्नमचिरभावि यद्युद्धं तेन विमनस्कां युद्धे चानियतो जय इत्याशयात् । अथ रामभुजयोरध्यवसायेन निष्ठापितो नाशितो युद्धे किं स्यादित्यादिसंतापो यस्यास्ताम् । रामो जेष्यत्येवेति निश्चयात् । पश्चात् हृदये आपतितो दशमुखो यस्यास्ताम् । तथा च तस्य लब्धवरत्वं पौरुषं च स्मृत्वा पुनः संदिहानामित्यर्थः । अत एव मन्ये विचारयामि । मनसि वा । एकत्र रामोऽपरत्र रावण इति कोटिद्वयतौल्यात्किं भविष्यतीति विमुह्यन्तीं मूर्च्छन्तीं संशयानां वा ॥

समुहालोअणविडिअं विडिअणिमिल्लपिअदंसणुसुअहिअअम्।
ऊसुअहिअउम्मिल्लं उम्मिल्लोसरिअपइमुहकिलिम्मन्तिम्॥ ५० ॥
(आइकुलअम्)

[संमुखालोकनव्रीडितां व्रीडितनिमीलितप्रियदर्शनोत्सुकहृदयाम्।
उत्सुकहृदयोन्मीलितामुन्मीलितापसृतपतिमुखक्लाम्यन्तीम्॥]
(आदिकुलकम्)

एवम्—संकल्पोपस्थितस्य रामस्य संमुखालोकनेन व्रीडितां त्वद्विरहेऽपि जीवितास्मीति लज्जिताम्। ततो व्रीडितत्वेन पुनर्निमीलितां निमीलितनेत्राम्। अनन्तरं प्रियस्य दर्शनउत्सुकहृदयामिति कर्मधारयः। तदनु (उ)त्सुकहृदयत्वात्पुनरुन्मीलितां प्रियं द्रष्टुमुन्मीलितनेत्राम्। पश्चादुन्मीलितेन नयनोन्मीलनेन भावनापरित्यागादपसृतेऽदृष्टे सति पतिमुखे क्लाम्यन्तीं पुनर्दर्शनोत्कण्ठावशात्। अथवा वृथैव भावनाविच्छेदकारिनयनोन्मीलनं कृतमिति चिन्तावशात्खिद्यमानाम्॥ आदिकुलकम्॥

अथामीषां सीतासमीपगमनमाह—

दट्ठूण अ णं दूमिअहिअअपहोलन्तसंभरिअकाअव्वा।
आलीणा माआमअरामसिरुल्लअणकाअरा रअणिअरा॥ ५१ ॥

[दृष्ट्वा चैनां दूनहृदयप्रघूर्णमानसंस्मृतकर्तव्याः।
आलीना मायामयरामशिरउल्लयनकातरा रजनीचराः॥]

स [च] पुनः शोच्यामेनां सीतां दृष्ट्वा दयावशाद्दूने दुःखिते हृदये प्रघूर्णमानम्। विस्मृतमित्यर्थः। पश्चात्पुनर्लङ्केशभयात्संस्मृतं कर्तव्यं मायाशिरःप्रदर्शनरूपं यैस्ते रजनीचरा मायामयं यद्रामशिरः, तस्योल्लयनेऽर्पणे कातराः सन्तः आलीनाः सीतासमीपमुपगताः जीवत्येव रामे स्वत एव म्रियमाणा वराकी कथमसत्येन व्यापादनीयेति घृणावशादलीकं शिरो नतु दर्शयामासुरिति भावः॥

अथ शिरःप्रदर्शनमाह—

अह तेहि तीअ पुरओ छेअसमुव्वत्तमासदिण्णावेढम्।
ठविअं राहववअणं लुअमज्झविलग्गवामहत्थं च धणुम्॥ ५२ ॥

[अथ तैस्तस्याः पुरतश्छेदसमुद्वृत्तमांसदत्तावेष्टम्।
स्थापितं राघववदनं लूनमध्यविलग्नवामहस्तं च धनुः॥]

अथ सीतासमीपगमनानन्तरं छेदेन कर्तनेन समुद्वृत्तमुच्छ्वासितं यन्मांसं तेन वृत्तमावेष्टं सर्वतो वेष्टनं यत्र तादृशं राघववदनं लूनश्छिन्नः सन्मध्ये विलग्नः संबद्धो वामहस्तो यत्र । राघवस्येत्यर्थात् । तद्वनुश्च तैर्निशाचरैस्तस्याः सीतायाः पुरतः स्थापितम् । तथा च—एकव्यापारेणैव शिरो धनुर्लग्नः करश्च द्वयमपि छिन्नमिति भावः ॥

अथ सीतामोहमाह—

**आलोइए विसण्णा उवणिज्जन्तम्मि वेविउं आढत्ता ।**
**सीआ रअणिअरेहि रामसिर त्ति भणिए गअ च्चिअ मोहम् ॥५२॥**

[आलोकिते विषण्णोपनीयमाने वेपितुमारब्धा ।
सीता रजनीचरै रामशिर इति भणिते गतैव मोहम् ॥]

शिरसि दूरादालोकिते सति सीता विषण्णा विषादमुपगता । कस्यैतदिति कृत्वेत्यर्थः । अथ रजनीचरैरुपनीयमाने निकटं प्राप्यमाणे सति वेपितुमारब्धा । ममैव निकटं यदानयन्ति तत्प्रायो रामस्यैव भवेदिति कृत्वा कम्पवती बभूवेत्यर्थः । पश्चात्तैरेव रामशिर इति भणिते सति निःसंदेहा सती मोहमेव मूर्च्छामेव गता । नतु मृत्युमपि । सीताजीविताभिन्नरामजीवितस्य विद्यमानत्वादिति भावः ॥

अथ सीताया भूमौ पतनमाह—

**पडिआ अ हत्थसिढिलिअणिरोहपण्डरसमूससन्तकवोला ।**
**पेल्लिअवामपओहरविसमुण्णअदाहिणत्थणी जणअसुआ ॥ ५४ ॥**

[पतिता च हस्तशिथिलितनिरोधपाण्डुरसमुच्छ्वसत्कपोला ।
प्रेरितवामपयोधरविषमोन्नतदक्षिणस्तनी जनकसुता ॥]

जनकसुता पतिता च भूमावित्यर्थात् । केवलं मोहमेव गतेति न, किं तु पतितापीति चार्थः । किंभूता । हस्तेन शिथिलितो निरोधो यत्र तथाभूतः, पश्चाद्विरहेण करतलयन्त्रणापसारितरुधिरत्वेन वा पाण्डुरः सन् समुच्छ्वसन् यन्त्रितमांसोत्फुल्लतया पुष्टिं व्रजन् कपोलो यस्यास्तथाविधा । ज्ञानदशायां करावरुद्धः कपोलस्थितो मूर्च्छायां करः शिथिलीभूय बहिः स्खलित इत्यर्थः । एवम्—प्रेरितेन वामपार्श्वेन पतितत्वाद्वामभुजयन्त्रणया तिर्यगुत्थापितेन वामपयोधरेण विषमोन्नतः स्वानुसारेण तिर्यगुत्थापितो दक्षिणः स्तनो यस्याः । तथा च कुचयोः काठिन्यमुक्तम् ॥

भूम्यवष्टम्भेन सीता जीवितेत्याह—

मरणम्मि बन्धवाणं जणस्स किं होइ बन्धवो च्चिअ सरणम् ।
तह गुरुसोअकवलिआ धरम्मि पडिआ विमुच्छिआ धरणिसुआ॥५५॥

[मरणे बान्धवानां जनस्य किं भवति बान्धव एव शरणम् ।
तथा गुरुशोककवलिता धरायां पतिता विमूर्च्छिता धरणिसुता ॥]

बान्धवानां मरणे सति जनस्य बान्धव एव शरणं किं भवति । बान्धव एव आणावलम्बनं भवतीत्यर्थः । तत्रोपपत्तिमाह—तथा रामविपत्तिज्ञानजेन गुरुणा शोकेन कवलिता समाक्रान्ता सती विमूर्च्छिता धरणिसुता सीता धरायां पतिता, यतस्तत्काले तस्या मातृत्वाद्धरणिधरेवावलम्बनमभूदिति भावः ॥

अथ सीतायां मोहोत्कर्षमाह—

ण कओ वाहविमुक्खो णिव्वण्णेउं पि ण चइअं रामसिरम् ।
णवर पडिवण्णमोहा गअजीविअणीसहा महिम्मि णिसण्णा ॥५६॥

[न कृतो बाष्पविमोक्षो निर्वर्णयितुमपि न शकितं रामशिरः ।
केवलं प्रतिपन्नमोहा गतजीवितनिःसहा मह्यां निषण्णा ॥]

तया बाष्पविमोक्षो न कृतः, रामशिरो निर्वर्णयितुं विशेषेण द्रष्टुमपि न शकितम् । केवलं प्रतिपन्नः स्वीकृतो मोहो यया तथाभूता सती गतजीवितो मृतस्तद्वन्निःसहा निश्चेष्टा सा मह्यां निषण्णा लिखितेव स्थिताभूदित्यर्थः । रोदनदर्शनादीनां ज्ञानसाध्यत्वेन तदानीं प्रसह्य मोहोदयात्तत्किमपि न वृत्तमिति भावः । वस्तुतस्तु—दर्शनविच्छेदः स्यादिति बाष्पत्यागो न कृतः, दर्शने सति महद्दुःखं स्यादिति दर्शनमपि न कृतम्, किं तु मोहे सति किमपि दुःखं न लब्धव्यमिति मोह एव परं स्वीकृतः, तत एवाचैतन्यान्मह्यां लिखितेव स्थितेत्यर्थः ॥

अथ मूर्च्छावस्थामाह—

खणणिच्चलणीसासं जाअं मोहन्धआरसामच्छाअम् ।
विरलमिलिअच्छिवत्तं मुच्छाहीरन्ततारअं तीअ मुहम् ॥ ५७ ॥

[क्षणनिश्चलनिःश्वासं जातं मोहान्धकारश्यामच्छायम् ।
विरलमिलिताक्षिपत्रं मूर्च्छाह्रियमाणतारकं तस्या मुखम् ॥]

तस्या मुखं जातम् । कीदृशम् । क्षणं व्याप्य निश्चलो निःश्वासो यत्र, मूर्च्छया

आणवायोरवरोधात् । एवम्—मोहो ज्ञानाभावस्तद्रूपेणान्धकारेण श्यामा छाया कान्तिर्यस्य, प्रसादाभावात् । एवम्—विरलमल्पं मिलिते किञ्चिन्मुद्रिते अक्षिपत्रे पक्ष्मणी यत्र तथाभूतं सन्मूर्च्छया ह्रियमाणे परावर्तिते तारके दृष्टिगोलके यत्र तादृशम् । मूर्च्छापूर्वावस्था मोहः । यद्वा मोहोऽज्ञानमात्रम्, मूर्च्छा तु मनोविक्षोभविशेष इति भेदः ॥

मूर्च्छया दुःखसंवेदनाभावमाह—

**विसरिअविओअदुक्खं तक्खणपब्भट्ठराममरणाआसम् ।**
**जणअतणआइ णवरं लद्धं मुच्छाणिमीलिअच्छीअ सुहम् ॥ ५८ ॥**

[विस्मृतवियोगदुःखं तत्क्षणप्रभ्रष्टराममरणायासम् ।
जनकतनया केवलं लब्धं मूर्च्छानिमीलिताक्ष्या सुखम् ॥]

मूर्च्छामुद्रिताक्ष्या जनकपुत्र्या तदानीं केवलं सुखं लब्धम् । ज्ञाने सति दुःखमात्रानुभवादज्ञाने दुःखाभाव एव तदिति भावः । सुखं कीदृक् । विस्मृतं विरहदुःखं यत्र । एवम्—तत्क्षणे प्रभ्रष्टः प्रस्मृतो रामस्य मरणेनायासः पीडा रामनिष्ठा स्वनिष्ठा च यत्र तत् । यद्वा—'विस्मृतवियोग—' इति विशेषणद्वयविशिष्टं यथा स्यादेवं मूर्च्छानिमीलिताक्ष्या तया केवलं सुखं लब्धमित्यन्वयः । नयननिमीलनेन शिरोदर्शनजन्यमपि दुःखं नाभूदिति भावः ॥

अथ कालेन श्वासपरावृत्तिमाह—

**थणपरिणाहोत्थइए तीए हिअअम्मि पअणुअं पि ण दिट्ठम् ।**
**दीहं पि समूससिअं सूइज्जइ णवर वेविरे अहरोट्ठे ॥ ५९ ॥**

[स्तनपरिणाहावस्थगिते तस्या हृदये प्रतनुकमपि न दृष्टम् ।
दीर्घमपि समुच्छ्वसितं सूच्यते केवलं वेपनशीलेऽधरोष्ठे ॥]

स्तनयोः परिणाहेन विशालतयावस्थगिते व्याप्ते तस्या हृदये प्रतनुकमल्पमपि न दृष्टम् । चक्षुःस्पन्दापरिज्ञानान्न लक्षितम् । दीर्घं महदपि समुच्छ्वसितं निश्वासः केवलमधरोष्ठे वेपनशीले कम्पिते सति सूच्यते । श्वासं विना कथमधरोष्ठकम्प इति परं तर्क्यत इत्यर्थः । एतेन स्तनयोराभोगशालित्वमधरोष्ठस्य च तनुत्वं सूचितम् ॥

अथ मोहोपशान्तौ चक्षुरुन्मीलनमाह—

**अपरिप्फुडणीसासा तो सा मोहविरमे वि णीसहपडिआ ।**
**अणुवद्धबाहगरुइअदुक्खसमुव्बूढतारअं उम्मिल्ला ॥ ६० ॥**

[अपरिस्फुटनिःश्वासा ततः सा मोहविरामेऽपि निःसहपतिता ।
अनुबद्धबाष्पगुरूकृतदुःखसमुद्व्यूढतारकमुन्मीलिता ॥]

ततः श्वासपरावृत्त्यनन्तरं न परि सर्वतोभावेन स्फुटो व्यक्तो निश्वासो यस्यास्तथाविधातर्क्यमाणनिश्वासा सा मूर्च्छाविरामेऽपि निःसहं निश्चेष्टं यथा स्यादेवं पतिता सत्युन्मीलिता चक्षुरुन्मुद्रणं चकारेत्यर्थः । अनुबद्धेन ज्ञाने सति तदानीमुत्पन्नेन बाष्पेणाश्रुबिन्दुगुरूकृते यन्त्रिते अत एव दुःखेन समुद्व्यूढे उत्तानिते तारके गोलके यत्र तद्यथा स्यादित्युन्मीलक्रियाविशेषणम् ॥

अथ चतुर्भिरादिकुलकेन चैतन्ये सति शिरोदर्शनार्थमीषदुत्थितायाः सीतायाः शिरोदर्शनमाह—

**पेच्छइ अ सरहसोहरिअमण्डलग्गाहिघाअविसमच्छिण्णम् ।**
**दूरधणुसंधिअञ्चिअसरपुङ्खालिद्धसामलिअआवङ्गम् ॥ ६१ ॥**

[पश्यति च सरभसावहृतमण्डलाग्राभिघातविषमच्छिन्नम् ।
दूरधनुःसंहिताञ्चितशरपुङ्खालीढश्यामलितापाङ्गम् ॥]

सीता रामशिरः पश्यति चेत्यग्रेतनचतुर्थस्कन्धकेन सह समन्वयः । कीदृशम् । सरभसं वेगेनावहृतस्य पातितस्य मण्डलाग्रस्य खड्गस्याभिघातेन विषमं तिर्यक्क्रमेण छिन्नम् । एवं दूरं व्याप्य धनुःसंहिताञ्चितस्य धनुरारोपिताकृष्टम् शरस्य पुङ्खेनालीढौ स्पृष्टौ, अत एव नित्यं शराकर्षणेन पुङ्खावमर्षाज्जातकिणत्वेन श्यामलितावपाङ्गौ यत्र तदिति सव्यसाचित्वमुक्तम् ॥

**णिव्वूढरुहिरपण्डुरमउलन्तच्छेअमासपेल्लिअविवरम् ।**
**भज्जन्तपडिअपहरणकण्ठच्छेअदरलग्गधाराचुण्णम् ॥ ६२ ॥**

[निर्व्यूढरुधिरपाण्डुरमुकुलायमानच्छेदमांसप्रेरितविवरम् ।
भज्यमानपतितप्रहरणकण्ठच्छेददरलग्नधाराचूर्णम् ॥]

पुनः किंभूतम् । निःशेषतो व्यूढेन गलितेन रुधिरेण पाण्डुरं सन्मुकुलाय-

मानं संकुचयच्छेदस्थानमांसं प्रेरितं तेन मुद्रितं विवरं कण्ठनालरन्ध्रं यत्र तत् । मांसस्योत्फुल्लनादिति भावः । एवं पतितस्य सतो भज्यमानस्य भग्नस्य प्रहरणस्य खड्गस्य कण्ठच्छेदे तत्स्थाने लग्नं धाराचूर्णं यत्र । खड्गभङ्गेन चूर्णाकारस्य धारासंनिहितलोहकणिकारूपस्य धाराचूर्णस्य च संबन्धेन कण्ठस्य काठिन्यमुक्तम् ॥

णिद्दअसंदट्ठाहरमूलुक्खित्तदरदिट्ठदाढाहीरम् ।
संत्थाअसोणिअप्पङ्कपडलपूरेन्तकसणकण्ठच्छेअम् ॥ ६३ ॥

[निर्दयसंदष्टाधरमूलोत्क्षिप्तदरदृष्टदंष्ट्राहीरम् ।
संस्त्यानशोणितपङ्कपटलपूर्यमाणकृष्णकण्ठच्छेदम् ॥]

एवं शरसंधानकालीनक्रोधान्निर्दयं संदष्टाधरस्य मूले उत्क्षिप्तमुत्थापितम्, अत एव बहिर्भूतत्वेन किंचिद्दृष्टं दंष्ट्राहीरकं दंष्ट्राग्रं यत्र, दंष्ट्रारूपं हीरकं मणिविशेष इति वा । एवं संस्त्यानशोणितस्य विष्टब्धरुधिरस्य पङ्कपटलेन पूर्यमाणः, अत एव कृष्णः श्यामवर्णः कण्ठच्छेदो यत्र तत् । विष्टब्धरुधिरस्य श्यामत्वादिति भावः । 'सूक्ष्माग्रेण समं श्लक्ष्णं दंष्ट्राग्रं हीरकं विदुः' ॥

णिसिअरकअग्गहाणिअणिलाडअडणट्ठमिउडिभुमआभङ्गम् ।
गलिअरुहिरद्धलहुअं अणहिअउम्मिल्लतारअं रामसिरम् ॥ ६४ ॥
(कुलअम्)

[निशाचरकचग्रहानीतललाटतटनष्टभ्रुकुटिभ्रूभङ्गम् ।
गलितरुधिरार्धलघुकमहृदयोन्मीलत्तारकं रामशिरः ॥]
(कुलकम्)

एवं निशाचरैः कचग्रहेण केशपाशमाकृष्यानीतम्, अत एव ललाटतटे नष्टौ भ्रुकुटिभ्रूभङ्गौ यत्र । केशाकर्षणेन ललाटत्वगुन्नयनात्क्रोधोपजातयोर्भ्रुकुटिभ्रूभङ्गयोर्नाश इति भावः । नष्टो भ्रुकुट्या भ्रुवोश्च भङ्गो यत्रेति वा । एवं गलितरुधिरत्वेनार्धलघुकम् । एवम् अहृदयमचैतन्यादनभिप्रायमुन्मीलन्त्यौ प्रकाशमाने तारके गोलके यत्र । कचाकर्षणान्नयनपक्ष्मणोरप्युन्नयनादिति भावः । सत्यत्वव्यापनाय सर्वमिदं कल्पितं रूपम् ॥

अथ शिरोदर्शनानन्तरं पुनः सीतापतनमाह—

तह णिमिअ च्चिअ दिट्ठी मुक्ककवोलविहुरो उर च्चिअ हत्थो।
गअजीविअणिच्चेट्ठा णवरं सा महिअलं थणभरेण गआ॥ ६५॥

[तथा नियोजितैव दृष्टिर्मुक्तकपोलविधुर उरस्येव हस्तः।
गतजीवितनिश्चेष्टा केवलं सा महीतलं स्तनभरेण गता॥]

सीताया दृष्टिस्तथैव नियोजिता, यथा पूर्वं शिरसि नियोजितासीत्, पुनर्दर्शनानन्तरमपि तथैव स्थितेत्यर्थः। एवं मुक्तः कपोलो येन तथाभूतः सन् विधुरो विह्वलो हस्तो यथा पूर्वमुरसि स्थितः, तदानीमपि तथैव स्थितः, किंतु गतेन जीवितेन निश्चेष्टा। यद्वा—गतजीवितं मृतकशरीरं तद्वन्निश्चेष्टा सती सा सीता केवलं स्तनयोर्भरेण महीतलं गता। अयमर्थः—पूर्वं निशाचरनिवेदनजनितज्ञानजन्यशोकेन पतिताभूत्, तदानीं पुनरुत्थाय निपुणनिभालनोपजातनिर्णयवशात्तात्कालिकमोहोत्कर्षेण पुरो दृश्यमानरामशिरःसंमुखेवाधोमुखीभूय पतितेति दृष्टिरप्यभीष्टत्रिजटादिमुखं न गता, करोऽप्युरस्ताडनादिव्यापृतो नाभूदिति निरवद्यम्। देहान्तरनैरपेक्ष्येण स्तनभरस्य भूमिसंबन्धादुत्तङ्गिमा काठिन्यं च सूचितमिति केचित्॥

अथ पुनश्चैतन्ये सति पूर्वनिश्चयाप्रामाण्यशङ्कया पुनर्दर्शनेन सुदृढनिर्णयाय पुनरुत्थितेत्याह—

सो मुच्छिउट्ठिआए किं एअं ति गअणे दिसासु अ समअम्।
सुण्णपरिवोलिअच्छं जाअं मूढपरिदेविअं तीअ मुहम्॥ ६६॥

[ततो मूर्च्छितोत्थितायाः किमेतदिति गगने दिक्षु च समकम्।
शून्यपरिघूर्णिताक्षं जातं मूढपरिदेवितं तस्या मुखम्॥]

ततः पुनः पतनानन्तरं प्रथमं मूर्च्छितायाः पश्चाच्चैतन्ये सत्युत्थितायास्तस्या मुखं मूढस्येव परिदेवितं दुःखप्रकाशनं यत्रेति मूढपरिदेवितमनक्षरपरिदेवितं जातम्। चेष्टयैव परिदेवनं चकारेत्यर्थः। तच्चेष्टामाह—किंभूतम्। किमेतदिति कृत्वा किमेतदित्यभिलप्य गगने दिक्षु च सममेकदैव शून्ये मनोवैकल्येन विषयाग्राहके सति परिसर्वतोभावेन घूर्णिते अक्षिणी यत्र। तथा च—रामपतने सति दिवाकरः प्रकाशत एव, नक्षत्राण्यपि न च्यवन्ते, न वा दिग्दाहधूमकेतूत्पातपवनादिकं दृश्यते, तत्कथमिति जिज्ञासावशादिति भावः। किमेतदिति कृत्वोत्थिताया इति केचित्॥

अथ वाक्स्तम्भमाह—

णिव्वण्णेऊण अणं तत्तोहुत्तट्ठिओसिअन्तणिसण्णो ।
काङ्क्षन्तीअ ण पत्तो वअणं मरणं च से कह वि अप्पाणो ॥६७॥

[निर्वर्ण्य चैतत्ततोऽभिमुखस्थितावसीदन्निःसंज्ञः ।
काङ्क्षन्त्या अपि न प्राप्तो वचनं मरणं चास्या कथमप्यात्मा ॥]

च पुनः अस्या आत्मा वचनं मरणं च न प्राप्तः, रामजीवनायत्तजीवनत्वान्मरणाभावः, तत एव संप्रति जीवाम्येवेत्यप्रतिभया वचनाभाव इति भावः । किंभूतायाः । एतद्रामशिरो निर्वर्ण्य निरीक्ष्य काङ्क्षन्त्याः, तदुभयमर्थादिच्छन्त्याः । आत्मा कीदृक् । रामशिरोभिमुखस्थितः सन्नवसीदन्निःसहो भवन्, अथ च निःसंज्ञः । यद्वा—ततोऽभिमुखस्थितत्वेनावसीदन्नत एव निषण्णस्तत्रैव स्थितः समीपगमनसामर्थ्याभावादिति भावः ॥

पुनरप्यावेगात्पतितेत्याह—

णवरि अ पसारिअङ्गी रअभरिउप्पहपइण्णवेणीबन्धा ।
पडिआ उरसंदाणिअमहीअलचक्कलिअत्थणी जणअसुता ॥ ६८ ॥

[अनन्तरं च प्रसारिताङ्गी रजोभृतोत्पथप्रकीर्णवेणीबन्धा ।
पतितोरःसंदानितमहीतलचक्रीकृतस्तनी जनकसुता ॥]

निर्वचनानन्तरं च जनकसुता पतिता 'भूमौ' इत्यर्थात् । भूमावपि निपत्यात्मानं व्यापादयामीत्याशयात् । किंभूता । प्रसारितमङ्गं यया तादृशी । क्वचिद्प्यङ्गे मृत्युहेतुरभिघातो जायतामितीच्छयेति भावः । एवं रजोभृतो धूलिपूर्ण उत्पथप्रकीर्णः पृष्ठमपहाय यत्र कुत्रचिद्विपर्यस्तो वेणीबन्धो यस्याः । एवम् उरःसंदानितेनाधोमुखपतनादुरसावष्टब्धेन महीतलेन चक्रितौ यन्त्रणावशाच्चक्रवन्मण्डलाकृतीकृतौ स्तनौ यस्याः सा । एतेन स्तनयोरुन्नतकठिनत्वमुक्तम् ॥

स्तनजघनोन्नतिमाह—

सव्वङ्गणिसण्णाअ वि णीसेसक्खविअवलिविभङ्गणिराओ ।
तीए मज्झपएसो थणजहणकरालिओ ण पावइ वसुहम् ॥ ६९ ॥

[सर्वाङ्गनिषण्णाया अपि निःशेषक्षपितवलीविभङ्गनिरायतः ।
तस्या मध्यप्रदेशः स्तनजघनकरालितो न प्राप्नोति वसुधाम् ॥]

भूमावधोमुखीभूय सर्वाङ्गेण निषण्णाया अपि तस्या मध्यप्रदेश उदरं स्तनजघनेन करालितः सान्तरालीकृतः सन् वसुधां न प्राप्नोति । स्तनयोर्जघनस्य चोन्नतत्वादुभयतोऽप्युत्तोल्य धृतत्वादवनीं न स्पृशतीत्यर्थः । अत एव करालितपदेनोदरस्यातिकृशत्वमुक्तम् । कीदृक् । निःशेषतः क्षपिता अपगता वलीविभङ्गा यस्य तथाभूतः सचिरायतो दीर्घः । दैर्घ्यादुभयतोऽप्याकर्षणात्रिवलिव्यपगम इत्यर्थः ॥

अथ चैतन्यसमकालमश्रुपातमाह—

सहसालोअविराअं दइअमुहे तम्मि साणुसअदट्ठव्वे ।
मोहं गन्तूण चिरं समअं बाहेण आगअं से हिअअम् ॥ ७० ॥

[सहसालोकविशीर्णे दयितमुखे तस्मिन्सानुशयद्रष्टव्ये ।
मोहं गत्वा चिरं समं बाष्पेणागतमस्या हृदयम् ॥]

अस्या हृदयं मनो बाष्पेणाश्रुणा सममागतमिति सहोक्तिः । द्वयमप्येकदाविर्भूतमित्यर्थः । किंभूतम् । अनुशयः पश्चात्तापः, तथा च सानुशयं द्रष्टव्ये वियोगेन रावणवधविलम्बेन च सक्रोधं द्रष्टव्यमित्यवधारिते तस्मिन् दयितस्य रामस्य मुखे सति यत्सहसा आलोको निकृत्तस्य तस्याकस्मिकदर्शनं तेन विशीर्णे व्यपगतम् । अत एव चिरं मोहमप्रतिपत्तिदशां गत्वा समागतमिति संबन्धः । तथा च पुनर्ज्ञानं वृत्तमिति भावः ॥

अथ शिरोदर्शनाय व्यापारमाह—

तो कह वि लद्धसण्णा बाहोवग्गिअकवोलअलसंदट्ठम् ।
मग्गइ संगोवेउं अलअं तीअ विहलो ण पावइ हत्थो ॥ ७१ ॥

[ततः कथमपि लब्धसंज्ञा बाष्पाक्रान्तकपोलतलसंदष्टम् ।
मार्गति संगोपयितुमलकं तस्या विह्वलो न प्राप्नोति हस्तः ॥]

ततो मनःसमागमोत्तरं कथमपि लब्धसंज्ञा प्राप्तचैतन्या सा बाष्पेणाक्रान्तयोः कपोलतलयोः संदष्टमश्रुसंबन्धाल्लग्नमलकं संगोपयितुं संगमयितुं मार्गति व्यापारं करोति । किंतु तस्या विह्वलो विपर्यस्तो हस्तो न प्राप्नोति । रामशिरोदर्शनाय दृष्टिव्यवधायकालकसंयमनाय व्यापारितोऽपि हस्तः शोकवशादस्वायत्त्यालकपर्यन्तमपि नोत्तिष्ठतीत्यर्थः ॥

अथ सीताया विह्वलतामाह—

आवेअसमुक्खित्तं तो से खेआगमोसिअन्तावत्तम् ।
पडिअं णिअउच्छङ्गे अप्पत्तं चिअ पओहरे करजुअलम् ॥ ७२ ॥

[आवेगसमुत्क्षिप्तं ततोऽस्याः खेदागमावसीददपवृत्तम् ।
पतितं निजोत्सङ्गेऽप्राप्तमेव पयोधरौ करयुगलम् ॥]

ततोऽलकासंवरणानन्तरमस्याः करयुगलमावेगेनोद्वेगेन समुत्क्षिप्तमुत्थापितं सत् पयोधरौ अप्राप्तमेव । अस्पृष्टस्तनमेवेत्यर्थः । निजोत्सङ्गे क्रोड एव पतितम् । कुत-स्तदाह—खेदागमेनावसीदत्पीडया विह्वलम्, अत एवापवृत्तं स्खलितम् । स्तन-तटं ताडयितुमभीप्सोरपि तस्याः खेदावसन्नतया करयुगं तावद्दूरमपि न गतम् । किंतु क्वचिदन्यत्रैव स्खलित्वा पतितमित्यर्थः ॥

अथ कटाक्षेण शिरोदर्शनमाह—

मूढहिअआइ दट्ठुं अचअन्तीअ समुहं कह वि रामसिरम् ।
तंसोणमन्तणीसहवअणच्छन्दवलिआणणाइ पुलइअम् ॥ ७३ ॥

[मूढहृदयया द्रष्टुमशक्नुवत्या संमुखं कथमपि रामशिरः ।
तिर्यगवनमन्निःसहवदनच्छन्दवलिताननया प्रलोकितम् ॥]

मूढहृदयया तया रामशिरः संमुखं द्रष्टुमपारयन्त्या सत्या कथमपि कष्टेन प्रलो-कितं दृष्टम् । दर्शनप्रकारमाह—किंभूतया । तिर्यग्विवृतं सङ्कुचितस्य तस्य दर्शन-सिद्ध्यर्थमवनमदवनम्रम्, अथ च निःसहं दौर्बल्येन हठाद्व्यापारयितुमयोग्यं यद्वदनं तस्य छन्देन वशेन वलिता वक्रीभूता अलका यस्यास्तया । यथा यथा शिरोदर्शनाय मुखं तिर्यक्कृत्वावनतं क्रियते तथा तथा विकीर्णा अलका अपि तिर्यगवनमन्तीत्यर्थः । तथा च दर्शने सति छेदकालीनरामदुःखज्ञानादर्शने सति निजोत्कण्ठावशादित्युभयथापि कष्टमिति मध्यवृत्त्या कटाक्षेण दृष्टमिति भावः । 'अभिप्रायवशौ छन्दौ' इत्यमरः ॥

अथ वक्षस्ताडनसहितं परिदेवनमाह—

परिदेविउं पउत्ता णिअअसरीरपडिमुक्कराहवदुक्खम् ।
करमग्गुट्ठिअसोणिअविवण्णउण्णअपओहरा जणअसुआ ॥ ७४ ॥

[परिदेवितुं प्रवृत्ता निजकशरीरप्रतिमुक्तराघवदुःखम् ।
करमार्गोत्थितशोणितविवर्णोन्नतपयोधरा जनकसुता ॥]

रामशिरोदर्शनानन्तरं जनकसुता परिदेवितुं विलपितुं प्रवृत्ता। निजकशरीरे प्रतिमुक्तं करप्रहारादिना संक्रमितं राघवदुःखं यत्रेति क्रियाविशेषणम्। किंभूता। करमार्गेण प्रहारद्वारा कररूपेण वर्त्मना। यद्वा—करप्रहारस्थानेनोत्थितं तेन विवर्णौ श्यामताम्रीकृतौ पयोधरौ यस्या इति मार्दवमुक्तम्॥

अथ दशभिः स्कन्धकैः परिदेवनवाक्यमाह—

आवाअभअअरं चिअ ण होइ दुक्खस्स दारुणं णिव्वहणम्।
जं महिलावीहत्थं दिट्ठं सहिअं च तुह मए अवसाणम्॥ ७५॥
[आपातभयंकरमेव न भवति दुःखस्य दारुणं निर्वहणम्।
यन्महिलाबीभत्सं दृष्टं सोढं च तव मयावसानम्॥]

आपात उपक्रम एव भयंकरम्। दुःखमित्यर्थात्। यद्वा—षष्ठीनिर्देशाद्दुःखस्यापातभयंकरत्वमेव। निर्वहणं तु पर्यवसानं तु दारुणं न भवतीति विज्ञायते। यद्धेतोर्महिलानां बीभत्सं स्त्रीणां निन्दाकरं तवावसानं मरणं मया दृष्टम्, अपि तु सोढं च। मरणरूपतदनुरूपव्यापाराभावात्। तथा च—एतस्य दर्शनमेवायोग्यम्। सहनं तु दूर एवेत्यहमारम्भे मूर्च्छिता परम्, न तु पर्यवसाने मृतेत्येकस्या मम निन्दया मत्सजातीयानां सर्वासामेव महिलानां मत्कृत्या निन्दाभूदिति भावः॥

बाहुह्नं तुज्झ उरे जं मोच्छिहिमि त्ति संठिअं मह हिअए।
घरणिग्गमणपअत्तं साहसु तं कम्मि णिव्वविज्जउ दुक्खम्॥ ७६॥
[बाष्पोष्णं तवोरसि यन्मोक्ष्यामीति संस्थितं मम हृदये।
गृहनिर्गमनप्रवृत्तं शाधि तत्कस्मिन्निर्वाप्यतां दुःखम्॥]

गृहनिर्गमनात्प्रभृति प्रवृत्तं बाष्पेणोष्णम्, उष्णबाष्पं वा दुःखं तवोरसि मोक्ष्यामि त्वामुपलभ्य रावणवधे सति त्वयि निवेद्य वा शमयितव्यमिति यन्मम हृदये संस्थितमवधारितम्, तच्छाधि कथय कस्मिन्निर्वाप्यतां कस्य द्वारा शान्तिं नीयताम्। त्वय्यपगते स्थानाभावादिति संप्रदायः॥ मम तु व्याख्या—गृहनिर्गमनप्रवृत्तं दुःखं बाष्पेणोष्णं सत्तवोरसि मोक्ष्यामि तवोरसि रुदित्वा त्यक्ष्यामि रोदनेनैव तज्ज्ञापनात्। अन्यत्समानम्। शोकजत्वेन बाष्पस्योष्णतया दुःखस्याप्युष्णत्वमिति मन्तव्यम्॥

विरहम्मि तुज्झ धरिअं दच्छामि तुमं त्ति जीविअं कह वि मए ।
तं एस मए दिट्ठो फलिआ वि मणोरहा ण पूरेन्ति महम् ॥७७॥

[विरहे तव धृतं द्रक्ष्यामि त्वामिति जीवितं कथमपि मया ।
तदेष मया दृष्टः फलिता अपि मनोरथा न पूर्यन्ते मम ॥]

त्वां कदाचिदपि द्रक्ष्यामीति प्रत्याशया तव विरहे मया कथमपि जीवितं धृतम् । तदेष मृतस्त्वं दृष्टोऽसि । अतः फलिता अपि मनोरथा मम न पूर्यन्ते । त्वद्दर्शनं जातमिति फलिताः, मृतो दृष्टोऽसीति न पूर्यन्ते । संभाषणाद्यभावादिति भावः । यद्वा—'न पूरयन्ति महम्' दृष्टोऽसीति फलिता अपि महमुत्सवं न पूरयन्ति । मरणदर्शनादिति भावः ॥

पुहवीअ होहिइ पई बहुपुरिसविसेसचञ्चला राअसिरी ।
कह ता महं च्चिअ इमं णीसामण्णं उअत्थिअं वेहव्वम् ॥ ७८ ॥

[पृथिव्या भविष्यति पतिर्बहुपुरुषविशेषचञ्चला राजश्रीः ।
कथं तावन्ममैवेदं निःसामान्यमुपस्थितं वैधव्यम् ॥]

पृथिवी, राजलक्ष्मीः, अहं च तव तिस्रः पत्न्यः; तत्र त्वद्विगमे पृथिव्याः पतिर्भविष्यति । य एव राजा भवेत्स एव तस्याः पतिरित्याशयः । तथा—बहुषु पुरुषविशेषेषु चञ्चला राजश्रीः, अतः सापि राज्ञो लक्ष्मीरिति पृथिव्यनुगामिनी राजानमेव यास्यति । तावदित्यवधारणे । ममैव कथं निःसामान्यमेतदुभयापेक्षयासाधारणमिदं वैधव्यमुपस्थितम् । तथा चासत्यौ ते भवत्पारोक्ष्यमेवेच्छतः । कुलस्त्रिया मम परं गतिरन्या नास्तीति मया मर्तव्यमेवेति भावः ॥

किं एअ त्ति पलत्तं विसउम्मिल्लेहि लोअणेहि अ दिट्ठम् ।
विअलिअलज्जाइ मए होइ फुडं णाह तुह मुहं ति परुण्णम् ७९

[किमेतदिति प्रलपितं विषमोन्मीलिताभ्यां लोचनाभ्यां च दृष्टम् ।
विगलितलज्जया मया भवति स्फुटं नाथ तव मुखमिति प्ररुदितम् ॥]

दूरादेव शिरोदर्शनानन्तरं मया किमेतदिति प्रलपितमनर्थकमुक्तम्, विशिष्य ज्ञानाभावात् । अथ संनिधानाच्छिर इति निर्णीते भवदीयत्वशङ्कया विषमं यथा स्यादेवमुन्मीलिताभ्याम् । यद्वा—जिज्ञासावशाद्विशदमुन्मीलिताभ्यां विकासिभ्यां लोचनाभ्यां दृष्टम् । एतत्संभवेदपि । हे नाथ, संप्रति विशेषदर्शनात् स्फुटं तव

मुखं भवतीति ज्ञाते विगलितलज्जया मया प्ररुदितम्। यद्वा—स्फुटं तव मुखमिति ज्ञाते निर्लज्जया मया प्ररुदितं भवतीत्यन्वयः। तथा च—निर्णयानन्तरमपि यन्न मृतमिदं न संभवतीति निर्लज्जत्वमिति भावः॥

सहिओ तुज्झ विओओ रअणिअरिहि समअं सहीहि व वुत्थम्।
दट्ठुं तुमं ति होन्तं जइ एत्ताहे वि जीविअं विअलन्तम्॥ ८०॥
[सोढस्तव वियोगो रजनीचरीभिः समकं सखीभिरिव व्युषितम्।
द्रष्टुं त्वामिति भवद्यदीदानीमपि जीवितं विगलत्॥]

तव विश्लेषः सोढः, तथा च प्रथमं तदेवाशक्यम्। तदुपरि यथा सखीभिः सह स्थीयते तथा रजनीचरीभिः समं व्युषितमिति ततोऽप्यशक्यमित्येतद्द्वयं त्वां द्रष्टुं कृतमिति तदा भवदभविष्यत्। लृङर्थे शतृ वक्तव्यः। यदीदानीमपि त्वद्विपर्ययज्ञानानन्तरमपि जीवितं विगलद्व्यगलिष्यत्। तथाच तदानीमेव मया मृतं स्यात्, तथासति भवद्दर्शनं न भविष्यतीति न मृतमिति वक्तुं तदा शक्येत यदि संप्रति त्वद्दर्शनसंभावनाविरहे म्रियेत, न चैतत्संपद्यते। तदा केवलं प्राणरक्षायै तत्कृतमिति पर्यवसन्नमिति भावः॥

जाए परलोअगए तुमम्मि ववसाअमत्तसुहदट्ठवे।
हरिसट्ठाणे वि महं डज्झइ अदिट्ठदहमुहवहं हिअअम्॥ ८१॥
[जाते परलोकगते त्वयि व्यवसायमात्रसुखद्रष्टव्ये।
हर्षस्थानेऽपि मम दह्यतेऽदृष्टदशमुखवधं हृदयम्॥]

परलोकगते त्वयि व्यवसायमात्रेणानुमरणादिना सुखद्रष्टव्ये जाते सति हर्षस्थानेऽपि भवद्दर्शने संप्रति ममापत्तिर्जातेत्यानन्दस्थानेऽपि न दृष्टो दशमुखवधो येन तथाभूतं मम हृदयं दह्यते भवदपकर्ता हतो न दृष्ट इत्येव परं विषादबीजमिति वीरपत्नीत्वमुक्तम्॥

वाहं ण धरेइ मुहं आसाबन्धो वि मे ण रुम्भइ हिअअम्।
णवरि अ चिन्तिजन्ते ण विणज्जइ केण जीविअं संरुद्धम्॥८२॥
[बाष्पं न धारयति मुखमाशाबन्धोऽपि मे न रुणद्धि हृदयम्।
अनन्तरं च चिन्त्यमाने न विज्ञायते केन जीवितं संरुद्धम्॥]

मम मुखं कर्तृ बाष्पं न धारयति न प्रतिबध्नाति निलं प्रवहद्रूपत्वात् । एवम्— आशाबन्धोऽपि रामदर्शनमनोरथोऽपि हृदयं न रुणद्धि न संकोचयति नित्यमुपचीयमानत्वात् । यद्वा—संप्रति पुनर्दर्शनशङ्काविरहेण स्वस्माद्बहिर्भवदपि मनो न स्वास्पदीकरोति । अनन्तरं चिन्त्यमाने विचार्यमाणे सति न विज्ञायते जीवितं केन संरुद्धम् । तथा च बाष्पहृदयजीवितानामभ्यन्तरमेकमेव स्थानं तत्र तदुभयोरवरोधः केनापि न क्रियते जीवितस्यैव परं क्रियत इति विधिना किमपरं दर्शनीयास्तीति भावः ॥ केचित्तु—मुखं बाष्पं न धारयति । अश्रु विनैव रोदनम् । रामदर्शनप्रत्याशापि नास्तीत्युभयं मरणलक्षणम्, तथापि यत्र म्रिये तन्न जानामि जीवितं केन रुद्धमित्यर्थमाहुः ॥

**वोलीणो मअरहरो मज्झ कएण मरणं पि दे पडिवण्णम् ।**
**णिव्वूढं णाह तुमे अज्ज वि धरइ अकअण्णुअं मह हिअअम् ॥८३॥**

[व्यतिक्रान्तो मकरगृहो मम कृतेन मरणमपि ते प्रतिपन्नम् ।
निर्व्यूढं नाथ त्वयाद्यापि ध्रियतेऽकृतज्ञं मम हृदयम् ॥]

ते त्वया मम कृतेन कारणेन मकरगृहः समुद्रो व्यतिक्रान्तो लङ्घितः । किमपरम् । मरणमपि प्रतिपन्नं स्वीकृतम् । हे नाथ, अतस्त्वया निर्व्यूढं निस्तीर्णमद्यापीदृशत्वव्यापारोत्तरमपि मम हृदयमकृतज्ञं यतः, ततो ध्रियते तिष्ठति । स्थातुं न युक्तमित्यर्थः । 'धृङ् अवस्थाने' धातुः । तथा च—अतः परमस्यानुमर्तुमुचितम्, तन्न करोति चेत्तदा यत्त्वया कृतम्, तन्न जानातीत्यकृतज्ञत्वमिति भावः ॥

**उग्गाहिइ राम तुमं गुणे गणेऊण पुरिसमइओ त्ति जणो ।**
**गलिधमहिलासहावं संभरिऊण अ ममं णिअत्तिहिइ कहम् ॥८४॥**

[उद्गास्यति राम त्वां गुणान्गणयित्वा पौरुषमय इति जनः ।
गलितमहिलास्वभावां संस्मृत्य च मां निवर्तयिष्यति कथाम् ॥]

हे राम, जनस्ते गुणाञ्शौर्यादीन्गणयित्वा त्वां पौरुषमय इति कृत्वोद्गास्यति स्तोष्यति । उद्गाहयिष्यत्युदाहरिष्यतीति वा । तत्रैव गलितो महिलायाः स्वभावः पत्यनुमरणादिर्यस्यास्तथाविधां मां संस्मृत्य कथामेव निवर्तयिष्यति । ममासच्चरितताया नामापि न ग्राह्यमिति त्यक्ष्यतीत्यर्थः । यद्वा—कथां निवर्तयिष्यति सत्पुरुषेषु त्वाम्, असच्चरितासु मामुदाहृत्य कथां संपादयिष्यतीत्यर्थः । 'महं' इति पाठे मम गलितं महिलास्वभावं संस्मृत्येत्यन्वयः ॥

तुह वाणुक्खअणिहअं दच्छिम्मि दहकण्ठमुहणिहाअं ति कआ ।
मह भाअवेअवलिआ विवराहुत्ता मणोरहा पल्हत्था ॥ ८५ ॥

[तव बाणोत्खातनिहतं द्रक्ष्यामि दशकण्ठमुखनिघातमिति कृताः ।
मम भागधेयवलिता विपराङ्मुखा मनोरथाः पर्यस्ताः ॥]

तव बाणेनोत्खातमुत्खण्डितमत एव निहतं निपातितं दशकण्ठस्य मुखनिघातं द्रक्ष्यामीति कृता मम मनोरथा भागधेयेन दुरदृष्टेन वलिताः प्रतिहताः । अत एव विपराङ्मुखा विपरीताः सन्तः पर्यस्ता विशीर्णाः । रामशरलूनं रावणशिरो द्रष्टव्यमेव रूपतायां रावणशरलूनं रामशिरो दृष्टमतो वैपरीत्यमिति भावः ॥

जं तणुअम्मि वि विरहे पेमाबन्धेण सङ्कइ जणस्स जणो ।
तं जाअं णवर इमं पेच्छन्तीए अ तारिसं मज्झ फलम् ॥ ८६॥

[यत्तनुकेऽपि विरहे प्रेमाबन्धेन शङ्कते जनस्य जनः ।
तज्जातं केवलमिदं पश्यन्त्याश्च तादृशं मम फलम् ॥]

जनोऽल्पेऽपि विरहे प्रेमाबन्धेन स्नेहवशेन जनस्य यच्छङ्कते तत्तादृशं फलमिदं शिरः पश्यन्त्याः केवलं ममैव जातम् । तथा च विश्लेषेणादर्शनाज्जनो जनस्य मरणमाशङ्कते तदा शङ्कामात्रं मम । लूनशिरोदर्शनेन प्रत्यक्षमेव तज्जातमिति भावः ॥

अथ सीतां प्रति समाश्वासनपरं त्रिजटावाक्यं प्रस्तौति—

तो विलविआणिप्फन्दं गलन्तहिअअपरिसुण्णलोअणजुअलम् ।
महुरं आसासन्ती हत्थुण्णामिअमुही भणइ णं तिअडा ॥ ८७ ॥

[ततो विलपितनिस्पन्दां गलद्धृदयपरिशून्यलोचनयुगलाम् ।
मधुरमाश्वासयन्ती हस्तोन्नामितमुखीं भणत्येनां त्रिजटा ॥]

ततस्तत्परिदेवनोत्तरं हस्तेनोन्नामितं मुखं यया । सीताया इत्यर्थात् । एवंभूता त्रिजटा मधुरं प्रियं यथा स्यादेवमाश्वासयन्ती सती एनां सीतां भणति । किंभूताम् । विलपितेन निस्पन्दाम् । एवं स्थानाद्भ्रश्यता हृदयेन परिशून्यं विषयाग्राहकं लोचनयुगलं यस्यास्ताम् ॥

अथ द्वादशभिस्त्रिजटावाक्यस्वरूपमाह—

अवरिगलिओ विसाओ अखण्डिआ मुद्धआ ण प्रेच्छइ पेम्मम् ।
मूढो जुवइसहाओ तिमिराहि वि दिणअरस्स चिन्तेइ भअम् ॥८८॥

[अपरिगलितो विषादोऽखण्डिता मुग्धता न प्रेक्षते प्रेम ।
मूढो युवतिस्वभावस्तिमिरादपि दिनकरस्य चिन्तयति भयम् ॥]

अपरिगलितः पूर्णो विषादः, अक्षुण्णा मुग्धता, प्रेम च, त्रयमपि न प्रेक्षते। वस्तुविचारक्षमं न भवतीत्यर्थः । एतानि यथा, तथा युवतिस्वभावोऽपि मूढो न पश्यति । विचारक्षमो नेत्यर्थः । यतस्तिमिरादपि नाश्यान्नाशकस्यापि दिनकरस्य भयं चिन्तयति । तथा च विषादादिसत्त्वं विचारविरोधीति तच्चतुष्टयवती भवती तिमिरादिव रावणाद्दिनकरस्येव रामस्य भयं चिन्तयति शङ्कते । इदं तु शङ्कास्पदमपि नेति भावः । केचित्तु—पूर्वार्धं पूर्ववद्व्याख्याय विषादादिवस्तुत्रयस्वरूपो युवतिस्वभावो मूढोऽज्ञः । यतस्तिमिरादपि—इत्यादिव्याख्यानमाहुः । 'अवरिगणिओ' इति पाठे अपरिगणितः । 'अपण्डिआ' इति पाठे अपण्डिता प्रज्ञाशून्येत्यर्थः ॥

तिहुअणमूलाहारं विसढमहिन्दपडिमुक्कवूढरणधुरम् ।
जाणन्ती कीस तुमं तुलेसि सेसपुरिसाणुमाणेण पइम् ॥ ८९ ॥

[त्रिभुवनमूलाधारं विह्वलमहेन्द्रप्रतिमुक्तव्यूढरणधुरम् ।
जानती किमिति त्वं तुलयसि शेषपुरुषानुमानेन पतिम् ॥]

हे जानकि, पतिं राममेतादृशं जानती त्वं शेषपुरुषाणां प्राकृतजनानामनुमानेन मनुष्यत्वादिसाधर्म्येण किं तुलयसि सदृशीकरोषि । कीदृशम् । त्रिभुवनानां मूलस्य कारणस्याधारमाश्रयम् । कारणमित्यर्थः । तेन जगत्स्रष्टारम् । तथा हिरण्याक्षतः पराजयाद्विह्वलेन महेन्द्रेण प्रतिमुक्ता त्यक्ता अथ स्वयं विष्णुरूपेण व्यूढा धृता रणधुरा येन तम् । तथा च हिरण्याक्षवधात्त्रयीमार्गरक्षया स्थितिकर्तारमित्युत्पत्तिस्थितिहेतुतया प्रलयहेतुमपीति नारायणरूपोऽयमिति साधारणजनवत्कस्यापि वध्य इति मा बुध्यस्वेति भावः ॥

अमिलिअसाअरसलिला अणहट्ठिअमहिहरा अणुब्बत्तअला ।
रामस्स छिण्णपडिअं कह पत्तिअसि धरणी धरेइ त्ति सिरम् ॥९०॥

[अमिलितसागरसलिला अनघस्थितमहीधरानुद्वृत्ततला ।
रामस्य छिन्नपतितं कथं प्रत्येषि धरणी धारयतीति शिरः ॥]

अमिलितानि न परस्परमेकीभूतानि सागराणां सलिलानि यत्र । एवम् अनघा अविशीर्णाः स्थिता महीधरा यत्र । तथा अनुद्वृत्तमुपरि नागतं तलमधोभागो यस्यास्तथाभूता धरणी छिन्नं सत्पतितं रामशिरो धारयतीति कथं प्रत्येषि । तथा च यदि सत्यं रामशिरःपतनं स्यात्, तदा सागरमिलनादिरूपा प्रलयादस्योत्पातावस्था वा भवेदिखेतदभावादिदमप्यसत्यं मन्यस्वेति भावः । वयं तु यदि रामशिरःपतनं सत्यं स्यात्तदा त्वन्मातृत्वेन त्वमिव धरण्यपि व्याकुला भवेदिति सागरमिलनादिकं स्यात्, अतो मायेयमिति मत्वा सुस्था भवेति भावमुत्पश्यामः । रामस्य पतने तत्कार्यस्य त्रिभुवनस्य पतनं स्यादेवेति केचित् । तथा च रामजीवनमर्थापत्त्या निर्णीतमित्यवधेयम् ॥

मारुअमोडिअविडवं मिअङ्ककिरणपडिमासमाउलिअकमलम् ।
कह होइ रामवडने इअ णिच्छाअं दसाणणघरुज्जाणम् ॥ ९१ ॥
[मारुतमोटितविटपं मृगाङ्ककिरणप्रतिमर्षमुकुलितकमलम् ।
कथं भवति रामपतने इति निच्छायं दशाननगृहोद्यानम् ॥]

रामपतने सति इत्यनेन प्रकारेण दशाननगृहोद्यानं कथं निच्छायं कान्तिशून्यं भवति । प्रकारमाह—कीदृशम् । मारुतेन मोटितं विटपं यत्र । एवं मृगाङ्ककिरणानां प्रतिमर्षात्संस्पर्शान्मुकुलितं कमलं यत्र तथा । तथा च रामपतनं यदि सत्यं स्यात्, तदा मारुतेन शाखाभङ्गश्चन्द्रेण कमलसंकोचः कर्तुं किं शक्येत । भवति च तथा । तज्जानीहि रामप्रतापो जागरूक इति भावः ॥

मा रुअसु पुससु वाहं उअऊहेऊण अंसपरिअत्तमुहम् ।
संभरिअ विरहदुक्खं रोत्तव्वं दे पुणो पइस्स वि अङ्के ॥ ९२ ॥
[मा रोदीः प्रोञ्छ बाष्पमुपगूह्यांसपरिवृत्तमुखम् ।
संस्मृत्य विरहदुःखं रुदितव्यं ते पुनः पत्युरप्यङ्के ॥]

त्वं मा रोदीः, बाष्पं प्रोञ्छ, स्वस्य पत्युर्वा अंसे परिवृत्तं तिर्यग्भूतं मुखं यत्र तद्यथा स्यादेवमुपगूह्यालिङ्ग्य । पतिमित्यर्थात् । विरहदुःखं च स्मृत्वा ते त्वया पुनरपि पत्युरङ्के रोदितव्यं विश्लेषदुःखानन्तरं मिलने बन्धवो बन्धुमालिङ्ग्य रुदन्तीति तत्रापि पुनर्मिलनं रोदनं च स्यादित्यस्थाने नामङ्गलमाचरेति भावः ॥

**अइरा अ दच्छिहि तुमं तुह विरहोलुग्गपण्डुरं मुहच्छाअम् ।**
**गअरोससुहालोअं ओआरिअवावणिव्वुअं दासरहिम् ॥ ९३ ॥**

[अचिराच्च द्रक्ष्यसि त्वं तव विरहावरुग्णपाण्डुरमुखच्छायम् ।
गतरोषसुखालोकसवतारितचापनिर्वृतं दाशरथिम् ॥]

अचिराच्च त्वं दाशरथिं द्रक्ष्यसि । कीदृशम् । तव विरहेणावरुग्णा दुर्बला अथ च पाण्डुरा मुखच्छाया यस्य तम् । एवं रावणवधेन गतरोषत्वात्सुखदृश्यम् । तथा कृतकार्यत्वादवतारितेन हस्तादपसारितेन चापेन निर्वृतं सुखितम् । व्यग्रताविरहादिति भावः ॥

**पत्तिहि अमरिसभरिअं हरेण वि अपत्थणिज्जकण्ठच्छेअम् ।**
**फुट्टन्तं जइ होन्तं छिण्णं वि कअग्गहुग्गअं रामसिरम् ॥ ९४ ॥**

[प्रतीह्यमर्षभरितं हरेणाप्यप्रार्थनीयकण्ठच्छेदम् ।
स्फुटद्यदि भवच्छिन्नमपि कचग्रहोद्गतं रामशिरः ॥]

प्रतीहि । इदं यदि च्छिन्नमपि रामशिरो भवदभविष्यत्, तदा कचग्रहेणोद्गतमुत्थापितं सत् स्फुटदस्फुटिष्यत् । तिरस्कृतत्वादिति भावः । कीदृक् । अमर्षेण भृतं पूर्णम् । यतोऽन्यदन्तः पूर्णं स्फुटत्येवेति ध्वनिः । एवं रावणोपजीव्येन हरेणाप्यप्रार्थनीयो वक्तुमप्यशक्यः कण्ठच्छेदो यस्य तत् । अतोऽप्यलीकमिदमिति भावः । लृङर्थे शतृ प्रत्ययः । 'प्रार्थितः शत्रुसंरुद्धे याचितेऽभिहितेऽपि च'॥

**किं ति समाससिअव्वे मुज्झसि दहवअणदप्पभङ्गुप्फालम् ।**
**पेच्छन्ती पमअवणं रामाणत्तिअरपवअआविद्धदुमम् ॥ ९५ ॥**

[किमिति समाश्वसितव्ये मुह्यसि दशवदनदर्पभङ्गोत्फालम् ।
पश्यन्ती प्रमदवनं रामाज्ञप्तिकरप्लवगाविद्धद्रुमम् ॥]

दशवदनस्य यो दर्पभङ्गस्तदुत्फालं तत्सूचकं प्रमदवनं पश्यन्ती त्वं समाश्वसितव्ये हर्षस्थाने किमिति मुह्यसि रामशिरः शङ्कित्वा विषीदसि । दर्पभङ्गसूचकतामाह—रामाज्ञप्तिकरेण हनूमता आविद्धाः पातिता द्रुमा यत्र तत् । तथा च तदानीमेकेनैव प्लवगेन वाटिकाभङ्गलङ्कादाहाक्षमारणादिशूरकर्म निष्प्रत्यूहमाचरितम्, इदानीं तादृशकोटिकोटिप्लवगसमेतयो रामलक्ष्मणयोः का वार्तेति भावः ॥

णिहउक्खअसुरलोअं दरिअणिसाअरणिहाअपल्हत्थन्तम् ।
कहं तेण खणं वि विना धरेइ जस्स भुअणं भुअववट्ठम्भम् ९६
[निहतोत्खातसुरलोकं दृप्तनिशाचरनिघातपर्यस्यमानम् ।
कथं तेन क्षणमपि विना ध्रियते यस्य भुवनं भुजव्यवष्टम्भम् ॥]

भुजौ व्यवष्टम्भ आश्रयो यस्य तद्भुजव्यवष्टम्भम् । तथा च निहतः समुत्खातः स्थानान्तरं प्रापितः सुरलोको यत्र तत् । एवं दृप्तेन निशाचराणां निघातेन पर्यस्यमानं व्याकुलीक्रियमाणं भुवनं विनश्वरमपि यस्य भुजव्यवष्टम्भम् । यद्भुजावाश्रित्य विद्यमानम् । तेन रामेण विना क्षणमपि कथं ध्रियते तिष्ठति । नह्याश्रये भग्ने सत्याश्रितं तिष्ठतीत्यर्थापत्त्यापि ज्ञायते रामो जीवतीति भावः ॥

तह तं सि गआ मोहं मुच्छागअपडिअणीसहविसण्णङ्गी ।
रक्खसमाएति फुडं जाणन्ती जइ इमं अहं वि विसण्णा ॥९७॥
[तथा त्वमसि गता मोहं मूर्च्छागतपतितनिःसहविषण्णाङ्गी ।
राक्षसमायेति स्फुटं जानती यथेयमहमपि विषण्णा ॥]

हे सीते, मूर्च्छाप्राप्तम् अत एव पतितं सन्निःसहं निश्चेष्टं विषण्णमवसन्नं ['निसण्णाङ्गी' इति पाठे निषण्णम्] अङ्गं यस्यास्तादृशी त्वं तथानिर्वचनीयं मोहं गतासि, यथा इयं राक्षसमाया न तु शिर इति स्फुटं जानती अहमपि विषण्णा । शिरोदर्शनेन मम विषादो नाभूत्, किं तु त्वद्विषादेन सत्यमेवैतत्स्यादिति भ्रान्त्या विषादो जात इति भावः ॥

मिलितणिसाअरपुरओ सुवेलमलअन्तरालणिम्मविअवहे ।
पेल्लिअतिऊडसिहरे अज्ज वि किं तुज्झ राहवे अग्गहणम् ॥९८॥
[मिलितनिशाचरपुरतः सुवेलमलयान्तरालनिर्मापितपथे ।
प्रेरितत्रिकूटशिखरेऽद्यापि किं तव राघवेऽग्रहणम् ॥]

मिलितानां विभीषणादीनां शत्रुसमागमादेकीभूतानामिन्द्रजित्प्रभृतीनां वा निशाचराणां पुरतः सुवेलमलययोरन्तराले निर्मितः सेतुपथो येन तथाभूते । तदनु प्रेरितान्यान्दोलितानि त्रिकूटस्य सुवेलस्य शिखराणि येन तादृशि राघवे । अद्यापि तद्व्यापारप्रत्यक्षानन्तरमपि । यद्वा—निशाचरैरप्रतिरोधेऽपि । किं प्रश्ने विस्मये वा । तव । अग्रहणमनादरः । यत्तस्मिन्नप्येवं संभावयसीति भावः । 'ग्रहणं त्रयमिच्छन्ति ज्ञानमादानमादरम् ॥'

मलिआ मलअणिअम्बा थले व्व चङ्कम्मिअं महोअहिसलिले ।
वुत्थं सुवेलसिहरे अज्ज वि किं तुज्ज राहवे अग्गहणम् ॥ ९९ ॥

[मर्दिता मलयनितम्बा स्थल इव चङ्कमितं महोदधिसलिले ।
व्युषितं सुवेलशिखरेऽद्यापि किं तव राघवेऽग्रहणम् ॥]

येन कपिद्वारा मलयनितंबा मर्दिताः, स्थले यथा संचारः क्रियते तथा महोदधिसलिलेऽपि कृतः । सेतुं कृत्वेत्यर्थात् । किमपरं सुवेलशिखरे व्युषितम् । अद्यापि किं तत्र राघवे तवाग्रहणम् । तथाच त्वमतिमूढा पुनरपि मैवं शङ्किष्ठा इति भावः ॥

अथ सीतायास्त्रिजटाहृदि पतनमाह—

तो अगहिओवएसा गओणिअत्तन्तजीविअमुहिज्जन्ती ।
तिअडाअ जणअतणआ सहिसब्भावसरिसं उरम्मि णिसण्णा १००

[ततोऽगृहीतोपदेशा गतापनिवर्तमानजीवितमुह्यन्ती ।
त्रिजटाया जनकतनया सखीसद्भावसदृशमुरसि निषण्णा ॥]

ततस्त्रिजटावचनोत्तरं जनकतनया सख्यां यः सद्भावः सौहार्दं तत्सदृशं तद्योग्यं यथा स्यादेवं त्रिजटाया उरसि निषण्णा । ईदृशविपत्तौ य एवानुकूलं वक्ति तत्रैवाङ्गसमर्पणं क्रियत इति भावः । किंभूता । अगृहीत इदमित्थमेवेत्यस्वीकृतस्त्रिजटाया उपदेशो यया । अत एव प्रथमं व्यतिरेकनिश्चयाद्गतेन पश्चात्त्रिजटावाचा संदेहादपनिवर्तमानेन परावृत्त्यागतेन जीवितेन मुह्यन्ती प्राणसंदेहे सति मोहोत्कर्षादिति भावः । केचित्तु पुनर्मोहात्पतन्ती तदुपरि निषण्णेति भावमाहुः ॥

अथ तदवस्थायां सीताया रोदनमाह—

लोअणवइअरलग्गं तंसणिसण्णाअ तीअ तिअडावच्छे ।
गलिअं कपोलपेल्लणपीडिज्जन्तालउग्गअं बाहजलम् ॥ १०१ ॥

[लोचनव्यतिकरलग्नं तिर्यङ्निषण्णायास्तस्यास्त्रिजटावक्षसि ।
गलितं कपोलप्रेरणपीड्यमानालकोद्गतं बाष्पजलम् ॥]

त्रिजटाया वक्षसि तिर्यङ्निषण्णायास्तस्या बाष्पजलं लोचनयोर्व्यतिकरेण संपर्केण । लग्नं सत् । वक्षसीत्यर्थात् । गलितं त्रिजटावक्षसि सांमुख्येनैव पतितत्वाल्लोचनसंबन्धादश्रुसंबन्ध इति भावः । किंभूतम् । कपोलेन यत्प्रेरणं तेन पीड्यमानालकेभ्य उद्गतं निःसृतं तिर्यङ्निषण्णत्वादश्रुणोरैक्यमिति भावः ॥

पुनश्चैतन्ये सति जल्पनमाह—

**तो जम्पिउं पउत्ता पुणो वि अत्थैक्कउट्ठिअसमूससिआ ।**
**उरघोलिरवेणीमुहथणलग्गुग्घुट्टमहिरआ जनअसुआ ॥ १०२ ॥**

[ततो जल्पितुं प्रवृत्ता पुनरप्यकस्मादुत्थितसमुच्छ्वसिता ।
उरोघूर्णनशीलवेणीमुखस्तनलग्नोद्घृष्टमहीरजा जनकसुता ॥]

ततोऽश्रुत्यागानन्तरं जनकसुता जल्पितुं प्रवृत्ता । अकस्मादुत्थितं समुच्छ्वसितं प्राणवायुर्यस्याः सा पुनरागतप्राणा सतीत्यर्थः । त्रिजटावक्षःस्थलादुत्थिता सती समुच्छ्वसिता कृतोच्छ्वासा इति वा । पुनः किंभूता । उरसि घूर्णमानेन वेणीमुखेनो-द्घृष्टमुत्प्रोञ्छितं स्तनलग्नं महीरजो यस्याः ॥

अथ चतुर्भिः पुनर्जल्पनस्वरूपमाह—

**साहसु ज च्चिअ पढमं दट्ठूण अहं इमं महिम्मि णिसण्णा ।**
**स च्चिअ मोहुम्मिल्ला पेच्छामि अ णं पुणो धरेमि अ जीअम् १०३**

[शाधि यैव प्रथमं दृष्ट्वाहमिदं मह्यां निषण्णा ।
सैव मोहोन्मीलिता पश्यामि चैतत्पुनर्धारयामि च जीवम् ॥]

हे त्रिजटे, शाधि कथय । इदं रामशिरो दृष्ट्वा प्रथमं यैवाहं मह्यां निषण्णा मूर्च्छितास्मीत्यर्थः । सैवाहं मोहे सत्युन्मीलिता पुनः प्राप्तचैतन्या सच्चेतच्छिरः पश्यामि च जीवं धारयामि च । तत्किं यया रामशिरो दृष्टं सान्या, या च मूर्च्छिता साप्यन्या, इदानीमहमप्यन्येति । ईदृगवस्थं यया रामशिरो दृष्टम्, सा जीवितुं न योग्येति धिङ्मां निष्ठुरहृदयां या प्रथमत एव न मृतास्मीति भावः ॥

**सहिआ रक्खसवसही दिट्ठं तुह णाह एरिसं अवसाणम् ।**
**अज्ज वि वअणिज्जहअं धूमाइ च्चिअ ण पज्जलइ मे हिअअम् १०४**

[सोढा राक्षसवसतिर्दृष्टं तव नाथ ईदृशमवसानम् ।
अद्यापि वचनीयहतं धूमायत एव न प्रज्वलति मे हृदयम् ॥]

हे नाथ, मयासह्यापि राक्षसवसतिस्त्वद्दर्शनप्रत्याशया सोढा । तत्रापि तवेदृश-मयोग्यमवसानं च दृष्टम् । एतत्ततोऽप्यशक्यमिति भावः । अद्याप्येतद्दर्शनोत्तरमपि वचनीयेन वाच्यतया हतं मम हृदयं धूमायत एव संतापेन मोहान्धकाराविष्टं सद्दुःखमेवानुभवति, न तु प्रज्वलति । तथा च ज्वलनपूर्वकालीना धूमायमानाव-

स्येति ज्वलिष्यत्यवश्यम् । किं तु राक्षसवासागमनकाल एव ज्वलितुं योग्यमवसान-दर्शनेऽपि न ज्वलतीति लोकानामपवादेन परास्तमित्यहमधन्येति भावः ॥

**पुरिससरिसं तुह इमं रक्खससरिसं कअं णिसाअरवइणा ।**
**कह ता चिन्तिअसुलहं महिलासरिसं ण संपडइ मे मरणम् १०५**

[पुरुषसदृशं तवेदं राक्षससदृशं कृतं निशाचरपतिना ।
कथं तावच्चिन्तितसुलभं महिलासदृशं न संपद्यते मे मरणम् ॥]

तव इदमवसानरूपं कर्म पुरुषाणां सदृशम् । पुंसा दारहरणे सति युद्धादिना तदुद्धारः कर्तव्यः, संमुखे वा मर्तव्यमिति योग्यमित्यर्थः । निशाचरपतिना च राक्षसानां सदृशं क्रूरं कर्म कृतम्, चोरिकया ममापहरणं कृतम्, भवानपि हत्वा ममोपदर्शितः । तद्योग्यमेवेति कथं तावन्महिलानां सदृशं चिन्तितेनेच्छया सुलभं मे मरणं न संपद्यते भर्तुरनुमरणं स्त्रीभिः क्रियत इति तद्योग्यम् । तथा च यस्य यद्योग्यम्, तेन तत्कृतम् । मया तु न कृतमित्यहमविश्वसनीयेति भावः ॥

**पवणसुअसिट्ठतुरिअं इह एन्तस्स अवलम्बिउं मह जीअम् ।**
**विरहलहुअं वि राहव मए जिअन्तीअ जीविअं तुज्झ हिअम् १०६**

[पवनसुतशिष्टत्वरितमिहागच्छतोऽवलम्बितुं मम जीवम् ।
विरहलघुकमपि राघव मया जीवन्त्या जीवितं तव हृतम् ॥]

सीता जीवतीति पवनसुतेन शिष्टे कथिते सति त्वरितं यथा भवत्येवं विरहेण लघुकमपि गत्वरमपि मम जीवमवलम्बितुं रक्षितुमिहागच्छतस्तव जीवितं जीवन्त्या मया हृतम् । यदि विरहात्तदैवामरिष्यम्, तदा मृतैवाहमिति ज्ञात्वा त्वमपि नागमिष्यः । तत्कथमिमामवस्थामासादयिष्य इति भावः ॥

अथ पुनरस्या मोहमाह—

**अलअन्धआरिअमुही समुहागअकण्ठभमिअवेणीबन्धा ।**
**मोहपडिवण्णहिअआ दरजम्पिअणीसहं पुणो वि णिसण्णा १०७**

[अलकान्धकारितमुखी संमुखागतकण्ठभ्रमितवेणीबन्धा ।
मोहप्रतिपन्नहृदया दरजल्पितनिःसहं पुनरपि निषण्णा ॥]

अलकैर्विकीर्णतया श्यामत्वेनान्धकारीकृतं मुखं यस्याः, तथा संमुखागतः सन्

कण्ठे भ्रमितो वेणीबन्धो यस्याः, इतस्ततः संचारात्। सा सीता मोहेन प्रतिपन्नमाक्रान्तं हृदयं यस्यास्तथा सती ईषज्जलिपतेनापि निःसहं कण्ठादिशोषादसामर्थ्यं यथा तथा निषण्णा पुनरपि मह्यां निपतितेत्यर्थः। निःसंज्ञा वासीदित्यर्थः॥

भूमौ पतनमेव स्फुटयति—

तो फुडिअवेणिबन्धणभङ्गुग्गअविसमकेसपल्हत्थरणे।
पडिआ रामोरत्थलसअणणिरासहिआ महिअलुच्छङ्गे॥१०८॥

[ततः स्फुटितवेणीबन्धनभङ्गोद्गतविषमकेशपर्यास्तरणे।
पतिता रामोरःस्थलशयननिराशहृदया महीतलोत्सङ्गे॥]

ततः किंचिद्विलापानन्तरं रामस्योरःस्थले यच्छयनं तत्र निराशं हृदयं यस्यास्तथा सती सीता महीतलस्योत्सङ्गे पतिता। एवंविधविपत्तौ पुत्र्यो मातुः क्रोड एव पतन्तीति भावः। किंभूते। स्फुटितस्य शिथिलत्वात्स्थानभ्रष्टस्य वेण्या बन्धनस्य बन्धनपाशस्य भङ्गेनापगमेनोद्गताः प्रसृताः, अत एव विषमा व्यस्ता ये केशास्त एव पर्यास्तरणं यत्र तत्र। केशानां तृणादिवदास्तरणीभावेन बाहुल्यमुक्तम्॥

पुनरपि शिरोदर्शनानुकूलव्यापारमाह—

तीअ णवपल्लवेण व पहराअम्बविहलेण हत्थेण मुहम्।
परिमज्जिउं ण चइअं एक्ककवोलमिलिआलअं कह वि कअम् १०९

[तया नवपल्लवेनेव प्रहाराताम्रविह्वलेन हस्तेन मुखम्।
परिमार्ष्टुं न शकितमेककपोलमिलितालकं कथमपि कृतम्॥]

नवपल्लवेनेव वक्षसः प्रहारादाताम्रेण अत एव विह्वलेन मार्जनाद्यसमर्थेन हस्तेन तया सीतया मुखं परिमार्ष्टुं न शकितम्। किंतु एकस्मिन्कपोले मिलिताः संवरणाद्वर्तुलीकृता अलका यत्र तादृशं कृतम्। तथा च मुखमार्जनाभावेऽपि मुखोपरि विकीर्णत्वेन शिरोदर्शनप्रतिबन्धकत्वादलकानां संवरणं क्रियमाणमेककपोल एव निष्पन्नं करस्य विह्वलत्वाद्दर्शनस्य तावताप्युपपत्तेः, अपरकपोले तु विकीर्णा एव ते स्थिता इत्यसामर्थ्यमुक्तम्॥

अथास्रुमार्जनमाह—

समुहमिलिअं वि जाहो रूअं वाहविहला ण गेह्णइ दिट्ठी।
ताहे कह कह वि कअं उहअकरुप्पुसिअलोअणं तीअ मुहम् ११०

[संमुखमिलितमपि यदा रूपं बाष्पविह्वला न गृह्णाति दृष्टिः ।
तदा कथं कथमपि कृतमुभयकरोत्प्रोच्छितलोचनं तस्या मुखम् ॥]

बाष्पैरश्रुभिर्विह्वला छन्ना दृष्टिः । तस्या इत्यर्थात् । संमुखमिलितमपि रूपं घटादिस्वरूपं यदा न गृह्णाति न विषयीकरोति तदा तया सीतया मुखं कथं कथमपि वक्षःप्रहारजन्यवैकल्ये सत्यप्युभयकरेणोत्प्रोच्छिते मार्जिताश्रुणी लोचने यत्र तथाभूतं कृतम् । शिरोदर्शनोत्कण्ठावशादिति भावः ॥

अथ पुनः शिरोदर्शनमाह—

**तो सा भमन्तमारुअविसमपइण्णालउप्पुसिअवाहजला ।**
**पेच्छइ राहववअणं णिसाअरोच्छुण्णमहिअलपहोलन्तम् ॥१११॥**

[ततः सा भ्रमन्मारुतविषमप्रकीर्णालकोत्प्रोच्छितबाष्पजला ।
प्रेक्षते राघववदनं निशाचरावक्षुण्णमहीतलप्रघूर्णमानम् ॥]

ततोऽश्रुमार्जनानन्तरं सा राघववदनं पश्यति । कीदृशी । भ्रमता मारुतेन बाह्येन श्वासरूपेण वा विषमं प्रकीर्णैरितस्ततश्चालितैरलकैरुत्प्रोच्छितानि मार्जितानि बाष्पजलानि यस्याः सा । वदनं कीदृक् । निशाचरैरवक्षुण्णं कृतं सन्महीतले प्रघूर्णमानं प्रलुठत् ॥

अथ पुनरपि रोदनमाह—

**लक्खिज्जन्तविसाआ अब्भहिउम्मिल्लणिच्चलट्ठिअणअणा ।**
**रामसिरबद्धलक्खा धुव्वइ वाहेण से ण रुम्भइ दिट्ठी ॥११२॥**

[लक्ष्यमाणविषादाभ्यधिकोन्मीलन्निश्चलस्थितनयना ।
रामशिरोबद्धलक्ष्या धाव्यते बाष्पेणास्या न रुध्यते दृष्टिः ॥]

रामशिरसि रामशिरोरूपं वा बद्धमनुबद्धं लक्ष्यं यया तादृश्यस्या दृष्टिर्बाष्पेण धाव्यते क्षाल्यते, न तु रुध्यते भ्रियते । बाष्पस्याविश्रान्तपतनादालोकनाप्रतीघातादिति भावः । किंभूता । लक्ष्यमाणो विषादो यस्याम् । एवम्—अभ्यधिकमुन्मीलिते तत्त्वजिज्ञासया सम्यग्विस्तारिते । अथ च—विस्मयान्निश्चलस्थिते नयने गोलके यस्याः । दृष्टिरेकैव, दर्शनं वा ॥

अथ तस्या दैन्यमाह—

तो तं दट्ठूण पुणो मरणेक्करसाइ वाहणीसारच्छम् ।
आउच्छसु मं ति कअं तिअडागअलोअणाइ दीणविहसिअम् ११३

[ततस्तद्दृष्ट्वा पुनर्मरणैकरसया बाष्पनिःसाराक्षम् ।
आपृच्छस्व मामिति कृतं त्रिजटागतलोचनया दीनविहसितम् ॥]

ततः पुनरश्रुमार्जनानन्तरं पुनस्तच्छिरो दृष्ट्वा त्रिजटायां गते उन्मुखे लोचने यस्यास्तथाभूतया तया मामापृच्छस्व संवद मरणकृतोद्यमां मामनुजानीहीति दीनं शोच्यं सकरुणं वा हास्यं कृतं बाष्पेण गलितत्वान्निःसारे अक्षिणी यत्र तद्यथा स्यादेवम् । किंभूतया । मरण एव एकस्मिन्नेको वा रसो यस्यास्तादृश्या । तथा च —राक्षसीमध्ये मरणमिति दैन्यम्, मृत्वा हठादेव रामो द्रष्टव्य इति हास्यम् । यद्वा लूनशिरोदर्शनोत्तरमियत्कालमेव जीवितासीत्यात्मनिन्दावशाद्दीनविहसितमिति भावः ॥

अथ त्रिजटां प्रत्यस्या वचनमाह—

सहिअम्मि रामविरहे दारुणहिअअप्पडिच्छिए वेहव्वे ।
सहसु गअणेहलहुअं मह णिल्लज्जमरणं इमं ति परुण्णा ॥ ११४ ॥

[सोढे रामविरहे दारुणहृदयप्रतीष्टे वैधव्ये ।
सहस्व गतस्नेहलघुकं मम निर्लज्जमरणमिदमिति प्ररुदिता ॥]

हे त्रिजटे, प्रथमं रामविरहे सोढे सत्यनन्तरं दारुणहृदयेन प्रतीष्टेऽङ्गीकृते वैधव्ये च सति गतो यः स्नेहस्तेन लघुकमनादरणीयम् । यत्र विरह एव मर्तुमुचितं तत्र वैधव्यमपि सोढवतीत्यहो निःस्नेहा दारुणा चेति दुर्वादविषयत्वादिति भावः । अत एव निर्लज्जमरणमिदं मम सहस्व क्षमस्व नोपहासविषयीकुर्या इत्युक्त्वा सीता पुनः प्ररुदिता । ममाप्येवमनक्षरं प्रसक्तमिति भावः ॥

पुनर्विलापमाह—

सव्वस्स अ एस गई ण उणो माणुण्णआण इममवसाणम् ।
अणुसरिसं ति भणन्ती आहन्तूण पडिआ थिरं थणअलसम् ११५

[सर्वस्य चैषा गतिर्न पुनर्मानोन्नतानामिदमवसानम् ।
अनुसदृशमिति भणन्ती आहत्य पतिता स्थिरं स्तनकलशम् ॥]

सर्वस्यैषा गतिः । उत्पत्त्यनन्तरं विनाशरूपेत्यर्थः । मानोन्नतानां पुनरिदमव-

सानम् । एवंरूपेण मरणं नानुसदृशं न योग्यमिति भणन्ती सीता स्तनकलशमाहत्य कराभ्यां प्रहृत्य स्थिरं पतिता । भूमावित्यर्थात् ॥ यद्वा सर्वस्य स्त्रीजनस्यैषा वैधव्यरूपा गतिः । मानोन्नतानां पुनरिदमवसानं न योग्यमित्यन्वयः । तथा च—प्रियस्य मरणेन स्वस्य वैधव्येन वा तथा न दुःखम् यथा भर्तुरसदृशमृत्युनेति भावः । एतेन मरणनिश्चयः सूचितः ॥

आत्मन्यवज्ञामाह—

तह जीवलज्जिआए विलवन्तीअ वि विसाअणीसहमउअम् ।
दासरहि त्ति पलन्तं पिओ त्ति सीआइ ण चइअं वाहत्तुम् ११६

[तथा जीवलज्जितया विलपन्त्यापि विषादनिःसहमृदुकम् ।
दाशरथिरिति प्रलपितं प्रिय इति सीतया न शकितं व्याहर्तुम् ॥]

तथा लूनशिरोदर्शनानन्तरमपि जीवो जीवितं तेन लज्जितया सीतया विषादेन निःसहमसामर्थ्यम् । अत एव मृदुकं लघु लघु यथा स्यादेवं विलपन्त्यापि सत्या रामसंबोधने 'दाशरथे' इति प्रभूताक्षरमपि प्रलपितम् । प्रियेत्यल्पाक्षरमपि व्याहर्तुं न शकितम् । निःसहप्रलापे सुखोच्चवर्णोच्चारणेऽस्य योग्यत्वेऽपि लूनशिरोदर्शनमात्रेणामृताया मम कुतः प्रियत्वमस्मिन्निति भावः । स्नेहनिबन्धनमरणशालित्वेन दशरथस्यौचितमपत्यमसीति विशिष्य तन्नामग्रहणे तात्पर्यम् ॥

अथ प्रलापे निवृत्तिमाह—

अणुसोइउं ण इच्छइ ण देइ अङ्कम्मि सा परम्मि पहारम् ।
वाहं मुअइ ण रुम्भइ मरिअव्वे लद्धपच्चअं से हिअअम् ॥११७॥

[अनुशोचितुं नेच्छति न ददात्यङ्गे सा परस्मिन्निव प्रहारम् ।
बाष्पं मुञ्चति न रुणद्धि मर्तव्ये लब्धप्रत्ययमस्या हृदयम् ॥]

सा सीतानुशोचनं कर्तुं नेच्छति कण्ठशोषात्, परस्मिन्निव शत्राविव अङ्गे प्रहारं न ददाति निःसहत्वात्, बाष्पं न मुञ्चति किं तु रुणद्धि बहुरोदनदुःस्थचक्षुःपीडाकरत्वात् शिरोदर्शनविलोपकत्वाच्च । तर्हि प्रणयस्य न्यूनत्वमतो हेतुमाह—अस्या हृदयं मनो मर्तव्ये लब्धप्रत्ययं यतो लब्धः प्रत्ययो निश्चयो येन तज्जातनिश्चयमित्यर्थः । तथा च मरणरूपसर्वाधिकव्यापारे दत्तभरत्वादिति भावः ॥

अथ त्रिजटायाः सान्त्वनवचनं प्रस्तौति—

तो तं मरणणिमित्ते अणिअत्तन्तहिअअं पअत्ता वत्तुम् ।
तिअडा धुअग्गकरअलदरपडिअपडिच्छिअङ्गविसमो अण्णम् ११८

[ततस्तां मरणनिमित्ते अनिवर्तमानहृदयां प्रवृत्ता वक्तुम् ।
त्रिजटा धुताग्रकरतलदरपतितप्रतीष्टाङ्गविषमावनताम् ॥]

ततः सीताया अनुशोचनादिनिवृत्त्यनन्तरं त्रिजटा तां सीतां वक्तुं प्रवृत्ता । कीदृशीम् । मरणनिमित्ते अनिवर्तमानं हृदयं यस्यास्ताम् । कृतमरणनिश्चयाम् । एवं धुताग्राभ्यां करतलाभ्यां किंचित्पतितं सत्प्रतीष्टमवलम्बितं यदङ्गं तेन विषमं व्यस्तं यथा स्यात्तथावनतां भूमिपतनादिरूपमरणव्यापाराविष्टसीतादेहस्य यथा यथा तत्प्रतिबन्धकत्रिजटाकरतलाभ्यां धारणम्, तथा तथा तत्त्याजनाय तदङ्गभङ्ग्या तदवनतत्वम् । अत एव त्रिजटाकरतलयोरपि सीताङ्गभङ्ग्या धुताग्रत्वमिति भावः ॥

त्रिजटावचनस्वरूपमाह—

जाणइ सिणेहभणिअं मा रअणिअरि त्ति मे जुउच्छसु वअणम् ।
उज्जाणम्मि वणम्मि अ जं सुरहिं तं लआण गेह्णइ कुसुमम् ११९

[जानकि स्नेहभणितं मा रजनीचरीति मे जुगुप्सस्व वचनम् ।
उद्याने वने च यत्सुरभि तल्लतानां गृह्यते कुसुमम् ॥]

हे जानकि, स्नेहेन भणितमुक्तम् । 'भरिअम्' इति पाठे भृतं पूर्णम् । मे वचनमहं रजनीचरीति मा जुगुप्सस्व मा गर्हय । अर्थान्तरन्यासमाह—उद्याने गृहारामे वनेऽरण्ये च लतानां यत्कुसुमं सुरभि तदेव गृह्यते । नोद्यानमिति बदरीविभीतकादीनां गृह्यते, न वा वनमिति सुगन्धिपाटलादीनां त्यज्यते । 'वणम्मि व' इति पाठे उद्याने वने वा बदरादीनामुपादानम्, बकुलादीनां चानुपादानम् । एवं न किंतु यत्र यत्सुरभि तत्र तदुपादीयते तदन्यत्त्यज्यत इति ग्रहणपरिहारयोरुद्यानवनादित्वमुपाधिर्न प्रयोजकः किं तु सौरभादिरितिवत्प्रकृतेऽपि वचनस्य प्रियत्वं विचार्यतां राक्षसीत्वमप्रयोजकमिति भावः ॥

अथ त्रिजटा स्वोक्तेर्निरुपाधित्वं व्यञ्जयति—

किमु जीअन्तीअ तुमे जइ अलिअं सहि ण होज्ज राहवमरणम् ।
अणहे उण रहुणाहे तुह मे मरणविहुरं किलिम्मइ हिअअम् १२०

[किमु जीवन्त्या त्वया यद्यलीकं सखि न भवेद्राघवमरणम् ।
अनघे पुना रघुनाथे तव मे मरणविधुरं क्लाम्यति हृदयम् ॥]

हे सखि, राघवमरणं यद्यलीकं मिथ्या न भवेत्तदा त्वया जीवन्त्या किमु । किं प्रयोजनमित्यर्थः । तर्हि तव मरणमेव श्रेष्ठमिति भावः ॥ यद्वा—यद्येतन्नालीकं तदा त्वया जीवन्त्या किमु होज्ञ किं भूयत इत्यर्थः । तदा त्वयापि मृतमेव स्याद्युवयोरेकजीवत्वात् । तथा च त्वज्जीवितमेव तज्जीवने प्रमाणमिति भावः ॥ रघुनाथे पुनरनघेऽक्षते जीवति वा तव मरणेन विधुरं दुःखितं मम हृदयं यतः, ततः संप्रति क्लाम्यति । तथा च रामो जीवत्येव, त्वं वृथा नात्मानं व्यापादयेति भावः ॥

पुनर्निरुपाधित्वमेव द्रढयति—

चिन्तेउं पि ण लब्भइ जह संभावेसि तह इमं जइ होन्तम् ।
तो दाणि किं जणम्मि व तुमम्मि संठावणा महं अणुरूवा १२१

[चिन्तयितुमपि न लभ्यते यथा संभावयसि तथेदं यदि भवत् ।
तदेदानीं किं जन इव त्वयि संस्थापना ममानुरूपा ॥]

हे सीते, यथा त्वं संभावयसि तर्केण जानासि । राममरणमित्यर्थात् । तथा चिन्तयितुमपि आहार्योपस्थितिविषयीकर्तुमपि न लभ्यते न युज्यते । अथ तथा सत्यमेवेदं यदि भवदभविष्यत् । लङर्थे शतृ प्रत्ययः । तदेदानीं रामं विना जन इव साधारणजन इव त्वयि मम संस्थापना जीवयितुं व्यवसायः समाश्वासना किमनुरूपा योग्या । अपि तु नेत्यर्थः । तथा च रामादरनिबन्धनस्त्वय्यादरः, प्रत्युत पत्यनुमरणरूपधर्मप्रतिषेधः पापजनक इत्यतोऽपि जानीहि रामो जीवतीति भावः ॥

पुनरपि सोपपत्तिमर्थापत्तिमाह—

सअला णिसाअरपुरी घरपरिवाडिसमणीहरिअरुण्णरवा ।
एक्केण कआ कइणा कह होइहि अणहरक्खसं रहुवडणम् १२२

[सकला निशाचरपुरी गृहपरिपाटिसमनिर्ह्रदितरुदितरवा ।
एकेन कृता कपिना कथं भविष्यत्यनघराक्षसं रघुपतनम् ॥]

सकला संपूर्णा कलासहिता मनोरमा वा निशाचरपुरी लङ्का गृहपरिपाट्यां गृहपर्याये समं युगपन्निर्ह्रदितः शब्दान्तरोत्पादी रुदितरवः । राक्षसानामित्यर्थात् ।

यस्यां तादृशी । यद्वा गृहपरिपाट्या समस्तुल्यो निर्ह्रदितो यथा दाहजन्यशब्दद्वारा गृहपरिपाटिः शब्दान्तरोत्पादिका तथा रुदितरवोऽपि यस्यामित्यर्थः । गृहदाहशब्दराक्षसरोदनशब्दयोस्तुल्यवदुत्पत्तेः । एवंभूता । एकेनासहायेनानिर्धारितविशेषेण साधारणेन वा हनूमता कृता । अतः कथमधः क्षतादि तद्रहिता राक्षसा यत्र तथाभूतं रघुपतनं भवेत् । तथा च तथाविधकोटिवानरसहाये तस्मिन्निहते कोटिकोटिराक्षसा अपि निहताः स्युः, अतस्तदभावे तत्कथं तर्कयसीति भावः ॥

अथ राक्षसप्रलयं सिद्धान्तयति—

**णत्थि णिहम्मइ रामो अइरा लोहिइ अरक्खसं तेल्लोक्कम् ।**
**दिट्ठंति भणामि फुडं पत्तिअ कस्स वि पिओ कुलस्स विणासो १२३**

[नास्ति निहन्यते रामोऽचिराद्भविष्यत्यराक्षसं त्रैलोक्यम् ।
दृष्टमिति भणामि स्फुटं प्रतीहि कस्यापि प्रियः कुलस्य विनाशः ॥]

निहन्यते राम इति पक्षो नास्ति नारायणरूपत्वात् । यद्वा—स नास्ति येन निहन्यते रामः । 'न' इति पाठे स नास्ति यं न हन्ति रामः । न केवलमेतावदेव किंत्वचिरात्त्रैलोक्यमराक्षसं राक्षसशून्यं भविष्यति । इदं मया स्फुटं व्यक्तं दृष्टमिति भणामि योगेन । पुराणादिना वेत्यर्थः ॥ यद्वा—दृष्टं ज्ञातमिति स्फुटं भणामि । रावणादपि न बिभेमीत्यर्थः ॥ विपक्षे बाधकमाह—प्रतीहि कस्यापि कुलस्य विनाशः प्रियः । काक्वा—न प्रिय इत्यर्थः । तथा च कुलविनाशमलीकमभिधाय परसमाश्वासनं केनापि न क्रियत इति मद्वचनमन्यथा मा शङ्किष्ठा इति भावः ॥

अनिष्टापत्तिमुखेन शोकं त्याजयति—

**उट्ठसु मुएसु सोअं पुस एअं वाहमइलिअं थणवट्ठम् ।**
**सुणसु सउणेण वट्टइ समराहिमुहे पइम्मि अंसुणिवाओ १२४**

[उत्तिष्ठ मुञ्च शोकं प्रोच्छ बाष्पमलिनितं स्तनपृष्ठम् ।
शृणु शकुनेन वर्तते समराभिमुखे पत्यावश्रुनिपातः ॥]

उत्तिष्ठ, शोकं मुञ्च, बाष्पैरश्रुभिः श्वासैर्वा मलिनितं स्तनपृष्ठं प्रोच्छ । उपपत्तिमाह—शृणु पत्यौ समराभिमुखे सत्यश्रुनिपातः शकुननिमित्तं न वर्तते । किंत्वमङ्गलनिमित्तमिति भावः ॥

अथ रामसत्तायामनुमानमाह—

मोत्तूण अ रहुणाहं लज्जागअसेअबिन्दुइज्जन्तमुहो ।
केण व अण्णेण कअ पाआरन्तरिअणिप्पहो दहवअणो ॥१२५॥

[मुक्त्वा च रघुनाथं लज्जागतखेदबिन्दूयमानमुखः ।
केन वान्येन कृतः प्राकारान्तरितनिष्प्रभो दशवदनः ॥]

च पुना रघुनाथं मुक्त्वा केन वान्येन दशवदनः कपिरुद्धत्वात्प्राकारमात्रेणान्तरितः सन् निष्प्रभः कृतः । तथा च रामेणैव कृत इत्यर्थः । कीदृक् । अवरोधजन्यया लज्जयागतैः खेदैर्बिन्दूयमानं बिन्दुभिः पूर्यमाणं मुखं यस्य स तथा । तथा च—संनिहितमृत्योर्मुखश्रीरन्यथा प्रतिपद्यत इत्यतोऽपि रावणमृत्युमनुमाय रामजीवनमनुमीयतामिति भावः ॥ यद्वा—सीताप्राप्तिव्यतिरेकनिश्चयान्निष्प्रभ इत्यर्थः । तेन ततोऽपि तदनुमीयतामिति वा ॥

अथ भाविनं रामस्यानुरागव्यापारमभिधाय सीतां शीतलयति—

अइरा अ दे रहुसुओ तण्णाअन्तग्गहत्थमउइअपम्हम् ।
मोच्छिहि वेवन्तङ्गुलिगुप्पन्तुक्खित्तविसमभाअं वेणिम् ॥ १२६ ॥

[अचिराच्च ते रघुसुतो आर्द्रायमाणाग्रहस्तमुकुलितपक्ष्माम् ।
मोक्ष्यति वेपमानाङ्गुलिगुप्यन्त्युत्क्षिप्तविषमभागां वेणीम् ॥]

अचिराच्च रघुसुतस्ते वेणीं मोक्ष्यति । किंभूताम् । आर्द्रायमाणाभ्यां त्वत्स्पर्शात् खिद्यद्भ्यां हस्ताग्राभ्यां मुकुलितानि खेदसंबन्धात्संवृत्तानि पक्ष्माणि असंयमनादुत्थितलोमाग्राणि यस्यास्ताम् । एवं भावोदयादेव वेपमानाभिरङ्गुलीभिरुत्क्षिप्ताः समीकृता विषमभागा यस्याः । प्रोषितो भर्ता समागत्य प्राकृतं विरहिण्या वेणीबन्धं मोचयतीति भावः ॥

अथ रावणस्य निन्दया मरणध्रौव्यमाह—

विअलिअलज्जालहुअं एअ करन्तस्स रहुवइम्मि धरन्ते ।
ण अ तह दुक्खामि तुमे जह पविवत्तम्मि दहमुहस्स सहावे १२७

[विगलितलज्जालघुकमेतत्कुर्वतो रघुपतौ ध्रियमाणे ।
न च तथा दूये त्वया यथा परिवृत्ते दशमुखस्य स्वभावे ॥]

अहं त्वया हेतुभूतया तथा न दूये यथा दशमुखस्य स्वभावे परिवृत्तेऽन्यथाभूते सतीत्यर्थः। अन्यथाभावमेवाह। किंभूतस्य। रघुपतौ ध्रियमाणे जीवति सति विगलिता या वञ्चनमूलिका लज्जा तया लघुकमश्लाघनीयमेतन्मायामस्तकरूपं छलं कुर्वतः। तथा चैवंविधत्वद्दुःखेनापि मम तथा न दुःखम्, यथा लोकनिन्दितैकच्छलतदुत्थलज्जापरित्यागरूपप्रकृतिविपर्ययाभ्यां रावणस्यासन्नमृत्युज्ञानादिति भावः॥

अथ रामस्योत्कर्षेण परानभिभाव्यत्वमाह—

वालिवहदिट्ठसारं बाणगलत्थिअसमुद्ददिण्णथलवहम्।
रोहिअलङ्कावलअं मा लहुअं पेच्छ राहवस्स भुअबलम्॥१२८॥

[वालिवधदृष्टसारं बाणगलहस्तितसमुद्रदत्तस्थलपथम्।
रोधितलङ्कावलयं मा लघुकं पश्य राघवस्य भुजबलम्॥]

हे जानकि, राघवस्य भुजबलं मा लघुकमल्पं पश्य जानीहि। कीदृक्। वालिनो वधे दृष्टसारं ज्ञातवध्यरावणबाधकत्वरूपनिगर्वम्। अथ बाणेन गलहस्तितः प्रेरितो यः समुद्रस्तेन दत्तो रामायेत्यर्थात् स्थलरूपः पन्था यस्मात्। अथ रोधितं लङ्कावलयं येन। तथा च रामे नैतत्संभाव्यमिति भावः॥

अथ शकुनदर्शनेन सत्यापयति—

दिट्ठासि मए सिविणे ससिसूरालिहणसोहिउम्मुहपडिमा।
खन्धुट्ठिअसुरगअकण्णआलविहुअधवलंसुअदसद्धन्ता॥ १२९॥

[दृष्टासि मया स्वप्ने शशिसूर्यालिहनशोभितोन्मुखप्रतिमा।
स्कन्धोत्थितसुरगजकर्णतालविधुतधवलांशुकदशार्धान्ता॥]

हे सीते, त्वं मया स्वप्ने दृष्टासि। कीदृशी। शशिसूर्ययोरालिहनेन मिलनेन शोभिता उन्मुखी प्रतिमा आकृतिर्यस्याः सा। एवं स्कन्धेनोत्थित उन्नतस्कन्धो यः सुरगजस्तत्कर्णतालेन विधुतो धवलांशुकस्य दशार्धान्तो यस्यास्तथा चैरावतस्कन्धोपरि पार्श्वद्वयवर्तिचन्द्रसूर्यो श्वेताम्बरा च त्वत्प्रतिमा दृष्टेति। पुष्पकोपरि रामलक्ष्मणसाहित्यं सीतायाः सूच्यमानं रावणक्षयेण राज्यलक्ष्मीप्राप्तिं सूचयति। तदुक्तं स्वप्नाध्याये—'आरोहणं गोहयकुञ्जराणाम्' इत्यादि॥

पुनः स्वप्नेनैव रावणाशुभं स्फुटयति—

दिट्ठो अ मे दहमुहो दहमुहपरिवाडिविअडकड्ढणमग्गो ।
कालदढ पासकड्ढिअदरघडिउग्घडिअखडिअमुहसंघाओ ॥१३०॥

[दृष्टश्च मे दशमुखो दशमुखपरिपाटिविकटकर्षणमार्गः ।
कालदृढपाशकृष्टदरघटितोद्घाटितस्खलितमुखसंघातः ॥]

मे मया दशमुखश्च दृष्टः । स्वप्ने एवेत्यर्थात् । केवलं त्वमेवेत्यर्थः । कीदृक् । दशानां मुखानां परिपाट्यानुक्रमेण विकटो विस्तीर्णः कर्षणमार्गः छेदनस्थानं यस्य सः । तथा—छिन्नशिरस्कतया मुखावलम्बनस्थानस्य विकटत्वमित्याशयः । अत एव कालस्य यमस्य दृढपाशेन कृष्टः सन् पुनः किंचिद्घटितः संबद्ध उत्पन्न इति यावत् । पुनरुद्घाटितः छिन्नोऽतः पतितो भूमावित्यर्थान्मुखसंघातो यस्य । वारं वारं यमपाशाकृष्टः छिद्यते उत्पद्यते पतति चेत्यर्थः । तथा वासन्नो मृत्युः सूचितः ॥

अथ मस्तकस्य मायात्वं सिद्धान्तयति—

तं अवलम्बसु धीरं णासउ संपइ अमङ्गलं जाव इमम् ।
मुणिअपरमत्थलहुई अवहीरिअणिप्फला णिअत्तउ माआ १३१

[तदवलम्बस्व धैर्यं नश्यतु संप्रत्यमङ्गलं यावदिदम् ।
ज्ञातपरमार्थलघुकावधीरितनिष्फला निवर्ततां माया ॥]

तत्पूर्वोक्तहेतोर्धैर्यमवलम्बस्व । यावदिति परिच्छेदे । इदममङ्गलं रोदनादिरूपं संप्रति नश्यतु । इयं च शिरोघटनरूपा माया निवर्तताम् । कीदृशी । ज्ञातपरमार्था सती लघुका तुच्छा कपटस्य विशेषादर्शनमात्रावधिकत्वात् । अतोऽवधीरितानादृता सती निष्फला भ्रमाजनिका । तथा च कपटत्वेन निर्णीयावहेलया निष्फलेति भावः ॥

अथ शिरोलीकत्वनिगमनेन त्रिजटाया वचनमुपसंहरन्नाह—

होत्तं जइ रामसिरं एआवत्थं पि तो समूससमाणम् ।
अमअं मिव णाअरसं आसाएउण तुह करप्फरिससुहम् ॥१३२॥

[भवद्यदि रामशिर एतावदवस्थमपि ततः समुच्छ्वसत् ।
अमृतमिव ज्ञातरसमासाद्य तव करस्पर्शसुखम् ॥]

एतद्यदि रामशिरो भवदभविष्यत्तदा एतावदवस्थं छिन्नमपि ज्ञातरसं तव करस्पर्शसुखममृतमिवासाद्यास्वाद्य वा समुच्छ्वसत्समुदश्वसिष्यदजीविष्यदित्यर्थः । मृतमप्यमृतेन जीवतीति रामशिरः सर्वथा नैतदिति भावः । लृङर्थे शतृप्रत्ययः ॥

अथ नूनमनिष्टाशङ्कीनि बन्धुजनहृदयानीति पुनरपि सीताया रोदनमाह—

इअ रामपेम्मकित्तणदूसहवज्जाहिघाअदूमिअहिअआ ।
संभरिअ मुक्ककण्ठमण्णमअं मरणणिच्छआ वि परुण्णा ॥ १३३ ॥
[इति रामप्रेमकीर्तनदुःसहवज्राभिघातदुःखितहृदया ।
संस्मृत्य मुक्तकण्ठमन्यमयं मरणनिश्चयापि प्ररुदिता ॥]

इत्यनेन प्रकारेण त्रिजटाकृतं यद्रामप्रेमकीर्तनं तदेव दुःखहेतुत्वाद्दुःसहो यो वज्राभिघातस्तेन दुःखितहृदया सती सीता संस्मृत्य । पूर्वप्रेमव्यवहारमित्यर्थात् । मुक्तकण्ठमुच्चैर्यथा स्यादेवं मरणे कृतनिश्चयाप्यन्यमयं पूर्वरोदनापेक्षयापि शृङ्गारात्मकत्वेन विलक्षणं यथा भवत्येवं प्ररुदिता । यथामृतस्यानुबन्धस्मरणं तथा तथा रोदनाधिक्यं भवतीति भावः ॥

अथ प्रकारान्तरेण सीतासमाश्वासनमाह—

तो तिअडावअणेहि वि ण संठिआ जाव तीअ पवअकलअलो ।
रणसंणाहगभीरो ण सुओ राहवपहाअमङ्गलपडहो ॥ १३४ ॥
[ततस्त्रिजटावचनैरपि न संस्थिता यावत्तया प्लवगकलकलः ।
रणसंनाहगभीरो न श्रुतो राघवप्रभातमङ्गलपटहः ॥]

ततश्चरमरोदनानन्तरं सीता त्रिजटावचनैरपि तावन्न संस्थिता रावणसंबन्धित्वान्न समाश्वस्ता, यावत्तया प्लवगानां कलकलः, तथा राघवस्य प्रभातकालीनमङ्गलपटहध्वनिश्च न श्रुतः । पटहध्वनिः कीदृक् । रणसंनाहनिमित्तं गभीरः । सर्वे श्रुत्वा संनह्यन्त्विति तारतारीकृतः तथा च प्लवगकोलाहलपटहनिर्ह्रादयोः श्रुत्वा त्रिजटावचसि प्रामाण्यग्रहात्प्रतीता सती आश्वासीदित्यर्थः । 'रणसण्णागम्भीरो' इति पाठे रणसंज्ञा रणसंकेतस्तदर्थं गभीर इत्यर्थः । प्लवगकलकलरूपो मङ्गलपटहध्वनिरित्यर्थ इति केचित् ॥

अथ समाश्वस्तायाः सीताया निश्वसितमाह—

अह बहुविहसंठावणपच्चाणिज्जन्तजीविआसाबन्धम् ।
तीअ गअसोअविसअं दूरुण्णामिअपओहरं णीससिअम् ॥१३५॥

[अथ बहुविधसंस्थापनप्रत्यानीयमानजीविताशाबन्धम् ।
तया गतशोकविषदं दूरोन्नामितपयोधरं निश्वसितम् ॥]

अथ प्रत्ययानन्तरं तया निश्वसितं निःश्वासः कृतः । असंभावितप्लवगकोलाहलादिना रामसत्तानिश्चयादिति भावः । बहुविधसंस्थापनेन त्रिजटाकृतसमाश्वासनेन प्रत्यानीयमानस्य गच्छतः परावर्तितस्य जीवितस्याशाबन्धो यस्मादिति क्रियाविशेषणम्। सीतया हर्षनिःश्वासः कृत इति त्रिजटादीनामपि सीताजीविताशाबन्ध उत्पन्न इत्यर्थः। एवं गतेन शोकेन विषदमानन्दजत्वादनुष्णम्। एवं दूरमुन्नामितौ पयोधरौ यत्रेत्यपि द्वयं क्रियाविशेषणम् । तथा च 'दीहं पि समूससिअम्' इति पूर्वोक्तशोकहेतुकनिश्वासापेक्षयाप्यानन्दहेतुकनिःश्वासस्य महत्त्ववर्णनेन शोकोत्तरकालीनत्वादानन्दस्य शोकापेक्षयाप्युत्कर्षः सूचितः ॥

अथ पुनः सीताया विरहदुःखोत्पत्तिमाह—

तो आसासिअसुहिए तीए पुणरुत्तसच्चविअवीसत्थे ।
विहडिअवेहव्वभए पुणो वि संघडइ विरहदुक्खं हिअए ॥१३६॥

[तत आश्वासितसुखिते तस्याः पुनरुक्तसत्यापितविश्वस्ते ।
विघटितवैधव्यभये पुनरपि संघटते विरहदुःखं हृदये ॥]

ततो रामसत्तानिश्चयेन जीवधारणोत्तरं तस्या हृदये विरहदुःखं पुनरपि संघटते लगतीत्यर्थः । अन्तराशिरोदर्शनेन विरुद्धबीभत्सादिरसोत्पत्त्या जागरूकस्यापि विप्रलम्भस्य विच्छेदादिति भावः । किंभूते । प्रथमं त्रिजटावचसाश्वासिते सति सुखिते। अथ रामसत्ताया रूपैकार्थतया पुनरुक्तेन प्लवगकोलाहलादिना सत्यापितं रामोऽस्तीति स्थिरीकरणम् । भावे क्तः । तेन विश्वस्ते प्रमाणसंभवेन विशेषेणाश्वस्ते । अत एव विगलितं वैधव्यभयं यत्र तथाभूते ॥

अथ सीतायास्त्रिजटानुरागकथनमुखेनाश्वासकं विच्छिनत्ति—

माआमोहम्मि गए सुए अ पवआण समरसंणाहरवे।
जणअतणआइ दिट्ठं तिअडाणेहाणुराअभणिअस्स फलम् ॥१३७॥

इअं सिरिपवरसेणविरइए कालिदासकए दहमुहवहे
महाकव्वे एआरहो आसासओ ॥

[मायामोहे गते श्रुते च प्लवगानां समरसंनाहरवे।
जनकतनयया दृष्टं त्रिजटास्नेहानुरागभणितस्य फलम् ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये एकादश आश्वासः॥

जनकपुत्र्या सीतया त्रिजटायाः स्नेहो वात्सल्यं दया अनुरागः प्रीतिस्तत्पूर्वकस्य भणितस्य फलं तात्पर्यपर्यवसानं वा दृष्टम्। मत्प्रीत्या यथैवानया कथितं तथैव जातमिति ज्ञातमित्यर्थः। कुत्र सति। मायया जनिते मोहे गते प्लवगानां समरनिमित्ते संनाहस्य रवे संनह्यतां संनह्यतामित्यादिरूपे च श्रुते सति। द्वाभ्यां रामसत्तानिश्चयादिति भावः॥

मायोत्तमाङ्गदशया रामदासप्रकाशिता।
रामसेतुप्रदीपस्य संपूर्णैकादशी शिखा॥

---

द्वादश आश्वासः।

अथ प्रत्यूषमाह—

ताव अ दरदलिउप्पलपलोट्टधूलिमइलन्तकलहंसउलो।
जाओ दरसंमीलिअहरिआअन्तकुमुआअरो पच्चूसो ॥ १ ॥

[तावच्च दरदलितोत्पलप्रलुठितधूलिमलिनायमानकलहंसकुलः।
जातो दरसंमीलितहरितायमानकुमुदाकरः प्रत्यूषः ॥]

यावत् प्लवङ्गकलकलः श्रुतः, सीता विलापादुपरता वा, तावदेव प्रत्यूषो जातः। कीदृक्। दरदलितेभ्य ईषद्विकसितेभ्य उत्पलेभ्यः प्रलुठिताभिर्निर्गताभिर्धूलीभिर्मलिनायमानानि कलहंसानां कुलानि यत्र सः। तथा—न केवलमुत्पलानां विकासारम्भः, किंतु कुमुदानामपि मुद्रणारम्भ इत्याह—दरसंमीलितानि किंचिन्मुकुलितानि अत एव हरितपृष्ठस्य प्रान्तपत्रचतुष्टयस्योपरिस्थित्या हरितायमानानि कुमुदानि यत्र तथाभूता आकराः सरोवरादयो यत्र॥

अथ निशावसानमाह—

अरुणाअम्बच्छाओ णवसलिलाकलुसचन्दिमाहअमूलो ।
धाउकलङ्कक्खउरो ओसरइ तडो व्व रअणिपच्छिमभाओ ॥ २ ॥

[अरुणाताम्रच्छायो नवसलिलाकलुषचन्द्रिकाहतमूलः ।
धातुकलङ्ककलुषोऽपसरति तट इव रजनीपश्चिमभागः ॥]

रजन्याः पश्चिमो भागश्चरमयामोऽपसरति । प्रभातं जातमित्यर्थः । कीदृक् । अरुणेनारुणोदयेन संध्यारागेण वाताम्रच्छायः । एवं नवसलिलं वन्या(?)तोयं कर्दमाविलत्वात्तद्वदाकलुषा प्राभातिकत्वाद्धूसरा या चन्द्रिका तयाहतं स्पृष्टं मूलं यस्य । उदयाचलावच्छेदोऽग्रभागस्तत्रारुणसंबन्धात्ताम्रत्वम् । अस्ताचलावच्छेदो मूलभागस्तत्राविलचन्द्रिकासंबन्धाद्धूसरत्वमिति भावः । तट इव । यथा धातुकलङ्केन गैरिकक्षोदेन कलुषो विचित्रो नद्यादीनां तटः कलुषवन्याजलाहतमूलः सन्नपसरति पतति सोऽपि धातुयोगात्ताम्र इत्युपमा । यद्वा—रजनिशेषः पश्चिमाचलस्यैवारुणत्वाद्गैरिकमयस्तटश्चन्द्रिकारूपजलाहतमूलत्वात्पततीत्युत्प्रेक्षा ॥

अथ वृक्षच्छायानां दुर्लक्ष्यत्वमाह—

णिव्वण्णिज्जइ रूअं अरुणसिहोलुग्गचन्दिअम्मि महिअले ।
ओवत्तधूसराणं णवर चलन्तीण पाअवच्छाआणम् ॥ ३ ॥

[निर्वर्ण्यते रूपमरुणशिखावरुग्णचन्द्रिके महीतले ।
अपवृत्तधूसराणां केवलं चलन्तीनां पादपच्छायानाम् ॥]

अरुणशिखाभिरवरुग्णा मृष्टा चन्द्रिका यत्र तत्र महीतले केवलं चलन्तीनामेव पादपच्छायानां रूपं स्वरूपं निर्वर्ण्यते लक्ष्यते न तु स्थिराणामित्यर्थः । किंभूतानाम् । अपवृत्तानामपगतानाम् । अत एव नीलिमापगमाद्धूसराणाम् । अरुणचन्द्रिकयोरेकतरप्रागल्भ्याभावाच्छाया विविच्य न गृह्यन्ते किंतु पवनान्दोलितशाखावशतया चलनादीषदाकारतया च लक्ष्यन्त इति भावः ॥

प्राभातिकं रूपमाह—

संमीलइ कुमुअवणं अद्धत्थमिअगलिअप्पहं ससिबिम्बम् ।
विअलइ रअणिच्छाआ अरुणाहअमुद्धतारआ पुव्वदिसा ॥ ४ ॥

[संमीलति कुमुदवनमर्धास्तमितगलितप्रभं शशिबिम्बम्।
विगलति रजनीच्छायारुणाहतमुग्धतारका पूर्वदिक् ॥]

कुमुदवनं संकुचति, शशिबिम्बमर्धास्तमितत्वाद्गलितप्रभमनुज्वलम्। भवतीत्यर्थात्। रजन्याश्छाया कान्तिर्विगलति प्रभातवशात्। अरुणेनारुणकान्त्याहता स्पृष्टा अत एव मुग्धा मन्दाः क्षुद्रा वा तारका यत्र तादृशी पूर्वदिक्। भवतीत्यर्थः ॥

अथ गगनस्य परुषताम्रत्वमाह—

दीसइ अ तिमिररेइअपल्लवअम्बतरुणारुणाहअमिहिअम्।
विसमविहिण्णमणसिलाभङ्गप्फरुसमणिपव्वअद्धं व णहम् ॥ ५ ॥

[दृश्यते च तिमिररेचितपल्लवाताम्रतरुणारुणाहतमेघिकम्।
विषमविभिन्नमनःशिलाभङ्गपरुषमणिपर्वतार्धमिव नभः ॥]

तिमिरेण रेचितं त्यक्तं सत्पल्लववदाताम्रेण तरुणेनारुणेनाहता छन्ना। अरुणीकृतेति यावत्। तादृशी मेघिका स्वल्पमेघो यत्रैवंभूतं प्राच्यवच्छिन्नं नभो विषमं विभिन्ना खण्डखण्डीकृता या मनःशिला तस्या भङ्गेन चूर्णेन परुषं रूक्षं विचित्रं वा मणिपर्वतस्यार्धमिव दृश्यत इत्यन्वयः। तथा च गगनस्य नीलतया पर्वतेन, प्राच्यवच्छिन्नस्य तस्यारुणोदयारुणमेघिकाविशिष्टस्य पद्मरागादिमणिविशिष्टपर्वतार्धेन, तत्रैवेतस्ततःप्रसृतानामरुणकान्तीनां मनःशिलाचूर्णेन तौल्यमित्युपमा ॥

अथ चन्द्रस्यास्तमनमाह—

ताव अ अत्थणिअम्बं णवसलिलाउण्णगअपअच्छविकलुसो।
पत्तो अरुणुण्णामिअपासल्लन्तगअणोसरन्तो व्व ससी ॥ ६ ॥

[तावच्चास्तनितम्बं नवसलिलापूर्णगजपदच्छविकलुषः।
प्राप्तोऽरुणोन्नामितपार्श्वायमानगगनापसरन्निव शशी ॥]

यावदरुणप्रागल्भ्यं भवति तावदेव शशी अस्ताचलनितम्बं प्राप्तः। कीदृक्। नवसलिलेनापूर्णं यद्गजस्य पदं मण्डलाकृतिपदस्थानं तस्य या छविस्तद्वत्कलुषः पाण्डुरः। तात्कालिकवृष्टिजलस्य कर्दमाविलत्वादिति भावः। उत्प्रेक्षते—अरुणेनोन्नामितमुत्तोलितम्। अत एव पार्श्वायमानं पूर्वपार्श्वेनोत्थितं सत्पश्चिमपार्श्वेनावनतं तथा प्रतिभासाद्यद्गगनं तस्मादपसरन्निव। अन्यत्रापि गृहादावेकपार्श्वेनोत्थाप्यमाने शिरःस्थितं वस्त्वपरपार्श्वेन पततीति ध्वनिः ॥

अथ वनानामवस्थामाह—

होन्ति पवणाहआइँ फुडमहुरविहंगणीहरन्तरुआइँ।
गुञ्जन्तमहुअराइँ धुससिल्हालहुअकिसलआइ वणाइँ॥ ७॥

[भवन्ति पवनाहतानि स्फुटमधुरविहंगनिर्ह्रदद्रुतानि।
गुञ्जन्मधुकराणि धुतशीतलघुककिसलयानि वनानि॥]

वनानि पवनेनाहतानि सन्ति धुतं पतितं यच्छीतं तेन लघूनि किसलयानि येषां तथाभूतानि भवन्ति। वायुना शीतपतनात्पत्राणां लघुत्वमित्यर्थः। किंभूतानि। स्फुटं मधुराणि विहंगानां निर्ह्रदन्ति शब्दान्तरोत्पादीनि रुतानि यत्र तानि। प्रातर्विहंगादिशब्दोत्पत्तिरिति भावः। एवं गुञ्जन्तो मधुकरा येषु। सिल्हा शीते देशी॥

अथ चन्द्रस्य पतनमाह—

अरुणक्कन्तविअलिअं णिअअङ्काणुगअबहलजोह्णाभरिअम्।
अत्थसिहराहि पडिअं उक्खडिअकरावलम्बणं ससिबिम्बम्॥८॥

[अरुणाक्रान्तविगलितं निजाङ्कानुगतबहलज्योत्स्नाभृतम्।
अस्तशिखरात्पतितमुत्खण्डितकरावलम्बनं शशिबिम्बम्॥]

अस्तशिखराच्छशिबिम्बं पतितम्। कीदृक्। अरुणेनाक्रान्तत्वाद्धुतानीकृतत्वाद्विगलितं स्थानभ्रष्टम्। एवम्—बहिरसत्त्वान्निजाङ्केऽनुगताभिर्बहलज्योत्स्नाभिर्भृतं पूर्णम्। गुरुत्वात्पतनं युक्तमेवेत्याशयः॥ एवम्—उत्खण्डितं विघटितं करैः किरणैरवलम्बनं यस्य। किरणानामसत्त्वात्। अन्योऽपि वृक्षादौ वर्तमानस्त्याजितशाखादिनिष्ठहस्ताद्यवलम्बनः सन्गुरुत्वादधः पततीति ध्वनिः॥

अथ चक्रयोः संघटनमाह—

पिअअमवियोअदुक्खं कह वि गमेऊण जामिणीअ पहाए।
अणुधाइ पडिरुअन्ती अब्भुट्ठाउं व सहअरी चक्काअम्॥ ९॥

[प्रियतमवियोगदुःखं कथमपि गमयित्वा यामिन्यां प्रभाते।
अनुधावति प्रतिरुवत्यभ्युत्थातुमिव सहचरी चक्रवाकम्॥]

सहचरी चक्री प्रभाते चक्रवाकमनु लक्ष्यीकृत्य धावति गच्छति। उत्प्रेक्षते—अभ्युत्थातुमिव चक्रस्यागमनं ज्ञात्वाभ्युत्थानं कर्तुमिव। यथैकस्मिन्नागच्छत्यन्यो-

ऽभ्युत्थानं करोतीत्यर्थः। पाठान्तरे—वाति गच्छति 'वा गतिगन्धनयोः' इति धातुः। किं कृत्वा। यामिन्यां रात्रौ यामिन्या वा करणभूतया प्रियतमस्य चक्रस्य वियोगेन दुःखं कथमपि कष्टेन गमयित्वातिवाह्य। कीदृशी। प्रतिरुवती एतज्जिज्ञासानिमित्तं चक्रेण रुते कृते सति प्रतिरवं कुर्वती। प्रतिरोदनं कुर्वतीत्यर्थे प्रतिरुदतीति वा। एतेनोत्कण्ठा सूचिता॥

अस्ताचलस्यावस्थामाह—

जाअं समल्लिअन्ते अब्भहिओसहिसिहाकरालिअपासम्।
अत्थसिहरं मिअङ्के अण्णमअपअट्टचन्दमणिणीसन्दम्॥ १०॥

[जातं समालीयमानेऽभ्यधिकौषधिशिखाकरालितपार्श्वम्।
अस्तशिखरं मृगाङ्केऽन्यमयप्रवृत्तचन्द्रमणिनिःस्पन्दम्॥]

मृगाङ्के समालीयमाने संबद्धे शिखरेणैव तिरोहितत्वाल्लीनतां गच्छति वास्ताचलशिखरं जातम्। कीदृक्। अभ्यधिकाभिश्चन्द्रस्य संनिधानेन प्रौढाभिरोषधीनां शिखाभिः करालितं दन्तुरितं पार्श्वं यस्य तथाभूतम्। एवम्—अन्यमयमन्यादृशं यथा स्यात्तथा प्रवृत्तश्चन्द्रमणीनां निःस्पन्दो जलनिर्गमो यत्र। चन्द्रस्यातिसंनिहितत्वेन बाहुल्यादिति भावः॥ चन्द्रस्य लीनतापक्षेऽभ्यधिकानां नानाविधानामोषधीनामित्यन्वयः कर्तव्यः। एवं च—अन्यमयमल्पमित्यर्थः। तथा च—चन्द्रस्यास्तमनादोषधिप्रभाणां दन्तुरितत्वमात्रं नतु प्रौढिः, चन्द्रमणीनामपि जलनिर्गमः पूर्वापेक्षया स्वल्प एव सूर्योदयकालसांनिध्यादिति भावः॥

अथारुणोदयमाह—

दूरोणअणक्खत्तं अरुणसिहाहअगलत्थिओणअजोह्णम्।
अत्थमइ व ससिसहिअं उट्ठेइ व उअअपव्वआहि णहअलम्॥ ११॥

[दूरावनतनक्षत्रमरुणशिखाहतगलहस्तितावनतज्योत्स्नम्।
अस्तायत इव शशिसहितमुत्तिष्ठतीवोदयपर्वतान्नभस्तलम्॥]

दूरादवनतानि नक्षत्राणि यस्मात्। एवम्—अरुणशिखाभिराहताः स्पृष्टा अत एव—गलहस्तिताः प्रेरिताः सत्योऽवनताः प्रतीच्यां पतिता ज्योत्स्ना यत्र तादृशं नभस्तलं शशिना सहितमस्तायतेऽस्तं यातीवोदयपर्वतादुत्तिष्ठतीव। चन्द्रास्तमनारुणोद्गमाभ्यां तथा बुद्ध्युत्पत्तेरियमुत्प्रेक्षा॥

अथ प्रत्यूषापगममाह—

**पइलम्भेण पओसो जाओ दिण्णफ्फलो रइसुहेण णिसा ।**
**आणिअविरहुक्कण्ठो गलइ अणिव्विण्णवम्महो पच्चूसो ॥ १२ ॥**

[पतिलम्भेन प्रदोषो जातो दत्तफलो रतिसुखेन निशा ।
आनीतविरहोत्कण्ठो गलत्यनिर्विण्णमन्मथः प्रत्यूषः ॥]

स्त्रीणां पतिप्राप्त्या प्रदोषो निशाद्यभागो दत्तफलो जातः । असति पतिसमागमे दूतीगतागतेन तच्चर्चया सति च तद्दर्शनादिनापूर्वरसोत्पत्तेरिति भावः । तदुत्तरमालिङ्गनचुम्बनादिना रतिसुखेन निशापि दत्तफला । जातेत्यर्थात् । आनीता विरहादुत्कण्ठा येन । अत एव—अनिर्विण्णोऽनिर्वाण उद्दीप्तो वा मन्मथो यत्र तथाभूतः सन् प्रत्यूषः परं गलति गच्छति । प्रियविश्लेषशङ्कया रसविच्छेदकत्वेन हृदये न लगतीत्यर्थः ॥

अथ प्राभातिकं सुरतमाह—

**वीसम्भवड्ढिअरसं अइराअक्खलिअसेससंठिअरसणम् ।**
**विअलिअमएण णिउणं पच्चूसरअं पओसदूरब्भहिअम् ॥ १३ ॥**

[विश्रम्भवर्धितरसमतिरागस्खलितशेषसंस्थितरसनम् ।
विगलितमदेन निपुणं प्रत्यूषरतं प्रदोषदूराभ्यधिकम् ॥]

प्रत्यूषरतं प्रदोषरताद्दूरेणाभ्यधिकं प्राथमिकादपि प्रदोषरताद्रसनीयतयातिश्लाघनीयं जातमित्यर्थः । तदेवाह—कीदृक् । विश्रम्भेण प्रत्यासत्त्या वर्धितो रसः संभोगरूपः शृङ्गारो मनःप्रीतिर्वा यत्र । द्वितीयरते विश्रम्भेण लज्जाविरहादुत्कण्ठाया यथावदभिव्यञ्जनात् । न तु प्रथमरत इति भावः । अतिरागेणात्यनुबन्धेनात्यासङ्गेन वा स्खलितापगता शेषेणैकदेशेन संस्थिता रसना यत्र । शेषसंस्थिता अपि रसना अतिरागेण स्खलिता इत्यर्थः । प्रदोषरते लज्जासत्त्वेनोत्कण्ठावशादल्पकालव्याप्त्या च तथाविधोपमर्दाभावाद्रसनादिकं शेषावच्छेदेन स्थितमेव, द्वितीयरते तु विश्रम्भापगतलज्जत्वेनाधिकसमयव्याप्त्या च बहुविधोपमर्दाच्छेषावच्छेदेनापि न स्थितमिति रसनारूपोऽप्यन्तरायः सुरते न स्थित इति भाव इति वयम् ॥ सांप्रदायिकास्तु—अतिरागेण स्खलिता अपि रसना शेषेण संस्थिता यत्रेत्यर्थमाहुः ॥ 'वसणम्' इति पाठे शेषेणाञ्चलादिनेत्यर्थः । तथा च—प्रथमरते लज्जासत्त्वादङ्गावरणार्थ-

मञ्चलादीनां भूयो भूयः समर्पणादेकदेशेन वसनं स्थितमेव। द्वितीयरते त्वतिरागेण तदपि स्खलितम्। अन्यत्पूर्ववद्व्याख्येयम्। एवं च विगलितमदत्वेन हेतुना निपुणं चतुरं ज्ञानपूर्वकतयालिङ्गनचुम्बनादिव्यापारवैशिष्ट्यविशिष्टमित्यर्थः। प्रथमरते तु मदसत्त्वेन रसविशेषमग्नचित्ततया तादृशनैपुण्याभावादिति भावः॥ 'दूरन्तरिअम्' इति पाठे प्रत्यूषरतं प्रदोषरतापेक्षया 'दूरान्तरितम्'। चिरकालेन जातमित्यर्थः॥ विगलितमदेन निपुणं सलज्जम्। प्रथमं मदाधिक्याल्लज्जा नासीदित्यपि केचित्॥ अचिराच्चेति सं[लुप]स्कृत्य प्रदोषरतानन्तरमचिरादेवोत्कण्ठया प्रत्यूषरतं जातमित्यर्थः। तेन प्रथमरतस्य चिरकालव्यापकत्वमित्यन्ये॥

चषकमाह—

संकन्ताहरराअं थोअसुरासंठिउप्पलद्धत्थइअम्।

चसअं कामिणिमुक्कं किलिन्तबउलतणुओ ण मुञ्चइ गन्धो॥१४॥

[संक्रान्ताधररागं स्तोकसुरासंस्थितोत्पलार्धस्थगितम्।

चषकं कामिनीमुक्तं क्लाम्यद्बकुलतनुको न मुञ्चति गन्धः॥]

कामिनीभिर्मुक्तं त्यक्तमपि चषकं क्लाम्यन्म्लायद्बकुलपुष्पं तद्गन्धवत्तनुकः स्वल्पो गन्धो न मुञ्चति। ईषत्सुरागन्धश्लिष्टत्वेवेत्यर्थः। कीदृशम्। संक्रान्तः पानसमये लग्नोऽधरस्य रागस्ताम्बूलादिकृतो यत्र। एवम्—स्तोकसुरायां संस्थितेनोत्पलेनार्धस्थगितमर्धाच्छादितम्। सुराया निपीतत्वेन किंचिदवशेषसत्त्वात्तत्र चोत्पलानामवशिष्टत्वादिति भावः। क्लाम्यता बकुलेन तनुरल्पीयानित्यपि केचित्॥

क्षीणां रतान्तावस्थामाह—

पसिढिलकेसकलाओ उव्वत्तिअमेहलावरुद्धणिअम्बो।

छाआलग्गपरिमलो पिअअममुक्कतणुओ विलासिणिसत्थो॥ १५॥

[प्रशिथिलकेशकलापो उद्वर्तितमेखलावरुद्धनितम्बः।

छायालग्नपरिमलः प्रियतममुक्ततनुको विलासिनीसार्थः॥]

विलासिनीनां सार्थः प्रियतमेन मुक्तः संभोगानन्तरं त्यक्तः संस्तनुको दुर्बलो जात इति शेषः। अतिसुरतोपमर्दात्। भाविविरहादित्यन्ये। किंभूतः। प्रशिथिलो विकीर्णः केशकलापो यस्येति विपरीतरतावस्था। एवम्—उद्वर्तितयोर्ध्वमुखीभूय स्थितया मेखलयावरुद्धो नितम्बो यस्येति स्वाहजिकरतावस्था। तथा च—उभय-

रूपं रतमासीदिति भावः । एवम्—छायया आभामात्रेण यत्किंचिदित्यर्थः । लग्नः परिमलः कस्तूरिकादिविमर्दोत्थतद्गन्धो वा यस्य । एतेनात्युपभोगः सूचितः । यद्वा—संभोगानन्तरमुषसि नारीणां गृहगमनाय शरीरसंयमनावस्थेयम् । तथाहि—प्रशिथिलोऽक्षमतया बन्धदार्ढ्याभावेन दिशि दिशि पतितः । एवम्—उद्वर्तितया आलस्यात्त्वरया वा यथा तथार्पणेन पूर्वविपरीतयेत्यर्थः ॥

तदैतासां गृहगमनारम्भमेवाह—

दुण्णिसिअवामचलणं वलन्तपीणोरुविसमपाउद्धारम् ।
दुक्खेण संठविज्जइ पिअहुत्तणिअत्तपत्थिअं जुवईहिं ॥ १६ ॥

[दुर्नियोजितवामचरणं वलत्पीनोरुविषमपादोद्धारम् ।
दुःखेन संस्थाप्यते प्रियाभिमुखनिवृत्तप्रस्थितं युवतीभिः ॥]

युवतीभिः प्रियाभिमुखान्निवृत्तं प्रियं पश्चात्कृत्य प्रवृत्तम् । प्रियपराङ्मुखमित्यर्थः । यत्प्रस्थितं गृहगमनोद्यमस्तद्दुःखेन संस्थाप्यते स्थिरीक्रियते । तात्कालिकविरहात्संभोगश्रमाच्चेति भावः । किंभूतम् । दुःखेन नियोजितं भूमावर्पितं वामचरणं यत्र । एवम्—पीनत्वाद्वलता संमुखामुत्थापयितुमसामर्थ्याद्वक्रीभवतोरुणा हेतुभूतेन विषमः समसाध्यतया विपर्यस्तो दक्षिणपादस्योद्धार उत्थापनं यत्र । स्त्रियो हि प्रथमं वामपादमग्रे विन्यस्य पश्चाद्दक्षिणपादमुत्थाप्य चलन्तीति स्वभावः । तथा च—तथाकर्तुमुद्यता अपि संभोगोत्कर्षाज्जङ्घानितम्बस्य जडीभूतत्वेन झटित्युत्थापनमर्पणं वा चरणयोः कर्तुं न शक्नुवन्तीति भावः ॥

अथ दिनागमनमाह—

संखोहिअकमलसरो संझाअवअम्बधाउकद्दमिअमुहो ।
ठाणप्फिडिओ व्व गओ रत्तिं भमिऊण पडिणिअत्तो दिअसो ॥ १७ ॥

[संक्षोभितकमलसराः संध्यातपाताम्रधातुकर्दमितमुखः ।
स्थानस्फिटित इव गजो रात्रिं भ्रमित्वा प्रतिनिवृत्तो दिवसः ॥]

स्थान एव स्फिटितो भ्रष्टोऽपगतो दिवसो रात्रिं व्याप्य भ्रमित्वा द्वीपान्तरं गत्वा गज इव प्रतिनिवृत्तः पुनरागतः । यथा बन्धनस्थानाद्भ्रष्टो गजो रात्रौ भ्रमित्वा प्रतिनिवर्तते प्रातः स्वस्थानमायातीत्यर्थः । साम्यमाह—कीदृक् । संक्षोभितं विकासितं कमलप्रधानं सरो येन । पक्षे—संक्षोभितं शुण्डाद्यभिघातेनोपमर्दितम् ।

एवम्—संध्यातप एवाताम्रो धातुकर्दमो गैरिकपङ्कस्तद्विशिष्टं मुखमुपक्रमो यस्य । पक्षे—संध्यातपवदाताम्र इत्यर्थः । तटाभिघातादिना मुखे गैरिकसंपर्कादिति भावः ॥

अथ कमलप्रकाशमाह—

अरुणपडिबोहिआए अब्भुत्थन्तीअ आअअं व दिणअरम् ।
साहेन्ति विहडिआइँ दिमिअं कमलाइं णिअसलच्छीअ पअम् १८

[अरुणप्रतिबोधिताया अभ्युत्तिष्ठन्त्यागतमिव दिनकरम् ।
शासति विघटितानि नियोजितं कमलानि दिवसलक्ष्म्याः पदम् ॥]

विघटितानि विकसितानि कमलानि आगतं दिनकरमभ्युत्तिष्ठन्त्येव तदभ्युत्थानमाचरन्त्येव दिवसलक्ष्म्या नियोजितमर्पितं पदं चरणं शासति कथयन्ति । दिनकरप्रत्युद्गजने दिनश्रियात्र चरणं निहितमिति कमलदलविघटनेन ज्ञायत इति भावः । किंभूतायाः । अरुणेन प्रतिबोधिताया जागरिताया निशि तत्र सुप्ताया इत्यर्थात् । अरुणोदयमुपक्रम्य प्रथमं कमलवन एव तदुद्भवादिति तात्पर्यम् । अन्योऽपि—'केनचिदयं मान्यो भवति, अस्योपस्थानं क्रियताम्'—इत्यादिप्रतिबोधितस्त्वरया गच्छन् यत्र न्यस्यति तत्राभिघातादन्यथा संस्थानं भवतीति ध्वनिः । यद्वा—अरुणेन प्रतिबोधितायाः 'तव स्वामी दिनकर इहागतः' इति ज्ञापितायाः । इत्यादिरूपेण समासोक्त्या प्रोषितभर्तृकावृत्तान्त एव सूचितः ॥

कम्बूनां व्यवस्थामाह—

एक्केक्कमवोच्छिण्णं पओसवीसत्थविहडिअं उअहिजले ।
जणणिं व चन्दपडिमं अल्लिअइ विहाअकाअरं सङ्खउलम् ॥ १९ ॥

[एकैकक्रमव्यवच्छिन्नं प्रदोषविश्वस्तविघटितमुदधिजले ।
जननीमिव चन्द्रप्रतिमामालीयते विभातकातरं शङ्खकुलम् ॥]

प्रदोषे विश्वस्तमभयं यथा स्यात्तथा विघटितं सदेकैकक्रमेण व्यवच्छिन्नं विश्लिष्टं शङ्खकुलं प्रभाते कातरं विश्लेषेण दुःखितं सज्जननीं मातरमालीयते एकस्या एवैकदा शतावधिशङ्खा उत्पद्यन्ते । तथा च—ते सहैव संचरन्तः सायं विश्लिष्टाः प्रातः पुनर्जननीमनुसंधाय तत्समीपे वर्तुलीभवन्तीत्यर्थः । किंभूतामिव । उदधिजले चन्द्रप्रतिमामिव स्थितामित्यर्थः । प्रातश्चन्द्रस्य प्रतिबिम्बस्य तत्र स्फुटत्वादिति भावः । श्वैत्येन साम्यम् । यद्वा—जननीमिव चन्द्रप्रतिमामालीयते इत्युत्प्रेक्षा ।

जननीभ्रमाच्चन्द्रप्रतिबिम्बमाश्लिष्य वर्तुलीभवन्तीत्यर्थः । यद्वा—यथा जननीभ्रम आलीयते तथा तद्भ्रमाच्चन्द्रप्रतिबिम्बमपीति सहोपमा ॥

अथ कमलसौरभोद्गममाह—

**होइ कमलाअराणं समूससन्ताण चिरणिरोहेक्कमुहो ।**
**संचालिअमहुमहुरो मारुअभिण्णो वि मंसलो च्चिअ गन्धो ॥२०॥**

[भवति कमलाकराणां समुच्छ्वसतां चिरनिरोधैकमुखः ।
संचालितमधुमधुरो मारुतभिन्नोऽपि मांसल एव गन्धः ॥]

समुच्छ्वसतां विकसतां कमलाकराणां गन्धः प्राभातिकेन मारुतेन भिन्नोऽपि दिशि दिशि क्षिप्तोऽपि मांसलो घन एव भवति । अत्र बीजमाह—चिरं विरोधेन मुद्रणाद्बहिर्गमनप्रतिबन्धेनैकमुख एकं मुखं यस्येत्यहमहमिकया बहिर्भवितुमुत्कण्ठित इत्यर्थः । यद्वा—चिरनिरोधे सत्येकं मुखं द्वारं यस्येत्यर्थः । तेन प्रतिरुद्धानामीषत्कमलविकासे तत्पथेन बहिर्भवतामनिलेनाप्यल्पता कर्तुं न शक्यत इति भावः । एवं संचालितेन मधुना मधुरो मनोहारी ॥

अथ राक्षसानामपशकुनमाह—

**जं चिअ कामिणिसत्थं आउच्छताण मुक्कवाहत्थबअम् ।**
**रक्खसभडाण तं चिअ जाअं णिप्पच्छिमोवऊहणसौक्खम् २१**

[य एव कामिनीसार्थः आपृच्छयमानानां मुक्तबाष्पस्तबकः ।
राक्षसभटानां स एव जातो निष्पश्चिमोपगूहनसौख्यः ॥]

आप्रश्नं युद्धाय संवदनं कुर्वतां राक्षसभटानां य एव कामिनीसार्थः समरशङ्कया त्यक्ताश्रुपूरो वृत्तः स एव निष्पश्चिममपुनर्भावि उपगूहनसौख्यमालिङ्गनसौख्यं यस्य तथाभूतो जातः । तथा च—संवदनकालीनपरिरम्भणातिरिक्तं परिरम्भणं नास्तीत्यमङ्गलं तात्कालिकाश्रुनिर्गमेन सूचितमिति संग्रामे रक्षसां क्षय उक्तः ॥

अथ रामस्य निद्राभङ्गमाह—

**अह समरन्तरिअसुहो दहमुहवेरपडिमुञ्चणाअअदिअहो ।**
**लद्धामरिसावसरो अलद्धणिद्दो वि राहओ पडिउद्धो ॥ २२ ॥**

[अथ समरान्तरितसुखो दशमुखवैरप्रतिमोचनागतदिवसः ।
लब्धामर्षावसरोऽलब्धनिद्रोऽपि राघवः प्रतिबुद्धः ॥]

अथ प्रत्यूषोत्तरं देवतारूपत्वाद्विरहदुःखाद्वा लब्धनिद्रोऽपि राघवः प्रतिबुद्धो जागरितः। लौकिकचक्षुर्मुद्रणं विरहजन्यमोहं वा तत्याजेत्यर्थः। कीदृक्। समरेण युद्धरसेनान्तरितं विघ्नितं संकल्पोपनीतसीतासमागमजन्यं सुखं यस्य। यद्वा— समरेणान्तरितमन्तःप्रापितं सुखं यस्य। विरहदुःखे सत्येव वीररसोद्रेकेण परं सुखोत्पत्तिरित्यर्थः। एवं दशमुखे यद्वैरं तत्प्रतिमोचनाय प्रत्यपकारायागतो दिवसो यस्य। एवं लब्धोऽमर्षस्यावसरो येन। तथा च—तात्कालिकामर्षोद्भूतयुद्धरसेन शृङ्गारोऽन्तरित इति भावशान्त्युदयौ॥

अथ रामस्य मनःखेदमाह—

सीआविओअदुक्खं विसहन्तस्स चउज्जाममेत्तन्तरिअम्।
दीहो अ गओ कालो ण समा एक्का अ सा णिसा रहुवइणो॥२३॥
[सीतावियोगदुःखं विषहमाणस्य चतुर्याममात्रान्तरितम्।
दीर्घश्च गतः कालो न समैका च सा निशा रघुपतेः॥]

चत्वारो यामाः प्रहरचतुष्टयं तन्मात्रेणान्तरितं सीतावियोगदुःखं विषहमानस्य। प्रातस्तद्दुःखोपशमादिति भावः। रघुपतेर्दीर्घो बहुतरश्च कालो गतः। सैका निशा परं न गता न गतैव। संनिहितसीतासमागमोत्कण्ठयातिवाहयितुं दुःसहा बभूवेत्यर्थः। कीदृशी। न समातीव बहुतरकालेनापि न तुल्या तावत्समयजन्यविरहदुःखापेक्षया तद्रात्रिजन्यतद्दुःखाधिक्यादियमेवाधिकेत्यर्थः। काकाक्षिगोलकन्यायादुभयत्रान्वयो नकारस्य। वस्तुतस्तु रघुपतेर्दीर्घश्च कालो गतः सा च निशा गता, किं त्वियं न समा दुःखहेतुत्वात्ततोऽधिकेत्यर्थः॥

अथ रामस्य धनुर्दर्शनमाह—

उम्मिल्लन्ती च्चिअ से णिद्दासेसोणअच्छिवत्तक्खलिआ।
गुरुओलइअरणभरे दिट्ठी दिट्ठसमरे धणुम्मि णिसण्णा॥२४॥
[उन्मीलन्त्येवास्य निद्राशेषावनताक्षिपत्रस्खलिता।
गुरुकावलगितरणभरे दृष्टिर्दृष्टसमरे धनुषि निषण्णा॥]

उन्मीलन्त्येवोन्मेषसमकालमेवास्य दृष्टिर्धनुषि निषण्णा। कीदृशी। निद्रायाः शेषेण तन्द्रीरूपावशिष्टभागेन निद्राविच्छेदेन चावनताभ्यामक्षिपत्राभ्यां स्खलिता पृथग्भूता। तथा च—निद्राजन्यालस्येन किंचिन्मिलदप्यक्षिपत्रद्वयं विजित्य प्रबो-

धसमकालमेव निखिलविषयपरित्यागेन धनुषि लग्नेति वीररसोत्कर्षः सूचितः । किंभूते । गुरुकोऽन्यानिर्वाह्योऽवलगितो रणभरो यत्र । एवम्—दृष्टः समरो यस्येति सर्वत्र जयशीलत्वादध्यवसाय उक्तः ॥

अथ रामस्योत्थानमाह—

मुअइ अ किलिन्तकुसुमं अवहोवासमलिओवहाणद्धन्तम् ।
सइपरिअत्तणविसमं हिअआवेअपिसुणं सिलासअणीअम् ॥२५॥

[मुञ्चति च क्लाम्यत्कुसुममुभयावकाशमृदितोपधानार्धान्तम् ।
सदापरिवर्तनविषमं हृदयावेगपिशुनं शिलाशयनीयम् ॥]

रामो न केवलं धनुः पश्यति, अपि तु शिलारूपं शयनीयं मुञ्चति च । शिलायाः शीतलत्वेन शयनीयतया विरहतापस्याधिक्यमुक्तम् । कीदृशम् । सदापरिवर्तनेन पार्श्वान्तरशयनेन विषमं निम्नोन्नतम्, अत एव क्लाम्यन्ति कुसुमानि यत्र । एवं वामदक्षिणावकाशद्वये मृदितौ घृष्टावुपधानस्यार्धान्तौ यत्रेति स्थैर्याभावेन संतापस्याधिक्यमुक्तम् । अत एव हृदयावेगस्य मनस्तापस्य पिशुनं कथकम् । एभिरेव संतापोत्कर्षोऽनुमीयत इति भावः ॥

अथ जटासंवरणं संदानितकेनाह—

तो सेलसारगरुअं अइराहोन्तदइआसमागमपिसुणम् ।
अहिणन्दिऊण सुइरं फुरमाणब्भहिअपीवरं वामभुअम् ॥ २६ ॥
खणसंमाणिअधम्मो धणुकड्ढणमग्गमोइअपरिट्ठविअम् ।
बन्धइ मलिअविसज्जिअतमालसअणसुरहिं जडापब्भारम् ॥२७॥
(जुग्गअम्)

[ततः शैलसारगुरुकमचिराद्भविष्यद्दयितासमागमपिशुनम् ।
अभिनन्द्य सुचिरं स्फुरदभ्यधिकपीवरं वामभुजम् ॥
क्षणसंमानितधर्मो धनुःकर्षणमार्गमोचितपरिस्थापितम् ।
बध्नाति मृदितविसृष्टतमालशयनसुरभिं जटाप्राग्भारम् ॥]
(युग्मकम्)

ततस्तल्पत्यागानन्तरं जटाप्राग्भारं बध्नाति। राम इत्यर्थात्। इत्युत्तरस्कन्धकेनान्वयः। किं कृत्वा। स्फुरत्स्पन्दमानम्। अत एवाभ्यधिकं मांसलं वामभुजं सुचिरमभिनन्द्य स्तुत्वा। तथा च—शकुनसाद्गुण्यस्याभिनन्दनं कर्तव्यमिति सूचितम्। किंभूतम्। शैलवत्सारेण बलेन गुरुकम्। एवम्—अचिराद्भाविनः सीतासमागमस्य पिशुनं कथकम्। इति कार्यसिद्धिरुक्ता॥ स कीदृक्। क्षणं क्षणेनोत्सवेन वा संमानितो धर्मो येन। देवपूजादेस्तत्कालकर्तव्यत्वादिति मङ्गलसूचनम्। जटाप्राग्भारं किंभूतम्। धनुःकर्षणमार्गान्मोचितं शरत्यागकाले करस्खलनशङ्कया कर्णमूलाद्बहिष्कृतम्। अथ च—परिस्थापितं संयतम्। एवम्—पार्श्वपरिवर्तनादिना मृदितं तदनु तदानीं विसृष्टं यत्तमालपुष्पशयनं तेन सौरभयुक्तम्॥

अथ धनुर्ग्रहणमाह—

दाऊण गलिअवाहं चिरधरिआऊरमाणरोसाअम्बम्।
दिट्ठिं लङ्काहिमुहिं समत्थणिव्वडिअतारआदुप्पेच्छम्॥ २८॥
गेह्णइ गहिअत्थामं सीआसुण्णइअसअणमग्गट्ठविअम्।
बहुसो विरहुक्कण्ठिअणिमिअमुहोरुण्णमइअकोडिं चावम्॥२९॥
(जुग्गअम्)

[दत्त्वा गलितबाष्पां चिरधृतापूर्यमाणरोषाताम्राम्।
दृष्टिं लङ्काभिमुखीं समस्तनिर्वलिततारकादुष्प्रेक्ष्याम्॥
गृह्णाति गृहीतस्थामं(म) सीताशून्यीकृतशयनमार्गस्थापितम्।
बहुशो विरहोत्कण्ठितनियोजितमुखावरुदितमृदितकोटिं चापम्॥]
(युग्मकम्)

लङ्काभिमुखीं दृष्टिं दत्त्वा। लङ्कां दृष्ट्वेत्यर्थः। रामश्चापं गृह्णातीत्युत्तरस्कन्धकेन संदानितकम्। किंभूताम्। गलितो बाष्पो यत इति सीतापहाराद्दुःखमुक्तम्। एवम्—चिरं धृतेन संचितेन तदानीं समयलाभादापूर्यमाणेन संनद्धेन रोषेणाताम्राम्। अत एव समस्तं निर्वलितया रोषेण विस्फारणात्पृथग्भूतया तारकया दुष्प्रेक्ष्यामिति सपक्षस्यापि दुष्प्रेक्षणीयतया विपक्षनाशकत्वमुक्तम्। चापं कीदृशम्। गृहीतं ज्ञातं स्थाम बलं यस्य तम्(त्)। एवम्—सीतया शून्यीकृते शयनस्य मार्गे वामपार्श्वरूपे स्थाने सीताप्रातिनिध्येन स्थापितम्। एवम्—विरहादुत्कण्ठितेनोत्कण्ठया।

यद्वा—विरहोत्कण्ठितं संनियोजितं सीताभ्रमेण प्रागिव तन्मुखबुद्ध्या निवेशितं यन्मुखं तस्य रुदितैस्तदलाभेन भ्रमनिवृत्तौ मनःखेदोद्भूतैरश्रुभिर्मृदिता कोटिरग्रं यस्य । इति वामनेत्रापाङ्गसंगताटनित्वमुक्तम् ॥

अथ ज्यारोपणमाह—

**तो तं महिअलणिविअं वामकरावेढणिट्ठुरपरिग्गहिअम् ।**
**दाहिणहत्थेण कअं वलन्तदेहभरणामिअं सज्जीअम् ॥ ३० ॥**

[ततस्तन्महीतलनिवेशितं वामकरावेष्टनिष्ठुरपरिगृहीतम् ।
दक्षिणहस्तेन कृतं वलद्देहभरनामितं सजीवम् ॥]

ततो ग्रहणानन्तरं तद्धनुस्तेन रामेण प्रथमं महीतले निवेशितम् एकाटन्यावष्टब्धम् । अनन्तरं वामकरस्यावेष्टेन मुष्टिना निष्ठुरं दृढं यथा स्यादेवं परिगृहीतं धृतम् । तदनु ज्यारोपणसमये वलतस्तिर्यग्भूतस्य देहस्य भरेण नामितं सद्दक्षिणहस्तेन सजीवं जीवा ज्या तत्सहितं कृतम् । यथा यथा देहस्य नम्रता तथा तथा तद्भरणे धनुषोऽपीति जातिरलंकारः । 'ज्या जीवा जीवनं जीवो जीवौ कर्णबृहस्पती' ॥

अथ रामस्य प्रस्थानमाह—

**काऊण ससिअमन्थरगरुअसिरोअम्पतज्जिअं पडिवक्खम् ।**
**चलिओ चलन्तपव्वअविलइअधणुमेत्तसाहणो रहुणाहो ॥ ३१ ॥**

[कृत्वा श्वसितमन्थरगुरुकशिरःकम्पतर्जितं प्रतिपक्षम् ।
चलितश्चलत्पर्वतविलगितधनुर्मात्रसाधनो रघुनाथः ॥]

रघुनाथश्चलितः । युद्धायेत्यर्थात् । किंभूतः । चलति पर्वते विलगितं निवेशितं यद्धनुस्तन्मात्रं साधनं सिद्धिसामग्री यस्य । विरहदौर्बल्येन संचाराय धनुःकोट्यावष्टब्धस्य सुवेलस्य चलनेन बलप्रकर्ष उक्तः । किं कृत्वा । प्रतिपक्षं रावणं सीतादुःखस्मरणजन्यश्वसितेन मन्थरस्तद्विलम्बेन विलम्बितो यः शिरःकम्पस्तेन तर्जितं भीषितं कृत्वा । श्वसितहेतुको वास्तविकः शिरःकम्पस्तर्जनरूपेणोत्प्रेक्षितः ॥

अथ कपिसैन्यसंचारमाह—

**चलिअं च तुलिअपव्वअमिलन्तसिहरणहणिम्मिएक्कमहिहरम् ।**
**अणुरूअभुअपरिट्ठिअविडवमुणिज्जन्तपाअवं कइसेणम् ॥ ३२ ॥**

[चलितं च तुलितपर्वतमिलच्छिखरनभोनिर्मितैकमहीधरम् ।
अनुरूपभुजपरिस्थितविटपज्ञायमानपादपं कपिसैन्यम् ॥]

न केवलं राम एव चलितः, किंतु कपिसैन्यमपि चलितम् । कीदृक् । तुलितानामुत्थापितानां पर्वतानां मिलद्भिः शिखरैर्नभसि निर्मित एको महीधरो येन । तदेकाकारत्वादित्यर्थः । एवम्—अनुरूपेषु कपीनां सदृशाकारेषु भुजेषु परिसंस्थिताः सन्तो विटपैर्ज्ञायमानाः पादपा यत्र तादृशम् आकारतौल्यात् । भुजैः समं भेदाग्रहसामग्रीसत्त्वेऽपि विटपरूपस्य विशेषस्य दर्शनेन वृक्षोऽयमिति विविच्य ग्रह इति कपीनां महत्त्वं पर्वतवृक्षादीनामल्पीकृत्योत्थापनादुद्योगशीलत्वं सूचितम् । स्वानुरूपैर्भुजरूपैः परिस्थितैर्विटपैर्ज्ञायमानवृक्षस्वरूपं भुजेषु विटपभ्रमाद्वृक्षत्वेन भ्रमविषय इत्यर्थ इति केचित् ॥

कपीनां तेजःप्रकर्षमाह—

संणज्झन्ति कुउरिसा संणाहभरेण किं करेन्ति समत्था ।
णिअअबलं चिअ कवअं कइणाप्पडिहआ भुआ अ पहरणम् ३३

[संनह्यन्ति कुपुरुषाः संनाहभरेण किं कुर्वन्ति समर्थाः ।
निजकबलमेव कवचं कपीनामप्रतिहतौ भुजौ च प्रहरणम् ॥]

कुपुरुषा अशूराः संनाहं कुर्वते, समर्थाः पुनः संनाहरूपेण भरेण देहगौरवापादकमात्रेण किं कुर्वन्ति, अपि तु न किमपीत्यर्थः । इति कृत्वा कपिभिः संनाहो न कृत इति भावः । अत एव कवचादेरन्यथासिद्धिमाह—कपीनां निजकबलमेव कवचं परशस्त्रेभ्यस्तनुत्राणकारणमित्यर्थः । एवं च—अप्रतिहतौ परानभिभाव्यौ भुजावेव प्रहरणं पराभिभवकारि शस्त्रम् । खड्गादीनां तु कदाचित्प्रतिघातशङ्कापीति भावः ॥

अथ सेनासंनिवेशप्रकारमाह—

णाअणिसाअरसारं माअणिक्कलुसजुज्झगइप्पबुद्धम् ।
अग्गक्खन्धम्मि कअं लङ्कामग्गणिउणं विहीसणसेणम् ॥ ३४ ॥

[ज्ञातनिशाचरसारं मायानिष्कलुषयुद्धगतिप्रबुद्धम् ।
अग्रस्कन्धे कृतं लङ्कामार्गनिपुणं विभीषणसैन्यम् ॥]

विभीषणसैन्यमग्रस्कन्धे सैन्याग्रे कृतं स्थापितम् । सुग्रीवादिभिरित्यर्थात् ।

कुत इत्यत आह—ज्ञातं निशाचराणां सारं बलं निगूढमन्त्रणा वा येन । एवं मायया निष्कलुषा निरुपद्रवा वा मायासु निष्कलुषा वा ये राक्षसास्तेषां युद्धप्रकारे प्रबुद्धं प्रवीणम् । यद्वा—मायया कपटेन निष्कलुषेण कपटव्यतिरेकेण च या युद्धगतिस्तत्रोभयत्र प्रवीणम् । एवं च—लङ्काया मार्गस्यान्तर्वर्तिदुरूहनानास्थानस्य निपुणं ज्ञातारं यत इति राजनीतिरुक्ता ॥

अथ रामस्य युद्धग्रहणमाह—

समरतुरिअस्स सुकअं कह मोत्तव्वं ति दूमिओ सुग्गीवो ।
गहिआउहम्मि रामे सोअइ अ विहीसणो निसाअरवंसम् ॥ ३५ ॥
[समरत्वरितस्य सुकृतं कथं मोक्तव्यमिति दुःखितः सुग्रीवः ।
गृहीतायुधे रामे शोचति च विभीषणो निशाचरवंशम् ॥]

रामे गृहीतायुधे सति समरे त्वरितस्य स्वयमेव युयुत्सतो रामस्येत्यर्थात् । सुकृतं शोभनं कृतमुपकारो बालिवधादिरूपः कथं मोक्तव्यं प्रत्युपकारेण सदृशीकर्तव्यमिति कृत्वा सुग्रीवो दुःखितो रामस्यामोघशस्त्रतया रावणवधादेरित एव संभवादस्माकमन्यथासिद्धिः स्यादिति भावः । एवं विभीषणोऽपि निशाचरवंशं शोचनाविषयीकरोति सकलराक्षसक्षयध्रौव्यादिति भावः ॥

अथ धनुरास्फालनमाह—

अप्फालिए धणुम्मि अ खोहिअगिरिविहुअसाअरे रहुवइणा ।
कम्पिअघरपाआरा अङ्गक्खिवणविसमं व वेवइ लङ्का ॥ ३६ ॥
[आस्फालिते धनुषि च क्षोभितगिरिविधुतसागरे रघुपतिना ।
कम्पितगृहप्राकाराङ्गक्षेपणविषममिव वेपते लङ्का ॥]

क्षोभितः कम्पितो गिरिः सुवेलस्तेन विधुतस्तत्कम्पेन भूमिकम्पात्कम्पितः सागरो यस्माद् एवंभूते धनुषि रघुपतिनास्फालिते सति कम्पिता गृहाः प्राकाराश्च यत्र तथाभूता लङ्काङ्गानामवयवानां यत्क्षेपणमितस्ततः प्रापणं तेन विषमं यथा स्यादेवं वेपत इव । अन्यस्यापि कम्पे करचरणादिक्षेपणं भवतीति ध्वनिः । तथा च गृहप्राकारादिकमङ्गत्वेनोत्प्रेक्ष्य तत्कम्पे लङ्काकम्पत्वमुत्प्रेक्षितमित्यास्फालनशब्दस्य सकलकम्पहेतुत्वादुच्चैस्त्वं सूचितम् ॥

अथास्फालनशब्दस्य सीताकर्णगोचरतामाह—

क्षीणपुलआइअङ्गी अउव्वहरिसमिलिआणणा जणअसुआ ।
सोऊण समासत्था पढमुल्लावं व राहवस्स धणुरवम् ॥ ३७ ॥

[क्षीणपुलकाचिताङ्ग्यपूर्वहर्षमिलितानना जनकसुता ।
श्रुत्वा समाश्वस्ता प्रथमोल्लापमिव राघवस्य धनूरवम् ॥]

राघवस्य प्रथमसंभाषणमिव प्रथमाह्वानमिव धनुःशब्दं श्रुत्वा जनकसुता समाश्वस्ता मत्प्रत्युद्धारः स्यादित्यध्यवसायेन प्रीतहृदयाभूदित्यर्थः । कीदृशी । क्षीणं चिन्तादुर्बलम् । अथ च—पुलकैराचितमङ्गं यस्यास्तादृशीति रामधनुःशब्देन सात्त्विकभावोदय उक्तः । एवम्—अपूर्वेण प्रागनाशङ्कितेन हर्षेण मिलितमाननं यस्या इति विकसितत्वादिरूपमुखचेष्टासूचनम् । अन्योऽपि देशान्तरादागत्याहूय कुशलप्रश्नादिना विरहिणीमाश्वासयतीति ध्वनिः ॥

अथ कपीनां कलकलमाह—

मुच्छाविअजुवइजणो रक्खसवइहिअअमहिहरासणिघाओ ।
वामोहेइ पुरिअणं सीआकण्णसुहओ पवङ्गकलअलो ॥ ३८ ॥

[मूर्च्छितयुवतीजनो राक्षसपतिहृदयमहीधराशनिघातः ।
व्यामोहयति पुरीजनं सीताकर्णसुखदः प्लवङ्गकलकलः ॥]

प्लवङ्गानां कलकलः पुरी लङ्का तज्जनं व्यामोहयति गभीरत्वादाकस्मिकत्वाच्च । कीदृक् । मूर्च्छितो राक्षसयुवतीजनो येन । युवतीत्वेन पतिविनाशशङ्कया कातरताधिक्यात् । एवम्—राक्षसपतेर्हृदयमेव दृढत्वात्तुङ्गत्वाच्च महीधरस्तत्राशनिघात एव । भेदकत्वादशनिपर्वते पततीति ध्वनिः । एवंभूतो दुःसहः सीताकर्णयोः परं सुखदः सुभगो वा । पतिसंबन्धित्वादिति भावः ॥

अथ कपीनां दिशि दिशि धावनमाह—

कइवररहसुद्धाइअधुअसमअपहाविओअहिसमक्कन्तो ।
सलिलभरेन्तदरिमुहो रसइ पसम्मन्तपडिरवं धरणिहरो ॥ ३९ ॥

[कपिवररभसोद्धावितधुतसमयप्रधावितोदधिसमाक्रान्तः ।
सलिलभ्रियमाणदरीमुखो रसति प्रशाम्यत्प्रतिरवं धरणीधरः ॥]

धरणीधरः सुवेलो रसति शब्दायते । कीदृक् । कपिवराणां रभसेन यदुद्धावितं वेगस्तेन धुतसमयो मुक्तमर्यादोऽतः प्रधावित उत्पथगामी य उदधिस्तेन समाक्रान्तः। अत एव—सलिलेन भ्रियमाणं पूर्यमाणं दरीमुखं यत्र तथाभूतः । तथा च दरीषूच्छलितसमुद्रजलप्रवेशादुत्थितशब्दत्वेन रसतीत्यर्थः । अत एव—प्रशाम्यन्ननुत्तिष्ठन् प्रतिरवो यत्र तद्यथा स्यादिति क्रियाविशेषणम् । कंदराणां जलपूर्णत्वात्प्रतिध्वनेरनुत्पत्तिरिति भावः ॥

अथ रामधनुःशब्दनिवृत्तिमाह—

**णिज्जिअसेसकलअलो पढमप्फालिअरसन्तधणुणिग्घोसो ।**
**सामरिसविअम्भिआणणदहवअणाअण्णिओ चिरेण पसन्तो ४०**

[निर्जिताशेषकलकलः प्रथमास्फालितरसद्धनुर्निर्घोषः ।
सामर्षविजृम्भिताननदशवदनाकर्णितश्चिरेण प्रशान्तः ॥]

रामेण प्रथममास्फालितस्य, अत एव—रसतो धनुषो निर्घोषः प्रतिरव एतावानतिगभीरोऽयमिति सामर्षत्वाद्विजृम्भितमाताम्रभ्रुकुटिमत्त्वादुद्धतमाननं यस्य तेन दशवदनेनाकर्णितः संश्चिरेण प्रशान्तो गभीरत्वात्। कीदृक् । निर्जितोऽशेषः सकलः शेषः स्वभिन्नो वा कलकलो येन । तथा च सामर्षेणापि रावणेन श्रुत एव नतु तद्गाम्भीर्यमुषितचित्तेन प्रत्युत्तरमाचरितुं पारितमिति भावः । श्रुतिबाहुल्येनाकर्णनवैलक्षण्यप्रतिपादनाय दशवदनपदेनोपन्यासः ॥

अथ रावणजागरणमाह—

**ताव अ रक्खसणाहो पाआरन्तरिअकडइअं कइसेणम् ।**
**रणमहिअं अगणेन्तो णिअए णिद्दापरिक्खअम्मि विउद्धो ॥ ४१ ॥**

[तावच्च राक्षसनाथः प्राकारान्तरितकटकितं कपिसैन्यम् ।
रणमहितमगणयन्निजके निद्रापरिक्षये विबुद्धः ॥]

यावद्रामधनुर्ध्वनिः शाम्यति तावदेव निजके स्वभावसिद्धे न तु भयादिनिमित्तके निद्रापरिक्षये सति राक्षसनाथो विबुद्धो जागरितः । किं कुर्वन् । प्राकारेणान्तरितं व्यवहितम्, अथ च कटकितं कटकत्वेन सेनात्वेन व्यवस्थितम् । यद्वा—कटकं वलयस्तद्वल्लङ्कामावेष्ट्य स्थितं, कपिसैन्यं रणे महितं सत्कृतमप्यगणयन् । एतेनाहंकारित्वमुक्तम् ॥

अथ रावणस्य पार्श्वपरिवर्तनमाह—

वहइ विवलाअणिद्दं विइओवासपरिअत्तणावद्धसुहम् ।
विसमसुअमङ्गलरवं ओहीअन्तपअलाइअं दहवअणो ॥ ४२ ॥

[वहति विपलायमाननिद्रं द्वितीयावकाशपरिवर्तनाबद्धसुखम् ।
विषमश्रुतमङ्गलरवमवहीयमानप्रचलायितं दशवदनः ॥]

दशवदनोऽवहीयमानं क्रमेण ह्रसमानं प्रचलायितं तल्पे आलस्याद्घूर्णनं वहति । किंभूतम् । विपलायमानापगच्छन्ती निद्रा यत्र, एवं द्वितीयावकाशे तल्पस्यापरभागे परिवर्तनेन पार्श्वशयेनाबद्धं सुखं येन । अत एव किंचित्तन्द्रीसत्त्वाद्विषममपरिस्फुटं श्रुतो मङ्गलरवो जयजीवेत्यादिरूपश्चारणादिकृतो मृदङ्गादिसमुत्थो वा यत्र तथाभूतम् । इति मङ्गलरवस्याकर्णनवैषम्येणासन्नविनाशत्वमपि ध्वनितम् । 'घूर्णितं प्रचलायितम्' इत्यमरः ॥

अथामुष्य तन्द्रीभङ्गमाह—

तो महुमअमुच्चन्तामसिणोहीरन्तलोहिअच्छिणिहाअम् ।
धणुसद्दामरिसहअं णिद्दासेसं दसाणणस्स विअलिअम् ॥ ४३ ॥

[ततो मधुमदमुच्यमानामसृणापह्रियमाणलोहिताक्षिनिघातम् ।
धनुःशब्दामर्षहतं निद्राशेषं दशाननस्य विगलितम् ॥]

ततो घूर्णितानन्तरं दशाननस्य निद्राशेषमालस्यरूपं विगलितमपगतम् । किंभूतम् । मधुमदेन मुच्यमानः अत एव आ ईषन्मसृणमपह्रियमाणो मन्दं मन्दमुन्मील्यमानो लोहिताक्षिसमूहो यत्र । दशमुखत्वान्मुद्रणादिव्यापारेण मधुमदश्चक्षुषि तिष्ठतीति भावः । 'ही अन्त-' इति पाठे—अवहीयमानमपचीयमानं लौहित्यं यत्र तथाभूताक्षिवृन्दमित्यर्थः । 'मुचन्तम्' इति पाठे—निद्राशेषस्यैव विशेषणम् । मधुमदस्यापि तदानीमपगमादित्यर्थः । पुनः किंभूतम् । मदग्रेऽप्येवं प्रौढिरिति रामधनुःशब्दामर्षेण हतं खण्डितम् । वीररसोत्पत्तेरिति भावः ॥

अथामुष्याङ्गभङ्गिमाह—

तुङ्गमणितोरणाइ व एक्कक्कमलङ्घिअङ्गुलिकरालाइं ।
उद्धं भुअजुअलाइं मुअइ वलेऊण णिअअसअणुच्छङ्गे ॥ ४४ ॥

[तुङ्गमणितोरणानीव एकैकक्रमलङ्घिताङ्गुलिकरालानि ।
ऊर्ध्वं भुजयुगलानि मुञ्चति वलयित्वा निजकशयनोत्सङ्गे ॥]

रावणो भुजयुगलानि ऊर्ध्वं वलयित्वा उत्थाप्य तिर्यग् नीत्वा वलित्वा स्वयमेव पार्श्वायितो भूत्वा निजकमात्मीयं न तु सीतागतमनस्कत्वादरुचिविषयमन्दोदरीप्रभृतीनामपि यच्छयनं तदुत्सङ्गे मुञ्चति क्षिपति । विंशतिभुजत्वाद्द्वयोर्द्वयोर्वामदक्षिणभुजयोरङ्गभङ्गावेकीकरणाद्युगलानीति बहुत्वोपन्यासः । किंभूतानि । एकैकक्रमेण लङ्घिताः परस्परसंधिभिर्निर्गत्य परस्परमतिक्रम्य संबद्धा या अङ्गुलयः । करयोरित्यर्थात् । ताभिः करालानि दन्तुराणि, अत एव तुङ्गानि यानि मणिविशिष्टानि तोरणानि पुरद्वाराणि तानीव तत्सदृशानि । भुजयोर्द्वारपार्श्ववर्तिस्तम्भाभ्यामङ्गुलीनामुपरिस्थकङ्कुराभिस्तुल्यत्वादित्याशयः । अङ्गदादिसत्त्वान्मणिशब्दोपादानम् ॥

अथ युद्धोद्योगसूचकं रावणवाद्यरवमाह—

अह भअचलिएरावणभज्जन्तक्खम्भदिण्णसुरसंखोहम् ।
आहम्मिउं पअत्तं रणसंणाहपिसुणं दशाणणतूरम् ॥ ४५ ॥

[अथ भयचलितैरावणभज्यमानस्तम्भदत्तसुरसंक्षोभम् ।
आहन्तुं प्रवृत्तं रणसंनाहपिशुनं दशाननतूर्यम् ॥]

अथ रावणोत्थानानन्तरं रणाय यः संनाहस्तस्य ज्ञापकं दशाननस्य तूर्यं पटहं आहन्तुं प्रवृत्तं वादयितुमारब्धम् । किंभूतम् । भयाच्चलितेन पलायमानैनैरावणेन भज्यमानो यो बन्धनस्तम्भस्तेन दत्तः सुरेभ्यः संक्षोभो येन तत् । तदानीमन्योपरोधनिबन्धनत्वेनातिगम्भीरतया तादृशरवस्य कदाप्यसंभवादिति भावः ॥

अथ सप्तभिः स्कन्धकैरबलाभिः सह शयितानामपि रक्षसां शृङ्गारजित्वरं वीररसमाह—

रणसण्णापडिबुद्धा गहिअजहासण्णपहरणा रअणिअरा ।
मीलन्तकण्ठलग्गं थोअं घेत्तूण णिग्गआ जुअइजणम् ॥ ४६ ॥

[रणसंज्ञाप्रतिबुद्धा गृहीतयथासन्नप्रहरणा रजनीचराः ।
मीलत्कण्ठलग्नं स्तोकं गृहीत्वा निर्गता युवतिजनम् ॥]

रजनीचरा मीलन्नेव निद्रालस्येन मुद्रितनेत्र एव कण्ठलग्नः समराय गच्छतीति कृतालिङ्गनो यस्तं युवतिजनमपि स्तोकं गृहीत्वापि श्रितैकभुजव्यापारादिनैव तत्सं-

तोषाय प्रत्यालिङ्ग्य निर्गता मदग्रे मा केऽपि गच्छन्त्वित्यहमहमिकया प्रस्थिता इति वीरोत्कर्षः सूचितः । अत एवोक्तं रणाय संज्ञा संकेतो वाद्यरवः परकृतकरादिव्यापारो वा तेन प्रतिबुद्धा जागरिताः सन्तो गृहीतं यथा निकटवर्तिखड्गमारभ्य लगुडपर्यन्तं प्रहरणमत्रं यैस्तथाभूता इति सत्वरता सदसद्विचारवैमुख्येन जितकाशित्वं च सूचितम् ॥

आउच्छमाणगहिआ सुअम्मि अत्थेक्कसमरसण्णावडहे ।
जुअइमुहाहि पिआणं णेन्ति अमुक्कसिढिलट्ठिआ अहरोट्ठा ॥४७॥

[आपृच्छ्यमानगृहीताः श्रुते आकस्मिकसमरसंज्ञापटहे ।
युवतिमुखात्प्रियाणां निर्यान्त्यमुक्तशिथिलस्थिता अधरौष्ठाः ॥]

अकस्मात्समराय संज्ञा संकेतस्तत्सूचकपटहे तद्ध्वनौ श्रुते सति आपृच्छ्यमानाभियौद्धुमनुज्ञाप्यतामित्यादिसंवदनविषयीक्रियमाणाभिः स्त्रीभिर्गृहीतास्तदानीमुत्कण्ठया निजाधरौष्ठेन पातुमाक्रान्ताः प्रियाणामधरौष्ठा युवतिमुखान्निर्यान्ति बहिर्भवन्ति । किंभूताः । अमुक्ताः प्रियैस्तासामनुरोधेनात्याजिता अपि संग्रामचित्तत्वादव्यापारितत्वेन शिथिलस्थितास्ताभिरपि वैमनस्येन तथानाक्रान्ततया दृढं न संबद्धाः । अतः स्वयमेवापसरन्तीति भावः । यद्वा—प्रियाभिरेवामुक्ता अपीत्यर्थः । ऊर्ध्वोष्ठस्य पानावर्णनेन अधः स्थिता अधररूपा वा ओष्ठा इत्यर्थः । यद्वा—अधरसहिता ओष्ठा गृहीताश्चुम्बिता इत्युभयोरन्वयः ॥

पिअअमकण्ठोलइअं जुअईण सुअम्मि समरसण्णाहरवे ।
ईसिणिहं णवर भअं सुरअक्खेएण गलइ बाहाजुअलम् ॥ ४८ ॥

[प्रियतमकण्ठावलगितं युवतीनां श्रुते समरसंनाहरवे ।
ईषन्निभं केवलं भयं सुरतक्षेपेण गलति बाहायुगलम् ॥]

युद्धाय गच्छतीति प्रियतमस्य कण्ठेऽवलगितमालिङ्गनाय नियोजितं युवतीनां बाहा बाहुस्तद्युगलमकस्मात्समरसंनाहाय रवे ढक्कायाः श्रुते सति नायकस्य युद्धरसोत्पत्त्या सुरतस्य क्षेपेण त्यागेन गलति स्खलति । तत्र भयं केवलं किंचिन्निभं व्याजः । तथा च संभावितयुद्धभिया बाहू विश्लथाविति व्याजमात्रम् । वस्तुतस्तु रसान्तरितनायकौदास्येन विलक्ष्यचित्ततया नायिकानामप्यालिङ्गनं विघटितमिति भावः । रसभङ्गवर्णनमशकुनत्वेन वीररसपोषकत्वेन च न दोषावहमित्यवधेयम् । 'बाहा भुजायां बाहस्तु मानभेदे वृषे हये' ॥

सुअसण्णारवतुरिआ पडिवण्णाउहत्थवलिअकरअला ।
उव्वेल्लन्ति णिसिअरा वच्छवलन्तत्थणं पिआवेढसुहम् ॥ ४९ ॥

[श्रुतसंज्ञारवत्वरिताः प्रतिपन्नायुधविहस्तवलितकरतलाः ।
उद्वेल्लयन्ति निशाचरा वक्षोवलत्स्तनं प्रियावेष्टसुखम् ॥]

श्रुतेन संज्ञारवेण युद्धसंकेतशब्देन । ढक्कादीनामित्यर्थात् । त्वरिता निशाचराः प्रतिपन्नं प्राप्तं यदायुधं तत्र वीरकामरसयोरुत्पत्त्या विहस्तं व्यग्रमत एव धर्तुमधर्तुं वा एकतरपरिच्छेदाभावाद्वलितं वक्रत्वेनासम्यक् संबद्धं करतलं येषां तथाभूताः सन्तो वक्षसि वलन्तौ स्थिरत्वाभावादालिङ्गनदार्ढ्याभावेन तिर्यग्लुठन्तौ स्तनौ यत्र तादृशं प्रियाणामावेष्टमालिङ्गनं तत्सुखमुद्वेल्लयन्ति चञ्चलयन्ति । द्विचित्ततया न स्थिरीकुर्वन्तीत्यर्थः । स्तनादिपरिहारेण खड्गादावेव हस्तस्य व्यग्रतयापि वीरस्यैवोत्कर्ष इति भावः । उद्वेल्लयन्ति त्याजयन्ति करस्य व्यापृतत्वाद्वक्षसैवेति भाव इति केचित् ॥

रुम्भन्तीण पिअअमे अकअउव्वे वि पणअभङ्गम्मि कए ।
जुअईण चिरपरूढो भअहित्थम्मि हिअए ण लग्गइ माणो ॥५०॥

[रुन्धतीनां प्रियतमानकृतपूर्वेऽपि प्रणयभङ्गे कृते ।
युवतीनां चिरप्ररूढो भयोद्विग्ने हृदये न लगति मानः ॥]

नायकैरकृतपूर्वेऽपि अकर्तव्येऽपि वा प्रणयस्य भङ्गे नायिकान्तरासङ्गादिना कृते सति चिरप्ररूढो युवतीनां मानो युद्धे किं स्यादिति भयोद्विग्ने हृदये न लगति । किंभूतानाम् । प्रियतमान् रुन्धतीनां युद्धान्निवर्तयन्तीनाम् । तथा चानिवर्तने गमिष्यत्येवेत्यवगत्यैव तत्प्रतिबन्धाय मनोऽपगच्छतीत्यर्थः । यद्वा प्रियतमान् रुन्धतीनां भाविविश्लेषशङ्कया सुरते नियोजयन्तीनामित्यर्थः ॥

जह जह पिआइ रुब्भइ संभाविअसामिआवमाणब्भहिअम् ।
तह तह भडस्स वड्ढइ संमाणिअमच्छरेण समरुच्छाहो ॥५१॥

[यथा यथा प्रियया रुध्यते संभावितस्वाम्यपमानाभ्यधिकम् ।
तथा तथा भटस्य वर्धते संमानितममत्सरेण समरोत्साहः ॥]

भटस्य समरोत्साहः प्रियया यथा यथा रुध्यते निवर्तनेनालिङ्गनचुम्बनादिरसान्तरापादनेन वा विघटते तथा तथा संभावितेन तर्कितेन स्वामिनोऽपमानेना-

भ्यधिकं यथा स्यादेवं संमानितेनादृतेन शत्रुं प्रति मात्सर्येण सह वर्धते अगमने सति स्वामी रावणोऽपमानं कुर्यादित्युत्साहमात्सर्ययोराधिक्यमिति भावः ॥

अथ राक्षसानां प्रयाणमाह—

दइआकरेहि धरिआ खलिआ पणएण पेम्मराएण हिआ ।
माणेण ववत्थविआ रणपरिओसेण णिग्गआ रअणिअरा ॥५२॥

[दयिताकराभ्यां धृताः स्खलिताः प्रणयेन प्रेमरागेण हृताः ।
मानेन व्यवस्थापिता रणपरितोषेण निर्गता रजनीचराः ॥]

प्रथमं दयितानां कराभ्यां धृताः, अथ प्रणयेन स्खलिता विहतगमनोद्यमाः, तदनु प्रेम्णा रागेण च हृता दयिताभिमुखीकृता एवंभूता अपि रजनीचरा मानेनाहंकारेण व्यवस्थापिता गमनाय स्थिरीकृताः सन्तः संभोगापेक्षया रणे परितोषेण पक्षपातेन निर्गता इति प्रस्थाने निवर्तनेनामङ्गलमुक्तम् । प्रणयप्रेमरागाणामुत्तरोत्तरमुत्कर्षेण भेदः ॥

कियद्भिः संनहनं न कृतमित्याह—

सुरसमरुच्चच्छन्दा कइसमसीसलहुआइअम्मि रणभरे ।
लज्जन्ति अ संणहिउं ण अ विसहन्ति पसरं परस्स णिसिअरा५३

[सुरसमरोच्चच्छन्दाः कपिसमशीर्षलघुकायिते रणभरे ।
लज्जन्ते च संनद्धुं न च विषहन्ते प्रसरं परस्य निशिचराः ॥]

निशिचराः सुराणां समरे उच्चच्छन्दोऽभिप्रायो येषां तथाभूताः, अत एव कपिभिः समं समशीर्षेण स्पर्धया लघुके श्लाघनीये प्रकृते रणभरे संनद्धुं संनाहं कर्तुं लज्जन्ते सुरसमर एव संनाहो युक्त इत्याशयात् । तर्हि युध्यन्ति कुत इत्यत आह—चो हेतौ । यतः परस्य शत्रोः प्रसरमतिक्रमं न विषहन्ते । तथा च पराक्रमभञ्जनाय परं युध्यन्ति । सत्संनाहेन विनापि स्यादिति गर्वः सूचितः । 'अभिप्रायवशौ छन्दौ' इत्यमरः ॥

अथ प्रभूणां कियतांचिन्नीतिसिद्धत्वे पुनः संनहनमाह—

वणविवरेसु करालं वणवेढेसु मुहलं खलन्तद्धन्तम् ।
होइ उरत्थलविसमं पुट्ठिणिराअट्ठिअं महोअरकवअम् ॥ ५४ ॥

[व्रणविवरेषु करालं व्रणवेष्टेषु मुखरं स्खलदर्धान्तम् ।
भवत्युरःस्थलविषमं पृष्ठनिरायतस्थितं महोदरकवचम् ॥]

महोदरस्य रावणभ्रातुः कवचं भवति । कीदृशम् । संधुक्षितानां व्रणानां विवरेषु करालं सच्छिद्रम् । एवं व्रणानां वेष्टेषु उच्छ्वसितसंधुक्षितमांसभागेषु बुद्बुदाकारेषु मुखरं मिथः संघट्टाच्छब्दायमानम् । अत एव तत्रैव स्खलन्नवरोधेन हठादनपसरन्नेकदेशो यस्य । एतेन बहुयुद्धविजयित्वमुक्तम् । एवमुरःस्थले विषममुदरस्य महत्त्वेन निम्नोन्नतम् । एवं पृष्ठे निरायतं दीर्घं सत्स्थितं स्थिरम् । समत्वेन मिलितत्वादिति भावः ॥

प्रहस्तस्य संनहनमाह—

**सुरसमरदिट्ठसारो रक्खसणाहस्स जङ्गमो पाआरो ।**
**सरमोक्खेसु सुहत्थो संणज्झइ हरिसिओ कमेण पहत्थो ॥५५॥**

[सुरसमरदृष्टसारो राक्षसनाथस्य जङ्गमः प्राकारः ।
शरमोक्षेषु सुहस्तः संनह्यते हर्षितः क्रमेण प्रहस्तः ॥]

प्रहस्तो रावणमातुलः सेनापतिः क्रमेणासंभ्रमाद्यथोचितप्रकारेण संनह्यते । कीदृक् । सुराणां समरे दृष्टं सारं बलं यस्य । तत्र कृतकार्य इत्यर्थः । एवं राक्षसनाथस्य जङ्गमो गतिशीलः प्रकारो महत्त्वादावरकत्वाच्च । एवं शराणां मोक्षेषु सुहस्तो लघुहस्तः । अत एव हर्षितो युद्धरसवत्त्वादिति भावः । 'पाआवो' इति पाठे प्रताप इत्यर्थः ॥

त्रिशिरसस्तदाह—

**तिसिरस्स समुक्खित्तो बहुकण्ठन्तरकरालिओ संणाहो ।**
**सिढिलं चिअ ओसरिओ एक्कमुहुक्खित्तहत्थतणुअम्मि उरे ॥५६॥**

[त्रिशिरसः समुत्क्षिप्तो बहुकण्ठान्तरकरालितः संनाहः ।
शिथिलमेवापसृत एकमुखोत्क्षिप्तहस्ततनुके उरसि ॥]

त्रिशिरसो रावणपुत्रस्य मस्तकत्रयप्रवेशसौकर्याय उद्धूर्ध्वं क्षिप्तः संनाहो बहूनां कण्ठानामन्तरेषु मध्येषु करालितः सच्छिद्रः सन्नुरसि शिथिलं मन्दमेवापसृतोऽधोगतो न तु हठात् । उरसि कीदृशे । एकमुखेनैकोपक्रमेणोत्क्षिप्तैः संनाहबाहुमध्यप्रवेशनायोत्तोलितैर्हस्तैस्तनुके । मिलितोत्थापितहस्तपद्धतया कृष्या कृशीभूतेऽपी-

त्यर्थः। अत एव कण्ठत्रयकरषट्तया वैषम्येण तिर्यग्भूतत्वात्प्रतिरुद्धगतित्वेनापसरणे शैथिल्यमिति भावः॥

महोदरस्य तदाह—

दिण्णमहिअम्पगरुअं संचालेन्ते महोअरे अप्पाणम्।
वच्छत्थलपुञ्जइओ ओसरइ भरेण अप्पणो संणाहो॥५७॥

[दत्तमहीकम्पगुरुकं संचालयति महोदर आत्मानम्।
वक्षःस्थलपुञ्जितोऽपसरति भरेणात्मनः संनाहः॥]

दत्तेन महीकम्पेन गुरुकं यथा स्यादेवं महोदरे आत्मानं शरीरं संचालयति सति वक्षःस्थले पुञ्जितो वर्तुलीभूतोऽपि संनाह आत्मनः संनाहस्यैव भरेण गौरवेणापसरति। उदरमहत्त्वेन प्रतिरुद्धगतिरपि देहसंचारजनितसंचारादधः पततीत्यर्थः। इति संनाहमहत्त्वेन देहमहत्त्वमुक्तम्। पूर्वमुरसि विषमस्थितत्वमात्रमुक्तमिदानीं परिधानपर्यन्तमित्यपौनरुक्त्यम्। अन्य एव महोदरोऽयमिति वा॥

इन्द्रजितस्तदाह—

णीसरिएरावणदन्तमुसलदीसन्तमसिणणिहसच्छाअम्।
कवअं मज्झकरालं उत्तम्भिज्जइ उरत्थले इन्दइणो॥ ५८॥

[निःसृतैरावणदन्तमुसलदृश्यमानमसृणनिघर्षच्छायम्।
कवचं मध्यकरालमुत्तभ्यते उरःस्थले इन्द्रजितः॥]

इन्द्रजितो रावणपुत्रस्य उरःस्थले कवचमुत्तभ्यते उत्तानीक्रियते। हृदयस्योन्नतत्वेनेत्यर्थात्। किंभूतम्। निःसृतानां भित्त्वा बहिर्गतानामैरावणदन्तमुसलानां दृश्यमानस्य मसृणस्य नूतनत्वाच्चिक्कणस्य निघर्षस्य निघर्षणस्थानस्य च्छाया कान्तिरुज्ज्वलता यत्र तत्। अत एव मध्ये करालं सच्छिद्रम्॥

अतिकायस्य तदाह—

अइकाअस्स वि कवए चिरेण ऊरूसु ठिअपलम्बोसारे।
देहप्पहाविमुक्कं जाअं वोच्छिण्णकसणमिहिअं व णहम्॥ ५९॥

[अतिकायस्यापि कवचे चिरेणोर्वोः स्थितप्रलम्बावसारे।
देहप्रभाविमुक्तं जातं व्यवच्छिन्नकृष्णमेघिकमिव नभः॥]

चिरेण देहदैर्घ्याद्विलम्ब्यावपतनेनोर्वोः स्थितः प्रलम्बोऽवसारः प्रस्तारो यस्येत्यू-

रूपर्यन्तलम्बितेऽतिकायस्यापि रावणपुत्रस्य कवचे नभो गगनं व्यवच्छिन्ना पृथग्भूय संगता कृष्णमेघिका यत्र तथाभूतमिव जातम् । नभसि मेघवन्नीलं कवचमपि लग्नमित्यर्थः । नभः कीदृशम् । देहस्य कवचान्तरितत्वेन तत्प्रभया विमुक्तं त्यक्तमिति स्वरूपनिर्वचनमात्रम् । 'कवचम्' इति प्रथमान्तपाठे देहप्रभया श्यामया विमुक्तं त्यक्तं सत् व्यवच्छिन्नापगता कृष्णमेघिका यत्र तथाभूतं नभ इव जातम् । यथा निर्मेघतया केवलमेव नभो लक्ष्यते तथा देहकान्तितिरोधानात्कवचमपीत्यर्थः । वस्तुतस्त्वत्र पक्षे 'देहप्पहाणुविद्धम्'इति पाठः, तथा च देहप्रभाभिरनुविद्धं लौहवलयच्छिद्रैर्बहिर्भूय संबद्धं जातं तत्र व्यवच्छिन्ना पृथग्भूता कृष्णमेघिका यत्र तादृशं नभ इवेति श्यामत्वेन कवचनभसोर्देहप्रभामेघयोश्च तौल्यमिति यथा नभसि मेघो लक्ष्यते, तथा कवचे देहप्रभापीत्यर्थः ॥

धूम्राक्षस्य तदाह—

**समरतुरिओ विसूरइ उरत्थलुव्वत्तदाविअंसोवासम् ।**
**आबन्धिऊण कवअं वज्जमुहच्छिण्णबन्धणं धुम्मक्खो ॥ ६० ॥**

[समरत्वरितः खिद्यते उरःस्थलोद्वृत्तदर्शितांसावकाशम् ।
आबद्ध्य कवचं वज्रमुखाच्छिन्नबन्धनं धूम्राक्षः ॥]

समराय त्वरितो धूम्राक्षः कवचमाबद्ध्य खिद्यते योऽहमिन्द्रेण समं युद्धवान् स एव कपिभिर्योद्धुं संनह्यामीत्याशयात् । किंभूतम् । वज्रमुखेन छिन्नं बन्धनं यस्य तथाभूतम् । अत एव उरःस्थले उद्वृत्तं बन्धनाभावेन विपरीत्य पतितम्, अतो दर्शितोऽसावकाशोऽसप्रदेशो येनेति संमुखघातेन शूरत्वमुक्तम् ॥

अशनिप्रभस्य तदाह—

**रोसेण चिरप्परूढे फुडिए असणिप्पहस्स वणसंघाए ।**
**कवअविवरेहि गलिअं सुइरं उप्पाअजलहरस्स व रुहिरम् ॥६१॥**

[रोषेण चिरप्ररूढे स्फुटितेऽशनिप्रभस्य व्रणसंघाते ।
कवचविवरैर्गलितं सुचिरमुत्पातजलधरस्येव रुधिरम् ॥]

अशनिप्रभस्य रावणमातुलस्य रुधिरं कवचविवरैः सुचिरं गलितम् । कस्मिन्सति । चिरात्प्ररूढे उन्नतमांसीभूय संधुक्षिते व्रणसंघाते रोषेण स्फुटिते सति । रोषजन्यस्पन्दनेनोत्फुल्लतया कवचघर्षणात् । किंभूतस्येव । उत्पातजलधरस्येव । यथा तस्माद्रुधिरं गलतीत्यर्थः । श्यामत्वादनिष्टसूचकत्वाच्च तेनोपमा ॥

निकुम्भस्य तदाह—

उक्खिप्पन्तणिराआ अमरिसवेअवलिए णिउम्भस्स उरे ।
फुडदाविअसीमन्ता विअलिअलोहवलआ विसट्टइ माढी ॥ ६२ ॥

[उत्क्षिप्यमाणनिरायतामर्षवेगवलिते निकुम्भस्योरसि ।
स्फुटदर्शितसीमन्ता विगलितलौहवलया विशीर्यते माढी ॥]

निकुम्भस्य कुम्भकर्णसुतस्यामर्षस्य क्रोधस्य वेगेन त्वरया समुद्गमेन वलिते उच्छ्वसिते उरसि माढी। देश्यां लौहाङ्गलीयघटितो 'जिरह' इति प्रसिद्धः । संनाहो विशीर्यते द्विधा भवति । किंभूता । उत्क्षिप्यमाणा सती निरायता दीर्घा । एवम्— स्फुटं दर्शितः सीमन्तो द्विधाभावरेखा यया । अत एव विगलितानि त्रुटित्वा पतितानि लौहवलयानि यस्याः । तथा च क्रोधेन हृदयस्योत्फुल्लतया कवचस्याति- पीडनाद् द्विधाभावेनामङ्गलं सूचितम् ॥

शुकस्य तदाह—

सुरपहरणघाअसहं सुओ वि सुपरिच्छअं णिबन्धइ कवअम् ।
समुहट्ठिअं ण आणइ पुरओ दुव्वाररामसरदुज्जाअम् ॥ ६३ ॥

[सुरप्रहरणघातसहं शुकोऽपि सुपरिच्छदं निबध्नाति कवचम् ।
संमुखस्थितं न जानाति पुरतो दुर्वाररामशरदुर्जातम् ॥]

रावणमन्त्री शुकोऽपि सुरप्रहरणानां घातसहं सुपरिच्छदं कवचं निबध्नाति । किंतु पुरतोऽग्रे भावि [दुर्वारेभ्यो] रामशरेभ्यो दुर्जातमुपद्रवं (तेषां दुर्जातं) देहं भित्त्वा दुर्निर्गमं वा संमुखस्थितं पुरोवर्त्यपि न जानाति न पश्यति । अत एव संनह्यतीत्यर्थः । रामशरनिपाते कवचेनापि न रक्षेति भावः ॥

सारणस्य संनहनाभावमाह—

तुरिआउच्छिअकामिणिवलन्तधणिओवऊहणाहिण्णाणम् ।
थणपरिमलं दअन्तो णीइ च्चिअ सारणो ण बन्धइ कवअम् ॥ ६४ ॥

[त्वरितापृष्टकामिनीवलद्धन्योपगूहनाभिज्ञानम् ।
स्तनपरिमलं दयमानो निरैत्येव सारणो न बध्नाति कवचम् ॥]

अपरो मन्त्री सारणो निरैति युद्धाय गच्छत्येव । परं कवचं न बध्नाति । किंभूतः । त्वरितमापृष्टाया वक्ष्यामीति संभाषितायाः कामिन्यास्तदैव वलतो धन्यो-

पगूहनस्य गाढालिङ्गनस्याभिज्ञानं चिह्नं स्तनयोः परिमलम् । कस्तूरिकादिपङ्कलेप-आलिङ्गनकाले स्ववक्षसि लग्नमित्यर्थात् । दयमानो रक्षन् कवचोपमर्देन न तिष्ठेदिति शृङ्गारितया प्रियायामनुरागित्वमुक्तम् ।

अथ रथानां घटनमाह—

जुत्ता कुम्भस्स रहे माआबद्धमुहलन्धआरधअवडे ।
सुररुहिरदंट्ठकेसरगुप्पन्तभुअङ्गपग्गहा केसरिणो ॥ ६५ ॥

[युक्ताः कुम्भस्य रथे मायाबद्धमुखरान्धकारध्वजपटे ।
सुररुधिरदंष्टकेसरव्याकुलभुजङ्गप्रग्रहाः केसरिणः ॥]

मायाबद्धो मुखरो गर्जन्नन्धकार एव ध्वजपटो यत्र तत्र कुम्भकर्णपुत्रस्य कुम्भस्य रथे केसरिणो युक्ता योजिताः । कीदृशाः । सुराणां रुधिरैर्दष्टेषु केसरेषु व्याकुला भुजङ्गा एव प्रग्रहाः खलीनरज्जवो येषु ते । शुष्कशोणितसंबन्धात्स्कन्ध-वालानां कार्कश्येन दुःस्थतया भुजङ्गानां व्याकुलत्वमिति भावः ॥

अथ राक्षसानां खड्गग्रहणमाह—

णिम्माएइ अमरिसं पडिहत्थेइ गरुअं पि सामिअसुकअम् ।
विहुणइ पराहिमाणं णिमिओ मुट्ठिम्मि मण्डलग्गस्स करो ॥ ६६ ॥

[निर्मापयत्यमर्षं प्रतिहस्तयति गुरुकमपि स्वामिसुकृतम् ।
विधुनोति पराभिमानं नियोजितो मुष्टौ मण्डलाग्रस्य करः ॥]

अयं खड्गोऽमर्षं जनयति । अतो गुरुकमपि स्वामिनः सुकृतमुपकारं प्रतिहस्त-यति प्रतिस्वीकरोति प्रत्युपकरोतीत्यर्थः । एवं परेषामभिमानमहंकारं विधुनोतीति कृत्वा करो हस्तो मण्डलाग्रस्य खड्गस्य मुष्टौ खड्गधारणस्थाने नियोजितो वीरैरि-त्यर्थात् । मिलिओ इति पाठे मिलित इत्यर्थः ॥

अथ देवस्त्रीणां स्वयंवरोत्कण्ठामाह—

संणज्झन्ति समत्था ण सहिज्जइ कलअलो विसूरइ हिअअम् ।
विरएइ सुरवहुजणो विमाणतोरणगआगओ णेवच्छम् ॥ ६७ ॥

---

१–२. दिग्धशब्दोऽपि पुस्तकान्तरे दृश्यते.

[संनिह्यन्ति समर्था न सह्यते कलकलः खिद्यते हृदयम्।
विरचयति सुरवधूजनो विमानतोरणगतागतो नेपथ्यम्॥]

समर्था राक्षसाः संनह्यन्ति। तैरेव कलकलः। कपीनामित्यर्थात्। न सह्यते। तेषामेव हृदयं खिद्यते। युद्धालाभादित्यर्थात्। इति कृत्वा सुराणां वधूजनो विमानस्य तोरणे द्वारि गतागतः सन् नेपथ्यमलंकारं विरचयति। वीराणां वरणाय युद्धजिज्ञासया विमानस्य द्वारपर्यन्तमागच्छति तदानीं युद्धाभावान्नेपथ्यचिकीर्षया पुनरन्तर्गच्छति चेति संग्रामे भविष्यद्बहुशूरपतनं सूचितम्॥

अथ लङ्कावरोधमाह—

इअ जा समरसअह्णो संणज्झइ हरिसिओ णिसाअरलोओ।
ता रहुवइदीसन्तं अल्लीणं चिअ समन्तओ कइसेणम्॥ ६८॥

[इति यावत्समरसतृष्णः संनह्यति हर्षितो निशाचरलोकः।
तावद्रघुपतिदृश्यमानमालीनमेव समन्ततः कपिसैन्यम्॥]

इत्यनेन प्रकारेण समरे सतृष्णो निशाचरलोको हर्षितः सन् यावत्संनह्यति तावदेव रघुपतिना दृश्यमानं कपिसैन्यं समन्तादालीनमेव संगतमेव। लङ्कायामित्यर्थात्। अतिहठाल्लङ्कावरोधेन कपीनामहंकारित्वमुक्तम्॥

अथ लङ्कोपमर्दमाह—

भग्गारामविओलं दलिउज्जाणभवणोवणिग्गमलहुइम्।
ओवग्गन्ति पवङ्गा सोहाविणिअंसणं णिसाअरणअरिम्॥ ६९॥

[भग्नारामविलोलां दलितोद्यानभवनोपनिर्गमलघुकाम्।
अवक्रामन्ति प्लवङ्गाः शोभाविनिदर्शनं निशाचरनगरीम्॥]

प्लवङ्गाः शोभाया विशेषतो निदर्शनं दृष्टान्तभूतां निशाचरनगरीं लङ्कामवक्रामन्ति उपमर्दयन्ति। अत्र प्रकारमाह—कीदृशीम्। भग्नैरारामैः साधारणोपवनैर्विलोलां भग्नारामां विलोलां चेति वा। एवम्—दलितैरुद्यानै राजोपवनैर्भवनैर्गृहैरुपनिर्गमैर्द्वारैर्लघुकामल्पीभूताम्। शोभैव विशिष्टं निवसनं वस्त्रं यस्या इत्यर्थो वा। 'आरामः स्यादुपवनम्', 'पुमानाक्रीड उद्यानम्' इत्यमरोभयत्र॥

अथ प्लवगानां कोलाहलमाह—

अङ्काअअरअणिअरं धीराअन्तपवआहिवधरिज्जन्तम् ।
रसइ विसमाअअपअं रोसुद्धाइअपरिट्ठिअं पवअबलम् ॥ ७० ॥

[अङ्कागतरजनीचरं धीरायमाणप्लवगाधिपध्रियमाणम् ।
रसति विषमागतपदं रोषोद्धावितपरिस्थितं प्लवगबलम् ॥]

अङ्क आगता लङ्कातः प्रत्यासन्ना रजनीचरा यस्य तथाभूतं प्लवगबलं रसति शब्दायते। राक्षसान्दृष्ट्वेत्यर्थात्। किंभूतम्। धीरायमाणेन प्लवगाधिपतिना ध्रियमाणमवेक्ष्यमाणम्। हे कपयः, मा धावत रजनीचरा निर्यान्तु ततो मारयतेत्युक्त्वा निरुध्यमानं वा। अत एव निशाचरानागच्छतो दृष्ट्वा हन्तुं रोषेणोद्धावितं पश्चात्सुग्रीवनिषेधेन परिस्थितम्। एवम्—विषमं व्यस्तमागतं पदं यस्य तथा। जातिस्वाभाव्यादित्यर्थः ॥

अथ नभसि देवतावतरणमाह—

रहसल्लिअन्तगव्विअकइसेण्णच्छन्दणहअलल्लीणसुरम् ।
वन्दित्तणदट्ठव्वं पेच्छइ सुरवहुजणो णिसाअरणअरिम् ॥ ७१ ॥

[रभसाल्लीयमानगर्वितकपिसैन्यछन्दनभस्तलालीनसुराम् ।
बन्दीत्वद्रष्टव्यां प्रेक्षते सुरवधूजनो निशाचरनगरीम् ॥]

सुराणां वधूजनो निशाचरनगरीं लङ्कां प्रेक्षते । हर्षेणेत्यर्थात् । किंभूताम् । पूर्वं बन्दीत्वेन बन्दीभावेन द्रष्टव्यां न तु रावणभिया स्वारसिकतयेति रावणप्रतापभङ्गः सूचितः। पुनः कीदृशीम् । रभसेन वेगेनालीयमानं संगतं सद्गर्वितं यत्कपिसैन्यं तच्छन्देन तद्वशेन नभस्तले आलीना अवतीर्णाः सुरा यत्र तथाभूताम् । येनैव क्रमेण प्राकारं परितः कपयः स्थितास्तेनैव क्रमेण राक्षसभिया कपिसंनिधिमाश्रित्य लङ्कोपरि नभसि देवता अपि स्थिता इत्यर्थः ॥

अथ प्लवगानामितस्ततो धावने वेगातिशयमाह—

रणरहसपत्थिआणं उरुवेअविसट्टसेलसिहरक्खलिआ ।
पवआण पढमभग्गा पडन्ति समइक्किआण मग्गेण दुमा ॥७२॥

[रणरभसप्रस्थितानामूरुवेगविशीर्णशैलशिखरस्खलिताः ।
प्लवगानां प्रथमभग्नाः पतन्ति समतिक्रामतां मार्गेण द्रुमाः ॥]

रणे रभसादुत्साहात्प्रस्थितानां प्लवगानां समतिक्रामतामतिक्रम्य गच्छतां सतां

मार्गेण पश्चादूर्वोर्वेगेन विशीर्णेभ्यः शैलशिखरेभ्यः स्खलिताः पृथग्भूता द्रुमाः पतन्ति । भूमावित्यर्थात् । किंभूताः । प्रथमं भग्ना वेगवशाद्दूरमग्रे गतेनोरुवातेन प्रथमं भग्ना अप्यतिक्रम्य गतेषु कपिषु पश्चात्पतन्तीति बलवेगवपुःप्रकर्ष उक्तः । केचित्तु प्रस्थितानामागतानामथातिक्रामतामागच्छतामित्येकेनैव पथा गतागतमाचरतामित्यर्थे प्रथमं गमनसमये भग्ना अपि भञ्जकवेगमारुता क्रान्तत्वादेव न पतिता अथागमनोत्तरं तन्निवृत्तौ पतिता इत्यर्थमाहुः ॥

अथ रावणस्य गजव्यूहरचनामाह—

णहअलसमुट्ठिएहिँ पाआरन्तरिअधअवडेहिँ पवङ्गाः ।
सूएन्ति गुडिअवारणरइअघडाबन्धसंठिए रअणिअरे ॥ ७३ ॥

[नभस्तलसमुत्थितैः प्राकारान्तरितध्वजपटैः प्लवङ्गाः ।
सूचयन्ति गुटितवारणरचितघण्टाबन्धसंस्थितान्रजनीचरान् ॥]

प्लवङ्गा गुटितानां कृतसंनाहानां वारणानां रचितेषु घण्टाबन्धेषु संस्थितान्रजनीचरान् सूचयन्ति तर्कयन्ति । कैः । नभस्तले समुत्थितैः प्राकारान्तरितानां ध्वजानां पटैः । तथा च प्राकारव्यवधानाददृष्टानव्युत्थितपताकासमूहेन गजाननुमायानुमिन्वन्तीत्यर्थः ॥

अथ कपीनां परस्परालपमाह—

भमइ पवणाणुसारी पवअबलस्स खलिउट्ठिअपउच्छलिओ ।
दुमभङ्गसद्दविसमो महिणीहरिअगरुओ समुल्लवणरओ ॥ ७४ ॥

[भ्रमति पवनानुसारी प्लवगबलस्य स्खलितोत्थितपदोच्छलितः ।
द्रुमभङ्गशब्दविषमो महीनिर्ह्रदितगुरुकः समुल्लपनरवः ॥]

प्लवगबलस्य समुल्लपनरवो निशाचरागमनशङ्काजनितयुद्धव्यवस्थानुकूलपरस्पराभाषणकोलाहलः पवनानुसारी सन् भ्रमति । वेगजनितः साहजिको वा वायुर्यदा यद्दिशि वाति तदा तत्रायमपीत्यर्थः । किंभूतः । प्रथमं स्खलितं त्वरावशाद्भूमावेव विपर्यस्तपतितम्, अथोत्थितमुत्थापितं यत्पदं तस्मादुच्छलितः संचारशब्दाद्बृद्ध्या ऊर्ध्वं परितश्च प्रापित इत्यर्थः ॥ अथात्रार्थे द्रुमाणां भङ्गाच्छब्देन विषमो नीचोच्चः । तदनु मह्या निर्ह्रदितेन गुरुको मांसलः ॥

अथ लङ्कापरिखातटभङ्गमाह—

णिद्दलिअमणिअडाणं देन्ति जहासण्णविवरपल्हत्थाणम् ।
विहडिअसुवेललम्बिअदिसावलन्तोज्झरत्तणं फडिहाणम् ॥ ७५ ॥

[निर्दलितमणितटानां ददति यथासन्नविवरपर्यस्तानाम् ।
विघटितसुवेललम्बितदिग्वलन्निर्झरत्वं परिखाणाम् ॥]

निर्दलितं प्लवङ्गसंचारात्त्रुटितं मणिमयं तटं यासां तासाम् । अतएव यथासन्नैर्विवरैर्निम्नभागैः पर्यस्तानामितस्ततो गतानां लङ्कापरिखानां तद्वर्तिजलानां विघटितात्कपिचङ्क्रमणात्क्वचित्क्वचिद्विशीर्णात्सुवेलाल्लम्बिताः पतिता दिक्षु वलन्तो वक्रीभूय वहन्तो ये निर्झरास्तद्भावं ददति । वानरा इत्यर्थात् । कपिचङ्क्रमणद्विधाभूतनानासुवेलप्रदेशानुस्यूतनानामहीनिम्नप्रदेशेन परिखाजलानि सुवेलमूलमतिक्रम्य गतानि सुवेलावतीर्णनिर्झरबुद्धिं जनयन्ति तत्सर्वं बद्धमणिमयपरिखातटविदलनद्वारा वानरा निष्पादयन्तीत्यर्थः ॥

अथ लङ्कागोपुरातिक्रममाह—

जे चिरआलपरूढा समराइक्छिअमहिन्दपअणिक्खेवा ।
ते णवर गोनुरन्तरविहडणचडुलेहि वाणरेहि विडहिआ ॥७६॥

[ये चिरकालप्ररूढाः समरातिक्रान्तमहेन्द्रपदनिक्षेपाः ।
ते केवलं गोपुरान्तरविघटनचटुलैर्वानरैर्विघटिताः ॥]

समरादतिक्रान्तस्य पलायितस्य महेन्द्रस्य ये पदनिक्षेपाश्चरणविन्यासस्थानानि चिरकालमारभ्य प्ररूढा उपचिताः प्रव्यक्ता इति यावत् । ते गोपुरस्य पुरद्वारस्य यदन्तरमभ्यन्तरं तस्य विघटने विमर्दने चटुलैश्चञ्चलैर्वानरैः केवलं विघटिता विमर्दिता नान्यैरित्यर्थः । पूर्वं लङ्कावरोधसमये पुरद्वारत एव महेन्द्रः पलायितस्तच्चरणचिह्नानि सर्वे पश्यन्त्विति रावणेनाद्यापि रक्षितानि, पुनस्तदा वानरैरेव स्वचरणविमर्दैरन्तरितानीति महेन्द्रापकीर्तिः कपिभिरपहस्तिता । तत्र रावणेन प्रतिबन्धः कर्तुं न शकित इति भावः । केऽपि न लक्षयन्त्विति राक्षसानामप्यगम्येनातिनिगूढेन क्वचित्कलङ्कान्तःप्रवेशेन पलायितस्य महेन्द्रस्याद्यापि स्थितानि चरणचिह्नानि कपिभिर्विलुलितानीति तत्प्रदेशगमनेन कपीनामतिप्रसरः सूचित इति वा ॥

अथ परिखाजलक्षोभमाह—

जाआ णिसाअरपुरी पाआरब्भन्तरावसेसधअवडा।
खणवाणरसंवेल्लिअफलिहाविज्झविअरक्खसेन्दपआवा ॥ ७७ ॥

[जाता निशाचरपुरी प्राकाराभ्यन्तरावशेषध्वजपटा।
क्षणवानरसंवेल्लितपरिखाविध्मापितराक्षसेन्द्रप्रतापा ॥]

राक्षसपुरी जाता। कीदृशी। प्राकाराभ्यन्तरेऽवशेषा अवशिष्टा ध्वजपटा यस्यां तथा सा। गोपुरासन्नध्वजपटानां कपिभिरपनीतत्वादिति भावः। एवम्—क्षणं व्याप्य वानरैः संवेल्लिताभिश्च क्रमाच्चञ्चलीकृताभिः परिखाभिर्विध्मापितो निर्वापितः। प्रशमं नीत इति यावत्। राक्षसेन्द्रस्य प्रतापो यत्र। तथा च बहिस्तत्प्रतापरूपो वह्निर्नास्तीति तत्प्रशमे विक्षोभितपरिखाजलप्रसरणहेतुकत्वमुत्प्रेक्षितम्, अन्योऽपि वह्निर्जलेन शाम्यतीति ध्वनिस्तेन प्राकाराभ्यन्तरमात्रपर्यवसायी रावणप्रतापः स्थित इति तात्पर्यम् ॥

अथ परिखावेष्टनमाह—

विअडगिरिऊडसंणिहणिरन्तरासण्णवाणरपरिक्खित्ता।
जाआ पाआरोहअमज्झव्वूढफडिह व्व रक्खसणअरी ॥ ७८ ॥

[विकटगिरिकूटसंनिभनिरन्तरासन्नवानरपरिक्षिप्ता।
जाता प्राकारोभयमध्यव्यूढपरिखेव राक्षसनगरी ॥]

विकटानि यानि गिरीणां कूटानि शृङ्गाणि तत्संनिभैस्तत्तुल्यैर्निरन्तरमासन्नैर्मिलितैर्वानरैः परिक्षिप्ता वेष्टिता राक्षसनगरी प्राकारद्वयमध्ये व्यूढोपचिता परिखा यस्यास्तादृशीव जाता। परिखाया एकः प्राकारः स्थित एव, अपरः परदिशि मण्डलाकारः स्थितः कपिव्यूह एवाभूदित्युत्प्रेक्षा। तथा चोक्तं रघौ—'द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः' इति ॥

अथ द्वारलग्नैः कपिभिर्द्वारमतिक्रम्य प्राकारेऽधिरूढमित्याह—

तो तं वलन्तविअडं वाणरसेण्णं विहत्तदाराहोअम्।
जाअं णिवहणिरन्तरलङ्कापाआरघडिअमण्डलिबन्धम् ॥ ७९ ॥

[ततस्तद्वलद्विकटं वानरसैन्यं विभक्तद्वाराभोगम्।
जातं निवहनिरन्तरलङ्काप्राकारघटितमण्डलीबन्धम् ॥]

ततः परिखोपरोधानन्तरं तद्वानरसैन्यं वलद्वारप्रदेशात्प्रवेशाय दिशि दिशि गच्छत्सद्विकटं विस्तीर्णं ततो विभक्तः संकीर्णत्वाद्युगपत्प्रवेशक्षमविस्ताराय राक्षसनिर्गमाय च भग्नो द्वारस्याभोगो विस्तारो येन तथाभूतं सन्निवहैः सजातीयैर्निरन्तरं मिलितं यथा स्यात्तथा लङ्काप्राकारे घटितो निर्मितो मण्डलीबन्धो मण्डलाकारावस्थितिर्येन तथा जातम् । प्राकारोपरि प्राकारक्रमेण स्थितमित्यर्थः । विभक्तः कपिमुख्येभ्यो विभज्य दत्तो द्वाराणामाभोगो येन । लङ्काद्वाराणां बहुत्वादित्यर्थः ॥

अथापरेऽपि परिखाप्रान्तवर्तिनस्तद्दृष्ट्वा परिखामतिक्रम्य प्राकारं लङ्घितवन्त इत्याह—

बिइओअहिगम्भीरे फलिहावत्तम्मि बिइअबद्धगिरिवहा ।
आढत्ता लङ्केउं बिइअसुवेलं व वाणरा पाआरम् ॥ ८० ॥

[द्वितीयोदधिगम्भीरे परिखापृष्ठे द्वितीयबद्धगिरिपथाः ।
आरब्धा लङ्घयितुं द्वितीयसुवेलमिव वानराः प्राकारम् ॥]

वानरा द्वितीयं सुवेलमिव प्राकारं लङ्घयितुमारब्धाः । लङ्घितवन्त इत्यर्थः । किंभूताः । द्वितीयसमुद्रवद्गम्भीरे परिखापृष्ठे तन्मण्डले द्वितीयो बद्धो गिरिभिः पन्था यैस्ते । एको गिरिपथः समुद्रे दत्तः परः परिखायामित्यर्थः । तथा च यथा सुवेलमूले समुद्रस्तथा प्राकारमूले परिखेत्युभयोरुभयत्वेनोत्प्रेक्षया महत्त्वमुक्तम् ॥

अथ रक्षोबलप्रयाणमाह—

णवरि अ मुक्ककलअलं वाणरतुलिअम्मि दहमुहाहिट्ठाणे ।
चलिअं रअणिअरबलं खअग्गिविहुए व महिअले उअहिजलम् ८१

[अनन्तरं च मुक्तकलकलं वानरतुलिते दशमुखाधिष्ठाने ।
चलितं रजनीचरबलं क्षयाग्निविधुत इव महीतल उदधिजलम् ]

प्राकारातिक्रमानन्तरं रजनीचराणां बलं मुक्तकलकलं सच्चलितम् । युद्धायेत्यर्थात् । क्व सति । दशमुखस्याधिष्ठाने पुरे वानरैस्तुलिते आक्रान्ते सति । एतदुपरिस्थातुं न युक्तमित्याशयात् । किमिव । उदधिजलमिव । यथा क्षयः प्रलयस्तत्कालीनाग्निभिर्विधुते व्याप्य व्याकुलीकृते महीतले तन्निर्वापणाय समुद्रजलं चलतीति कपिशत्वेन वह्निकपिसैन्ययोः, श्यामत्वेन जलधिजलरावणबलयोः, महत्त्वेन च लङ्कामहीतलयोस्तौल्यम् ॥

अथ निकुम्भस्य प्रयाणमाह—

आरूढो णीइ रहं आसण्णगइन्दलङ्घणवलन्तेहिँ ।
सरहेहिँ समरतुलिओ जुत्तं जुअभग्गकेसरेहिँ णिउम्भो ॥ ८२ ॥

[आरूढो निरैति रथमासन्नगजेन्द्रलङ्घनबलमानैः ।
शरभैः समरत्वरितो युक्तं युगभग्नकेसरैर्निकुम्भः ॥]

समराय त्वरितो निकुम्भः शरभैरष्टापदैर्युक्तं रथमारूढः सन्निरैति निर्गच्छति । किंभूतैः । आसन्नाः पुरोवर्तिनो ये गजेन्द्रास्तल्लङ्घनाय बल्मानैः सारथिना प्रतिरोधात्तिर्यग्भवद्भिः । सिंहाभिभावकत्वेन हस्तिलङ्घनसमर्थत्वात् । एवं युगेन स्कन्धवर्तिकाष्ठविशेषेण संघर्षणाद्भग्नाः केसरा येषां तैरित्यभ्यासतः सुशिक्षितत्वमुक्तम् ॥

अथ प्रजङ्घस्य प्रयाणमाह—

कह वि पडिवद्धकवओ समरासङ्घिअसमत्थवाणरलोओ ।
णीइ धणुकोडिताडणतूरविअतुरङ्गमो रहेण पअङ्घो ॥ ८३ ॥

[कथमपि प्रतिबद्धकवचः समराध्यवसितसमस्तवानरलोकः ।
निरैति धनुष्कोटिताडनत्वरिततुरङ्गमो रथेन प्रजङ्घः ॥]

प्रजङ्घनामा राक्षसो रथेन निरैति । कीदृक् । कथमपि त्वरया यथा तथा प्रतिबद्धः कवचो येन । एवम्—समरेऽध्यवसितः सर्वैः सह मयैव योद्धव्यमिति स्थिरीकृतः समस्तवानरलोको येन । तथा धनुष्कोट्या ताडनेन प्रेरणया त्वरां कारितास्तुरङ्गमा येनेति युद्धोत्साहः सूचितः ॥

अथेन्द्रजिन्निर्गमनमाह—

चडुलवडाआणिवहो कञ्चणघरभित्तिविअडकूवरबन्धो ।
इन्दइणो वि पसरिओ एक्कुद्देसो व रक्खसउरीअ रहो ॥ ८४ ॥

[चटुलपताकानिवहः काञ्चनगृहभित्तिविकटकूबरबन्धः ।
इन्द्रजितोऽपि प्रसृत एकोद्देश इव राक्षसपुर्या रथः ॥]

इन्द्राजितोऽपि रथः प्रसृतश्चलितः । कीदृक् । चटुलश्चञ्चलः पताकानिवहो यत्र । काञ्चनगृहभित्तिवद्विकटो विस्तीर्णः कूबरस्य बन्धो विन्यासो यत्र । क इव । राक्षसपुर्या लङ्काया एक उद्देशः प्रदेश इव चलित इत्युत्प्रेक्षा । तत्रापि पताकानां कनकगृहभित्तीनां च सत्त्वादिति भावः । 'कूबरस्तु युगंधरः' ॥

एतस्य तुरङ्गानाह—

खणपरिअत्तमइन्दा खणलक्खिअकुञ्जरा खणन्तरमहिसा ।
तस्स खणमेत्तमेहा रहं वहन्ति खणपवआ अ तुरङ्गा ॥ ८५ ॥

[क्षणपरिवृत्तमृगेन्द्राः क्षणलक्षितकुञ्जराः क्षणान्तरमहिषाः ।
तस्य क्षणमात्रमेघा रथं वहन्ति क्षणपर्वताश्च तुरङ्गाः ॥]

तस्य रथं तुरङ्गा वहन्ति । कीदृशाः । क्षणं परिवृत्तास्त्यक्ततुरङ्गरूपा गन्तव्यदिग्विपरीतमुखा वा चरणाक्रान्तरथा वा मृगेन्द्राः सिंहाकाराः क्षणं लक्षिताः कुञ्जराः, क्षणान्तरे महिषाः, क्षणमात्रं मेघाः, क्षणं गतिमन्तः पर्वताः । इतीन्द्रजितो मायावित्वमुक्तम् ॥

अथ योधानामितरानपेक्षं निर्गमनमाह—

अविसज्जिअणिक्कन्ते अत्थाणक्खोहहलहलुट्ठिअमुहले ।
दहवअणस्स सुहावइ आण्णाभङ्गो वि तक्खणं णिअअबले ॥८६॥

[अविसर्जितनिष्क्रान्ते अस्थानक्षोभहलहलोत्थितमुखरे ।
दशवदनस्य सुखायत आज्ञाभङ्गोऽपि तत्क्षणं निजकबले ॥]

तत्क्षणं निर्गमावसरेऽविसर्जिते गन्तुमनाज्ञापिते, एकैकं न गन्तव्यं किंतु संभूयेति निवारितनिर्गमेऽपि वा, निष्क्रान्तेऽहमहमिकया पुरोगते निजकबले दशवदनस्याज्ञाभङ्गोऽपि सुखायते । 'आज्ञाभङ्गो नरेन्द्राणाम्' इति निषेधेऽपि धन्या अमी यन्निवारिता अपि न तिष्ठन्तीति मदाप्ताः शूराश्चेति मनःप्रीतिमुत्पादयन्तीत्यर्थः । किंभूते । अस्थानक्षोभादाकस्मिकक्षोभादुत्थितेन हलहलेन कलकलेन मुखरे शब्दायमाने पूर्वनिपातानियमात् । यद्वा—हलहलशब्दो युद्धोत्कण्ठायां देशी । युद्धोत्कण्ठया मुखर इत्यर्थः । वस्तुतस्तु हलम्लिरिति(?) प्रसिद्धार्थवाची । तेन हलहलस्योत्थितेनोत्थानेन मुखर इत्यर्थः ॥

अथ तत्काले सेनासज्जीकरणमाह—

गुडिअगुडिज्जन्तभडं सोहइ रणतुरिअजुत्तजुज्जन्तरहम् ।
घडिअघडेन्तगअघडं चलिअचलन्ततुरअं णिसाअरसेणम् ॥८७॥

[गुटितगुड्यमानभटं शोभते रणत्वरितयुक्तयुज्यमानरथम् ।
घटितघट्यमानगजघटं चलितचलत्तुरङ्गं निशाचरसैन्यम् ॥]

निशाचरसैन्यं शोभते। कीदृक्। गुटिताः कृतसंनाहा गुड्यमानाः संनह्यमाना भटा यत्र। केचित्संनद्धाः, केचित्संनह्यन्तीत्यर्थः। एवम्—रणत्वरितेन वीरेण केचिद्युक्ताः केचिद्युज्यमाना रथा यत्र। तुरङ्गादिभिरित्यर्थात्। एवं काश्चिद्घटिताः काश्चिद्घट्यमाना गजघटा यत्र। तथा केचिच्चलिताः केचित्तदाचलन्तस्तुरङ्गा यत्र तथाभूतमिति रणसंरम्भ उक्तः॥

अथ बलस्य निष्क्रमणमाह—

हत्थिगअवरिअरामं रहगअसच्चविअपवअवइसोमेत्तिं।
आसगअवरिअहणुमं भूमीगअवरिअकइबलं णीइ बलम्॥८८॥

[हस्तिगतवृतरामं रथगतसत्यापितप्लवगपतिसौमित्रि।
अश्वगतवृतहनूमद्भूमीगतवृतकपिबलं निरैति बलम्॥]

हस्तिगतैर्वृतोऽनेन सममस्माभिर्योद्धव्यमिति स्वीकृतो रामो यत्र। तस्य नायकत्वान्मुख्यबलेन युद्धमिति भावः। एवम्—रथगतैः सत्यापितावेताभ्यां सहास्माभिर्योद्धव्यमिति स्थिरीकृतौ सौमित्रिप्लवगपती यत्र। एवम्—अश्वगतैर्वृतो योद्धव्यत्वेन स्वीकृतो हनूमान्यत्र। तथा—भूमिगतैः पत्तिभिर्वृतं स्वीकृतमवशिष्टं कपिबलं यत्र तद्बलम्। निशाचराणामित्यर्थात्। निरैति। केचित्तु 'वरिअ' इत्यत्र वारितः परिवारित इत्यर्थः। तेन हस्तिगतैर्वारितो वेष्टितो रामो यत्रेति क्रमेण सर्वत्रार्थमाहुः॥

अथ बलस्य निष्क्रमणप्रकारमाह—

रहसंघट्टक्खलिअं गोउरमुहपुञ्जइज्जमाणगअघडम्।
भवणन्तरगुप्पन्तं अघडेन्तेक्कमुहणिग्गमं वलइ बलम्॥ ८९॥

[रथसंघट्टस्खलितं गोपुरमुखपुञ्ज्यमानगजघटम्।
भवनान्तरव्याकुलमघटमानैकमुखनिर्गमं वलति बलम्॥]

तद्बलमघटमानोऽसंपद्यमान एकमुखेनैकोपक्रमेण। एकदेति यावत्। निर्गमो यस्य तथा सद्वलति। निर्गमव्यग्रतया दिशि दिशि मण्डलीमाचरतीत्यर्थः। किंभूतम्। रथानां संघट्टेन संमर्देन स्खलितं प्रतिहतगति। एवम्—गोपुरमुखेन पुञ्ज्यमानाः संकीर्णतया वर्तुलीक्रियमाणा गजघटा यत्र युगपन्निर्गमनाभावात्। तथा—भवनयोरन्तरे मध्ये व्याकुलम्। ऋजुमार्गालाभादिति भावः॥

अथ रथानां बहिर्भावमाह—

दुक्खेण गोउराइं वलन्तजुअकोडिविहडिअकवाडाइं ।
वोलन्ति रक्खसरहा तंसोणामिअधआहओवरितडिमा ॥ ९० ॥

[दुःखेन गोपुराणि वलद्युगकोटिविघटितकपाटानि ।
व्यतिक्रामन्ति राक्षसरथास्तिर्यगवनामितध्वजाहतोपरितडिमाः ॥]

राक्षसरथा गोपुराणि पुरद्वाराणि संकीर्णतया दुःखेन व्यतिक्रामन्ति लङ्घन्ते । किंभूतानि । कपाटयोरन्तरासंकीर्णतया लग्नकोटित्वेन वलतो वक्रीभवतो युगस्य तुरगस्कन्धकाष्ठस्य कोटिभ्यां प्रान्ताभ्यामतिक्रम्य संचारेण विघटिते कपाटे यत्र तानि । रथाः किंभूताः । उच्चतया निर्गमसौकर्याय तिर्यगवनामितेन । सारथिनेत्यर्थात् । ध्वजेन आहतं स्पृष्टमुपरितडिमं द्वारस्योपरिभागो यैः ॥

अथ भूमेर्भारमाह—

णिसुढिअदिसागइन्दं भग्गभुअङ्गप्फणं दलिअपाआलम् ।
गरुअं पि रक्खसाणं अइराहोन्तलहुअं भरं सहइ मही ॥ ९१ ॥

[निपातितदिग्गजेन्द्रं भग्नभुजङ्गफणं दलितपातालम् ।
गुरुकमपि राक्षसानामचिराद्भविष्यल्लघुकं भरं सहते मही ॥]

मही सर्वंसहा राक्षसानां गुरुकमपि भरं सहते । कुत इत्यत आह—अचिरादल्पकालेनैव भविष्यल्लघुकं लघूभविष्यन्तम् । राक्षसानां भयादिति भावः । 'होन्त' इति लडर्थे शतृ । वस्तुतस्तु—भविष्यती लघुता यस्येति भविष्यल्लघुकम् । भविष्यदल्पताकमित्यर्थः । भरं पुनः किंभूतम् । निपातिता दिग्गजेन्द्रा येन । भूमेरवनमनेन दन्तावष्टम्भत्यागादिति भावः । अत एव—भग्ना भुजङ्गस्य शेषस्य फणा यस्मात् । तथा—दलितं पातालं येन । भूपतनादित्यर्थः । अन्येनापि गुरुकमपि दुःखमल्पकालव्यापि बुध्वा सह्यते इति ध्वनिः ॥

अथार्धबलनिर्गममाह—

अग्गक्खन्धावडिअं मज्झे दारमुहरुद्धपुञ्जिअपिहुलम् ।
ऊसासिअसाहिमुहं कूलाभरिअभवणङ्गणं णीइ बलम् ॥ ९२ ॥

[अग्रस्कन्धापतितं मध्ये द्वारमुखरुद्धपुञ्जितपृथुलम् ।
उच्छ्वासितरथ्यामुखं कूलभृतभवनाङ्गणं निरैति बलम् ॥]

बलं निरैति बहिर्भवति। कीदृक्। अग्रस्कन्धेन सैन्याग्रभागेन आपतितं बहिर्भूय प्रसृतम्। यद्वा—अग्रस्कन्धे वर्तिकपिसैन्याग्रे आपतितं स्वाग्रभागेनैवेत्यर्थात्। मध्ये मध्यभागे संकीर्णतया द्वारमुखेन रुद्धं सत्पुञ्जितं वर्तुलीकृतमत एव पृथुलं पुष्टम्। अथ—उच्छ्वासितं कियतां निर्गमनादसंबाधीकृतं रथ्यामुखं येन। साहिशब्दो राजमार्गे देशी। तथा—कूलेन पश्चाद्भागेन भृतं झटिति निर्गमनाभावात्पूरितं रथ्यासंनिहितं भवनाङ्गणं येनेति बलबाहुल्यमुक्तम्॥

अथ बलस्य बहिर्गमनमाह—

इअ दारकअत्थम्भं णीइ विहिण्णविअडं णिसाअरसेणम्।
एक्कमुहदरिविणिग्गअसमत्थलुत्ताणपत्थिअणइच्छाअम्॥ ९३॥

[इति द्वारकृतस्तम्भं निरैति विभिन्नविकटं निशाचरसैन्यम्।
एकमुखदरीविनिर्गतसमस्थलोत्तानप्रस्थितनदीच्छायम्॥]

निशाचरसैन्यमित्थनेन प्रकारेण द्वारे कृतस्तम्भं संकीर्णतया पुञ्जितं सन्निर्गच्छति। अत एव—विभिन्नं बहिर्भूय दिशि दिशि प्रसृतं सद्विकटं विस्तीर्णम्। पुनः किंभूतम्। एकमुखी या दरी ततो विनिर्गता। अर्थात्—बहिः। समस्थले उत्तानप्रस्थिता गभीरप्रसृता या नदी तद्वच्छाया कान्तिर्यस्य तथाभूतम्। बलबाहुल्येन द्वारस्यैक्यप्रतिभासादेकमुखेत्युक्तम्। तथा च—यथा कन्दरातो जलं निर्गत्य बहिः प्रसरति तथा लङ्कातः सेनापीति दरीलङ्कयोर्जलसैन्ययोः साम्यम्॥

अथ लङ्कायां सेनाशून्यतामाह—

जाआइ तं मुहुत्तं पुण्णज्झीणसरिआपुलिणसोहाइँ।
रक्खसघरङ्गणाइं गअसमराहिमुहजोहपइरिक्काइँ॥ ९४॥

[जातानि तन्मुहूर्तं पूर्णक्षीणसरित्पुलिनशोभानि।
राक्षसगृहाङ्गणानि गतसमराभिमुखयोधप्रतिरिक्तानि॥]

तन्मुहूर्तं व्याप्य राक्षसानां गृहाङ्गणानि गतैः समराभिमुखयोधैः प्रतिरिक्तानि शून्यानि सन्ति। प्रथमं जलेन पूर्णमथ क्षीणं वन्याजलनिर्गमात्तुच्छं यत्सरितां पुलिनं तत्समानशोभानि जातानि। यथा जलनिर्गमात्पुलिनं तुच्छं भासते तथा सेनानिर्गमाद्गृहाङ्गणान्यपीत्यर्थः॥

अथ कपिसैन्यस्य राक्षससैन्यसंमुखागमनमाह—

लङ्कावेढणतुरिओ आलोइअदारणिन्तरक्खसलोओ ।
रसिऊण पवअणिवहो खरपवणाइद्धवणदओ व्व पचलिओ ॥९५॥

[लङ्कावेष्टनत्वरित आलोकितद्वारनिर्यद्राक्षसलोकः ।
रसित्वा प्लवगनिवहः खरपवनाविद्धवनदव इव प्रचलितः ॥]

लङ्कावेष्टनत्वरितः प्लवगनिवह आलोकितो द्वारान्निर्यन्राक्षसलोको येन तथाभूतः सन् रसित्वा सिंहनादं कृत्वा प्रचलितः । क इव । वनदव इव । यथा खरपवनेनाविद्धः क्षिप्तः । प्रसारित इति यावत् । तादृशो वनदवः प्रचलति, तथा राक्षसान् दृष्ट्वा कपयः प्रचेलुरित्यर्थः । वनदवकपिसैन्ययोः कपिशत्वेनोद्धतत्वेन परेषां दाहकत्वेन च साम्यम् ॥

अथ राक्षसबलसंचारक्रममाह—

पहरुज्जअपाइक्कं परिवड्ढइ पक्खपसरिआसारोहम् ।
मुक्कङ्कुसमाअङ्गं सिढिलिअरहपग्गहं णिसाअरसेणम् ॥ ९६ ॥

[प्रहारऋजुकपदाति परिवर्धते पक्षप्रसृताश्वारोहम् ।
मुक्ताङ्कुशमातङ्गं शिथिलितरथप्रग्रहं निशाचरसैन्यम् ॥]

तन्निशाचरसैन्यं परिवर्धते उत्तरोत्तरं भटानामागमनादिति भावः । किंभूतम् । प्रहारे ऋजुका वेध्यसंमुखीकृतकुन्ताः पदातयो यत्र । एवम्—पक्षयोः पार्श्वयोः प्रसृता अश्वारोहा अश्ववारा यत्र । एवम्—मुक्ताङ्कुशास्त्यक्ताङ्कुशावरोधा मातङ्गा यत्र । तथा—शिथिलिता हयसंचारार्थमनाकृष्टा रथानां प्रग्रहा रश्मयो यत्र तथाभूतमिति युद्धरीतिरुक्ता ॥

अथैतदुपरि कपिसैन्यसंचारक्रममाह—

तो एक्काअअवेअं एक्कक्कमदिण्णमहिअलब्भहिअपअम् ।
ठाइ अणोहीणभडं तह परिमण्डलपहाविअं कइसेणम् ॥ ९७ ॥

[तत एकागतवेगमेकैकक्रमदत्तमहीतलाभ्यधिकपदम् ।
तिष्ठत्यनवहीनभटं तथा परिमण्डलप्रधावितं कपिसैन्यम् ॥]

ततो रक्षोबलागमनोत्तरं कपिसैन्यं तथा तेन प्रकारेण तिष्ठति । प्राकारतटमव-

लम्ब्येत्यर्थात्। किंभूतम्। एकागत एकक्रमागतो वेगो यस्य तत्। प्रथममेतान्दृष्ट्वा एकरूपेण धावितमित्यर्थः। अथ कियद्दूरमागत्य एकैकक्रमेण परस्परमपेक्ष्य दत्तं महीतलेऽभ्यधिकमुत्तरोत्तरभूम्यतिक्रामकं पदं येन। प्रतिपक्षचेष्टां निरूप्य लघुलघुकृताग्रिमाग्रिमभूमिग्रहणमित्यर्थः। अथानवहीना अनपगतधैर्या भटा यत्र। तथा सत्परिमण्डलेन मण्डलीमुपक्रम्य प्रधावितं पुनः कृतवेगमित्यर्थः॥

अथोभयसैन्यसंघट्टमाह—

पत्थन्ति आअरोसा पत्थिज्जन्ति अ महग्घरणसोडीरा।
णिहणन्ति णिहम्मन्ति अ अणुराएण णवरं ण भज्जन्ति भडा ९८

इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे
बारहो आसासओ॥

[प्रार्थयन्ते जातरोषाः प्रार्थ्यन्ते च महार्घरणशौटीर्याः।
निघ्नन्ति निहन्यते चानुरागेण केवलं न भज्यन्ते भटाः॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये द्वादश आश्वासः।

जातरोषा भटाः प्रार्थयन्ते परानुपरुन्धन्ति युद्धायाकारयन्ति वा। न केवलं प्रार्थयन्ते किंतु परैः प्रार्थ्यन्ते उपरुध्यन्ते च योद्धुमाहूयन्ते वा। एवम्—महार्घमुत्कृष्टं रणे शौटीर्यमहंकारो दर्पो वा येषां तथाभूताः सन्तो निघ्नन्ति। परानित्यर्थात्। न केवलं निघ्नन्ति किंतु निहन्यन्ते च। परैरित्यर्थात् एवं व्यतिरेके सति अनुरागेण युद्धोत्साहेन केवलं न भज्यन्त इति शौर्यमुक्तम्। 'प्रार्थितः शत्रुसंरुद्धे याचितेऽभिहितेऽपि च' इति कोषः॥

सैन्यसंघट्टदशया रामदासप्रकाशिता।
रामसेतुप्रदीपस्य पूर्णाभूद्द्वादशी शिखा॥

---

त्रयोदश आश्वासः ।

अथ पुरःसराणां द्वन्द्वयुद्धमाह—

अह णिग्गअमिलिएहिं अल्लीणसमागएहि अ विमुक्करवम् ।
रअणिअरवाणरेहिं दिण्णं सहिअं च गरुअरणपत्थाणम् ॥ १ ॥
[अथ निर्गममिलिताभ्यामालीनसमागताभ्यां च विमुक्तरवम् ।
रजनीचरवानराभ्यां दत्तं सोढं च गुरुकरणप्रस्थानम् ॥]

अथ मिथः सैन्यसमागमानन्तरं रजनीचरेण वानरेण च द्वाभ्यां द्वाभ्यां गुरुकं रणप्रस्थानं रणयात्रोचितं कर्म एकेन प्रहारादिना दत्तमन्येन सोढं च देहस्याग्रे समर्पणादिना प्रतीष्टं चेत्यर्थः । किंभूताभ्याम् । एकः स्वव्यूहान्निर्गतः परः पुरो गत्वा मध्ये मिलितः संनिहितस्तथाभूताभ्याम् । एवं च विमुक्तरवं ससिंहनादं यथा स्यादेवमालीनावाश्लेषादेकीभूतौ सन्तौ समागतौ समं तुभ्यं संगतौ ताभ्यामित्यर्थः । यद्वा—रजनीचरवानरैरिति संस्कृत्य लङ्कातः सुवेलतश्च निर्गतैरन्तरा मिलितैरिति क्रमेण सर्वं पूर्ववद्व्याख्येयम् । विमुक्तरवमिति सर्वक्रियाविशेषणं वा ॥

अथ पश्चादागतानां व्यापारमाह—

तह अ पुरिल्लणिवाइअदेहोवरिणिमिअचलणपत्थणतुरिआ ।
एक्कक्कमं अहिगआ थोअं जह पहरलालसा ओसरिआ ॥ २ ॥
[तथा च पुरोगनिपातितदेहोपरिनिवेशितचरणप्रस्थानत्वरिताः ।
एकैकमभिगता स्तोकं यथा प्रहारलालसा अ पसृताः ॥]

ते योधा एकैकं परस्परं तथाभिगताः संगता यथा प्रहारलालसा प्रहारसस्पृहाः सन्तः स्तोकमीषदपसृताः पश्चादागताश्च । मिश्रणे सति खड्गादिप्रहारो न घटते इति किंचिद्व्यवहिता इत्यर्थः । किंभूताः । पुरोगाणां निपातितम् । परैः प्रहृत्येत्यर्थात् । यद्देहं तदुपरिनिवेशिताभ्यां चरणाभ्यां यत्प्रस्थानं पराभिमुखगमनं तत्र त्वरिताः । स्थानाभावान्मृतकोपरि चरणौ दत्त्वेत्यर्थः । तेन स्वीयानां मरणं दृष्ट्वाप्यग्रे गता इति शौर्यमुक्तम् । पुरोगैर्निपातितं यद्देहं परस्येत्यर्थात्परव्यूहमतिक्रम्य संगता इति दर्पान्धत्वमुक्तमिति वा ॥

अथ भटानां शीघ्रकारितामाह—

**जह हिअएहिँ ववसिअं रअकलुसेहिँ णअणेहिँ जह सच्चविअम् ।**
**रअणिअरेहिँ रणमुहे तह पडिवक्खम्मि पहरणं ओहरिअम् ॥३॥**

[यथा हृदयैर्व्यवसितं रजःकलुषाभ्यां नयनाभ्यां यथा सत्यापितम् ।
रजनीचरै रणमुखे तथा प्रतिपक्षे प्रहरणमवपातितम् ॥]

रणमुखे रजनीचरैर्यथा हृदयैर्व्यवसितमिदमस्त्रमित्थं व्यापारयितव्यमिति चिन्तितं तदनुपदमेव रजोभिः कलुषाभ्यामीषन्मुकुलिताभ्यां नयनाभ्यां यथा सत्यापितमयमत्र प्रहर्तव्य इति निर्धारितं तथा तत्समकालमेव रजोमुद्रितदृष्टिनापि प्रतिपक्षे प्रहरणं खड्गाद्यवपातितं प्रक्षिप्तमिति कायव्यापारस्य हृदयादिव्यापारतुल्यतया सत्त्वोत्कर्ष उक्तः ॥

भटानां तेजःप्रकर्षमाह—

**पअलम्भब्भहिअजवा मुट्ठिपरिट्ठविअणिप्पअम्पक्खग्गा ।**
**सच्चविअलद्धलक्खा पढमपहारविसआ ण भज्जन्ति भडा ॥ ४ ॥**

[पदलम्भाभ्यधिकजवा मुष्टिपरिस्थापितनिष्प्रकम्पखड्गाः ।
सत्यापितलब्धलक्ष्याः प्रथमप्रहारविषया न भज्यन्ते भटाः ॥]

पदलम्भेन परव्यूहरूपस्थानप्राप्त्याभ्यधिकवेगाः, तथा मुष्टौ परि सर्वतोभावेन स्थापितत्वेन स्थिरखड्गाः, तथा सत्यापितो निजव्यूहादेव हन्तव्यत्वेन स्थिरीकृतः पश्चादागत्य लब्धो लक्ष्यः शत्रुर्यैस्तथाभूता भटा राक्षसाः प्रथमप्रहारस्य विषया अपि यावदमीभिः प्रहारः क्रियते तावत्स्थायिभिरेव लक्ष्यैः कपिभिर्वृक्षादिना प्रहृता अपि न भज्यन्ते नापसरन्ति, किंतु प्रतिप्रहारं प्रयच्छता संनिधौ कृतवेगेन लब्धो यावत्प्रतिक्रियते तावदेव कृतप्रहारोऽपि कपिखड्गादिना ताडित इत्यर्थः । यद्वा प्रथमं निजव्यूहादेव कपिभिः शिलादिना ताडिता राक्षसास्तदनु अनेनाहं ताडित इति क्रुधा सत्यापितं लक्ष्यं कपिं वेगेनागत्य लब्धा न भज्यन्ते न पराजयन्ते किंतु तमभिहत्य जयन्तीत्यर्थः । 'विसआ' इत्यत्र विशदाः स्पष्टा इति वा। 'भडा' इत्यत्र 'भवा' इति क्वचित्पाठः ॥

प्रहृतगजानां वैकल्यमाह—

**विहुणन्ति चलिअविडवे मुहमण्डलघोलणुप्पुसिअसिन्दूरे ।**
**पवअसहत्थाइद्धे कुम्भअडुक्खुत्तपाअवे माअङ्का ॥ ५ ॥**

[विधुन्वन्ति चलितविटपान्मुखमण्डलघूर्णनोत्प्रोञ्छितसिन्दूरान् ।
प्लवगस्वहस्ताविद्धान्कुम्भतटभग्नपादपान्मातङ्गाः ॥]

प्लवगैः स्वहस्तेनाविद्धान् क्षितानथ कुम्भतटे भग्नान्पादपान्मातङ्गा विधुन्वन्ति पातनाय चालयन्ति नतु पातयितुं पारयन्तीति कपीनां प्रहारदार्ढ्यमुक्तम् । विधुन्वन्ति अवधूय पातयन्तीति गजप्रकर्ष एवेति केचित् । किंभूतान् । शिरोविधूननेन चलितविटपानत एव विटपैरेव मुखमण्डलघूर्णनेनोत्प्रोञ्छितमपासितमलंकारीभूतं सिन्दूरं यैस्तान् ॥

रावणं प्रति रणस्य दुरन्ततामाह—

**रोसस्स दासरहिणो मअणस्स अ दूसहस्स रक्खसवइणो ।**
**समअं चिअ अड्ढत्तो दोण्ह वि अणुरूअदारुणो परिणामो ॥ ६ ॥**

[रोषस्य दाशरथेर्मदनस्य च दुःसहस्य राक्षसपतेः ।
सममेवारब्धो द्वयोरप्यनुरूपदारुणः परिणामः ॥]

दाशरथे रोषस्य राक्षसपतेर्मदनस्य च द्वयोरप्यनुरूपो योग्यो दारुणो दुरन्तः परिणामः पर्यवसानं सममेकदैवारब्धो दैवेनेत्यर्थात् । युद्धेन वा । जगन्मातुः सीताया अभिलाषुकस्य रावणस्य यः कामस्तस्य तदुदाहरणहेतुकस्य रघुपतेरवन्ध्यस्य च कोपस्य राक्षसनाश एव योग्यो विपाक इति भावः । दुःसहस्येति मदनरोषयोरपि विशेषणम् ॥

परिणामस्य दारुणतामाह—

**णिहणन्ति गएहिं गए तुरएहिं तुरङ्गमे रहेहिं अ रहिणो ।**
**जाअं पवङ्गमाणं पडिवक्खो पहरणं च रक्खससेण्णम् ॥ ७ ॥**

[निघ्नन्ति गजैर्गजांस्तुरगैस्तुरङ्गमान्रथैश्च रथिनः ।
जातं प्लवङ्गमानां प्रतिपक्ष्यः प्रहरणं च राक्षससैन्यम् ॥]

प्लवङ्गमानां प्रतिपक्ष्यो हननकर्म प्रहरणं च तत्करणमायुधं द्वयमपि राक्षससैन्य-

मेव जातम् । यतो गजादिभिः सजातीयैरेव गजादीन्निघ्नन्तीति रामरोषप्रभाव एवायमिति भावः ॥

अथ रक्षसां पौरुषमाह—

**सरविक्किण्णमहिहरा सरविहडिअसेसमुग्गराहअसेला ।**

**पहरणमग्गाइञ्छिअभुअचुण्णिअपव्वआ भमन्ति णिसिअरा ॥ ८ ॥**

[शरविकीर्णमहीधरा शरविघटितशेषमुद्गराहतशैलाः ।

प्रहरणमार्गाञ्छितभुजचूर्णितपर्वता भ्रमन्ति निशाचराः ॥]

शरैर्विकीर्णाः कणशः कृत्वा विक्षिप्ता महीधराः कपीनामस्त्राणि यैस्ते निशाचरा भ्रमन्ति । किंभूताः । शरैर्विघटितानामर्थात्पर्वतानां शेषा अवशिष्टाः शरैरपि भेत्तुमशक्या ये ते मुद्गरैराहताः खण्डिताः शैला यैस्ते । मुद्गराहतशरभिन्नावशिष्टकपिशैला इत्यर्थः । यद्वा—रामादिशरविघटितानामर्थान्मुद्गराणां ये शेषा मुद्गरास्तैराहतशैला इत्यर्थः । यद्वा—शरैर्विघटिताः, शेषे यश्चा(पश्चात्) मुद्गरैराहताः शैला यैरित्यर्थः । एवम्—प्रहारमार्गे प्रहरणस्थानेऽञ्चिता अभिषिक्ताः । प्रहरणीकृता इत्यर्थः । ये भुजास्तैश्चूर्णिताः पर्वता यैरित्यर्थः । यद्वा—प्रहरणमार्गाच्छत्रूणामस्त्रपातस्थानादञ्चिता अतिक्रान्ता ये भुजास्तैश्चूर्णिताः पर्वता यैरित्यर्थः । 'मग्गाइञ्छिअ' इति पाठेऽप्ययमेवार्थः । यद्वा प्रहारमार्गमतिक्रान्तास्तद्विषया (न, ते) भुजैश्चूर्णिता इत्यादि । येऽस्त्रैर्न लब्धास्ते भुजैरेव चूर्णिता इत्यर्थः । तथा च दूरतरे शरैर्दूरे मुद्गरैः संनिधौ भुजैः । सर्वत्रैव(?) शैला विदारिताः, किंतु भुजैश्चूर्णिता इति शरादिविकरणोत्कर्षक्रमेण विघटनादिक्रियोत्कर्षक्रमादितरापेक्षया भुजानामाधिक्यमायाति ॥

कपीनामाकारस्थौल्यमाह—

**भाअपडिओ वि वित्थअगिरिपरिणाहविअडे पवङ्गक्खन्धे ।**

**अपहुप्पन्तावेढो उल्ललइ गअस्स थोरकरपब्भारो ॥ ९ ॥**

[भागपतितोऽपि विस्तृतगिरिपरिणाहविकटे प्लवङ्गस्कन्धे ।

अप्रभवदावेष्ट उल्ललति गजस्य स्थूलकरप्राग्भारः ॥]

गजस्य स्थूलः करः शुण्डा तस्य प्राग्भारोऽग्रभागः प्लवङ्गानां स्कन्धे भागे योग्यस्थाने एकदेशे वा पतितोऽपि । भागेनैकदेशेन पतितोऽपि वा अप्रभवन्मातु-

मसमर्थमावेष्टं मण्डलीभावो यस्य। यद्वा अप्रभवदसंपद्यमानमावेष्टनमाक्रमणं येनेति स्कन्धस्य बृहत्त्वादावेष्ट्य धर्तुमपारयन्सन्नुल्ललति चञ्चलीभवतीत्यर्थः। हेतुमाह—किंभूते। विस्तृतो यो गिरिस्तत्स्येव यः परिणाहो विस्तारस्तेन विकटे दुर्ग्राह्ये। गिरिपरिणाहवद्विकटे विस्तीर्णे इति वा॥

रक्षोवक्षोनिक्षोभमाह—

रअणिअरोरत्थलचुण्णिअस्स कइरोसपेसिअस्स सिहरिणो।
उद्धं उद्धाइ रओ ओसरइ अहोमुहो सिलासंघातो॥ १०॥

[रजनिचरोरःस्थलचूर्णितस्य कपिरोषप्रेषितस्य शिखरिणः।
ऊर्ध्वमुद्धावति रजोऽपसरत्यधोमुखः शिलासंघातः॥]

रजनीचराणामुरःस्थले चूर्णितस्य कपिना रोषेण प्रेषितस्य शिखरिणो रजो धूलिरूर्ध्वमाकाशमुद्धावति लघुत्वात्। चूर्णितशिलासंघातोऽधोमुखः सन्नपसरति गुरुत्वात्पततीत्यर्थेन क्रुद्धकपिक्षिप्तपर्वतैरपि निशाचरा न पातिताः। तथा सति चूर्णेन न स्यात्। प्रत्युत स्थिरीभूतानां तेषां वक्षोभिस्त एव चूर्णिता इति कपीनां प्रहारे रक्षसां तु वक्षसि दार्ढ्यमुक्तम्॥

बलयोः साधारणमुत्कर्षमाह—

रिउबलमज्झणिराआ णिहअणिरन्तरणिसुद्धणज्जन्तभडा।
विक्कमणीसामण्णा दट्ठुं पि भडाण दुक्करा गइमग्गा॥ ११॥

[रिपुबलमध्यनिरायता निहतनिरन्तरनिपातितज्ञायमानभटाः।
विक्रमनिःसामान्या द्रष्टुमपि भटानां दुष्करा गतिमार्गाः॥]

भटानां गतिमार्गाः संचारवर्त्मानि द्रष्टुमपि दुष्करा अशक्याः। किंभूताः। रिपूणां बलस्य मध्ये निरायता दीर्घाः। एवम्—निहताः, अत एव निरन्तरं निपातिताः सन्तो ज्ञायमाना दृश्यमाना भटा यत्र। वस्तुतस्तु—पूर्वनिपातानियमात् भटज्ञायमानाः। तथा च निपातितैर्भटैर्ज्ञायमाना लक्ष्यमाणाः। रिपुबलमध्ये येन पथा वीरा गच्छन्ति तत्र शतशो रिपवः पतन्तीति निरायतभटनिपातनाकारेण ज्ञायतेऽनेन [पथा] वीरो गत इ[ती]त्यर्थः। अत एव विक्रमेण निःसामान्या असाधारणाः॥

पुनस्तदेवाह—

णिव्वुब्भइ सोडीरं अप्पडिहत्थलहुओ हसिज्जइ पहरो।
वड्डइ वेरावन्धो अइसंधिज्जन्ति साहसेसु समत्था॥ १२॥

[निवार्ह्यते शौण्डीर्यमप्रतिहस्तलघुको हस्यते प्रहारः।
वर्ध्यते वैराबन्धोऽतिसंदधति साहसेषु समर्थाः॥]

शौण्डीर्यं युद्धे चातुर्यमहंकारो वा निर्वाह्यते तदनुरूपव्यापारेण निष्पाद्यते। सुभटैरिति शेषः। तथा—अप्रतिहस्तत्वादसदृशत्वाल्लघुकोऽनादरणीयः प्रहारो हस्यत उपहासविषयीक्रियते। अथ—प्रहारे सति वैरस्य आबन्धो वर्ध्यते वैरमधिकं वर्ध्यत इत्यर्थः। हेतुमाह—समर्थाः साहसेषु प्राणानपेक्षकर्मसु अतिसंदधति अति(भि)निविष्टा भवन्तीत्यर्थः। अतिसंधीयन्ते वा समर्थैः सहाभियुज्यन्त इत्यर्थः॥

पुनस्तदाह—

ण पडइ पडिए वि सिरे सूलविहिण्णं पि णेअ भिज्जइ हिअअम्।
दुप्परिइअं ण लग्गइ लाविज्जन्तं पि पडिभडाण रणभअम्॥ १३॥

[न पतति पतितेऽपि शिरसि शूलविभिन्नमपि नैव भिद्यते हृदयम्।
दुष्परिचितं न लगति लाग्यमानमपि प्रतिभटानां रणभयम्॥]

प्रतिभटानां शिरसि पतितेऽपि न पतति। कबन्ध इति शेषः। युद्धसंस्कारसत्त्वादिति केचित्। वस्तुतस्तु—शिरसि पतितेऽपि हृदयं न पतति नाधो गच्छति न कातरतामवलम्बत इत्यर्थः। एवम्—हृदयपदच्छलाद्वक्षोरूपं हृदयं शूलेन विभिन्नं विदीर्णमपि तथापि मनोरूपं तन्न भिद्यते। किंतु युयुत्सायामेव तिष्ठतीत्यर्थः। तथा लाग्यमानमपि शत्रुभिराधीयमानमपि रणभयं न लगति न संबध्यते दुष्परिचितम्। यतः शूराणां रणभयेन संबन्धो न घटते। कदाप्यपरिचितत्वादित्यर्थः॥

पुनस्तदेवाह—

सहइ पहरेसु दप्पो दप्पट्ठाणेसु सहइ पुरिसासङ्गो।
णिद्दोसेसु भडाणं ओसारेसु वि ण ओसरइ रोसरसो॥ १४॥

[सहते प्रहारेषु दर्पो दर्पस्थानेषु सहते पुरुषाध्यवसायः।
निर्दोषेषु भटानामपसारेष्वपि नापसरति रोषरसः॥]

प्रहारेषु। शत्रोरित्यर्थात्। भटानां दर्पः सहते। शौर्यादेव प्रहारः सह्यत इ-

त्यर्थः। एवम्—दर्पस्थानेष्वभिमुखागमनादिव्यापारेषु पुरुषाध्यवसायः सहते प्रहार-पूर्वकालीनोऽभिमुखागमनादिलक्षणशौर्यव्यापारो जेतव्यमेव मयेत्यध्यवसायेन सह्यते इत्यर्थः । तत एव तदानीं पुरो गत्वा मिलन्ति न तु भज्यन्ते इति भावः। एवं निर्दोषेष्वपसारेषु न भयेन । किंतु प्रहारसौकर्याय । पश्चादागमनेष्वपि रोषरसो नापसरति । किंत्वग्रे धावति वर्धते इत्यर्थः । यद्वा—दर्पः सहते क्षमते समर्थो भवति । दर्पादेव प्रहारः क्रियते इत्यर्थः । तथा दर्पस्थाने पुरोगमनादि-व्यापारेषु अध्यवसायः क्षमते तेनैव तत्क्रियत इत्यर्थः ॥

अथ कपीनां पतनावस्थामाह—

**रिउगअभिण्णुक्खित्ता रोसविहुव्वन्तचडुलकेसरणिवहा ।**
**दढदट्ठदन्तमूला रसिऊण समच्छरं णिमिल्लन्ति ईक ॥ १५ ॥**

[रिपुगजभिन्नोत्क्षिप्ता रोषविधूयमानचटुलकेसरनिवहाः ।
दढदष्टदन्तमूला रसित्वा समत्सरं निमीलन्ति कपयः ॥]

रिपूणां गजैर्गदाभिर्वा भिन्ना अथोत्क्षिप्ताः कपयो रसित्वा शब्दं कृत्वा समत्सरं निमीलन्ति मात्सर्यसहिता एव मूर्च्छन्ति म्रियन्ते वा । मात्सर्यज्ञापकमाह—किंभूताः । रोषेण विधूयमानोऽतएव चटुलः केसरनिवहो येषां ते । एवम्—दृढमूर्ध्वदन्तैर्दष्टमधोदन्तमूलं यैरिति केसरकम्पदन्तमूलदंशरूपं क्रोधलक्षणमुक्तम् ॥

पुनः शूराणां प्रकर्षमेवाह—

**अवहीरणा ण किज्जइ सुमरिज्जइ संसए वि सामिअसुकअम् ।**
**ण गणिज्जइ विणिवाओ दट्ठे वि भ अम्मि संमरिज्जइ लज्जा १६**

[अवधीरणा न क्रियते स्मर्यते संशयेऽपि स्वामिसुकृतम् ।
न गण्यते विनिपातो दृष्टेऽपि भये स्मर्यते लज्जा ॥]

भटैरवधीरणानास्था न क्रियते जये यशसि वा । तथा—प्राणसंशयेऽपि स्वामिनः सुकृतमुपकारः सत्कारो वा स्मर्यते । तथा—विनिपातो मरणमपि न गण्यते न विचार्यते । एवम्—भये दृष्टेऽपि लज्जा स्मर्यते । तथा च कीर्तिसुकृत-लज्जादिरक्षानिमित्तं प्राणानुपेक्ष्य युध्यते, न तु भयं क्रियत इति भावः ॥

अथ शूरनिशाचराणां मृत्युमाह—

पढमाणिआहि सुइरं जे जीविअसंसअम्मि वि परिच्छूढा ।
ते च्चिअ अहिमुहणिहआ सुरबन्दीहि अहिसारिआ रअणिअरा१७

[प्रथमानीताभिः सुचिरं ये जीवितसंशयेऽपि परिक्षिप्ताः ।
त एवाभिमुखनिहताः सुरबन्दीभिरभिसारिता रजनीचराः ॥]

प्रथमं पूर्वं बन्दीकृत्यानीताभिः सुरसुन्दरीभिः सुचिरं व्याप्य बिभीषिकाकृते जीवितसंशयेऽपि ये रजनीचराः परिक्षिप्ता जात्यपकर्षेण त्यक्तास्त एव संग्रामाभिमुखनिहताः सन्तः पुनरभिसारितास्तदानीं शौर्यमृत्युना प्राप्तदेवत्वास्ताभिर्वृता इत्यर्थः ॥

अथ कपीनां तेजःप्रकर्षमाह—

रअणिअरबद्धलक्खो अबद्धरुहिरपरिपण्डुरङ्गच्छेओ ।
अगणिअवणसंतावो उण्हपहारसरसो समल्लिअइ कई ॥ १८ ॥

[रजनीचरबद्धलक्ष्योऽबद्धरुधिरपरिपाण्डुराङ्गच्छेदः ।
अगणितव्रणसंताप उष्णप्रहारसरसः समालीयते कपिः ॥]

रजनीचरे । कृतप्रहार इत्यर्थात् । बद्धं लक्ष्यं येनेति प्रहर्तरि दत्तदृष्टिः कपिः समालीयते । प्रथमं येन हतस्तत्रैव प्रतिहर्तुं मिलतीत्यर्थः । कीदृक् । उष्णे तात्कालिके शत्रुकृते प्रहारे सरसः क्रोधवशात्प्रतिहन्तुं सानुरागः । सक्रोधरसो वा । एवम्—अबद्धेन प्रवहता रुधिरेण परिपाण्डुरोऽङ्गच्छेदः क्षतं यस्य तथा । तथा च व्रणसंतापविचारशून्य इति विजिगीषुत्वमुक्तम् ॥

पुनः शूराणां स्वभावमाह—

ण पडिक्खन्ति अवसरं ओच्छुन्दन्ति जणिअं परेण पआवम् ।
बोलेन्ति जहाभणिअं साहुक्कारपुरओ अइन्ति समत्था ॥ १९ ॥

[न प्रतीक्ष्य(क्ष)न्तेऽवसरमाक्रामति जनितं परेण प्रतापम् ।
व्यतिक्रामन्ति यथाभणितं साधुकारपुरत आयान्ति समर्थाः ॥]

समर्था अवसरं न प्रतीक्ष्य(क्ष)न्ते । स्वसामग्रीन्यूनतया अदेशेऽप्यकालेऽपि मिलन्ति प्रहरन्ति च । दर्पोन्नतत्वादिति भावः । एवम्—परेण जनितं प्रतापमाक्रामति । स्वप्रतापोत्कर्षजननात् । एवम्—ताडयिष्यामीत्यादि यथाभणितं व्यति-

क्रामन्ति निर्वाहयन्ति । तदैव ताडनादिव्यापारात् । तथा—साधुकारपुरतः प्रतिपक्षप्रहारादिकं दृष्ट्वा साधु साध्विति कृत्वा आयान्ति । तमेव [प्रति]प्रहर्तुमित्यर्थात् । एतद्व्यापारोत्कर्षेण विपक्षकृतसाधुकारस्य पुरतः संमुखे आयान्ति इति वा । वयं तु—पुरतोऽग्रतः स्थान एव प्रथमं स्वेनैव कृतः साधुशब्दाभिलापो यावदायाति विपक्षबलं, तावत्स्वयमेवागच्छन्तीति शब्दापेक्षयाप्यधिकवेगवत्तया सत्त्वोत्कर्ष उक्त इति ब्रूमः ॥

अथ द्वादशभिः कुलकेन शूराणां युद्धमाह—

**इअ ताण तं विअम्भइ सुरङ्गणासुरअलम्भसंकेअहरम् ।**
**भग्गजमलोअवन्थं महेन्दभवणुज्जुआइअवहं जुज्झम् ॥ २० ॥**

[इति तेषां (तयोर्वा) तद्विजृम्भते सुराङ्गनासुरतलम्भसंकेतगृहम् ।
भग्नयमलोकपथं महेन्द्रभवनऋजुकायितपथं युद्धम् ॥]

इति वक्ष्यमाणप्रकारेण तेषां वानराणां राक्षसानां च तयोः कपिराक्षससैन्ययोर्वा तद्युद्धं विजृम्भते वर्धते । कीदृक् । सुराङ्गनासुरतस्य प्राप्तौ संकेतगृहम् । भटानामिति शेषः । अत्रैव ताभिस्तेषां वरणात्तदुत्पत्तेरिति भावः । इति शौर्येण मरणसुकम् । अत एव महेन्द्रभवनस्य कृते ऋजुकायितः संमुखीकृतः पन्था येन । सर्वेऽपि वृत्वा ताभिस्तत्रैव नीयन्ते इति भावः । अत एव भग्नोऽप्रहतीकृतो यमलोकस्य पन्था येन । कातराणामसत्त्वादित्याशयः ॥

**कइवच्छत्थलपरिणअणिअअमुहत्थमिअदन्तिदन्तप्फलिहम् ।**
**णिहअभडमहिअणिवडिअसुरवहुचलवलअमुहलपवअगइवहम् २१**

[कपिवक्षःस्थलपरिणतनिजकमुखास्तमितदन्तिदन्तपरिघम् ।
निहतभटमहितनिपतितसुरवधूचलवलयमुखरप्लवगगतिपथम् ॥]

युद्धं कीदृक् । कपीनां वक्षःस्थलेषु परिणतानां पश्चादागत्य दत्तदन्तप्रहाराणां पूर्वनिपातानियमादत्राकर्षणाद्दन्तिनां निजकमुख एवास्तमिता वक्षसो दृढत्वेन स्फोटनाभावान्मूलेनैव स्कन्धपर्यन्तं गतत्वाददृश्या दन्तपरिघा यत्र तदिति गिरिवत् स्थितत्वेनापतनादक्षोभनत्वं बलवत्त्वमाकारमहत्त्वं च कपीनाम्, गजानां तु प्रहारदार्ढ्यम्, तेजस्वित्वं वक्षोनिर्भेदनादेव संनिधिर्भवतीति जानतां क्रोधमूर्च्छितत्वं च

१. पाठसंभावना पक्षान्तरे.

सूचितम् । केचित्तु यथा यथा गजो दन्तौ निर्यन्त्रयति तथा तथा कपिरपि वक्षः पुरः करोतीत्युभयोरपि सत्त्वोत्कर्ष इति वदन्ति । परिणताः कृतप्रहारा इति दन्तपरिघस्यैव विशेषणमिति वा । भावे क्तेन परिणतेन प्रहारेणास्तमिता इति वा । एवम्—निहतभटानां महितेन समीहया निपतितानां स्वर्गादागतानां सुरवधूनां चलवलयैर्मुखराः प्लवङ्गानां गतिपथा यत्रेति । परव्यूहे प्लवगा येन पथा संचरन्ते तत्र बहवो म्रियन्त इति बह्वीनामागमनावरणव्यापाराय नानाकरचमत्कारेण वलयानां झणझणत्काराच्छब्दायमानस्वलिति भावः । वस्तुतस्त्वेकमेव वीरं करेण धारयन्तीनां परस्परं कलहेन करप्रतिक्षेपाय करव्यापारतो वलयझणत्कारोपचयेन मौखर्यमिति वयम् ॥

ओवअणोसुद्धरहं उप्पअणोच्छित्तविहडमाणगइन्दम् ।
गहिअप्फिडिअतुरङ्गं अणुधाविअपवअणिहअरक्खसजोहम् २२

[अवपतनावपातितरथमुत्पतनोत्क्षिप्तविघटमानगजेन्द्रम् ।
गृहितस्फेटिततुरङ्गमनुधावितप्लवगनिहतराक्षसयोधम् ॥]

एवमवपतनेनोत्प्लवनादाकाशतः पतनेनावपातिता अन्तरिक्षस्था एव निजकभरेण महीमानीय चूर्णिता रथा यत्र । कपिभिरित्यर्थात् । एवम्—उत्पतनेनोत्फालेन उत्क्षिप्ताः स्वशरीरेण प्रेर्याकाशं नीताः, अत एव विघटमानाः स्फुटितदेहसंधयो गजेन्द्रा यत्र । एवम्—गृहीताः सन्तः स्फेटिताश्चञ्चलत्वाद्बहिर्गतास्तुरङ्गा यत्र । अत एवानुधावितास्तदश्वपश्चाल्लग्ना ये प्लवगास्तैर्निहता राक्षसयोधास्तदश्ववारीभूता यत्रेत्युत्फालावफालवेगबलप्रकर्ष उक्तः ॥

रसणिव्वाओरत्थलसुहविसहिज्जन्तचन्दणदुमप्पहरम् ।
कलअलल्लोहुग्घाडिअमुहवोलीणसरमग्गणिन्तणिणाअम् ॥ २३ ॥

[रसनिर्वृतोरःस्थलसुखविषह्यमानचन्दनद्रुमप्रहारम् ।
कलकलल्लोभोद्घाटितमुखव्यतिक्रान्तशरमार्गनिर्यन्निनादम् ॥]

एवम्—रसेन । चन्दनस्यैवेत्यर्थात् । निर्वृते उरःस्थले सुखेन विषह्यमानश्चन्दनद्रुमप्रहारो यत्र । प्रियाविरहोत्तप्तत्वेऽपि रसेन शैत्यजननात्प्रहारस्यापि सुखदत्वमिति भावः । रसेन वीरेण निर्वृत इति वा । वीररसात्प्रहारोऽपि सुखद इत्यर्थः । तथा—कलकलस्य लोभेन चिकीर्षया उद्घाटिताद्व्यात्तान्मुखाद्व्यतिक्रान्तस्य बहिर्भूतस्य

शरस्य मार्गेण रन्ध्रेण निर्यन् बहिर्गच्छन्निनादो यत्र । क्षतदशायामप्यन्यकलकलं श्रुत्वा तच्चिकीर्षया वीररसोत्कर्षः सूचितः ॥

**भिण्णघडिज्जन्तघडं पडिरुद्धोसरिअचक्किअपाइक्कम् ।**
**रुहिरोहिण्णरहवहं मुहसुक्खप्फेणणिहुअहेसिअतुरअम् ॥ २४ ॥**

[भिन्नघट्यमानघटं प्रतिरुद्धापसृतचक्रितपदाति ।
रुधिरापभिन्नरथपथं मुखशुष्कफेननिभृतह्रेषिततुरगम् ॥]

किंभूतम् । प्रथमं कपीनां संचारेण भिन्ना द्विधाभूताः, अथ हस्तिपकैर्घट्यमानाः पूर्ववत्स्थाप्यमाना गजघटा यत्र । एवम्—अग्रतः प्रतिरुद्धा अतएवापसृताः पश्चाद्गताः सन्तश्चक्रिताश्चक्रवद्घूर्णन्तः प्रतिरोधकमावेष्टयितुं मण्डलीमाचरन्तो वा पदातयो यत्र । एवम्—रुधिरेणापभिन्नः प्रतिहतो रथानां पन्था यत्र । जलबहुत्वेन रथसंचाराभावात् । तथा—मुखे शुष्को यः फेनस्तेन निभृतं मन्दं ह्रेषितं येषां ते तुरगा यत्र । मुखशोषे स्फुटं शब्दानिष्पत्तेरिति भावः ॥

**रिउपहरणपरिओसिअसाहुक्काररवगब्भिणपडन्तसिरम् ।**
**णिब्भिण्णपहरमुच्छिअवअणब्भन्तरविदाअभडचुक्कारम् ॥ २५ ॥**

[रिपुप्रहरणपरितोषितसाधुकाररवगर्भितपतच्छिरम् ।
निर्भिन्नप्रहारमूर्च्छितवदनाभ्यन्तरविशीर्णभटचुक्कारम् ॥]

एवम्—रिपूणां प्रहारेण परितोषितानां वीराणामन्नकण्ठस्पर्शसमकालीनः साधुकाररवो गर्भितो गर्भस्थो यत्र तथाभूतं सत्पतच्छिरो यत्रेति प्रहारलाघवमुक्तम्। एवम्—निर्भिन्नेन दृष्टेन प्रहारेण मूर्च्छितानाम् । आकृतत्वादत्राकर्षणाद्भटानां वदनाभ्यन्तरे विशीर्णो मूर्च्छया मुखमुद्रणादस्फुटीभूतश्चुक्कारोऽर्थात्सिंहनादो यत्र । मूर्च्छितेन मूर्च्छया विशीर्णो भटानां चुक्कारो यत्रेति वा । चुक्कारशब्दो देश्यां शब्दवाची ॥

**सेलपहरुविआइअदुक्खववत्थविअहत्थिपत्थिअजोहम् ।**
**भग्गधअचिह्वविमुहिअपणट्ठणिअअभडदुक्खणज्जन्तरहम् ॥ २६ ॥**

[शैलप्रहारोद्वेदितदुःखव्यवस्थापितहस्तिप्रार्थितयोधम् ।
भग्नध्वजचिह्वविमुषितप्रनष्टनिजकभटदुःखज्ञायमानरथम् ॥]

---

१. 'विसट्ठ' इति पाठः.

एवम्—शैलप्रहारोद्वेदितैः, अत एव दुःखेन व्यवस्थापितैः स्थिरीकृतैर्हस्तिभिः आर्थिता रुध्यमाना योधा यत्र । एवम्—भग्नैर्ध्वजचिह्नैः पताकाभिर्विमुषितवचोरितवत्प्रनष्टा अदृश्या अलक्ष्याः सन्तो निजकभटानां दुःखेन ज्ञायमाना रथा यत्र तादृशम् ॥

गिरिपेल्लिअरहकड्ढणविह्लविसारिअमुहत्थणन्ततुरङ्गम् ।
महिअलपलोट्टमहिहररअअरसोमलिअभिण्णपण्डुररुहिरम् ॥२७॥

[गिरिप्रेरितरथकर्षणविह्वलविस्तारितमुखस्तनत्तुरङ्गम् ।
महीतलप्रलुठितमहीधररजतरसावमृदितभिन्नपाण्डुररुधिरम् ॥]

एवम्—गिरिभिः प्रेरिता यन्त्रिता ये रथास्तेषां कर्षणेन विह्वलाः, अत एव विस्तारितमुखा व्यात्तमुखाः सन्तः स्तनन्तः खेदाविष्कारं कुर्वन्तस्तुरङ्गा यत्र । तथा महीतले प्रलुठितानां पतितानां वानरायुधीभूतानां महीधराणां रजतरसेन रूप्यक्षोदेनावमृदितानि घृष्टानि अत एव भिन्नान्येकीभूतानि सन्ति पाण्डुराणि श्वेतरक्तानि रुधिराणि यत्र तत्तथा ॥

कइमुक्कचुण्णिअट्ठिअसेलमुणिज्जन्तसरससरिआमग्गम् ।
ओहरिअवञ्चिआसिमग्गोवडन्तवाणरजोहम् ॥ २८ ॥

[कपिमुक्तचूर्णितस्थितशैलज्ञायमानसरससरिन्मार्गम् ।
अवपातितवञ्चितासिमार्गावपतद्वानरयोधम् ॥]

एवम्—कपिमुक्तत्वात्प्रहारदार्ढ्येन यत्र पतितास्तत्र चूर्णितस्थिता ये शैलास्तेषां ज्ञायमानाः सरसाः सरिन्मार्गाः स्रोतांसि यत्र । जलमिश्रणाच्चूर्णानां सरसत्वेन ज्ञायतेऽत्र स्रोतः स्थितमित्यर्थः । एवम्—रक्षोभिरवपातितानामथ च कपिभिर्निःसृत्य वञ्चितानामसीनां मार्गे पतनपथेऽवपतन्तो वानरयोधा यत्र तथाभूतम् । तथा च यत्र ये स्थितास्ते बहिर्गताः, अन्ये पुनस्तत्र पतन्तः खण्डिता इति कपिबाहुल्यमुक्तम् ॥

अहिधावन्तपवङ्गममुक्कंसणिराजकेसरसडुग्घाअम् ।
मज्झन्तभाअणिवडिअदण्डाउहभिण्णमहिअलोविद्धभडम् ॥ २९ ॥

[अभिधावत्प्लवङ्गममुक्तांसनिरायतकेसरसटोद्घातम् ।
मध्यान्तभागनिपतितदण्डायुधभिन्नमहीतलापविद्धभटम् ॥]

एवम्—अभिधावतां प्लवङ्गमानां मुक्तो विकीर्णः सन्नंसेषु निरायतो दीर्घः केसरसटानामुद्धातो यत्र । जवजन्यसंस्कारात् । एवम्—मध्यस्यान्तभागेन निपतितं यद्दण्डरूपमायुधं तेन भिन्नाः सन्तो महीतलेऽपविद्धाः पातिता भटा यत्र तत् ॥

गहिअसिरदट्ठवाणरणिसाअरोरत्थलद्धरोविअदाढम् ।
णहधरिअपव्वओज्झरसीअरतण्णाअगरुइओसण्णरअम् ॥ ३० ॥

[गृहीतशिरोदष्टवानरनिशाचरोरःस्थलार्धरोपितदंष्ट्रम् ।
नभोधृतपर्वतनिर्झरशीकरार्द्रगुरुकितावसन्नरजः ॥]

एवम्—गृहीते आक्रम्य धृते शिरसि दष्टा ये वानरास्तैर्निशाचराणामुरःस्थलेऽर्धरोपिता दंष्ट्रा यत्र । रक्षोभिः कपीनां शिरः कवलितम्, कपिभिस्तेषां वक्षसि दंष्ट्रा निखातेत्यर्थः । तत्र शिरसः कवलितत्वेन दंष्ट्राणामत्यन्तप्रेरणाभावादर्धनिमग्नत्वमिति भावः । एवम्—नभसि धृतानां पर्वतानां निर्झरशीकरैरार्द्रत्वाद्गुरूणि सन्त्यवसन्नानि पतितानि रजांसि यत्रेति युद्धसौकर्यमुक्तम् ॥

सारहिहत्थअलाहअमुहपडिउट्ठिअतुरङ्गणिव्वूढरहम् ।
सरघाअचुण्णिओवडिअपव्वआवीअरुहिरसरिआसोत्तम् ॥ ३१ ॥
(आइकुलअम्)

[सारथिहस्ततलाहतमुखपतितोत्थिततुरङ्गनिर्व्यूढरथम् ।
शरघातचूर्णितावपतितपर्वतापीतरुधिरसरित्स्रोतः ॥]
( आदिकुलकम् )

किंभूतम् । प्रथमं संभ्रमेण पतिताः, तदनु सारथिना हस्ततलेनाहतमुखत्वादुत्थिता ये तुरङ्गास्तैर्निर्व्यूढाः संचारिता रथा यत्र । एवम्—रक्षःशरघातेन चूर्णिताः सन्तः क्षितौ अवपतिता ये कपीनां पर्वतास्तैश्चूर्णद्वारा पीतानि शोषितानि रुधिरसरितां स्रोतांसि यत्र तत् ॥

अथ बलयोरावर्तनमाह—

अट्टन्ति असहणाइं खण्डिज्जन्तपडिसारिअद्धन्ताइं ।
वोच्छिज्जन्तमुहाइं भिज्जन्तोसरिअपडिभडाइं बलाइं ॥ ३२ ॥

[आवर्तन्तेऽसहनानि खण्ड्यमानप्रतिसारितार्धान्तानि ।
व्यवच्छिद्यमानमुखानि भिद्यमानापसृतप्रतिभटानि बलानि ॥]

बलान्यावर्तन्ते । परस्परमुपर्युपरि पतन्तीत्यर्थः । किंभूतानि । परेषां प्रहारमुत्कर्षं वासहमानानि । तथा—खण्ड्यमानाः सन्तः प्रतिसारिताः पराङ्मुखीकृता अर्धान्ताः कतिपये यत्र । अत एव व्यवच्छिद्यमानमुखानि । मानभङ्गप्रसङ्गात् पुनः स्वीयैः कैश्चिदागत्य भिद्यमानाः सन्तोऽपसृताः पश्चाद्गताः प्रतिभटाः प्रहर्तारो येषां तानि । तथा च कैश्चित्केचित्प्रथमं निहत्यापसारितास्तद्दृष्ट्वा तत्पक्षपूरणाय तदीयैरन्यैरागत्यामी पुनर्निहत्य निवर्त्यन्ते तद्दृष्ट्वा पुनरेतदीयैरेते पराभूयन्ते, पलायितास्तु स्वपक्ष(पूरकपक्ष)पूरणाय पुनः परावर्तन्ते इति क्रमेणोत्तरोत्तरमप्युन्मत्तकेलिरिव युद्धमभूदिति भावः ॥

राक्षसानां जिगीषामाह—

वाणरपहरुक्खडिआ अणिरूविअलक्खपेसिआसिपहरणा ।
मुच्छाणिमीलिअच्छा ओहीरन्ता वि अल्लिअन्ति णिसिअरा ॥३३॥

[वानरप्रहारोत्खण्डिता अनिरूपितलक्ष्यप्रेषितासिप्रहरणाः ।
मूर्च्छानिमीलिताक्षा अपह्रियमाणा अप्यालीयन्ते निशिचराः ॥]

वानराणां प्रहारेणोत्खण्डिता व्रणिताः । अत एव अपह्रियमाणाः स्वीयैः पश्चान्नीयमाना अपि निशिचरा मूर्च्छया निमीलिताक्षाः । अत एवानिरूपितमदृष्टं यल्लक्ष्यं चान्त्यं(?) तत्र प्रेषितं प्रेरितमसिरूपं प्रहरणं शस्त्रं यैस्तथाभूताः सन्तस्तेनैव लक्ष्येण शत्रुणा आलीयन्ते मिलन्ति । प्रथमं यैर्हतास्तानात्मीयजनकृतप्रतिबन्धमुपेक्ष्य मूर्च्छितत्वेनादृष्ट्वापि संगम्य प्रहरन्तीति रक्षसां तेजस्वित्वमुक्तम् ॥

अथ कपीनां पतनप्रकारमाह—

चुण्णिअगरुअपडिभडो फुरइ अणल्लीणरक्खसाहअविहलो ।
खण्डिज्जन्तपअट्टो ओलिच्छिण्णपडिओ पवङ्गमजोहो ॥ ३४ ॥

[चूर्णितगुरुकप्रतिभटः स्फुरत्यनालीनराक्षसाहतविह्वलः ।
खण्ड्यमानप्रवृत्तः पङ्क्तिच्छिन्नपतितः प्लवङ्गमयोधः ॥]

प्रथमं चूर्णितो गुरुकः प्रतिभटो येन । तदनु येन सह प्रवृत्तयुद्धस्तदन्येन केनचिदनालीनेन दूरवर्तिना राक्षसेन पश्चादलक्षितमागत्य हतः सन् विह्वलो मूर्च्छितः । अथ मूर्च्छादशायां खड्गादिना खण्ड्यमानोऽपि तत एव लब्धचैतन्यः पुनः प्रवृत्तः । योद्धुमित्यर्थात् । अनन्तरम् । ओलिरिति पङ्क्तौ देशी । तैरेव पङ्क्तिक्रमेण

छिन्नः सन् पतितः प्लवङ्गमयोधः स्फुरति कम्पते । मरणोत्तरमपि क्रोधसंस्कारसत्त्वादिति भावः ॥

उभयत्र शूराणां शरीरनिरपेक्षतामाह—

**सोडीरेण पआवो छाआ पहरेहिँ विक्कमेहिँ परिअणो ।**
**जीएण अ अहिमाणो रक्खिज्जइ अ गरुओ सरीरेण जसो ॥३५॥**

[शौण्डीर्येण प्रतापश्छाया प्रहारैर्विक्रमैः परिजनः ।
जीवेन चाभिमानो रक्ष्यते च गुरुकं शरीरेण यशः ॥]

सुभटैः शौण्डीर्येणाहंकारेण युद्धचातुर्येण वा प्रतापो रक्ष्यते । संकटे सति तथा शौण्डीर्यमाचरन्ति यथा सर्वेषामप्यक्षुब्धत्वेन प्रतिभासन्त इति प्रतापरक्षा भवतीत्यर्थः । प्रहारैश्छाया रक्ष्यते । तत्रैव तथा प्रहरन्ति यथा कान्तिरक्षा भवतीत्यर्थः । विक्रमैः परिजनः । संकटपतितः सेवकादिः पराक्रम्य रक्ष्यत इत्यर्थः । जीवेन चाभिमानो गर्वः । अतिसंकटे जीवनमप्युपेक्षन्ते नतु परावृत्त्य गर्वं नाशयन्तीत्यर्थः । शरीरेण च यशः । परप्रहारोपस्थितौ शूरचिह्नमभिमुखक्षतादिकमप्यङ्गीकृत्य यशो गृह्णन्ति नतु शरीरे लावण्यव्ययभिया दयां कुर्वन्तीति सत्त्वोद्रेकः सूचितः । रक्ष्यत इति सर्वत्रान्वितम् । अतः क्रियादीपकम् ॥

रक्षसां रणाभिलाषमाह—

**भिज्जइ उरो ण हिअअं गिरिणा भज्जइ रहो ण उण उच्छाहो ।**
**छिज्जन्ति सिरणिहाआ तुङ्गा ण उण रणदोहला सुहडाणम् ॥३६॥**

[भिद्यते उरो न हृदयं गिरिणा भज्यते रथो न पुनरुत्साहः ।
छिद्यन्ते शिरोनिघातास्तुङ्गा न पुना रणदोहदाः सुभटानाम् ॥]

सुभटानामुरो वक्षःस्थलं शस्त्रैर्भिद्यते । नतु हृदयं चित्तं भिद्यते । क्षतादपि मनो रणोत्सुकमेव तिष्ठतीत्यर्थः । एवम्—कपीनामस्त्रेण गिरिणा रथो भज्यते न पुनः समरोत्साहो भज्यते । किं तु रथभङ्गे सति दीप्यत इत्यर्थः । एवम्—शिरोनिघाताश्छिद्यन्ते । निघातः समूहः । न पुना रणदोहदा रणाभिलाषाः । ते तु मरणोत्तरसमरशरीरेऽप्यनुवर्तन्ते इति जिगीषुत्वमुक्तम् ॥

अथ प्रथमोत्थितरजःप्रशममाह—

सेलोज्झरेहिँ गअणे धुअलोहिअसीअरेहिँ धारामग्गे ।
मअसलिलेहिँ घडासु अ वोच्छिज्जइ पसरिअं महिरउट्ठाणम् ३७

[शैलनिर्झरैर्गगने धुतलोहितशीकरैर्धारामार्गे ।
मदसलिलैर्घटासु च व्यवच्छिद्यते प्रसृतं महीरजउत्थानम् ॥]

प्रसृतमूर्ध्वाधोव्यापि महीरजसामुत्थानमुद्गमो गगने कपिभिरुत्तोलितानां शैलानां निर्झरैर्व्यवच्छिद्यते प्रशाम्यते । एवम्—धारामार्गे रणस्थाने धुतैरितस्ततो गतैर्लोहितानां शोणितानां शीकरैः । एवं गजानां घटासु च मदजलैः । व्यवच्छिद्यत इत्यनुषज्यते ॥

अथ कपीनां भुजभङ्गमाह—

विसहिअखग्गप्पहरा गइन्ददन्तोल्लिहिअग्गलापडिरूआ ।
सेलाइक्कमवलिआ विसमं भज्जन्ति पवअबाहुप्फडिहा ॥३८॥

[विसोढखड्गप्रहारा गजेन्द्रदन्तोल्लिखितार्गलाप्रतिरूपाः ।
शैलातिक्रमवलिता विषमं भज्यन्ते प्लवङ्गबाहुपरिघाः ॥]

प्लवङ्गानां बाहुपरिघा भज्यन्ते त्रुट्यन्ति । विषमं विसदृशं यथा स्यात्तथा । किंभूताः । विसोढः खड्गप्रहारो यैः । अत एव गजेन्द्रदन्ताभ्यां लिखिता यार्गला तत्प्रतिरूपास्तत्तुल्याः । खड्गव्रणानां दन्तोल्लेखचिह्नैरर्गलाभिश्च बाहूनामुपमा । यद्वा गजेन्द्रदन्तोल्लिखिताश्च अर्गलाप्रतिरूपाश्चेति कर्मधारयः । भिन्नत्वे हेतुमाह—शैलानामतिक्रमेण क्षत्तोत्पत्त्या धारणासामर्थ्यादधःपतनेन वलिता यन्त्रणमासाद्य वक्रीभूताः । अत एव द्विधा भवन्तीत्यर्थः ॥

अथ पक्षिणां रुधिरत्यागमाह—

तेण्हाइओ वि सुइरं संणाहच्छेअगब्भिणम्मि वणमुहे ।
णिव्वलिअलोहविरसं ण पिअइ आमुअइ चक्खिऊण विहङ्गो ३९

[तृषितोऽपि सुचिरं संनाहच्छेदगर्भिते व्रणमुखे ।
निर्वलितलोहविरसं न पिबत्यामुञ्चत्यास्वाद्य विहङ्गः ॥]

विहङ्गो गृध्रादिः सुचिरं तृषायुक्तोऽपि सन् संनाहस्य छेदेन खण्डेन गर्भिते गर्भस्थतच्छेदे व्रणस्य मुखे रुधिरनिर्गमस्थाने रुधिरमास्वाद्येषज्जिह्वयालिह्य न पिबति ।

किंत्वामुञ्चति त्यजति । अत्र हेतुमाह—किंभूतम् । निर्वलितेन पृथग्भूतेन संनाहस्य लोहेन तत्कणेन विरसम् । लोहकणिकासंपर्काद्विस्वादमित्यर्थः ॥

अथ कबन्धानां वेगमाह—

वेवइ पडिओ वि भुओ ओसुद्धम्मि वअणम्मि धरइ अमरिसो ।
लुअसीसं वि कबन्धं धावइ उक्खित्तकण्ठलोहिअधारम् ॥ ४० ॥

[वेपते पतितोऽपि भुजोऽवपातिते वदने ध्रियतेऽमर्षः ।
छिन्नशीर्षोऽपि कबन्धो धावत्युत्क्षिप्तकण्ठलोहितधारः ॥]

छिन्नः सन् पतितोऽपि भुजोऽपि वेपते । भटानामित्यर्थात् । अत्रोद्यमनादिरूपकर्मसंस्कारसत्त्वादिति भावः । एवम्—छित्त्वावपातितेऽपि मुखेऽमर्षो भ्रुकुट्याद्यारुण्यादि तच्चिह्नं ध्रियते । तदवस्थायां कर्तनलाघवात् । एवम्—गतशीर्षोऽपि छिन्नमौलिरपि कबन्ध उत्क्षिप्ता ऊर्ध्वंगता कण्ठस्य लोहितधारा यत्र तथाभूतः सन् धावति । पूर्ववेगोत्कर्षादिति भावः ॥

वीराणां रणरसवत्तामाह—

देइ रसं रिउपहरो वहइ धुरं विक्कमस्स वेराबन्धो ।
आअड्ढिअरणरहसो दप्पं वड्ढेइ आअओ अइभारो ॥ ४१ ॥

[ददाति रसं रिपुप्रहारो वहति धुरं विक्रमस्य वैराबन्धः ।
आकृष्टरणरभसो दर्पं वर्धयत्यागतोऽतिभारः ॥]

वीराणां रिपुकृतः प्रहारो रसमुत्साहं ददाति । नत्वनुत्साहम् । मल्लयोरिव प्रतिप्रहारचिकीर्षोत्कर्षकत्वात् । तथा—वैराबन्धो वैरासञ्जनं विक्रमस्य धुरां वहति । तस्माद्विक्रमो वर्धत इत्यर्थः । एवम्—आगत उपरि पतितोऽतिभारः कठिनकार्यगौरवं दर्पं बलं वर्धयति । कीदृक् । आकृष्ट आनीतो रणे रभस उत्कण्ठा येन । मत्कृत्यमेवैतदित्यभिसंधानादिति भावः ॥

भटानां रणे कालक्षेपासहिष्णुतामाह—

साहेइ रिउं व जसं ण सहइ आआरिअं व कालक्खेवम् ।
लहइ सुहं मिव णासं जीअं मुअइ समुहं पहरणं व भडो ॥४२॥

[साधयति रिपुमिव यशो न सहते आकारितमिव कालक्षेपम् ।
लभते सुखमिव नाशं जीवं मुञ्चति संमुखं प्रहरणमिव भटः ॥]

भटो यशः साधयति । रिपुमिव यथा रिपुं विजित्यात्मसात्करोति तथा तत एव यशोऽपीत्यर्थः । एवम्—यथा आकारितं युद्धाय परेषामाक्षेपवचनं न सहते तथा कालक्षेपमपि । तस्मिन् सति तत्कालमेव युध्यतीत्यर्थः । किंच—यथा परप्रहारादिना सुखं लभते तथा तेनैव नाशमपि । पश्चादनागमनादिति भावः । एवम्—संमुखं यथा प्रहरणमस्त्रं मुञ्चति तथा स्वयमेव जीवमपि । शूराणां संमुखमरणस्य कमनीयत्वादिति सर्वत्र सहोपमा । नाशजीवत्यागयोरन्यथासिद्धत्वकृतत्वभेदादुक्तिवैचित्र्यमित्यवधेयम् ॥

कपीनां मूर्च्छावस्थामाह—

विसहिअखग्गप्पहरा विअलिअलोहिअकिलिन्तणीसारभुआ ।
मुच्छिज्जन्तो अल्ला अक्कन्ता णिअअमहिहरेहि पवङ्गा ॥ ४३ ॥

[विसोढखड्गप्रहारा विगलितलोहितक्लाम्यन्निःसारभुजाः ।
मूर्च्छायमाना अवमीलन्त आक्रान्ता निजकमहीधरैः प्लवङ्गाः ॥]

विसोढः खड्गप्रहारो यैः बाहावित्यर्थात् । अत एव विगलितशोणितत्वात्क्लाम्यन्तो विह्वला निःसारा बलशून्या भुजा येषां ते प्लवङ्गा अस्त्रीकृतैर्निजकमहीधरैरेवाक्रान्ता यन्त्रिताः । सव्रणस्य बाहोरबलत्वेन धर्तुमक्षमतया गिरीणां पतनादिति भावः । अत एव—पर्वतभरान्मूर्च्छायमानाः सन्तोऽवमीलन्तो निमीलन्नयनाः ॥

पञ्चभिरुभयत्र शूराणां जीवनिरपेक्षतादिरूपमुत्कर्षमाह—

दअइ कुसुअं व माणं वड्ढन्तं पि अणहं ण पत्तिअइ जसम् ।
ण करेइ लोअगरुए जीअ च्चिअ णवर आअरं भडसत्थो ॥४४॥

[दयते कुसुममिव मानं वर्धमानमप्यनघं न प्रत्येति यशः ।
न करोति लोकगुरुके जीव एव केवलमादरं भटसार्थः ॥]

भटानां सार्थः कुसुममिव मानमहंकारं दयते रक्षति । यथा कुसुमे कोमल[त्व]बुद्ध्या विमर्दविरहेणाभङ्गुरत्वमम्लानत्वं च मृग्यते तथा मानेऽपीत्यर्थः । संमुखमरणादिना वर्धमानमप्यनघं निष्कलुषं यशो न प्रत्येति । मम यशः प्रौढं जातमिति न जानाति । तथा चापरिपूर्णत्वभ्रमेणोत्तरोत्तरमपि तस्य विद्धे कालुष्याभावाय च प्राणव्ययेन यतत इत्यर्थः । केवलं लोकेषु गुरुके श्लाघनीये जीव एवादरमुपेयबुद्धिं न करोति किंतु तृणाय मन्यते । इति जीवमपि दत्त्वा मानं यशश्च वर्धयतीत्यर्थः ॥

**णिहआलक्खिअजोहे जाए लहुअम्मि णिअअधारामग्गे ।**
**परिवड्ढन्ताइभरं गरुअं परसंकुलं अइन्ति समत्थाः ॥ ४५ ॥**

[निहतालक्षितयोधे जाते लघौ निजकधारामार्गे ।
परिवर्ध्यमानाजिभरं गुरुकं परसंकुलमायान्ति समर्थाः ॥]

अलक्षितं क्षिप्रकारितया कुतः को मारयतीत्यनाकलितं यथा स्यादेवं निहताः परयोधा यत्र तथाभूते निजकधारामार्गे स्वारब्धसंग्रामे लघौ जाते सति निर्वाहिते सति समर्थाः परसंकुलं परचक्रमायान्ति । कीदृशम् । परिवर्ध्यमान आजिभरो येन । स्वपक्षक्षयं दृष्ट्वा एतत्पक्षमतिक्रामदित्यर्थः । अत एव गुरुकमनभिभाव्यम् । तथा च बहुशः कृतयुद्धा अपि शत्रोरुपस्थितौ परिश्रममगणयित्वा पुनर्युध्यन्तीत्यर्थः ॥

**धारेन्ति जसस्स धुरं एन्तं ण सहन्ति विक्कमस्स परिहवम् ।**
**रोसस्स करेन्ति धिइं माणं वड्ढेन्ति साहसस्स समत्था ॥ ४६ ॥**

[धारयन्ति यशसो धुरामायान्तं न सहन्ते विक्रमस्य परिभवम् ।
रोषस्य कुर्वन्ति धृतिं मानं वर्धयन्ति साहसस्य समर्थाः ॥]

समर्था यशसो धुरां धारयन्ति । परानतिक्रम्य यशो निर्वाहयन्तीत्यर्थः । आयान्तं संभाव्यमानं विक्रमस्य परिभवं न सहन्ते । दुष्करयुद्धेनापि विक्रमं रक्षन्तीत्यर्थः । एवम्—रोषस्य धृतिं धारणं कुर्वन्ति । अत एव साहसस्य प्राणानपेक्षकर्मणो मानं परिमाणं वर्धयन्ति । यशोविक्रमयो रक्षायै रुष्ट्वा साहसमपि कुर्वन्तीत्यर्थः ॥

**पयरासाइअहरिसं खणमुच्छागलिअरणमणोरहसोक्खम् ।**
**जीअविढत्तच्छरसं सिरपरिवत्तिअजसं विअम्भइ समरम् ॥४७॥**

[प्रहारासादितहर्षः क्षणमूर्च्छागलितरणमनोरथसौख्यम् ।
जीवार्जिताप्सराः शिरःपरिवर्तितयशा विजृम्भते समरः ॥]

प्रहारेण प्रहारं दत्त्वा आसादितो हर्षो यत्र । परप्रहारेण वा । एवम्—क्षणं परप्रहारात् मूर्च्छया गलितं रणाभिलाषसौख्यं यत्र । केवलं मूर्च्छासमये सङ्ग्रामसुखं न जायत इत्यर्थः । एवम्—जीवेनार्जिता जीवं दत्त्वा लब्धा अप्सरसो यत्र । शौर्यात् ।

तथा—शिरसा परिवर्तितानि शिरो दत्त्वा गृहीतानि यशांसि यत्र। एवंभूतः समरो विजृम्भते वर्धते। सर्वं क्रियाविशेषणं वा॥

संदेहेसु हसिज्जइ रज्जिज्जइ साहसे रमिज्जइ वसणे।
मुच्छासु वीसमिज्जइ णिव्वूढं ति णवरं गणिज्जइ मरणे॥ ४८॥
[संदेहेषु हस्यते रज्यते साहसेषु रम्यते व्यसने।
मूर्च्छासु विश्रम्यते निर्व्यूढमिति केवलं गण्यते मरणे॥]

भटैः प्राणसंदेहेषु जीवने लक्ष्म्याः, मरणे देवस्त्रीणाम्, कीर्तेरुभयत्र लाभ इत्यानन्दतो हास्यं क्रियते। परेषामनध्यवसिततत्त्वबुद्धिपरिहाराय वा संदेहादेव प्राणानपेक्षकर्मरूपसाहसेऽनुरज्यते। युद्धेनेत्यर्थात्। अथ तत्र व्यसने प्राणसंकटे सति रम्यते। जीवनादपीदानीं मरणमतिश्रेयः स्वर्गहेतुत्वादित्युत्साहः क्रियते तत्रैव प्रहारे सति मूर्च्छासु परं विश्रामो लभ्यतेऽपरथा युध्यत एव तदुत्तरं मरणे सति निर्व्यूढं स्वकृत्यं निर्वाहितमिति गण्यते। शत्रुविनाशनरूपं स्वामिनः, सुरस्त्रीलाभ-स्वर्गवासरूपं चात्मनः प्रयोजनं सिद्धमिति बुध्यत इत्यतिशूरत्वमुक्तम्॥

अथैकादशभिः स्कन्धकै रणरेणूत्थानमाह—

चलिओ अ चरणपहओ अनुवदिण्णरइमण्डलगहासङ्को।
अत्थेक्ककड्ढिअणिसो अभाअभग्गदिअसो महिरउग्घाओ॥ ४९॥
[चलितश्च चरणप्रहतोऽपूर्वदत्तरविमण्डलग्रहाशङ्कः।
अकस्मादाकृष्टनिशोऽभागभग्नदिवसो महीरजउद्घातः॥]

कपिहस्त्यश्वादीनां चरणैः प्रहतः प्रेरितो महीरजसामुद्घातो घनीभूतः समूहश्च-लित उत्थितश्चेत्यर्थः। कीदृक्। अपूर्वोऽद्भुतो दत्तो रविमण्डले ग्रहस्य राहोराशङ्का वितर्को येन स तथा। रजश्छन्ने रवौ सर्वग्रासो राहुणा कृत इति वितर्कोऽमावास्यां विनैव जायत इत्यद्भुतत्वम्। अत एवाकस्माद्विनाप्याकृष्टा आनीता निशा येन। तथा—अभागेऽस्थाने प्रहरद्वयेऽपि भग्नो विनाशितो दिवसो येन। सूर्यस्यास्तमित-त्वादित्यन्धकारमयत्वमुक्तम्॥

अथैषां प्रसरणक्रममाह—

मूले वहलुग्घाओ मज्झोआसे पसारिअत्तणतडिणो।
णहपुञ्जिअवित्थरिओ पडइ दिसासु गरुअत्तणेण महिरओ॥५०॥

[मूले बहलोद्धातं मध्यावकाशे प्रसारितत्वतडिनम् ।
नभःपुञ्जितविस्तृतं पतति दिक्षु गुरुत्वेन महीरजः ॥]

मूले उद्गमस्थाने बहलो निबिड उद्धातो यस्य । अथ—मध्यावकाशे किंचिदूर्ध्वप्रदेशे करिकर्णतालादिना प्रसारिततत्वेन तडिनं विरलम् । तदुक्तम्—'तडिनं विरले तुच्छे' । अनन्तरम्—नभसि सर्वतः समेत्य पुञ्जितं सद्विस्तृतं प्रसृतं महीरजः कर्तृ पश्चाद्दिक्षु पतति । प्रसारि भवतीत्यर्थः । केन । गुरुत्वेन । तथा च लघुत्वादुत्थितं वियति सर्वतो घनीभूय लब्धगुरुत्वं सत्पततीत्यर्थः ॥

अथैषामेकीभावमाह—

**मुअइ भरेइ णु वसुहं णीइ दिसाहिँ थएइ णु दिसाअक्कम् ।**
**अदिट्ठणिग्गमवहो पडइ णहाहिँ गअणं विलग्गइ णु रओ ॥५१॥**

[मुञ्चति बिभर्ति नु वसुधां निरैति दिग्भ्यः स्थगयति नु दिक्चक्रम् ।
अदृष्टनिर्गमपथं पतति नभसो गगनं विलगति नु रजः ॥]

रजो वसुधां मुञ्चति नु । अन्यत्र गमनात् । अथवा बिभर्ति पूरयति नु । वसुधायामेव घनीभूय स्थितत्वात् । अथ—दिग्भ्यो निरैति निर्गच्छति नु । अत्रैव ततः समागमादित एव गमनाद्वा । दिक्चक्रं स्थगयति व्याप्नोति नु । अथवा अत्रैव नभसः पतति नु । इतो गमनं विलगति आक्रामति नु । सर्वत्र हेतुमाह—अदृष्टो निर्गमस्य प्रादुर्भावस्य पन्था यस्य तत् । तथा च—सर्वत्र स्त्यानीभूतत्वेन कुतो निर्गच्छति कुत्र वा गच्छतीत्येकतरनिश्चयाभावादधस्तिर्यगूर्ध्वप्रसरणवितर्केण सकलव्यापकत्वमुक्तम् ॥

अथैषां सर्वदेहव्यापकत्वमाह—

**दीसइ रअणिअरबलं पवङ्गजोहेहिँ मंसलरअन्तरिअम् ।**
**ओसाअहअस्स ठिअं पुरओ मणिपव्वअस्स व हअच्छाअम् ५२**

[दृश्यते रजनीचरबलं प्लवङ्गयोधैर्मांसलरजोन्तरितम् ।
अवश्यायहतस्य स्थितं पुरतो मणिपर्वतस्येव हतच्छायम् ॥]

प्लवङ्गयोधैः सह मांसलैर्घनै रजोभिरन्तरितं छन्नमत एव हतच्छायं हतप्रभं रजनीचरबलं दृश्यते । किंभूतमिव । अवश्यायेन तुषारेण हतस्य च्छन्नस्य मणिप्रधानपर्वतस्य पुरतः स्थितमिव । तथा च—स्वभावेन कोपेन चारुणवर्णाः

प्लवङ्गा अपि रजश्छन्ना इत्यवश्यायच्छन्नमणिपर्वतत्वेनोपमिता इति सर्वेषां धूलिच्छन्नत्वमुक्तम् ॥

अथैषां नभसि प्रसरणमाह—

ओधूसरिअधअवडो पसरइ मइलिअतुरङ्गमुहप्फेणो ।
कसणमिहिअ व्व तणुओ णहम्मि सामलइआअवो रअणिवहो ५३

[अवधूसरितध्वजपटः प्रसरति मलिनिततुरङ्गमुखफेनः ।
कृष्णमेघिकेव तनुको नभसि श्यामलितातपो रजोनिवहः ॥]

तनुकः स्वल्प एव रजोनिवहो नभसि प्रसरति व्यापको भवति । कृष्णमेघिकेव । यथा कृष्णः स्वल्पो मेघो नभसि प्रसरति । किंभूतः । श्यामलितः श्यामीकृत आतपो येन स तथा । मेघोऽप्येवम् । एवम्—मलिनितस्तुरङ्गमुखफेनो येन । तथा—अवधूसरिता ध्वजपटा येनेति भूमेरुत्थाय तुरङ्गमुखे गलित्वा पताकासु मिलित्वा क्रमेण गगनं व्याप्तवानित्युक्तम् ॥

अथैषां नैबिड्यमाह—

वाणररहसविसज्जिअणहङ्गणोवइअसेलमग्गणिराओ ।
रइणो कलुसच्छाओ पडइ पणालोज्झरो व्व किरणुज्जोओ ॥ ५४ ॥

[वानररभसविसर्जितनभोङ्गणावपतितशैलमार्गनिरायतः ।
रवेः कलुषच्छायः पतति प्रणालनिर्झर इव किरणोद्योतः ॥]

रवेः किरणोद्योतः किरणप्रकाशः पतति । प्रणालनिर्झर इव प्रणालस्य सौधादिस्थितजलनिर्गमरन्ध्रस्य निर्झरो जलधारा यथा पतति तथैवेत्यर्थः । साम्ये बीजमाह—कीदृक् । वानरै रभसेनोत्साहेन विसर्जितास्त्यक्ता अत एव नभोङ्गणादवपतिता ये शैलास्तेषां मार्गेण पतनवर्त्मना निरायतो दीर्घः । तथा च गिरिभिः स्वशरीरेणावष्टभ्य निजवर्त्मधूलीनामधोनयनादप्रतिबन्धेन तरणितेजसामधःपतनादन्यत्र तु धूलिभिः प्रतिरोधान्न तथेति भावः । पुनः कीदृक् । कलुषच्छायः परितः समागतरजःसंपर्कादिति कलुषत्वेन वर्तुलत्वेन दीर्घत्वेन च तत्तौल्यादुपमा ॥

अथैषां खड्गादौ पिण्डीभावमाह—

कुविओहरिअणिसाअरपवअदढक्खन्धपूरिअद्धन्तासु ।
मंसलमहुकोसणिहो बज्झइ बज्झरुहिरासिधारासु रओ ॥ ५५ ॥

[कुपितावहृतनिशाचरप्लवगदृढस्कन्धपूरितार्धान्तासु ।
मांसलमधुकोषनिभं बध्यते बद्धरुधिरासिधारासु रजः ॥]

बद्धं स्त्यानीभूतं रुधिरं यासु तासु असिधारासु रजो बध्यते संबध्यते । दृढी-भवतीति यावत् । किंभूतासु । कुपितैर्निशाचरैरवहृतोऽवपातितोऽत एव प्लवगानां दृढेऽपि स्कन्धे पूरितो व्याप्तः । मग्न इति यावत् । अर्धान्तो अग्रभागो यासां तासु । अत एवोत्थापनानन्तरं तत्रैव रुधिरसंपर्कादार्द्रत्वेन संदानि[त]त्वान्मांसलः स्थूलो यो मधुकोषश्छत्राकृतिमधूत्पत्तिस्थानं तत्तुल्यम् । वर्तुलत्वादिति भावः ॥

अथैषां गजमुखे पङ्कीभावमाह—

रणपरिसक्कणविहला रइकिरणाहअकिलिन्तमउलिअणअणा ।
णिव्वाअन्ति गइन्दा सीअरसंवलिअरेणुकद्दमिअमुहा ॥ ५६ ॥

[रणपरिसर्पणविह्वला रविकिरणाहतक्लाम्यन्मुकुलितनयनाः ।
निर्वान्ति गजेन्द्राः शीकरसंवलितरेणुकर्दमितमुखाः ॥]

रणे परिसर्पणेन भ्रमणेन विह्वलाः । अत एव रविकिरणैराहताः स्पृष्टाः सन्तः क्लाम्यन्तोऽथ च मुकुलितनयना मुद्रिताक्षा गजेन्द्रा निर्वान्ति सुखिता भवन्ति । अत्र बीजमाह—शीकरसंवलितै रेणुभिः कर्दमितमुखाः संतापे सति निजोदरज-लावसेकादाननलग्नरेणुपङ्केन शैत्योत्पत्तेरिति भावः ॥

अथैषां मूले विरलत्वमाह—

मूलाहोअकराला सोणिअसोत्तणिवहन्तरालपसरिआ ।
एक्कक्कमेण समअं संबज्झन्ति उअरिं महिरउप्पीडा ॥ ५७ ॥

[मूलाभोगकरालाः शोणितस्रोतोनिवहान्तरालप्रसृताः ।
एकैकक्रमेण समं संबध्यन्ते उपरि महीरजउत्पीडाः ॥]

महीरजसामुत्पीडा उपरि एकैकक्रमेण परस्परेण सममेकदेव संबध्यन्ते मिलन्ति । किंभूताः । शोणित(प्रवाह) निवहस्यान्तरालेषु प्रसृता उत्थिताः । अत एव—मूलाभोगे मूलस्थाने कराला विरलाः । अयमर्थः—यत्र यत्र न शोणितप्रवा-हस्तत्र तत्रोत्थिता अन्यत्र शोणितसत्त्वान्नोत्थिता इति मूले विरला अपि नभसि गत्वा मिथो मिश्रिताः ॥

अथैषां नभसि खण्डखण्डीभावमाह—

णिवालेऊण णहे गअसुक्कारिअवलन्तधअवडतणुइम् ।
पवणो कड्डइ विसमं छाआवहपट्ठधूसरं रअलेहम् ॥ ५८ ॥
[निर्वाल्य नभसि गजसूत्कृतवलद्ध्वजपटतनुकाम् ।
पवनः कर्षति विषमं छायापथपृष्ठधूसरां रजोलेखाम् ॥]

पवनो रजोलेखां नभसि निर्वाल्य पृथक्कृत्य विषमं यथा स्यादेवं कर्षति । धाराक्रमेण स्थाने स्थाने प्रापयतीत्यर्थः । किंभूताम् । गजानां सूत्कृतैरूर्ध्वश्वसितैर्वलन्तस्तिर्यग्व्रजन्तो ये ध्वजपटास्तत्समीपे तद्वत्तनुकां कृशाम् । तदुपरि च्छायापथो नभस्थितं सुरगजवर्त्म तत्पृष्ठवद्धूसराम् । तथा चोपरि स्थितत्वेन धूसरत्वेन कृशादीर्घत्वेन च पताकापटच्छायापथाभ्यामुपमा ॥

अथैषां गजदृष्टिरोधकतामाह—

संरुम्भइ दिट्ठवहं गआण अहिमुहपहाविआण रणमुहे ।
मारुअकम्पिज्जन्तो वअणब्भासम्मि मुहवडो व महिरओ ॥ ५९ ॥
[संरुणद्धि दृष्टिपथं गजानामभिमुखप्रधावितानां रणमुखे ।
मारुतकम्प्यमानो वदनाभ्याशे मुखपट इव महीरजः ॥]

महीरजः कर्तृ रणमुखेऽभिमुखप्रधावितानां गजानां दृष्टिपथं संरुणद्धि । पुरो द्रष्टुं न ददातीत्यर्थः । अत एव कियन्तः शत्रवो जीवन्तीति भावः । किंभूतः । मारुतेन कम्प्यमानः प्रसार्यमाणः । अत एव वदनस्याभ्याशे निकटे मुखपट इव मुखाच्छादकपट इव । सोऽपि क्रुद्धगजस्य मुखे दीयमानस्तद्दृष्टिपथं रुणद्धीत्युत्प्रेक्षा ॥

अथ द्वाभ्यामेषां क्रमेण प्रशान्तिमाह—

णवरि अ भडवच्छत्थलवणमग्गणिराअपत्थिउच्छलिआए ।
रुहिरणई अ महिरओ उम्मूलिअकूलपाअवो व णिसुद्धो ॥ ६० ॥
[अनन्तरं च भटवक्षःस्थलव्रणमार्गनिरायतप्रस्थितोच्छलितया ।
रुधिरनद्या च महीरज उन्मूलितकूलपादप इव निपातितम् ॥]

---

१. 'रजोऽथं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोषाद्रजःशब्दस्याकारान्तस्य पुंलिङ्गत्वम्. एवं च 'कर्तृ' इति सामान्ये नपुंसकत्वे बोध्यम्.

रजोवृद्ध्यनन्तरं च भटानां वक्षःस्थलेषु व्रणमार्गेभ्यो व्रणस्थानेभ्यो निरायतं दीर्घं यथा स्यादेवं प्रस्थितोच्छ्वलितया रुधिरनद्या महीरजो निपातितम्। मूले विच्छेदान्नाशितमित्यर्थः । किं( भूत )मिव । उन्मूलितस्य कूलस्य पादप इव । अन्ययाप्युच्छ्वलितया नद्या कूलमुन्मूल्य वृक्षः पात्यते इत्युत्प्रेक्षा। वक्षःक्षतेन शौर्यमुक्तम्॥

अथैषां क्रमेणातिकार्श्यमाह—

पलहुअणीहारणिहं संघाइअकमलणालतन्तुच्छाअम् ।
घोलइ दरवोच्छिण्णं मारुअभिण्णतलिणट्ठिअं रअसेसम् ॥ ६१ ॥

[प्रलघुकनीहारनिभं संघटितकमलनालतन्तुच्छायम् ।
घूर्णते दरव्यवच्छिन्नं मारुतभिन्नतडिनस्थितं रजःशेषम् ॥]

रजःशेषं रुधिरैरवशोषितं रजः प्रथमं दरव्यवच्छिन्नं रुधिरसंपर्केण मूलविच्छेदादीषत्पृथक्पृथग्भूतं तदनु मारुतेन भिन्नं खण्डखण्डीकृतमतस्तडिनस्थितं विरलस्थितं सत् घूर्णते । दिशि दिशि गच्छतीत्यर्थः । कीदृशम् । खण्डखण्डीभावेऽपि प्रलघुका बिन्दुरूपा ये नीहारास्तन्निभम् । वर्तुलाकारत्वात् पश्चात्संघटिता नालभङ्गादुत्पादिता ये कमलनालानां तन्तवस्तेषामिव च्छाया यस्य तथाभूतम् । वर्तुलाकारस्यैव खण्डस्य मारुतेन पुनः शतशो विच्छिद्य किंचिद्व्यवहितस्थितदीर्घनानासूत्रसदृशीकृतत्वादिति । प्रथमं किंचिद्व्यवच्छिन्नस्थितं, तदनु हिमबिन्दुवत् खण्डखण्डीभूतं पश्चादनेकबिसतन्तुवदूर्ध्वाधस्तिर्यक्क्रमेण कृशीभूय प्रसृतमित्यर्थः । पाण्डुरत्वेन हिमतन्तुभ्यां तौल्यम् ॥

अथ गजानां पतनमाह—

रुम्भन्तुज्जुअमग्गं धराहरन्तरवलन्तणइसोत्तणिहम् ।
बलइ वलन्तधअवडं पडिअगइन्दणिवहन्तरालेसु बलम् ॥ ६२ ॥

[रुध्यमानर्जुकमार्गं धराधरान्तरवलन्नदीस्रोतोनिभम् ।
वलति वलद्ध्वजपटं पतितगजेन्द्रनिवहान्तरालेषु बलम् ॥]

पतितस्य गजेन्द्रनिवहस्यान्तरालेषु शून्यावकाशेषु वल(द्घूर्ण)द्ध्वजपटं सद्बलं वलति घूर्णते । किंभूतम् । रुध्यमानः ऋजुमार्गो यस्य तत् । तथा च पतितगजावरुद्धः संमुखमार्गत्वादवकाशेन गन्तुं बलस्य भ्रमणम् । तत एव पताकानामपीत्यर्थः । अत एव धराधराणामन्तरे वलद्वक्रीभवद्यन्नदीस्रोतस्तन्निभम् । यथा पर्व-

तावरुद्धपथतया संमुखमपहाय पर्वतयोरन्तरेण चलितुं नदीप्रवाहो वक्रीभवति तथेदमपीति। पर्वतैर्गजानां, स्रोतसा बलस्य तौल्यादुपमा॥

अथ कपीनां पतनमाह—

**दूसहसहिअप्पहरा दुव्वोज्झविलग्गसमरणिव्वूढभरा।**
**ओच्छुण्णदुग्गमपहा कअदुक्करपेसणा पडन्ति पवङ्गा॥ ६३॥**

[दुःसहसोढप्रहारा दुर्वहविलग्नसमरनिर्व्यूढभराः।
अवक्षुण्णदुर्गमपथाः कृतदुष्करप्रेषणाः पतन्ति प्लवङ्गाः॥]

दुःसहाः सन्तः सोढाः प्रहारा यैः। एवम्—दुर्वहस्य दुःखनिर्वाहनीयस्य विलग्नस्योपगतस्य समरस्य निर्व्यूढो निर्वाहितो भरो यैः। शत्रूणां जयात्। एवम्—अवक्षुण्ण आक्रान्तो दुर्गमः परागम्यः पन्था यैः। अथ च—कृतं निष्पादितं दुष्करमसाध्यं प्रेषणं राजाज्ञा यैः। एवंभूता अपि प्लवङ्गाः पतन्ति म्रियन्त इति रणस्य घोरत्वमुक्तम्॥

अथ युद्धसमृद्धिमाह—

**बन्धुवहबद्धवेरं सहस्सपूरणकबन्धजणिआमोअम्।**
**वड्ढइ भडदिण्णरसं भुजपवलपहुअवीरपडणं जुज्झम्॥ ६४॥**

[बन्धुवधबद्धवैरं सहस्रपूरणकबन्धजनितामोदम्।
वर्धते भटदत्तरसं भुजप्रबलप्रभूतवीरपतनं युद्धम्॥]

बन्धूनां पितृभ्रातृपितृव्यादीनां वधेन बद्धं वैरं यत्र। एवम्—सहस्रस्य पूरणं यस्मात्तेन चरमेण कबन्धेन जनित आमोदो नर्तनं यत्र। सहस्रशूरपतने एकः कबन्धो नृत्यतीति प्रसिद्धिः। एवम्—भटेभ्यो दत्तो रसः प्रीतिर्येन। एवम्—भुजाभ्यां प्रबलानां प्रभूतानामसंख्यानां वीराणां पतनं यत्र। तादृशं युद्धं वर्धते। प्रकर्षं गच्छतीत्यर्थः॥

अथ शिवानां संभारमाह—

**मणिबन्धागअपुञ्जिअसंणाहच्छेअवलअदिण्णावेढम्।**
**णेउं ण चएइ सिआ मूलुच्छिण्णगरुअं णिसिअरस्स भुअम्॥ ६५॥**

[मणिबन्धागतपुञ्जितसंनाहच्छेदवलयदत्तावेष्टम्।
नेतुं न शक्नोति शिवा मूलोच्छिन्नगुरुकं निशिचरस्य भुजम्॥]

शिवा सृगाली मूलात्स्कन्धादुच्छिन्नं कृतमत एव गुरुकं निशिचरस्य भुजं नेतुमन्यत्र प्रापयितुं न शक्नोति । किंभूतम् । मणिबन्धे करमूले आगतः सन् पुञ्जितो यः संनाहच्छेदवलयो वलयाकृतिः संनाहच्छेदस्तेन दत्तमावेष्टं चतुर्दिक्षु वर्तनं यत्र । स्कन्धे खड्गपातात् संनाहसहितस्य भुजस्य छेदे संनाहः संसृत्य करमूलमागत्य वर्तुलीभूय स्थित इत्यामूलच्छेदादेव गुरुकस्य भुजस्य संनाहेनातिगुरुत्वादुत्तोलयितुं न पारयतीत्यर्थः ॥

अथ रुधिरसरित्प्रवाहमाह—

आवत्तन्तरवलिआ रुहिरणिहाएसु पासबद्धप्फेणा ।

ओल्लन्तपम्हगरुआ अत्थाअन्ति पडिऊण चमरुप्पीडा ॥ ६६ ॥

[आवर्तान्तरवलिता रुधिरनिघातेषु पार्श्वबद्धफेनाः ।

आर्द्रायमाणपक्ष्मगुरुका अस्तायन्ते पतित्वा चामरोत्पीडाः ॥]

चामराणामुत्पीडाः रुधिरनिघातेषु पतित्वा आवर्तान्तरे रुधिरभ्रमिमध्ये वलिता भ्रमिताः सन्तोऽस्तायन्ते मज्जन्ति । अत्र हेतुमाह—किंभूताः । रुधिरसंपर्कादार्द्रायमाणैः पक्ष्मभिः केशैर्गुरुका यतः । एवं पार्श्वे प्रान्ते बद्धा लग्नाः फेना यत्र । 'चमरश्चामरोऽपि चे'ति शब्दभेदः ॥

अथ गजानां वैक्लव्यमाह—

उद्धमुहमुक्कणाआ पुव्वद्धभरोसिअन्तपच्छिमभाआ ।

कुम्भे पवअसिलाहअखुप्पन्तुद्धङ्कुसे धुणन्ति गइन्दा ॥ ६७ ॥

[ऊर्ध्वमुखमुक्तनादाः पूर्वार्धभरावसीदत्पश्चिमभागाः ।

कुम्भान्प्लवगशिलाहतनिखायमानोर्ध्वाङ्कुशान्धुन्वन्ति गजेन्द्राः ॥]

गजेन्द्राः प्लवगैः शिलाभिराहतस्ताडितः सन् निखायमानोऽन्तःप्रवेशित ऊर्ध्वं उपरिवर्ती ऊर्ध्वदण्डो वा अङ्कुशो यत्र तान् कुम्भान् धुन्वन्ति चालयन्ति । कुम्भे पूर्वारोपित एवाङ्कुशः शिलाभिघातेन मग्नः । तदुद्धारार्थमिति भावः । पीडावशेन वा । अत एव किंभूताः । ऊर्ध्वमुखाः सन्तो मुक्तनादाः कृतचीत्काराः । अथ च—पूर्वार्धस्योत्तोलितस्कन्धभागस्य भरेणावसीदन् यन्त्रितः पश्चिमभागोऽधःस्थितनितम्बप्रदेशो येषामिति जातिरलंकारः ॥

अथ राक्षसानामपयानमाह—

**अह पवअभरुब्भन्ता पहरुज्जुअतिअसभङ्गदाणसमुइआ ।**
**जाआ रक्खसजोहा पढमुग्गअदुक्करं पडिवहाहिमुहा ॥ ६८ ॥**

[अथ प्लवगभरोद्भ्रान्ताः प्रहारऋजुकत्रिदशभङ्गदानसमुचिताः ।
जाता राक्षसयोधाः प्रथमोद्गतदुष्करं प्रतिपथाभिमुखाः ॥]

अथ गजवैकल्यानन्तरं राक्षसयोधाः प्रतिपथाभिमुखाः प्रतीपगमनोन्मुखा जाताः । प्रथमसुद्गतमुपस्थितमत एव दुष्करं यथा स्यात् । राक्षसानां युधि पलायनमिदं प्रथममेवोपस्थितमिति लज्जावशादिति भावः । किंभूताः । प्लवगानां भरेणाधिक्येनोद्भ्रान्ता दिशि दिशि गच्छन्तः । प्लवगानाक्रान्तदेशालाभादिति भावः । एवम्—प्रहारे युद्धे ऋजुका निष्कपटा अकपटयोधिनो ये त्रिदशास्तेषां भङ्गदाने समुचिता योग्याः । तज्जेतार इत्यर्थः ॥

अथ परावृत्तिमाह—

**भग्गोणिअत्तिअगअं भमिअं ठाणपरिवत्तिओभग्गरहम् ।**
**एक्कपअवलिअजोहं मण्डलिदिण्णतुरअं णिसाअरसेण्णम् ॥६९॥**

[भग्नापनिवर्तितगजं भ्रमितं स्थानपरिवर्तितावभग्नरथम् ।
एकपदवलितयोधं मण्डलीदत्ततुरगं निशाचरसैन्यम् ॥]

निशाचरसैन्यं भ्रमितम् । युद्धाय पुनः परावृत्तमित्यर्थः । कीदृशम् । भग्नाः पलायिताः सन्तोऽपनिवर्तिता युद्धसंमुखीकृता गजा यत्र । एवम्—स्थाने परिवर्तिता युद्धाय भ्रामिता अवभग्ना विमुखा रथा यत्र । एवम्—एकपदेनैकोपक्रमेण वलिता वक्रीभूता योधाः पत्तयो यत्र । तथा—मण्डल्यां गतिविशेषे दत्ताः प्रेरितास्तुरगा यत्र । मण्डलीगत्यैव परावर्तिताश्वमित्यर्थः । तेन हस्त्यश्वरथपादातरूपचतुरङ्गबलपरावृत्तिरुक्ता । केचित्तु भ्रमितं पश्चाद्गतमिति व्याख्याय पलायनपरतयैव स्कन्धकमिदं व्याचक्षते । एतदनुसारेणाग्रिमाग्रिममपि तथेति स्फुटत्वान्न व्याख्यातम् ॥

अथ पुनः पलायनमाह—

**अमरिसवित्थक्कन्ता वि वलाअन्ति भमिऊण गलिआमरिसा ।**
**ईसिविअत्तच्छूडा णिब्भीअक्खीणवाणरा रअणिअरा ॥ ७० ॥**

[अमर्षवितिष्ठमाना वि(अपि)पलायन्ते भ्रमित्वा गलितामर्षाः ।
ईषद्विवृत्तक्षिप्ता निर्भीतालीनवानरा रजनीचराः ॥]

निर्भीता अत एवालीनाः संगता वानरा येषां ते रजनीचरा युद्धाय ईषद्विवृत्ताः परावृत्ता अथ क्षिप्ताः प्रेरिताः सन्तः । कपिभिरित्यर्थात् । पुनरपि भ्रमित्वा परावृत्य पलायन्ते । किंभूताः । प्रथममर्षेण वितिष्ठमाना विलम्बिता अनन्तरं गलितामर्षा ईर्ष्याशून्याः । प्राणकातरत्वादिति भावः ॥

अथ पलायनावस्थामाह—

रहसंदाणिअतुरअं तुरङ्गमोरत्थलक्खलिअपाइक्कम् ।
पाइक्कावलिअगअं गअभज्जन्तरहसंकुलं वलइ बलम् ॥ ७१ ॥

[रथसंदानिततुरगं तुरङ्गमोरःस्थलस्खलितपदातिकम् ।
पदात्यावलितगजं गजभज्यमानरथसंकुलं वलति बलम् ॥]

निशाचराणां बलं वलति घूर्णते । किंभूतम् । रथैः संदानिता मिलितास्तुरगा यत्र । एवम्—तुरङ्गमाणामुरःस्थलात्स्खलिता घटिताः पदातयो यत्र । पदातिभिरावलिताः पृष्ठे तुरङ्गमातिक्रमादुपरुद्धा गजा यत्र तत् । गजैर्भज्यमाना ये रथास्तैः संकुलमेकीभूतम् । गजै रथा रथैरश्ववारास्तैः पत्तयः पत्तिभिश्च गजा उपर्युपरि पतित्वातिक्रान्ता इति चतुरङ्गबलविपर्यास उक्तः ॥

अथ कपीनां विश्राममाह—

ससइ विसमुद्धकम्पं गरुआअन्तभुअलम्बिओभग्गदुमम् ।
विहलोसरिअपडिभडं सण्णोवाहिअणिसाअरं पवअबलम् ॥७२॥

[श्वसिति विषमोर्ध्वकम्पं गुरुकायमाणभुजलम्बितावभग्नद्रुमम् ।
विह्वलापसृतप्रतिभटं सन्नापवाहितनिशाचरं प्लवगबलम् ॥]

विषमस्तिर्यक्त्वादूर्ध्वः कम्पो यस्य तत्प्लवगबलं श्वसिति मारणीयापयानेन विश्रामश्वासं त्यजति । तत एव शिरःप्रभृत्यङ्गकम्प इत्यर्थः । किंभूतम् । विपक्षापयाने सति श्रमज्ञानाज्जडीभावेन गुरुकायमाणाभ्यां भुजाभ्यां लम्बिता अधः संसृता अवभग्ना विपक्षाभिघातेन च विशीर्णशाखापत्त्रा द्रुमा यस्य । एवम्—विह्वलाः सन्तोऽपसृताः पलायिताः प्रतिभटा यस्य । एवम्—सन्ना अवसन्ना अपवाहिताः पातिता निशाचरा येन तत्तथा । कियन्तो मारिताः कियन्तः पलायिता इत्यर्थः ॥

अथ रक्षसां पुनः परावृत्तीच्छामाह—

**अक्खण्डिअसोडीरा पवआणिअपढममाणभङ्गावसरा ।**
**भग्गा वि भमन्ति पुणो णीसेसं रक्खसा ण गेह्णन्ति भअम् ७३**

[अखण्डितशौण्डीर्याः प्लवगानीतप्रथममानभङ्गावसराः ।
भग्ना अपि भ्रमन्ति पुनर्निःशेषं राक्षसा न गृह्णन्ति भयम् ॥]

यतोऽखण्डितशौण्डीर्या अखण्डिताहंकारा अतो भग्ना अपि राक्षसाः पुनर्भ्रमन्ति । युद्धाय निवर्तितुमित्यर्थात् । किंभूताः । प्लवगैरानीत उपस्थापितः हि प्रथमस्य मानभङ्गस्यावसरः समयो येषां ते । प्रथमोऽवसरो वा । अन्यदा कदापि येषां मानभङ्गो न जात इत्यर्थः । अत एवासह्यतया निवर्तनमिति भावः । यतो भ्रमन्ति तत एव ज्ञायते निःशेषं भयं न गृह्णन्ति । अन्यथा पलायनमेव कुर्युरिति भावः ॥

अथ चतुर्भिः कुलकेन पलायनमेवैषामाह—

**तह वि अ दरपरिवत्तिअचक्कलइज्जन्तगरुअचक्करहवहम् ।**
**वित्थक्कन्तपहाविअसमत्थसंठावणाविढत्तरणजसम् ॥ ७४ ॥**

[तथापि च दरपरिवर्तितचक्रायमाणगुरुकचक्ररथपथम् ।
वितिष्ठमानप्रधावितसमर्थसंस्थापनार्जितरणयशः ॥]

यद्यपि युद्धाय साकाङ्क्षं तथापि निशाचरसैन्यं भग्नमित्यग्रिमचतुर्थेनान्वयः । कपीनामुग्रतया पलायितमित्यर्थः । दरपरिवर्तितः किंचिद्भ्रामितोऽत एव चक्रायमाणश्चक्राकृतिर्गुरुकचक्रस्य रथस्य पन्था यत्र । परावृत्त्यै रथभ्रामणे तिर्यक् चलितचक्रोल्लिखितः पन्था अपि चक्राकृतिरभूदित्यर्थः । अत एव घर्षणसंपादकत्वेन गुरुकेति चक्रविशेषणमिति वयम् । संप्रदायस्तु—'दरपरिवर्तितान्यत एव चक्रायमाणानि गुरूणि चक्राणि येषां तादृशानां रथानां पन्था यत्र' इत्याह । एवं वितिष्ठमानैर्युद्धार्थमवस्थितैः, अथ च पलायितानां परावर्तनाय प्रधावितैरितस्ततो गच्छद्भिः समर्थैः संस्थापनाय माभैरित्यादि समाश्वासनवाक्येनार्जितं रणे यशो यत्र । एवं रणाय परानाश्वासयामास तेनैव यशो लब्धमित्यर्थः । यद्वा—वितिष्ठमानैः प्रधावितानां पलायितानां समस्तानां संस्थापनायेत्यन्वयः ॥

वाणरपरंमुहोणामिअद्धमोडिअलिलाडवट्टणिसिअरम् ।
परसेण्णकलअलाद्दित्थपडिणिअत्तन्तगअविओलारोहम् ॥ ७५ ॥

[वानरपराङ्मुखावनामितार्धमोटितललाटपट्टनिशिचरम् ।
परसैन्यकलकलोद्विग्नप्रतिनिवर्तमानगजविलोलारोहम् ॥]

किंभूतं सैन्यम् । वानरैः पराङ्मुखीकृत्यावनामिताः, अत एवार्धमोटितं ललाटपट्टं येषां तथाभूता निशिचरा यत्र । तत्पलायनादन्यतो मुखानां निशाचराणां पृष्ठतो गत्वा कपिभिर्धृतस्य शिरसः स्वाभिमुखीकरणाय यदावर्तनं तत्प्रतिबन्धादेव ललाटस्यार्धमोटितत्वमित्यर्थः । एवम्—जयोत्साहजनितेन वानरसैन्यकलकलेनोद्विग्नेभ्यस्त्रस्तेभ्यस्तत एव प्रतिनिवर्तमानेभ्यः पलायमानेभ्यो गजेभ्यो विलोलाश्चञ्चलाः । पतिता इति यावत् । आरोहा हस्तिपका यत्र । गजानामुद्वृत्तगत्या हस्तिपकानां पतनमित्यर्थः ॥

चलवाणराणुधाविअवालधरिज्जन्तणिच्चलट्ठिअतुरअम् ।
णिहअभडपडिअसारहिपवङ्गभेसिअतुरङ्गहीरन्तरहम् ॥ ७६ ॥

[चलवानरानुधावितवालध्रियमाणनिश्चलस्थिततुरगम् ।
निहतभटपतितसारथिप्लवङ्गभीषिततुरङ्गह्रियमाणरथम् ॥]

एवम्—चलैर्वानरैरनुधाविताः पृष्ठतोऽनुगताः, अत एव वाले सरे पुच्छके वा ध्रियमाणाः सन्तो निश्चलस्थितास्तुरगा यत्र । कपिभिर्धृतत्वेन प्रतिरुद्धगतित्वात् । एवम्—निहतो भटो रथी यस्य पतितः सारथिर्यस्य तादृश एव प्लवङ्गेन भीषितैः कोलाहलादिना त्रासितैस्तुरङ्गैर्ह्रियमाणा रथा यत्र । पलायिताश्वपृष्ठलग्नाः शून्या एव रथा गच्छन्तीत्यर्थः ॥

धारामग्गणिवाइअबलपडिहअविरलवाणरुण्णिअमग्गम् ।
भग्गं गलन्तपहरणसुण्णइओहअभुअं णिसाअरसेण्णम् ॥ ७७ ॥
(अन्त्यकुलअम्)

[धारामार्गनिपातितबलप्रतिहतविरलवानरोन्नीतमार्गम् ।
भग्नं गलत्प्रहरणशून्यीकृतोभयभुजं निशाचरसैन्यम् ॥]
(अन्त्यकुलकम्)

---

१. अयं पाठः सटीकपुस्तके नास्ति.

धारामार्गे संग्रामे निपातितं यद्बलं करितुरगादि तेन हेतुना प्रतिहता विच्छिन्ना अत एव विरलाः स्थाने स्थाने प्रवृत्ताः सन्तो वानरैरुन्नीता ऊहिता मार्गा यस्य गन्तॄणां हतत्वेन धाराकारत्वाभावाद्वर्त्मनो विरलत्वमत एवात्र संचारचिह्नमनेन गता इत्यादि कवि(पि)तर्कप्रसक्तिरित्यर्थः । एवम्—गलद्भिः प्रहरणैरस्त्रैः शून्यीकृता उभये भुजा यस्य तादृशम् । भयेनास्त्रमपि स्खलितं त्यक्तं चेत्यर्थः ॥

अथैषां परावृत्तिमाह—

अह हिअमच्छरलहुआ एक्कक्कमचक्खुरक्खणाहिअहिअआ ।
हिअआवडिअदहमुहा वलिजा पडिमुक्करणभआ रअणिअरा ७८

[अथ हृतमत्सरलघुका एकैकक्रमचक्षूरक्षणाहितहृदयाः ।
हृदयापतितदशमुखा वलिताः प्रतिमुक्तरणभया रजनीचराः ॥]

अथ पलायनानन्तरं रजनीचरा हृदये आपतितो दशमुखो येषां तथाभूताः, अत एव प्रतिमुक्तरणभयाः सन्तो वलिता घूर्णिताः । युद्धं त्यक्त्वा गन्तव्यं तदा दशमुखो मारयिष्यतीति युद्धमेव वरमिति भीतिमुत्सृज्य पुनर्युद्धाय परावृत्ता इत्यर्थः । किंभूताः । हृतमत्सरत्वेन मात्सर्यशून्यत्वेन लघुका निःसाराः । मात्सर्ये सति पलायनमेव स्यादिति भावः । एवम्—एकैकक्रमेण परस्परं चक्षुषां रक्षणे आहितान्यर्पितानि हृदयानि यैस्ते । चक्षुः संमुखे लज्जया परस्परं त्यक्तुमपारयन्त इति सहैव परावृत्ता इति भावः ॥

अथैषां पुनः पौरुषमाह—

वोच्छिण्णसंधिअजसा होन्ति णिअत्तसँमुहट्ठविअसोंडीरा ।
कइबलदुप्परिअल्ला सिढिलिअपडिवण्णरणधुरा रअणिअरा ॥७९॥

[व्यवच्छिन्नसंहितयशसो भवन्ति निवृत्तसंमुखस्थापितशौण्डीर्याः ।
कपिबलदुष्परिकलनीयाः शिथिलितप्रतिपन्नरणधुरा रजनीचराः ॥]

शिथिलिता त्यक्ता अथ प्रतिपन्ना स्वीकृता रणधुरा यैस्ते रजनीचरा भवन्ति । कीदृशाः । प्रथमं व्यवच्छिन्नं त्रुटितमनन्तरं संहितं सूत्रवद्योजितं यशो यैस्ते तथा । एवम्—निवृत्तमपगतं पश्चात्संमुखे स्थापितं शौण्डीर्यमहंकारो यैः । एवम्—कपिबलैर्दुष्परिकलनीया दुराधर्षाः । तथा च—यशःशौण्डीर्यं दुर्धर्षत्वं च भङ्गादपगतम्, युद्धाय परावृत्त्य पुनरागतमित्यर्थः ॥

अथ पुनर्युद्धमाह—

तो भङ्गलज्जिआणं परिवड्ढिअपसरहरिसिआण अ गरुअम् ।
रअणिअरवाणराणं वरिआआरिअभडं पवट्टइ जुज्झम् ॥ ८० ॥

[ततो भङ्गलज्जितानां परिवर्धितप्रसरहर्षितानां च गुरुकम् ।
रजनीचरवानराणां वृताकारितभटं प्रवर्तते युद्धम् ॥]

ततस्तदनन्तरं भङ्गेन लज्जितानां रजनीचराणां, परिवर्धितेन प्रसरेण हर्षितानां च वानराणां गुरुकं युद्धं प्रवर्तते । किंभूतम् । वृतोऽमुकेन समं मया योद्धव्यमिति स्वीकृतः सन्नाकारितो आहूतो भटो यत्र तदिति संप्रदायः । वस्तुतस्तु—भङ्गेन हेतुना मया पराजितमिति रक्षसा कातरेण समं मम युद्धमभूदिति कपीनां [च] लज्जेत्यर्थः । परावृत्तिलक्षणेन च परिवर्धितप्रसरेणोभयेषामपि हर्ष इत्युभयमप्युभयविशेषणमिति न द्वन्द्वानुपपत्तिरिति वयम् ॥

अथ सुग्रीवप्रजङ्घयोर्द्वन्द्वयुद्धमाह—

सुग्गीवेण पअङ्घो सत्तच्छअपाअवेण दिण्णरणसुहो ।
वणगअदाणसुरहिणा वच्छुच्छलिअकुसुमट्टहासेण हओ ॥ ८१ ॥

[सुग्रीवेण प्रजङ्घः सप्तच्छदपादपेन दत्तरणसुखः ।
वनगजदानसुरभिणा वक्षउच्छलितकुसुमाट्टहासेन हतः ॥]

सुग्रीवेण सेनामुखे पतितत्वाच्चिरं कृतयुद्धत्वाच्च दत्तरणसुखः प्रजङ्घो नाम राक्षसः सप्तच्छदपादपेन करणीभूतेन हतस्ताडितः । पादपेन किंभूतेन । वनगजानां दानेन सुरभिणा । एतेन मत्तगजगण्डकण्डूयनसहत्वेन महत्त्वमुक्तम् । दानवद्वा । एवम्—वक्षसः । प्रजङ्घस्येत्यर्थात् । वक्षसि उच्छलितानि कुसुमान्येवाट्टहासो यस्य तेन । साधु ताडितोऽयं मत्प्रहारसहो न भवतीति वृक्षोपहासविषयोऽभूदित्युत्प्रेक्षा ॥

द्विविदाशनिप्रभयोस्तदाह—

दिविआहअस्स समरे सुरहिं उरपडिअसरसचन्दणगन्धम् ।
असणिप्पहस्स जीअं अग्घाअन्तसुहिओणिमिल्लस्स गअम् ॥८२॥

[द्विविदाहतस्य समरे सुरभिमुरःपतितसरसचन्दनगन्धम् ।
अशनिप्रभस्य जीवमाजिघ्रत्सुखितावनिमीलतो गतः ॥]

समरे द्विविदेनाहतस्य । चन्दनेनेत्यर्थात् । अशनिप्रभस्य रक्षसो जीवो गतः ।

किंभूतस्य। सुरभिसुरसि पतितस्य सरसचन्दनस्य गन्धमाजिघ्रतः सतः सुखितस्य, अत एवावनिमीलतो मुद्रितनयनस्य। तथा च—मूर्च्छापूर्वकमरणजन्यदृष्टिमुद्रणं चन्दनगन्धाघ्राणसुखहेतुकत्वेनोत्प्रेक्षितम्॥

मैन्दवज्रमुष्ट्योस्तदाह—

हन्तूण वज्जमुट्ठिं हसइ मइन्दो वि मुट्ठिघाअणिसुद्धम्।
आहित्थदिट्ठिणिग्गअजलणसिहाअम्बफुडिअलोअणजुगलम्॥ ८३

[हत्वा वज्रमुष्टिं हसति मैन्दोऽपि मुष्टिघातनिपातितम्।
उद्विग्नदृष्टिनिर्गतज्वलनशिखाताम्रस्फुटितलोचनयुगलम्॥]

वज्रमुष्टिं राक्षसं हत्वा मैन्दोऽपि द्विविदभ्राता हसति। हठादेव मृत इत्याशयात्। किंभूतम्। मुष्टिघातेन निपातितम्। एवम्—उद्विग्नाभ्यां दृष्टिभ्यां निर्गता या ज्वलनशिखा क्रोधात् तया आताम्रं सत् स्फुटितं मुष्टिघातादेव बहिर्भूतं स्फुरितं दीप्तं वा लोचनयुगलं यस्य तम्॥

सुषेणविद्युन्मालिनोस्तदाह—

कुविएण विज्जुमाली चिरजुज्झअहरिसिओ सुसेणेण कओ।
चलणजुअलावलम्बिअणक्खुक्खित्तखुडिओहअभुअप्फडिहो॥ ८४

[कुपितेन विद्युन्माली चिरयुद्धहर्षितः सुषेणेन कृतः।
चरणयुगलावलम्बितनखोत्क्षिप्तखण्डितोभयभुजपरिघः॥]

सुग्रीवश्वशुरेण वानरवैद्येन सुषेणेन कुपितेन सता विद्युन्माली नाम राक्षसश्चरणयुगलेनावलम्बितौ भूमाववष्टब्धौ अथ पूर्वनिपातानियमात् करद्वयनखैः खण्डितावुत्पाटितावथोत्क्षिप्तौ क्वचित्प्रेरितावुभयभुजपरिघौ यस्य तादृक् कृतः। भूमौ पद्भ्यामवष्टभ्य नखैरुत्कृत्य भुजद्वयमन्यतः क्षिप्तमित्यर्थः॥

नलतपनयोस्तदाह—

सहिअपहरं णलेण वि तवणस्स तलाहिघाअमोडिअकण्ठम्।
णिहिअं देहम्मि सिरं देहो अद्धणिमिओ महिअलम्मि कओ॥ ८५

[सोढप्रहारं नलेनापि तपनस्य तलाभिघातमोटितकण्ठम्।
निहितं देहे शिरो देहोऽर्धनिवेशितो महीतले कृतः॥]

नलेनापि तपनस्य रक्षसः शिरः कर्म तलाभिघातेन चपेटप्रहारेण मोटितकण्ठं

संदेहेनिहितं स्थापितम् । तथा चपेटप्रहारः कृतो यथा तदीयं शिरस्तदीयकबन्ध एव प्रविष्टमित्यर्थः । सोढप्रहारं यथा स्यात्तपनकृतप्रहारं सोढ्वेत्यर्थः । न केवलं शिर एव तथा कृतम् । अपि तु तदीयदेहोऽपि महीतलेऽर्धनिवेशितः कृतः तथा च एकेनैव प्रहारेण शिरः कबन्धे प्रविष्टम्, कबन्धोऽप्यर्धेन भूमौ प्रविष्ट इत्यर्थः ॥

हनुमज्जम्बुमालिनोस्तदाह—

हन्तूण जम्बुमालिं झत्ति विहिण्णो अइक्कन्तो पवणसुओ ।
सअलतलगाढताडणभिण्णुच्छलिअसिरमेअसित्तदसदिसम् ॥८६॥

[हत्वा जम्बुमालिनं झटिति विभिन्नोऽतिक्रान्तः पवनसुतः ।
सकलतलगाढताडनभिन्नोच्छलितशिरोमेदःसिक्तदशदिक् ॥]

पवनसुतो जम्बुमालिनं हत्वा झटिति विभिन्नस्तस्मादेव राक्षसात्पृथग्भूतः सन्नतिक्रान्तो दूरं गतः । कीदृक् । सकलतलेन संपूर्णचपेटेन गाढताडनाद्भिन्नैः स्फुटितैरथोच्छलितैःशिरोमेदोभिः सिक्ता दशदिशो येन स तथा । [चन्द्रिकायां] तलताडनेन यावच्छिरोमेदः समुच्छलति तावदेव तत्संपर्कभिया दूरमुड्डीय गत इति वेगोत्कर्ष उक्तः ॥

अथ मेघनादाङ्गदयोर्द्वादशभिस्तदाह—

अह गेण्हइ अइभूमिं इन्दइवालितणआण रणसोडीरम् ।
णिहएक्कमेक्कपरिअणसहत्थपडिवण्णसंसअतुलारोहम् ॥ ८७ ॥

[अथ गृह्णात्यतिभूमिमिन्द्रजिद्वालितनययो रणशौण्डीर्यम् ।
निहतैकैकपरिजनस्वहस्तप्रतिपन्नसंशयतुलारोहम् ॥]

अथ जम्बुमालिवधानन्तरमिन्द्रजिदङ्गदयो रणे शौण्डीर्यमहंकारश्चातुर्यं वातिभूमिमुत्कर्षकाष्ठां गृह्णाति । द्वयोरपि तुल्यबलत्वात्तुल्यं वर्धते इत्यर्थः । कीदृशम् । निहता एकैकस्य परस्परस्य । एकैके वा तयोरेव ये परिजनास्तैर्हेतुभूतैः स्वहस्तेन स्वकृत्या प्रतिपन्नः स्वीकृतः संशयरूपतुलायामारोह आरोहणं यस्मात् । ताभ्यामेवेत्यर्थात् । तादृशम् । परस्परकृत्या परस्परपरिजनक्षयं दृष्ट्वा अनयोः को जयेदेवंरूपः संशयो रणशौण्डीर्यादिति भावः । कस्य शौण्डीर्यं महदिति संशयविषयत्वं शौण्डीर्यस्यैवेति केचित् । निहता एकैकपरिजना यस्मात्तथाभूतं च तत् स्वहस्तेत्यादिक्रमेण कर्मधारयो वा ॥

बाणन्धआरिअदिसं धणुमण्डलपरिगअं विसेसेइ परम्।
आलोइउक्खआणिअमुक्कपडन्तेहि गिरिसहस्सेहि कई ॥ ८८ ॥
[बाणान्धकारितदिशं धनुर्मण्डलपरिगतं विशेषयति परम्।
आलोकितोत्खातानीतमुक्तपतद्भिरिसहस्रैः कपिः ॥]

कपिरङ्गदः परमिन्द्रजितं प्रथममालोकितैरथोत्खातैरथानीतैरथ मुक्तैरथ पतद्भिर्गिरिसहस्रैर्विशेषयत्यतिक्रामति। स्वापेक्षया न्यूनं करोतीति वा। यद्वा आलोकितादिक्रियाणां युगपद्वृत्त्या क्षिप्रकारित्वमुक्तम्। परं किंभूतम्। बाणैराच्छादितत्वेनान्धकारिता दिशो येन तम्। नत्वङ्गदाच्छादकमित्याशयः। एवम्—धनुर्मण्डलेन परिगतं मण्डलाकारेण धनुषा संगतमित्यर्थः॥

णिवडन्ति कुसुमणिब्भरमिलिअवलन्तविडवोवऊढमहुअरा।
विवइण्णप्फललहुआ धुतमज्झक्खुडिअपल्लवा दुमणिवहा ॥८९॥
[निपतन्ति कुसुमनिर्भरमिलितवलद्विटपोपगूढमधुकराः।
विकीर्णफललघवो धुतमध्योत्खण्डितपल्लवा द्रुमनिवहाः ॥]

द्रुमाणां निवहा निपतन्ति। मेघनादोपरीत्यर्थात्। कीदृशाः। कुसुमैर्निर्भरा व्याप्ताः अथ मिलिता मूलभागमग्रे कृत्वाक्षेपणात्परस्परं संबद्धाः, अत एव वलन्तो वक्रीभवन्तो ये विटपास्तेषूपगूढाः पृथक्पतनभिया मिश्रीभूय स्थिता मधुकरा येषु ते। एवम्—विकीर्णैरितस्ततः फलैर्लघवः। विकीर्णफलाः सन्तो लघव इति वा। एवम्—धुताः सन्तो मध्ये अन्तरा देशे उत्खण्डिताः पल्लवा येषां ते। इन्द्रजित्पर्यन्तं सफलपल्लवा न गच्छन्तीत्यर्थः॥

वालितणअं ण पावइ गअणे गुप्पइ दुमेहि सरसंघाओ।
छिज्जन्ति अद्धवत्थे एन्ता दहमुहसुअं ण लङ्घन्ति दुमा ॥ ९० ॥
[वालितनयं न प्राप्नोति गगने गोप्यते द्रुमैः शरसंघातः।
छिद्यन्तेऽर्धपथे आयान्तो दशमुखसुतं न लङ्घन्ते द्रुमाः ॥]

मेघनादस्य शरसंघातो वालितनयं न प्राप्नोति। तावद्दूरं न गच्छतीत्यर्थः। किंतु गगनेऽन्तर इवाङ्गदक्षिप्तैर्द्रुमैर्गोप्यते तिरोधीयते व्याकुलीभवति वा। अत एव तेऽपि द्रुमा दशमुखसुतं न लङ्घन्ते। तावत्पर्यन्तं न गच्छन्ति। किंतु

आयान्तः सन्तोऽर्धपथ एव विच्छिद्यन्ते । तैरेव शरैरित्यर्थात् । तथा च द्वयोरपि तुल्यक्रियत्वमुक्तम् ॥

**विक्खित्तलोद्धकुसुमं सरदलिउद्धाअमाणचन्दणगन्धम् ।**
**उद्धुअमन्दाररअं सरसलवङ्गदलगब्भिअं होइ णहम् ॥ ९१ ॥**

[विक्षिप्तलोध्रकुसुमं शरदलितोर्ध्वायमानचन्दनगन्धम् ।
उद्धूतमन्दाररजः सरसलवङ्गदलगर्भितं भवति नभः ॥]

नभो भवति । कीदृशम् । विक्षिप्तानि लोध्रस्य कुसुमानि यस्य । एवम्—इन्द्रजितः शरेण दलितानां चन्दनानामूर्ध्वायमान ऊर्ध्वप्रसारी उद्धावमानो वा गन्धो यत्र । दलने सति सौरभोद्गमात् । तथा उद्धूतानि मन्दारस्य देवतरो रजांसि यत्र । पुष्पाणामित्यर्थात् । एवम्—सरसैर्लवङ्गस्य दलैर्गर्भितं व्याप्तम् । अङ्गदस्यैतान्यस्त्राणीति भावः ॥

**इअ तं समपडिहत्थं वारंवारवलदिण्णसाहुक्कारम् ।**
**इन्दइवालिसुआणं परं पमाणं गअं पि वड्ढइ जुज्झम् ॥ ९२ ॥**

[इति तत्समप्रतिहस्तं वारंवारबलदत्तसाधुकारम् ।
इन्द्रजिद्वालिसुतयोः परं प्रमाणं गतमपि वर्धते युद्धम् ॥]

इति वक्ष्यमाणप्रकारेण इन्द्रजिद्वालिसुतयोस्तद्युद्धं परं प्रमाणमुत्कर्षकाष्ठां गतमपि वर्धते । पूर्वपूर्वतोऽप्युत्कृष्टं भवतीत्यर्थः । किंभूतम् । समः प्रतिहस्तः परप्रहारनिवारणादिरूपा प्रतिक्रिया प्रतिपक्षो वा यत्र । एवम्—वारंवारं बलाभ्यां दत्तः साधुकारो यत्र । स्वस्वपक्षव्यापारोत्कर्षादित्यनेन सह सप्तभिरादिकुलकम् ॥

**दुमकुसुममज्झणिग्गअसरपुङ्खालग्गणिज्जमाणमहुअरम् ।**
**णिव्वावारोवसिअट्ठिओहआविग्गसेण्णविम्हअदिट्ठम् ॥ ९३ ॥**

[द्रुमकुसुममध्यनिर्गतशरपुङ्खालग्ननीयमानमधुकरम् ।
निर्व्यापारापसृतस्थितोभयाविग्नसैन्यविस्मयदृष्टम् ॥]

किंभूतं युद्धम् । अस्त्रीकृतवृक्षस्य कुसुमानां मध्येन निर्गतैरिन्द्रजितः शरैः पुङ्खेष्वालग्नाः सन्तो नीयमाना मधुकरा यत्र । मधुसंबन्धेन मधुपा अपि पुङ्खे लग्ना गच्छन्तीत्यर्थः । एवम्—अपूर्वयुद्धदर्शनाय निर्व्यापाराभ्यां युद्धभूम्यन्यत्रगतागत-

मार्गयोस्त्यागाय चापस्तस्थिताभ्यां पार्श्वयोः पश्चाद्वर्तिभ्यामुभयोरविग्नाभ्यां स्वस्व-प्रभुमरणशङ्कयोद्विग्नाभ्यां सैन्याभ्यां विस्मयेन दृष्टम् । उभयमिति सैन्यविशेषणं वा । 'एज्जमाण' इति पाठे शराणां पुङ्खालग्नाः सन्तो ज्ञायमाना मधुकरा यत्रेत्यर्थः ॥

**दहमुहतणअविसज्जिअसरभरिअणहङ्गणुप्पइअवालिसुअम् ।**
**वालिसुअरोसपेसिअसालसिलासेलरुद्धदहमुहतणअम् ॥ ९४ ॥**

[दशमुखतनयविसृष्टशरभृतनभोङ्गणोत्पतितवालिसुतम् ।
वालिसुतरोषप्रेषितशालशिलाशैलरुद्धदशमुखतनयम् ॥]

एवम्—दशमुखतनयेन विसृष्टैः शरैर्भृतात्पूरितान्नभोङ्गणादुत्पतितः प्रहारवारणायोर्ध्वंगतो वालिसुतो यत्र । एवम्—वालिसुतेन रोषतः प्रेषितैः शालो वृक्षः शिलाः शैलाश्च तै रुद्धो न तु प्रतिहतः । प्रतिक्रियासत्त्वात् । दशमुखतनयो यत्र तत् ॥

**णिसिअरसरणिद्दारिअवाणरदेहरुहिरारुणदिसाहोअम् ।**
**वाणरपहरपअत्तिअरक्खसरुहिरोहकद्दमिअभूमिअलम् ॥ ९५ ॥**

[निशिचरशरनिर्दारितवानरदेहरुधिरारुणदिशाभोगम् ।
वानरप्रहारप्रवर्तितराक्षसरुधिरौघकर्दमितभूमितलम् ॥]

एवम्—निशिचरस्येन्द्रजितः शरैर्निर्दारितो वानरस्याङ्गदस्य यो देहस्तस्य रुधिरैररुणस्ताम्रो दशानां दिशामाभोगो विस्तारो यस्मात् । एवम्—वानरस्याङ्गदस्य प्रहारैः प्रवर्तितेनोत्पादितेन राक्षसस्येन्द्रजितो [देहस्य] रुधिरौघेन कर्दमितं भूमितलं यस्मात्तत् ॥

**रिउसूलदूमिओहीरमाणवालिसुअदिण्णवाणरसोअम् ।**
**सेलाहिघाअमुच्छिअदहमुहतणअभअभिण्णरअणिअरबलम् ॥ ९६ ॥**

[रिपुशूलदुःखितावह्रियमाणवालिसुतदत्तवानरशोकम् ।
शैलाभिघातमूर्च्छितदशमुखतनयभयभिन्नरजनीचरबलम् ॥]

एवम्—रिपोरिन्द्रजितः शूलेन दुःखितः सन्नवह्रियमाणोऽवपात्यमानो यो वालिसुतस्तेन दत्तो वानरेभ्यः शोको यत्र । तन्मरणसंदेहात् । एवम्—शैलाभिघाता-

---

१. 'रक्खसदेहरुहिरो' इति सटीकपुस्तकपाठः.

न्मूर्च्छितेन दशमुखतनयेन हेतुना भयेन भिन्नं पृथग्भूतं पलायितं रजनीचरबलं यस्मात्तत् । एतन्मूर्च्छया वानरप्रसरशङ्कावशादिति भावः ॥

**तारातणअविसेसिअरअणिअरपअत्तपवअसेण्णकलअलम् ।**
**मन्दोदरिसुअदूमिअवाणरपरिओसमुहलरक्खसलोअम् ॥ ९७ ॥**

[तारातनयविशेषितरजनीचरप्रवृत्तप्लवगसैन्यकलकलम् ।
मन्दोदरीसुतदुःखितवानरपरितोषमुखरराक्षसलोकम् ॥]

एवम्—तारातनयेनाङ्गदेन विशेषितोऽतिक्रान्तो यो रजनीचरः शक्रजित्तेन हेतुना जातानन्दत्वात् प्रवृत्त उत्पन्नः प्लवगसैन्यस्य कलकलो यत्र तत् । एवम्—मन्दोदरीसुतेन दुःखितो व्याकुलो यो वानरोऽङ्गदस्तेन हेतुना परितोषान्मुखराः कृतकोलाहला राक्षसलोका यत्र । अङ्गदेन यदा मेघनादः परिभूयते तदा प्लवङ्गानाम्, यदा च मेघनादेनाङ्गदः तदा निशाचराणां मुहुर्मुहुरानन्दकोलाहलोऽभूदित्यर्थः ॥

**भुअपडिअणिप्फलप्फलिहभङ्गहेलाहसन्तवाणरजोहम् ।**
**उरभिण्णसिलाअलमेहणाअमुक्कट्टहासपण्डुरिअणहम् ॥ ९८ ॥**

**( आइकुलअम्[1] )**

[भुजपतितनिष्फलपरिघभङ्गहेलाहसद्वानरयोधम् ।
उरोभिन्नशिलातलमेघनादमुक्ताट्टहासपाण्डुरितनभः ॥]

( आदिकुलकम् )

एवं भुजयोः । अर्थादङ्गदस्य । पतितः सन्निष्फलः । अनभिभावकत्वात् । यः परिघो मेघनादस्य तद्भङ्गेन द्विधाभावेन सानन्दत्वाद्धेलया हसन्तो वानरयोधा यत्र । भुजयोः किमपि नाभूत् प्रत्युत परिघ एव भग्न इत्याशयः । एवम्—उरसि भिन्नं स्फुटितं शिलातलमङ्गदमुक्तं यस्य तेन मेघनादेन गर्वितया मुक्तो योऽट्टहासस्तेन पाण्डुरितं नभो यस्मात्तत् ॥

अथेन्द्रजित्पराजयेनाश्वासं विच्छिनत्ति—

**अह इन्दइम्मि वालितणएण समराणुराअभग्गुच्छाहे ।**
**णिहओ त्ति हसन्ति कई माआइ ठिअ त्ति हरिसिआ रअणिअरा ९९**

**इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे तेरहो आसासओ ।**

१. अयं पाठो लिखितपुस्तके नोपलभ्यते.

[अथेन्द्रजिति वालितनयेन समरानुरागभग्नोत्साहे।
निहत इति हसन्ति कपयो मायया स्थित इति हर्षिता रजनीचराः॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये
त्रयोदश आश्वासः।

अथ द्वन्द्वयुद्धानन्तरं वालितनयेनेन्द्रजिति समरानुरागे भग्न उत्साहो यस्य तथाभूते सति तिरोभवन्निन्द्रजिन्निहतो मृत इति कृत्वा कपयो हसन्ति, मायया स्थित इति कृत्वा रजनीचरा हर्षिताः। तत्त्वज्ञत्वादिति भावः॥

द्वन्द्वसंग्रामदशया रामदासप्रकाशिता।
रामसेतुप्रदीपस्य शिखा पूर्णा त्रयोदशी॥

---

## चतुर्दश आश्वासः।

अथ रामव्यापारमाह—

**अह णिप्फलगअदिअसो जदिच्छिआ संपडन्तदहमुहलम्भो।**
**जूरइ लङ्काहिमुहो अलसाअन्तहतरक्खसो रहुणाहो॥ १॥**

[अथ निष्फलगतदिवसो यदृच्छया संपद्यमानदशमुखलम्भः।
खिद्यते लङ्काभिमुखोऽलसायमानहतराक्षसो रघुनाथः॥]

अथेन्द्रजित्तिरोधानोत्तरं रघुनाथः खिद्यते। अत्र हेतुमाह—कीदृक्। निष्फलो गतो दिवसो यस्य स तथा। अकृतरावणवधत्वात्। तदेवाह—यदृच्छया स्वेच्छया संपद्यमानो दशमुखस्य लम्भः प्राप्तिर्यस्य। अत एव लङ्काभिमुखः। रावणागमसाकाङ्क्षत्वात्। एवम्—अलसायमानो मन्दं मन्दमस्त्रं व्यापारयन् सन् हता राक्षसा येन तथाभूतः। अप्रतिपक्षबुद्ध्यानास्थावशा(व)दिति भावः॥

अथ रामस्य पुनः शरतिति(त्य)क्षामाह—

**एएसु सुहणिसण्णो ण णीइ समरं दसाणणो त्ति गणेन्तो।**
**इच्छइ दिण्णाआसे रअणिअरेसु पडिमुञ्चिउं सरणिवहे॥ २॥**

[एतेषु सुखनिषण्णो न निरैति समरं दशानन इति गणयन्।
इच्छति दत्तायासान्रजनीचरेषु प्रतिमोक्तुं शरनिवहान्॥]

एतेषु रजनीचरेषु सुखनिषण्णः कृताध्यवसायो दशाननः समरं प्रति न निरैति

निर्गच्छतीति विचारयन् सन् रजनीचरेषु शरनिवहान् प्रतिमोक्तुमिच्छति । रघुनाथ इत्यर्थात् । किंभूतान् । दत्त आयासो यैस्तान् । परेष्वित्यर्थात् । तथा च—एतावत्कालपर्यन्तमनास्थया शरानौज्झत् । अथास्थयेति भावः ॥

अथ शराणां त्यागमाह—

दिट्ठम्मि पत्थिअम्मि अ आवडिअम्मि अ परे सरणिसुम्भन्ते ।
समरम्मि विसूरन्ता मोहुक्करिसिअदुमा भमन्ति पवङ्गा ॥ ३ ॥
[दृष्टे प्रस्थिते चापतिते च परे शरनिपात्यमाने ।
समरे खिद्यमाना मोघोत्कृष्टद्रुमा भ्रमन्ति प्लवङ्गाः ॥]

निजव्यूहस्थ एव दृष्टे परे शत्रौ रणाभिमुखं प्रस्थिते च पलायिते वा परे आपतिते निकटमागते च परे रामस्य शरैर्निपात्यमाने सति प्रतिभटाभावात् खिद्यमाना अथ च मारणीयाभावान्मोघं निष्फलं मोघा वा उत्कृष्टा उत्तोलिता द्रुमा यैस्तादृशाः प्लवङ्गाः समरे तद्भूमौ भ्रमन्ति घूर्णन्ते । रामेणैव सर्वस्मिन् हते हन्तव्यगवेषणयेति भावः ॥

अथैषां दशभिर्वेगोत्कर्षमाह—

भेत्तूण तुरिअमुक्के अणुलोमपहाविए सिलासंघाए ।
पढमं साहेन्ति परं विहडिअवाणरमणोरहा रामसरा ॥ ४ ॥
[भित्त्वा त्वरितमुक्ताननुलोमप्रधाविताञ्शिलासंघातान् ।
प्रथमं साधयन्ति परं विघटितवानरमनोरथा रामशराः ॥]

रामशराः प्रथमं परं शत्रुं साधयन्ति नाशयन्ति । किं कृत्वा । त्वरितं यथा स्यात्तथा मुक्तान्, अथानुलोमं शरगन्तव्यदिगभिमुखं प्रधावितान् शिलासंघातान् भित्त्वा विदार्य । कपिभिर्यद्यपि त्वरया मुक्ताः शिलास्तथापि पश्चान्मुक्ता अपि शरा अन्तरैव ता निर्भिद्य परान्विदारयन्तीत्यर्थः । अत एव पश्चाद्विघटितो वानराणां मनोरथो मम शिलाभिरेते हन्यन्तामित्यभिलाषो यैस्ते । तथा च शिलाविदारणशत्रुमारणानन्तरमेव कपयो जानन्ति रामेण शरो मुक्त इति तदानीं मनोरथो भज्यत इति रामस्य क्षिप्रकारित्वमुक्तम् । प्रथमं त्वरितं मुक्तानिति केचित् ॥

पुनस्तमेवाह—

**छिज्जइ करेण समअं पवए णलिअइ रक्खसाण पहरणम्।**
**पावइ तुरिअविमुक्कं अणहं ण अ रक्खसं पवङ्गपहरणम्॥ ५॥**

[छिद्यते करेण समं प्लवगे नालीयते राक्षसानां प्रहरणम्।
प्राप्नोति त्वरितविमुक्तमनघं न च राक्षसं प्लवङ्गप्रहरणम्॥]

राक्षसानां प्रहरणं शरादि करेण समं छिद्यते। रामशरैरित्यर्थात्। अत एव प्लवगे नालीयते न संबध्यते स्वयमेव नष्टत्वात्। तथा च राक्षसानामिति बहुत्वेन स्थाने स्थाने रक्षोभिः प्रथमं संहितमपि शरादि यावत् क्षिप्यते तावदेव तद् दृष्ट्वा रामेण संधाय मुच्यमानैः शरैश्छिन्नमिति तत्तत्संधानोत्तरसंभावितप्रेरणापूर्वसूक्ष्मक्षण एव रामेण संधाय मुक्ताः शरास्तावद् दूरं गत्वा कृतकृत्या बभूवुः। अथ च प्लवग इत्येकवचनेन एक एव रामो यावत्तेषु बहुषु नाना शरान्व्यापारयति स्म, तावत्तेषामेकेनापि शरो न व्यापारयितुं पारित इति भावः। एवं च रामापेक्षया त्वरितं प्रथमतो विमुक्तं प्लवगानां प्रहरणं शिलादि अनघमविद्धं राक्षसं न प्राप्नोतीति पश्चान्मुक्तरामशरनिकृत्ते राक्षसादौ प्रथममुक्तं शिलादि पतितमित्युभयथापि रामस्य लघुहस्तत्वमुक्तम्। करेणेत्यत्र 'शिलाहि' इति पाठे शिलाभिः समं तुल्यं छिद्यत इत्यर्थः। तथा च यथा कपिभिः प्रथममुक्तापि शिला पश्चान्मुक्तरामशरेण संनिधावेव छिन्ना, तथा शिलामुक्तिसमकालमुक्तमपि राक्षसानामस्त्रमितो व्यवधान एव ततः संनिधौ छिन्नमित्यतो लघुहस्तत्वमुक्तम्॥

तमेवाह—

**भिण्णे वच्छम्मि सिला गिरिसिहरं छिण्णपाडिअसिरट्ठाणे।**
**णिवडइ सराहिसंधिअपरक्कमेहि पवएहि रोसविमुक्कम्॥ ६॥**

[भिन्ने वक्षसि शिला गिरिशिखरं छिन्नपातितशिरःस्थाने।
निपतति शराभिसंहितपराक्रमैः प्लवगै रोषविमुक्तम्॥]

कपिभिः प्रथमं मुक्ता शिला पश्चान्मुक्तरामशरैर्भिन्ने राक्षसानां वक्षसि पतति। एवम्—रामशरैरेव छिन्नस्य सतः पातितस्य शिरसः स्थाने राक्षसानामेव गले प्लवगै रोषेण विमुक्तमपि गिरिशिखरं पतति। तथा च तत्तत्स्थान एव लक्ष्ये शिलादीनां पतनाद्वक्षोभेदनशिरश्छेदनादपि वीरो न पतित इति लघुहस्तत्वमेवोक्तम्। किंभूतैः। रामस्य शरेणाभिसंहितो वञ्चितः पराक्रमो येषां तैः। शत्रुमारणस्य तत एव सिद्धत्वात्। अत एवोक्तम्—निपतति, न तु किंचिदपि करोतीति भावः॥

तमेवाह—

सइ संधिओ चिअ सरो रहुणाहस्स सइ चक्कलइअं च धणुम् ।
अच्छिज्जइ अ सराहअसइपल्हत्थन्त रक्खससिरेहि मही ॥ ७ ॥

[सदा संहित एव शरो रघुनाथस्य सदा चक्रीकृतं च धनुः ।
आच्छाद्यते च शराहतपर्यस्यद्राक्षसशिरोभिर्मही ॥]

रघुनाथस्य शरः सदा संहित एव पतंजि(प्रत्यञ्चि)कारोपित एव, धनुश्च सदा चक्रीकृतं चक्राकारमेव शराणामादानसंधानविमोक्षाणां शैघ्र्यादित्थंभूतमेव दृश्यत इत्यर्थः । एवं शरैराहतानि स्पृष्टानि सन्ति पर्यस्यन्तीतस्ततः पतन्ति यानि राक्षसशिरांसि तैर्मही आच्छाद्यते व्याप्यत इत्यर्थः ॥

तमेवाह—

विसमालग्गहुअवहा विसहररेंअविअबिलमुहपडिच्छन्दा ।
दीसन्ति बाणमग्गा रक्खसदेहेसु से ण दीसन्ति सरा ॥ ८ ॥

[विषमालग्नहुतवहा विषधररेचितबिलमुखप्रतिच्छन्दा ।
दृश्यन्ते बाणमार्गा राक्षसदेहेष्वस्य न दृश्यन्ते शराः ॥]

राक्षसदेहेषु बाणानां मार्गा निर्गमपथाः परं दृश्यन्ते, न पुनरस्य रामस्य शरा इत्यन्वयः । क्षिप्रगतत्वादिति भावः । किंभूताः । विषमं स्थाने स्थाने आलग्नो हुतवहो येषु ते । एतेन शराणामाग्नेयत्वमुक्तम् । एवम्—विषधरैः सर्पै रेचितानां शून्यीकृतानां बिलमुखानां विवराणां प्रतिच्छन्दाः प्रतिरूपाः । तान्यपि दीर्घाणि क्वचित्क्वचिल्लग्नविषानलानीति शराणामपि सर्पसमानशीलत्वेन घातकत्वमुक्तम् ॥

पुनस्तदेवाह—

उक्करिसन्तस्स करे पत्थन्तस्स हिअए रसन्तस्स मुहे ।
दीसन्ति णवर पडिआ णिबद्धसिरपडणसूइआ रामसरा ॥ ९ ॥

[उत्कर्षतः करे प्रार्थयमानस्य हृदये रसतो मुखे ।
दृश्यन्ते केवलं पतिता निबद्धशिरःपतनसूचिता रामशराः ॥]

रामशरा उत्कर्षतः शरानाकर्षतः परस्य कर एव, प्रार्थयमानस्य कपिरयमित्थं

१. 'रेइअ' इति पाठो लिखितसटीकपुस्तक उपलभ्यते.

मारणीय इति प्रतिसंदधानस्य हृदय एव, रसतश्छिन्धि ताडयेत्यादि शब्दं कुर्वाणस्य मुख एव, केवलं पतिता दृश्यन्ते, न तु गृह्यमाणा गच्छन्तो वा । तथा च रक्षोभिः कपिव्यापादनाय कायिको मानसो वाचिको वा यदा य एव व्यापारः कृतस्तदा तमेव प्रतिरुद्धवन्त इति रामशराणां मन्त्रमयदेवताधिष्ठान(त्व)मुक्तम् । किंभूताः । निबद्धानां व्यूहे संयोजितानां वीराणां शिरःपतनेन सूचिताः प्रकाशिताः । तथा च व्यूहवर्तिवीरशिरःपतनैरनेन यथा रामशरो गत इति केवलमनुमीयते, दृश्यते पुनर्लक्ष्यकरादिस्थानलग्न एवेति रामस्य कृतहस्तत्वमुक्तम् । यद्वा—निबद्धं शिरस्त्राणादिसंबद्धं यच्छिरस्तत्पतने सूचिताः सुष्ठु योग्या इति स्वरूपनिर्वचनमिति वयम् । संप्रदायस्तु निबद्धं कबन्धसंगतं यच्छिरस्तत्पतनेन सूचिता इति व्याचष्टे ॥

तमेवाह—

जो जत्थ च्चिअ दिट्ठो सुओ जहिँ जस्स विअलिओ वि णिणाओ ।
चलिओ अ जो जहिँ च्चिअ तस्स तहिँ चेअ णिवडिआ रामसरा १०

[यो यत्रैव दृष्टः श्रुतो यत्र यस्य विगलितोऽपि निनादः ।
चलितश्च यो यत्रैव तस्य तत्रैव निपतिता रामशराः ॥]

यो वीरो यत्रैव दृष्टः, तथा तस्य वीरस्य यत्रैव विगलितोऽभ्युत्थितोऽपि निनादः श्रुतः, तथा यश्च वीरो यत्रैव चलितः, तस्य कृते तत्रैव रामशरा निपतिता इति क्रमेण दृष्टवेधित्वं शब्दवेधित्वमश्रुतादृष्टवेधित्वं च शराणां सूचितम् ॥

तमेवाह—

हअहत्थिभडतुरङ्गा दीहा दीसन्ति तम्मि रक्खससेण्णे ।
अग्गक्खन्धपअत्ता कूलं भेत्तूण णिग्गआ रामसरा ॥ ११ ॥

[हतहस्तिभटतुरङ्गा दीर्घा दृश्यन्ते तस्मिन्राक्षससैन्ये ।
अग्रस्कन्धप्रवृत्ताः कूलं भित्त्वा निर्गता रामशराः ॥]

तत्र राक्षससैन्ये अग्रस्कन्धेन सेनामुखेन प्रवृत्ताः प्रविष्टाः कूलं पश्चाद्भागं भित्त्वा निर्गता रामशरा हता हस्तिनो भटास्तुरङ्गाश्च यैस्तथाभूताः सन्तो दीर्घा धाराकारा दृश्यन्ते । एकैकपृष्ठलग्नाः परे परे गच्छन्तीत्यर्थः । यद्वा दीर्घाकारेण हतं हस्त्यादि पतितं दृष्ट्वा सेनाया मुखे प्रविश्य पश्चान्निर्गता धारावाहिनो रामशरा इत्यनुमित्या विषयीक्रियन्त इत्यर्थः । दृशेरुपलब्धिपरत्वादित्याशयः ॥

तमेवाह—

जं चिअ उअलद्धभअं काहिइ समअं पडाइअव्वारम्भम् ।
तं रामसराहिहअं दिट्ठं णवर पडिअं णिसाअरसेण्णम् ॥ १२ ॥

[यदेवोपलब्धभयं करिष्यति समं पलायितव्यारम्भम् ।
तद्रामशराभिहतं दृष्टं केवलं पतितं निशाचरसैन्यम् ॥]

तन्निशाचरसैन्यं रामशरैरभिहतं सत्केवलं पतितं दृष्टम् । तत्किम् । यदेव उपलब्धभयं सत्सममेकदैव पलायितव्ये पलायने । भावे तव्यः । आरम्भमुद्यमं करिष्यति । तथा च—शूराः पलायितान्न निघ्नन्तीति पुराणश्रुत्या पलायनोद्यमपूर्वकाल एव रामेण हतमिति भावः ॥

पुनस्तमेवाह—

इअ तं बाणुक्कित्तं पडन्तसमकालदिट्ठसिरसंघाअम् ।
सुअसारणावसेसं खणेण रक्खसबलं कअं रहुबइणा ॥ १३ ॥

[इति तद्बाणोत्कृत्तं पतत्समकालदृष्टशिरःसंघातम् ।
शुकसारणावशेषं क्षणेन राक्षसबलं कृतं रघुपतिना ॥]

इत्यनेन प्रकारेण बाणैरुत्कृत्तं तद्राक्षसबलं रघुपतिना शुकसारणावशेषौ यत्र तथाभूतं क्षणेन कृतम् । पूर्वपरिचितत्वात्कृपया शुकसारणावेव रक्षितौ । परे सर्वे एव हता इत्यर्थः । किंभूतम् । पतन् सन् समकालमेकदैव दृष्टः शिरःसंघातो यत्रेति रामस्य लघुहस्तत्वमुक्तम् । अत एव क्षणेनेत्युक्तम् ॥

अथ संध्यामाह—

ताव अ सलोहिआरुणरक्खसबलणिव्विसेससंझातिमिरो ।
परमत्थओ चिरस्स व णिव्वाओ गलिअरक्खसभओ दिअहो १४

[तावच्च सलोहितारुणराक्षसबलनिर्विशेषसंध्यातिमिरः ।
परमार्थश्चिरस्येव निर्वाणो गलितराक्षसभयो दिवसः ॥]

तावदेव गलितं राक्षसानां भयं यत्र । निशि तेषां बलवत्त्वात् । तथाभूतः सन्

१. 'लगितं' इति पुस्तकान्तरे. 'गलित' इति यथाश्रुतपाठे 'राक्षसानाम्' इति कर्तरि षष्ठी.

दिवसो निर्वाणोऽपगतः। किंभूत इव। चिरस्य चिरकालस्य परमार्थस्तत्त्वस्वरूपमिव। तथा च दिवसो न गतः किंतु चिरकालो गत इत्येक एव दिवसो निकटवर्तिसीतावियोगदुःखातिशयहेतुत्वादलब्धरावणत्वाच(रो)रामस्य चिरकालत्वेनोत्प्रेक्षितः। पुनः कीदृक्। सलोहितं क्षतजन्यशोणितसहितम्। अत एवारुणं यद्राक्षसबलं तन्निर्विशेषं तत्तुल्यं संध्याकालीनं तिमिरं यत्र तदिति लौहित्येन संध्यारागशोणितयोः, श्यामत्वेन तिमिरराक्षसबलयोः साम्यम्॥

अथ पुनर्मेघनादागमनमाह—

अह उग्गाहिअचाओ एक्को वालिसुअमोडिअरहुप्पइओ।
संचरइ मेहणाओ णिअअच्छविमेलिअन्धआरम्मि णहे॥ १५॥

[अथोद्ग्राहितचाप एको वालिसुतमोटितरथोत्पतितः।
संचरति मेघनादो निजकच्छविमेलितान्धकारे नभसि॥]

अथ संध्यागमानन्तरमेको मेघनादो नभसि संचरति। कीदृशे। निजककान्त्या मिलितं श्यामत्वादेकीकृतमन्धकारं मायाकल्पितं यत्र तत्र। स कीदृक्। उद्ग्राहि उत्तोलितश्चापो येन तादृक्। एवम्—वालिसुतेन मोटिताद्भग्नाद्रथादुत्पतितः। कृतोत्फाल इत्यर्थः॥

अथ रामलक्ष्मणयोर्बन्धनोपक्रममाह—

तो णिट्ठविअणिसिअरा इन्दइणा गरुअवेरमूलाहारा।
समअं चिअ सच्चविआ अदिट्ठेण विहिणेव्व दहरहतणआ॥ १६॥

[ततो निष्ठापितनिशिचराविन्द्रजिता गुरुकवैरमूलाधारौ।
सममेव सत्यापितावदृष्टेन विधिनेव दशरथतनयौ॥]

तत आगमनानन्तरमदृष्टेनालक्षितेनेन्द्रजिता दशरथतनयौ सममेकदैव सत्यापितौ नागपाशलक्ष्यत्वेन व्यवस्थापितौ। किंभूतेनेव। विधिनेव। विधिरदृष्टं विधाता वा तेनेव। तदायत्तत्वादित्युत्प्रेक्षा। तावप्यदृष्टावस्मदाद्यप्रत्यक्षौ भवतः। दशरथतनयौ किंभूतौ। निष्ठापिता नाशिता निशिचरा याभ्यां तौ। अत एव खरादिनाशकत्वाद्गुरुकस्य वैरस्य मूलाधारौ॥

अथ नागपाशत्यागमाह—

मुअइ अ सअम्भुदिण्णे ताण भुअङ्गमुहणिग्गआणलजीहे।
णीसेसणिहअरक्खसवीसत्थपलम्बिओहअभुआण सरे॥ १७॥
[मुञ्चति च स्वयंभूदत्तांस्तयोर्भुजङ्गमुखनिर्गतानलजिह्वान्।
निःशेषनिहतराक्षसविश्वस्तप्रलम्बितोभयभुजयोः शरान्॥]

स मेघनादस्तयो रामलक्ष्मणयोः कृते स्वयंभुवा ब्रह्मणा दत्तान् शरान् मुञ्चति च। किंभूतान्। भुजङ्गानां मुखेभ्यो निर्गता विषानलविशिष्टा जिह्वा येषु तान्। वस्तुतस्तु भुजङ्गरूपेभ्यो मुखेभ्यो निर्गता विषानला एव जिह्वा येषां तानित्यर्थः। तयोः किंभूतयोः। निःशेषनिहतराक्षसत्वाद्विश्वस्तं यथा स्यादेवं प्रलम्बितावुभयभुजौ ययोः। मारणीयाभावेन शरादिव्यापारकरणाभावादिति लम्बमानत्वेन नागपाशबन्धनसौकर्यमुक्तम्॥

अथ बन्धनमाह—

तो भिण्णङ्गअदेसा णिदारिअबीअबाहुपाअडिअमुहा।
राहवदेहम्मि ठिआ तिअसंदाणिअभुआ भुअङ्गमबाणा॥ १८॥
[ततो भिन्नाङ्गददेशा निर्दारितद्वितीयबाहुप्रकटितमुखाः।
राघवदेहे स्थितास्त्रिकसंदानितभुजा भुजङ्गमबाणाः॥]

ततस्त्यागानन्तरं भुजङ्गमा एव बाणास्त्रिके। तयोरेवेत्यर्थात्। संदानितौ बद्धौ भुजौ यैस्तथाभूताः सन्तो राघवयोर्देहे स्थिताः। किंभूताः। एकस्य भुजस्य भिन्नो विद्धोऽङ्गददेशः कफोण्युपरि देशो यैस्ते। पुनर्निर्दारितद्वितीयबाहौ प्रकटितमुखा एकबाहुमध्येन प्रविश्यात्यक्ततन्मिश्रितद्वितीयबाहौ बहिर्भूतमुखा इत्यर्थः॥

एतत्पृष्ठलग्नापरशराणां निर्गममाह—

णिद्धोआअसणीला णिन्ति विसाणलफुलिङ्गपज्जलिअमुहा।
धणुसंधाणविमुक्का अउव्वणाराअविब्भमा भुअइन्दा॥ १९॥
[निर्धौतायसनीला निर्यान्ति विषानलस्फुलिङ्गप्रज्वलितमुखाः।
धनुःसंधानविमुक्ता अपूर्वनाराचविभ्रमा भुजगेन्द्राः॥]

इन्द्रजिता धनुःसंधाने सति विमुक्ता भुजगेन्द्रा निर्यान्ति । किंभूताः । निर्धौतं दाहोत्तरं जले क्षिप्तं यदायसं लौहं तद्वन्नीलाः । एवम्—विषानलस्फुलिङ्गैः प्रज्वलितं दीप्तं मुखं येषां ते । अत एवापूर्वनाराचानामाग्नेयादीनामिव विभ्रमो विलासो येषाम् । यद्वा—विशिष्टभ्रमो येभ्यस्ते । सर्पः परमार्थशरो न भवतीति भावः ॥

अथैषां पतनमाह—

**णिवडन्ति विज्जुमुहला तारसमब्भहिअलोहलट्ठिच्छाआ ।**
**कसणजलओअराहि व रक्खसमाअन्धआरिअणहाहि सरा ॥२०॥**

[निपतन्ति विद्युन्मुखरास्तालसमभ्यधिकलौहयष्टिच्छायाः ।
कृष्णजलदोदरादिव राक्षसमायान्धकारितनभसः शराः ॥]

राक्षसमाययान्धकारितान्नभसो विद्युत इव मुखराः शब्दायमानाः शरा भुजङ्गरूपा निपतन्ति । राघवयोर्देह इत्यर्थात् । कृष्णो जलद उदरे येषां तस्मादिवेति नभोविशेषणम्, तमसो जलदेनौपम्यात् । अत एव विषाग्निकपिशत्वेन शराणां विद्युद्भिः साम्यम् । विद्युन्मेघान्निपततीति प्रकृतोऽर्थः । नीलमेघानामुदरादिवेति संमुख एवोपमा, तमोविशिष्टनभसो मेघेन तुल्यत्वादिति वा । शराः किंभूताः । तालवृक्षात्समभ्यधिका महत्यो या लौहयष्ट्यस्तच्छाया कान्तिर्येषां ते । अग्निमुखत्वेऽपि श्यामत्वाद्दीर्घत्वाच्चेति भावः ॥

अथैषां नानारूपतामाह—

**पढमं रविबिम्बणिहा पलउक्कासंणिहा णहद्धपडन्ता ।**
**भिन्दन्ता होन्ति सरा दरणिब्भिण्णभमिआ भुआसु भुअङ्गा॥२१॥**

[प्रथमं रविबिम्बनिभाः प्रलयोल्कासंनिभा नभोर्धपतन्तः ।
भिन्दन्तो भवन्ति शरा दरनिर्भिन्नभ्रमणशीला भुजासु भुजङ्गाः ॥]

ते शराः प्रथमं नभःशिखरे दृश्यमानाः सन्तो रविबिम्बतुल्या भवन्ति । विषाग्निमयत्वे सति गगनमूलवर्तित्वात् । अथ नभसोऽर्धात्पतन्तः सन्तः प्रलयोल्काभिः संनिभा मुखेनाग्निमयत्वे सति भोगेन दण्डायमानत्वात् । अथ । भुजाविल्यर्थात् । भिन्दन्तो दशन्तः सन्तः शरा मुखस्य भुजनिविष्टत्वेनाग्नेरप्रकाशे सति ऋजुकृतदेहत्वात् । अथ तयोर्भुजासु दर ईषन्निर्भिन्नं दष्टं यैस्तथाभूताः कृतकिंचिद्दंशाः । अथ च भ्रमणशीला भोगेन वलयाकाराः सन्तो भुजङ्गा भवन्तीति

सर्वत्र संबध्यते । तथा च वस्तुतस्ते(न) भुजङ्गा एव, किं तु सांनिध्यक्रमेणावयवप्रकाशक्रमेण मायया वा तथा तथा प्रतिभासन्त इत्यर्थः ॥

अथ वानरादिचेष्टामाह—

बज्झन्ति दहरहसुआ दरभग्गमणोरहा किलिम्मन्ति सुरा ।
अदिट्ठमेहणाआ उण्णामिअपव्वआ भमन्ति पवङ्गा ॥ २२ ॥

[बध्येते दशरथसुतौ दरभग्नमनोरथाः क्लाम्यन्ति सुराः ।
अदृष्टमेघनादा उन्नामितपर्वता भ्रमन्ति प्लवङ्गाः ॥]

दशरथसुतौ बध्येते । नागपाशैरित्यर्थात् । तयोर्नारायणरूपत्वेन अल्पभग्नो रावणवधरूपो मनोरथो येषां तथाभूताः सन्तः सुराः क्लाम्यन्ति । किमकस्माज्जातमिति सचिन्तत्वात् । एवम्—न दृष्टो मेघनादो यैस्तादृशाः प्लवङ्गा उत्थापितपर्वताः सन्तो भ्रमन्ति दिशि दिशि गच्छन्ति । केनेदं कृतमिति जिज्ञासयेत्यर्थः ॥

अथैषामवस्थामाह—

रसइ णहम्मि णिसिअरो भिण्णमभिण्णहिअअं दिसासु कइबलम् ।
भिज्जन्तो वि ण भिज्जइ रिउदंसणदिण्णलोअणो दासरही ॥२३॥

[रसति नभसि निशिचरो भिन्नमभिन्नहृदयं दिक्षु कपिबलम् ।
भिद्यमानोऽपि न भिद्यते रिपुदर्शनदत्तलोचनो दाशरथिः ॥]

नभसि निशिचरो मेघनादो रसति शब्दायते । तयोर्बन्धनादास्फोटनमाचरतीत्यर्थः । अभिन्नहृदयमपराङ्मुखचित्तं कपिबलं दिक्षु भिन्नं तदनुसंधानाय घूर्णितम् । दाशरथी रामो भिद्यमानोऽपि नागपाशैः खण्ड्यमानोऽपि न भिद्यते न पराङ्मुखचित्तो भवति । शौर्यसत्त्वात् । कीदृक् । रिपोरिन्द्रजितो दर्शने दत्ते लोचने येन स तथा । दाशरथिरिति लक्ष्मणसाधारण्याय जातिपरमिति केचित् ॥

अथ सर्पाणामङ्गेषु [1]प्रसरणमाह—

रोसाणलपज्जलिअं जलन्तवडवामुहाणलपडिच्छन्दम् ।
अङ्गेसु लद्धपसरा हिअअं से णवर परिहरन्ति भुअङ्गा ॥ २४ ॥

[रोषानलप्रज्वलितं ज्वलद्वडवामुखानलप्रतिच्छन्दम् ।
अङ्गेषु लब्धप्रसरा हृदयमस्य केवलं परिहरन्ति भुजङ्गाः ॥]

---

१. 'प्रतरण' इति पाठः.

अस्य रामस्याङ्गेषु लब्धप्रसरा व्याप्ता भुजङ्गा रोषानलेन प्रज्वलितं यतस्तत एव केवलं हृदयं परिहरन्ति । तापभीत्या तत्र परं न गच्छन्तीत्यर्थः । किंभूतम् । ज्वलतो वडवामुखानलस्य प्रतिच्छन्दं समम् ॥

अथ तद्भुजानामवस्थामाह—

ताण भुअङ्गपरिगआ दुक्खपहुव्वन्तविअडभोगावेढा ।
जाआ थिरणिक्कम्पा मलअअडुप्पण्णचन्दणदुम व्व भुआ ॥२५॥

[तयोर्भुजङ्गपरिगता दुःखप्रभवद्विकटभोगावेष्टाः ।
जाताः स्थिरनिष्कम्पा मलयतटोत्पन्नचन्दनद्रुमा इव भुजाः ॥]

तयोर्भुजा भुजङ्गैः परिगताः सन्तः स्थिरनिष्कम्पा जाताः । के इव । मलयतटोत्पन्नचन्दनवृक्षा इव । ते सर्पवेष्टिताः स्थिरनिष्कम्पा एवेत्याशयः । किंभूताः । दुःखेन प्रभवद्विकटभोगैरावेष्टनं येषां ते । महत्त्वाज्झटिति वेष्टयितुं न पारयन्तीत्यर्थः । चन्दनमप्येवमेवेति भावः ॥

अथ तयोरवस्थामाह—

तह पडिवण्णधणुसरा सरणिब्भिज्जन्तणिच्चलभुअप्फलिहा ।
दट्ठोट्ठमेत्तलक्खिअणिप्फलरोसलहुआ कआ रहुतणआ ॥ २६ ॥

[तथा प्रतिपन्नधनुःशरैः शरनिर्भिद्यमाननिश्चलभुजपरिघौ ।
दष्टौष्ठमात्रलक्षितनिष्फलरोषलघुकौ कृतौ रघुतनयौ ॥]

रघुतनयौ शरैर्निर्भिद्यमानत्वान्निश्चलौ भुजपरिघौ ययोस्तथाभूतौ कृतौ । इन्द्रजितेत्यर्थात् । किंभूतौ । तथा पूर्ववदेव प्रतिपन्नं धृतं धनुःशरं याभ्यां तौ । करस्थितधनुःशरावित्यर्थः । एवमुत्तरौष्ठेन दष्टो योधरौष्ठस्तन्मात्रेण न तु व्यवसायेन लक्षितो ज्ञातोऽथ च निष्फलः प्रतिक्रिया विरहाद्यो रोषस्तेन हेतुना लघू अक्षमत्वेन ज्ञायमानावित्यर्थः ॥

अथ शोणितनिर्गमनमाह—

सरणिब्भिण्णसरीरा जाआ आलोअमग्गिअव्वावअवा ।
दरदिट्ठपत्तणन्तरणिहित्तसंखाअलोहिआ रहुतणआ ॥ २७ ॥

[शरनिर्भिन्नशरीरौ जातावालोकमार्गितव्यावयवौ ।
दरदृष्टपत्रणान्तरनिहितसंस्त्यानलौहितौ रघुतनयौ ॥]

शरैर्निर्भिन्नशरीरौ रघुतनयौ आलोकाय दर्शनाय मार्गितव्या अन्वेषणीया अवयवा ययोस्तौ जातौ । सर्पावृतत्वात् । आलोकेन दीपादिना तमःप्रागल्भ्यादिति केचित् । एवम्—किंचिद्दृष्टं पत्रणा पुङ्खस्तदन्तरे तन्मध्ये निहितं स्थितं संस्त्यानं घनीभूतं लोहितं ययोस्तौ । क्षतादीषदवकाशे शरेणागत्य पुङ्खे स्वल्पतया पतनाभावेन रुधिरं घनीभूतमित्यर्थः ॥

अथ तयोर्जडीभावमाह—

सरसीविओरुजुअलं संकीलिअविहलणिच्चलट्ठिअचलणम् ।
णिअलिअदेहावअवं संचरिअव्वं पि रहुसुआण अवहअम् ॥२८॥

[शरस्यूतोरुयुगलं संकीलितविह्वलनिश्चलस्थितचरणम् ।
निगलितदेहावयवं संचरितव्यमपि रघुसुतयोरपहृतम् ॥]

रघुसुतयोः संचरितव्यं संचरणमप्यपहृतम् । सर्पाक्रान्तत्वात्स्पन्दोऽपि नाभूदित्यर्थः । शरैः स्यूतमूरुयुगलं यत्र संकीलितत्वेन विह्वलौ, अथ च निश्चलस्थितौ चरणौ यत्र । एवम्—निगलिता देहावयवा यत्र । तद्यथा स्यादिति सर्वं क्रियाविशेषणम् ॥

अथ धनुःपतनमाह—

तो सुरहिअएहि समं पडिअं विहलन्तपढमसंठिअबाणम् ।
अदिट्ठरिउविसज्जिअसरपहरङ्कुसिअवामहत्थाहि धणुम् ॥ २९ ॥

[ततः सुरहृदयैः समं पतितं विघटमानप्रथमसंस्थितबाणम् ।
अदृष्टरिपुविसृष्टशरप्रहाराङ्कुशितवामहस्ताद्धनुः ॥]

ततो जडीभावानन्तरमदृष्टेन रिपुणा विसृष्टो यः शरस्तत्प्रहारेणाङ्कुशितादङ्कुशाकारेण वक्रीकृताद्वामहस्ताद्धनुः पतितम् । रामलक्ष्मणयोरित्यर्थात् । सुराणां हृदयैः समम् । सुराणामपि हृदयं पतितं तेऽप्यचेतना जाता इत्यर्थः । सहोक्तिरलंकारः । धनुः कीदृशम् । विघटमानः प्रथमसंस्थितो बाणो यत्र तत् । शरोऽपि पतित इत्यर्थः ॥

अथ दिवि देवस्त्रीणामाक्रन्दमाह—

उद्धाइओ अ सहसा विवलाअविमाणतडिमपच्छिमदेसे ।
सुरवहुविसमक्कन्दो एक्कमुहाहअरसन्ततन्तिच्छाओ ॥ ३० ॥

[उद्धावितश्च सहसा विपलायितविमानतडिमपश्चिमदेशे ।
सुरवधूविषमाक्रन्द एकमुखाहतरसत्तन्त्रीच्छायः ॥]

सुरवधूनां विषम आक्रन्द उद्धावित उत्थितश्च । कुत्र । विपलायितानां विमानानां तडिमस्य पश्चिमदेशे पश्चाद्भागे । रामावस्थादर्शनार्थं विमानप्रवेशद्वारदेशादधःपश्यन्तीनां युद्धदिदृक्षया दिवि स्थितानां देवस्त्रीणां रामधनुःपाते सत्याक्रन्दोऽभवदित्यर्थः । आक्रन्दः कीदृक् । एकमुखमेकदैवाहतानामत एव रसन्तीनां तन्त्रीणामिव छाया यस्येति तन्त्रीध्वनितुल्यमाधुर्यमित्यर्थः ॥

अथ रामपतनमाह—

तो पडिओ रहुणाहो भञ्जन्तो तिहुवणस्स आसाबन्धम् ।
सीहणहङ्कुसपहओ तुङ्गं आसण्णपाअवं व वणगओ ॥ ३१ ॥

[ततः पतितो रघुनाथो भञ्जंस्त्रिभुवनस्याशाबन्धम् ।
सिंहनखाङ्कुशप्रहतस्तुङ्गमासन्नपादपमिव वनगजः ॥]

ततस्तदाक्रन्दानन्तरं रघुनाथः पतितः । भूमावित्यर्थात् । त्रिभुवनस्याशाबन्धं रामेण रावणो हन्तव्य एवंभूतं भञ्जन्खण्डयन् । रामे पतिते आशाबन्धोऽपि गत इत्यर्थः । वनगज इव । यथा सिंहनखाङ्कुशेन प्रहतो विद्धो वनगजस्तुङ्गमासन्नं पार्श्वस्थं पादपं भञ्जयन् पततीत्यर्थः । अत्र वनगजेन रामस्य, पादपेनाशाबन्धस्य, नखाङ्कुशेन शरस्य च तुल्यत्वादुपमा ॥

अथ लक्ष्मणपतनमाह—

पडिअस्स अ रहुवइणो पडिओ अणुमग्गअं सुमित्तातणओ ।
उद्धट्ठिअस्स पणओ पल्हत्थस्स व दुमस्स छाआणिवहो ॥ ३२ ॥

[पतितस्य च रघुपतेः पतितोऽनुमार्गं सुमित्रातनयः ।
ऊर्ध्वस्थितस्य प्रणतः पर्यस्तस्येव द्रुमस्य छायानिवहः ॥]

पतितस्य रघुपतेरनुमार्गं पश्चात्सुमित्रातनयो लक्ष्मणः प्रणतो नम्रः सन् व्याप्यो वा पतितः । छायानिवह इव । यथा—ऊर्ध्वस्थितस्य तुङ्गस्य द्रुमस्य पर्यस्तस्य पतितस्य सतोऽनुमार्गं पश्चात्प्रणतो नम्रश्छायानिवहः पतति, तस्यैवेत्यर्थात् । यथा वृक्षात् पतति तच्छाया पततीत्यर्थेन रामस्य वृक्षेण, लक्ष्मणस्य तच्छायया तौल्येन लक्ष्मणजीवनस्य रामजीवनाधीनत्वमुक्तम् ॥

सुराणां तयोर्दर्शनमाह—

**धरणिपडिएसु तेसु अ णिवण्णन्तसमुहोणअभरुब्वत्ता ।**
**उत्ताणिएक्कचक्का सुराण तंसतडिमा चिरं आसि रहा ॥ ३३ ॥**

[धरणिपतितयोस्तयोश्च निर्वर्ण्यमानसंमुखावनतभरोद्वृत्ताः ।
उत्तानितैकचक्राः सुराणां तिर्यक्तडिमाश्चिरमासन्रथाः ॥]

तयो रामलक्ष्मणयोर्धरणिपतितयोश्च सतोः सुराणां रथा निर्वर्ण्यमाने रामलक्ष्मणौ जीवतो न वेति निरूप्यमाणे सति संमुखीभूयावनतानामधोमुखानाम् । अर्थात्सुराणाम् । भरेण उद्वृत्ता नतोन्नताश्चिरमासन् । यद्दिशमाश्रित्य रामलक्ष्मणदर्शनं चक्रुस्तद्दिशि गौरवेण नता अत एवापरदिशि समुन्नता बभूवुरित्यर्थः । अतस्तत्रैवोत्तानित मूर्ध्वगतमेकं चक्रं येषां ते । अत एव तिर्यक्तडिमास्तिर्यग्गतपार्श्वभित्तय इत्यर्थः ॥

अथ त्रैलोक्यशोकमाह—

**हिअअपडणे व मूढं रइपडणे व सहसा तमम्मि णिवडिअम् ।**
**रामपडणम्मि जाअं सिरपडणे व गअजीविअं तेल्लोक्कम् ॥ ३४ ॥**

[हृदयपतन इव मूढं रविपतन इव सहसा तमसि निपतितम् ।
रामपतने जातं शिरःपतन इव गतजीवितं त्रैलोक्यम् ॥]

रामपतने सति त्रैलोक्यं जातम् । कीदृशम् । यथा हृदयं मनस्तत्पतने तदपगमे सति मूढं भवति तथैव मूढमज्ञम् । किं कर्तव्यमिति ज्ञानविरहात् । एवम्—रविपतने रवेरस्तमने यथा सहसा तमसि निपतति तथैव तमसि मूर्च्छायां निपतितं गुरुतरशोकात् । एवम् । यथा शिरःपतने सति गतजीवितं प्राणशून्यं भवति तथैव गतजीवितं मृतमिवेत्यर्थः । रामरूपरक्षकाभावादिति भावः ॥

अथ कपीनां राघवपरतामाह—

**अह रामपरित्ताणं सुण्णदिसामुहपलोअणणिरुच्छाहम् ।**
**भअणिच्चलपुञ्जइअं ण मुअइ पडिअं पि राहवं कइसेण्णम् ॥३५॥**

[अथ रामपरित्राणं शून्यदिङ्मुखप्रलोकननिरुत्साहम् ।
भयनिश्चलपुञ्जितं न मुञ्चति पतितमपि राघवं कपिसैन्यम् ॥]

कपिसैन्यं कर्तृ पतितमपि राघवं न मुञ्चति । शूरत्वात्स्वामिभक्तित्वाच्च । किंभूतं

सैन्यम् । रामात् परित्राणं यस्य तत् । एवम्—रामेण विना शून्यानां दिङ्मुखानां प्रलोकनेन निरुत्साहम् । एवम्—भयेन रामविपत्तिजनुषा शत्रुतो वा निश्चलं सत्पुञ्जितं वर्तुलीभूतम् । अन्यत्रापि प्रतिकर्तव्योपस्थितौ सर्वे संभूय विचारयन्तीति ध्वनिः ॥

अथ कपीनां निश्चेष्टतामाह—

**दीणं भग्गुच्छाहं उव्विग्गमणं विसाअपेल्लिअहिअअम् ।**
**राहवविइण्णणअणं आलेक्खगअं व संठिअं कइसेण्णम् ॥ ३६ ॥**

[दीनं भग्नोत्साहमुद्विग्नमनो विषादप्रेरितहृदयम् ।
राघववितीर्णनयनमालेख्यगतमिव संस्थितं कपिसैन्यम् ॥]

कपिसैन्यमालेख्यं चित्रं तद्गतमिव संस्थितम् । यथा चित्रलिखितं निश्चलमचेतनं च भवति तथेत्यर्थः । तदेवाह—कीदृशम् । विषादेन प्रेरितं नानाशङ्कायामारोपितं हृदयं यस्य । एवम्—राघवयोर्वितीर्णे अर्पिते नयने तदित्यपरं निगदव्याख्यातम् ॥

अथ रामस्य मुखप्रसादमाह—

**पडिअस्स वि रहुवइणो दीसन्तो देइ पवअवइसंलावम् ।**
**अविसाअमहग्घविओ सासअधीरधरिओ मुहस्स पसाओ ॥ ३७ ॥**

[पतितस्यापि रघुपतेर्दृश्यमानो ददाति प्लवगपतिसंलापम् ।
अविषादमहार्घितः शाश्वतधैर्यधृतो मुखस्य प्रसादः ॥]

पतितस्यापि रघुपतेर्मुखस्य प्रसादो दृश्यमानः सन् । अर्थात्सुग्रीवेण । प्लवगपतये सुग्रीवायैव संलापमाश्वासवाक्यं ददाति । कीदृक् । अविषादेनानुद्वेगेन महार्घितो दुर्लभः । एवम्—शाश्वतेन सार्वदिकेन धैर्येण धृतः । तथा च—तस्यानुद्वेगधैर्यमुखप्रसादैर्जीवच्छूरचिह्नैः सर्वे एवाश्वस्तचित्ता बभूवुरित्यर्थः ॥

अथ पुनः सुग्रीवस्येन्द्रजिद्दर्शनमाह—

**णवरि अ विहीसणजलाहअच्छिणा वाणराहिवेण णहअरो ।**
**पासम्मि धणुसहाओ दिट्ठो कअपेसणो दसाणणतणओ ॥ ३८ ॥**

[अनन्तरं च विभीषणजलाहताक्षेण वानराधिपेन नभश्चरः ।
पार्श्वे धनुःसहायो दृष्टः कृतप्रेषणो दशाननतनयः ॥]

अथ समाश्वासानन्तरं वानराधिपेन दशाननस्य तनयः पार्श्वे निकटे नभश्चरो गगनचारी दृष्टः । कीदृक् । धनुःसहायो धनुर्धरः । एवम्—कृता प्रेषणा रावणाज्ञा

येन तादृक् । सुग्रीवेण कीदृशेन । विभीषणस्य राक्षसमायाहरमन्त्रेणाभिमन्त्रितं यज्जलं तेनाहते स्पृष्टे क्षालिते अक्षिणी यस्य तेन । तथा च—तत एव माया-हरणाद्दिव्यदृष्टिना दृष्ट इति भावः ॥

अथ सुग्रीवपौरुषमाह—

तो रोसतुलिअपव्वअसहसुद्धाइअपहाविओ सुग्गीओ ।
लङ्कं भअविवलाअं अहिलेऊण णवरं ठिओ रअणिअरम् ॥ ३९ ॥

[ततो रोषतुलितपर्वतसहसोद्धावितप्रधावितः सुग्रीवः ।
लङ्कां भयविपलायितमभिलीय केवलं स्थितो रजनीचरम् ॥]

ततस्तद्दर्शनानन्तरं सुग्रीवो रजनीचरमिन्द्रजितं लङ्कामभिलीय प्रापय्य केवलं स्थितः । किंभूतः । रोषेण तुलितपर्वत उत्तोलितगिरिः सन् सहसा उद्धावितः कृतो-त्फालः, तदनु प्रधावितः कृतवेगः । तं किंभूतम् । भयेन विपलायितम् । तथा च—तं दृष्ट्वा उत्प्लुत्य तथा विद्रावयामास यथेन्द्रजित्प्रमुखाः सर्वेऽपि लङ्कां प्रविष्टा इत्यर्थः ॥

अथ रावणोत्साहमाह—

इन्दइणा विणिवेइअराहवणिहणसुहिओ णिसाअरणाहो ।
आसाइअजणअसुआसमागमोवाअणिव्वुओ ऊससिओ ॥ ४० ॥

[इन्द्रजिता विनिवेदितराघवनिधनसुखितो निशाचरनाथः ।
आसादितजनकसुतासमागमोपायनिर्वृत उच्छ्वसितः ॥]

इन्द्रजिता विनिवेदितेन रामलक्ष्मणौ हत्वागतोऽस्मीत्येवं कथितेन राघवयो-र्निधनेन सुखितो निशाचरनाथो रावण आसादितेन लब्धेन जनकसुतासमागमो-पायेन निर्वृतः सुखितः समुच्छ्वसितो दीर्घश्वासं कृतवान् । रामनिधनमेव तदुपाय इति भावः ॥

अथ सीताया मूर्च्छितरामदर्शनमाह—

अह णिसिअरीहि दहमुहवअणाणिअदिट्ठसरसखणवेहव्वा ।
मुक्कक्कन्दविसंठुलदरविलविअमुच्छिआ कआ जणअसुआ ॥ ४१ ॥

[अथ निशिचरीभिर्दशमुखवचनानीतदृष्टसरसक्षणवैधव्या ।
मुक्ताक्रन्दविसंष्ठुलदरविलपितमूर्च्छिता कृता जनकसुता ॥]

अथ रावणोत्साहानन्तरं निशिचरीभिर्जनकसुता मुक्त आक्रन्दो यया सा मुक्ताक्रन्दा, अत एव विसंष्ठुला विह्वला, अत एव दरविलपिता किंचिद्विलापवती सती मूर्च्छिता कृता। अत्र हेतुमाह—कीदृशी। दशमुखवचनेन आनीतया सत्या दृष्टं ज्ञातं सरसं तात्कालिकं क्षणं व्याप्य वैधव्यं यया सा। सर्वत्र कर्मधारयः। तथा च—रावणवाचा ताभिरानीय रामपतनं दर्शिता सती तां तामवस्थां प्रापदित्यर्थः। मुक्ताक्रन्दं विसंष्ठुलेन दरविलपितेन मूर्च्छितेति केचित्। तात्त्विकमपि रामपतनं मायामस्तकवच्छद्ममात्रेण न प्रत्येष्यतीति रणशिरसि तद्दर्शयितुं सीतासमानायिता रावणेनेति रामायणवार्ता। गरुडागमनेन तदैव प्रतीकारो वृत्त इति क्षणं वैधव्यमुक्तम्॥

अथ रामस्य प्रलपमाह—

**तो गअमोहुम्मिल्लो पेच्छन्तो राहवो सुमित्तातणअम्।**
**परिदेविउं पउत्तो तक्खणपब्भट्ठसअलसीआदुक्खो॥ ४२॥**

[ततो गतमोहोन्मीलः प्रेक्ष्यमाणो राघवः सुमित्रातनयम्।
परिदेवितुं प्रवृत्तस्तत्क्षणप्रभ्रष्टसकलसीतादुःखः॥]

ततः सीतादर्शनानन्तरं राघवः परिदेवनं प्रलापं कर्तुं प्रवृत्तः। किंभूतः। गतेन मोहेन मूर्च्छया उन्मीला नयनोन्मीलनं यस्य तथाभूतः सन् सुमित्रातनयं प्रेक्ष्यमाणः। ज्ञानानन्तरं तस्मिन्नेव दृष्टिः पतितेति स्नेहातिशय उक्तः। अत एव तत्क्षणे प्रभ्रष्टं विस्मृतं सकलं सीतादुःखं येनेति ततोऽप्यधिकः पक्षपात उक्तः॥

अथ लक्ष्मणोत्कर्षपरं प्रलापवाक्यमाह—

**जस्स सअलं तिहुअणं आरुहइ धणुम्मि संसअं आरूढे।**
**सो वि हओ सोमित्ती णत्थि जए जं ण एइ विहिपरिणामो ४३**

[यस्य सकलं त्रिभुवनमारोहति धनुषि संशयमारूढे।
सोऽपि हतः सौमित्रिर्नास्ति जगति यं नैति विधिपरिणामः॥]

सोऽपि सौमित्रिर्लक्ष्मणो हतः। यस्य धनुषि आरूढे सज्जे सति सकलं त्रिभुवनं संशयमारोहति। स्थास्यति न वेति संदेहविषयीभवतीत्यर्थः। अर्थान्तरं न्यस्यति—जगति स नास्ति यं विधेरदृष्टस्य परिणामो नैति नागच्छति। तथा च—सर्वमप्यदृष्टवश्यम्, अत एव परैरपरिभाव्योऽप्ययं हत इति भावः॥

अथात्मगर्हणापरं तद्वाक्यमाह—

अहवा अं कअकज्जो मज्झ कए मुक्कजीविओ सोमित्ती ।
णिप्फलवूढभुअभरो णवर मए च्चेअ लहुइओ अप्पाणो ॥ ४४ ॥

[अथवायं कृतकार्यो मम कृते मुक्तजीवितः सौमित्रिः ।
निष्फलव्यूढभुजभरः केवलं मयैव लघूकृत आत्मा ॥]

अथवायं सौमित्रिर्मम कृते मन्निमित्तं मुक्तजीवितो यतस्तत एव कृतकार्यः, एवंविधकीर्तिरेव महत्कार्यम् । तथा सति मरणेऽपि न क्षतिरिति भावः । केवलं मयैवात्मा लघूकृतः । कुत इत्यत आह—आत्मा कीदृक् । निष्फलं यथा भवति तथा व्यूढौ धृतौ भुजावेव भरौ भारौ येन स तथा । तथा च—लक्ष्मणरक्षाबन्ध्यत्वाद्भारत्वमेव भुजयोर्न तु सफलत्वमिति भावः ॥

अथ सुग्रीवं प्रति रामस्य वचनमाह—

अह जम्पइ सुग्गीवं महुरं उच्छाहदाविअपरिच्छेअम् ।
वअणं सहसोवत्थिअमरणावत्थाववट्ठविअगम्भीरम् ॥ ४५ ॥

[अथ जल्पति सुग्रीवं मधुरमुत्साहदर्शितपरिच्छेदम् ।
वचनं सहसोपस्थितमरणावस्थाव्यवस्थापितगाम्भीर्यम् ॥]

अथ परिदेवनोत्तरं स रामः सुग्रीवं प्रति वचनं जल्पति । कीदृक् । मधुरमिष्टम् । उत्साहेन दर्शितः परिच्छेदो लक्ष्मणेन सहानुमरणे निश्चयो यत्र । वक्तव्यभागपरिच्छेद इति वा । एवम्—सहसोपस्थितायां मरणावस्थायां व्यवस्थापितं स्थिरीकृतं गाम्भीर्यमकातरत्वं यत्र तत् । मधुरत्वादि क्रियाविशेषणं वा ॥

सुग्रीवादिप्रशंसापरं तद्वाक्यस्वरूपमाह—

णिव्वूढं धीर तुमे इमो वि उअहुत्तभुअबलो कइलोओ ।
कम्मं इमेण वि कअं जअणिव्वडिअजसदुक्करं मारुइणा ॥ ४६ ॥

[निर्व्यूढं धीर त्वयायमप्युपभुक्तभुजबलः कपिलोकः ।
कर्मानेनापि कृतं जगन्निर्वलितयशो दुष्करं मारुतिना ॥]

हे धीर, त्वया निर्व्यूढं प्रत्युपकारः कृतः । अयमपि कपिलोक उपभुक्तभुजबलः । सेतुबन्धादिना व्यापारितभुजबलः । अनेनापि मारुतिना कर्म कृतम् ।

कीदृक् । जगतो निर्वलितं पृथग्भूतं यशो यत्र तत् । दूरतरविलक्षणयशोनिधानम् । अथ च दुष्करं समुद्रलङ्घनादिरूपत्वाद् । अथवा जगद्विलक्षणयशोभिर्महत्तरैरपि दुष्करमित्यर्थः । तथा च भवतां श्रमो मया ज्ञात इति भावः ॥

विभीषणं प्रत्यनुशयपरं तदाह—

आबद्धबन्धुवेरं जं मे ण णिआ विभीसणं राअसिरी ।
दुक्खेण एण अ महं अविहाविअबाणवेअणरसं हिअअम् ॥४७॥

[आबद्धबन्धुवैरं यन्मया न नीता विभीषणं राजश्रीः ।
दुःखेनैतेन च ममाविभावितबाणवेदनारसं हृदयम् ॥]

आबद्धं बन्धुना रावणेन समं वैरं येन । मदर्थमित्यर्थात् । एतादृशं विभीषणं प्रति मया राज्ञो रावणस्य श्रीर्लङ्का प्रभुता यन्नानीता न प्रापिता । अयं राजा न कृत इत्यर्थः । एतेन दुःखेन मम हृदयमविभावितोऽपरिज्ञातो बाणवेदनारसो येन तथाभूतम् । अस्तीत्यध्याहारः । तथा च रावणभयादनेन लङ्कां( ङ्कायां ) न गन्तव्यमन्यत्र स्थानमस्य नास्त्येवेति मरणदुःखादपि महद्दुःखमिति भावः ॥

अथ सुग्रीवविसर्जनपरं तदाह—

ता वच्चसु मा मुज्झसु तुरिअं तेणेअ सेउबन्धेण तुमम् ।
पेच्छसु बन्धववग्गं दुक्खं कालस्स जाणिउं परिणामम् ॥ ४८ ॥

[तावद्व्रज मा मुह्य त्वरितं तेनैव सेतुबन्धेन त्वम् ।
प्रेक्षस्व बान्धववर्गं दुःखं कालस्य ज्ञात्वा परिणामम् ॥]

तावदिति वाक्योपसंहारे । हे सुग्रीव, यावद्भवन्तोऽपि नाभिभूतास्तावत्त्वं तेनैव सेतुबन्धेन त्वरितं व्रज गृहाय गच्छ मा मुह्य । मोहं मा कुरुष्वेत्यर्थः । अथ बान्धववर्गं प्रेक्षस्व । कुत इत्यत आह—किं कृत्वा । कालस्य परिणामं दुःखं दुःखहेतुं ज्ञात्वा । तथा च यत्र ममैवेयमवस्था, तत्र भवतां का गतिरिति भावः ॥

अथ सप्तभिः सुग्रीवोक्तिमाह—

तो तिव्वरोसलङ्घिअविहुआणणदुक्खधरिअबाहुप्पीडो ।
रहुवइणो पडिवअणं भणइ अदाऊण वाणरे पवअवई ॥ ४९ ॥

[ततस्तीव्ररोषलङ्घितविधुताननदुःखधृतबाष्पोत्पीडः ।
रघुपतेः प्रतिवचनं भणत्यदत्त्वा वानरान्प्लवगपतिः ॥]

ततो रामवचनादुत्तरं प्लवगपतिर्वानरान्भणति । किं कृत्वा । रघुपतेः कृते प्रतिवचनं प्रत्युत्तरमदत्त्वा । अयुक्तत्वादत एवातिरोषत्वाद्वा । किंभूतः । तीव्ररोषेण लङ्घितमतिक्रान्तमत एव विधूतं कम्पितं यदाननं तेन दुःखेन धृतो बाष्पोत्पीडो येन स तथा । रामदुःखादुदश्रुरित्यर्थः ॥

वच्चह लक्खणसहिअं णवपल्लवरइअवीरसअणत्थरणम् ।
पावेह वाणरउरिं अविहाविअबाणवेअणं रहुणाहम् ॥ ५० ॥

[व्रजत लक्ष्मणसहितं नवपल्लवरचितवीरशयनास्तरणम् ।
प्रापयत वानरपुरीमविभावितबाणवेदनं रघुनाथम् ॥]

हे वानराः, यूयं व्रजत । लक्ष्मणसहितं रघुनाथं वानरपुरीं किष्किन्धां प्रापयत । किंभूतम् । नवपल्लवै रचितं वीरशयने आस्तरणं यस्य तम् । अत एवाविभावितापरिज्ञाता बाणवेदना यत्र तद्यथा स्यादिति क्रियाविशेषणम् । नवपल्लवादिकोमलोपचारेण बाणवेदना परिहर्तव्येति भावः ॥

अहअं पि विज्जुपडणाइरित्तसंपाअगहिअपविद्धधणुम् ।
अद्धोहरिआसाइअवलिअभुअक्खित्तमोडिअगआविहलम् ॥ ५१ ॥

[अहमपि विद्युत्पतनातिरिक्तसंपातगृहीतप्रवृद्धधनुषम् ।
अर्धापहृतासादितवलितभुजाक्षिप्तमोटितगदाविह्वलम् ॥]

अहमपि दशमुखमीदृशं करोमीति चतुर्थस्कन्धकेनान्वयादन्त्यकुलकम् । कीदृशम् । विद्युत्पतनादप्यतिरिक्तेनालक्ष्यत्वादिनोत्कटेन संपातेनोत्फालेन गृहीतमाच्छिन्नं प्रवृद्धं महद्धनुर्यस्य तम् । प्रथममुत्लुत्य तद्धनुर्ग्रहीष्यामीत्यर्थः । अथ रावणेनेत्यर्थात् । अर्धेनार्धभागेनापहृतया मदुपर्यवपातितयाथ तदैव मयासादितया करेण धृतया तदनु वलितादामोट्य वक्रीकृताद्रावणस्य भुजादाक्षिप्तयातिक्रम्य गृहीतया पश्चान्मोटितया भग्नया गदया विह्वलम् । धनुर्ग्रहणानन्तरं तेन मदुपरि गदा क्षेप्तव्या, सापि मयान्तरिक्ष एवातिक्रम्य ग्रहीतव्या, ततोऽस्त्राभावाद्याकुल एव स्यादित्यर्थः ॥

खन्धद्धन्तोवाहिअकरजुअलोलुग्गचन्दहासक्खग्गम् ।
अक्कन्तचलणताडिअदलिअरहाहोमुहोसरन्तपहरणम् ॥ ५२ ॥

[स्कन्धार्धान्तापवाहितकरयुगलावरुग्णचन्द्रहासखड्गम् ।
आक्रान्तचरणताडितदलितरथाधोमुखापसरत्प्रहरणम् ॥]

पुनः किंभूतम् । अर्थान्ममैव । स्कन्धस्यार्धान्तेऽपवाहितः पातितः सन् मयैव करयुगलेनावरुग्णे गृहीत्वा भग्नश्चन्द्रहासनामा खड्गो यस्य तम् । गदाभङ्गानन्तरं तेन मयि खड्गः पातनीयः, सोऽपि मया भञ्जनीय इत्यर्थः । एवम्—अर्थान्ममैव । आक्रान्तादधिष्ठितादथ चरणैस्ताडितादत एव दलितात्स्फुटितात्तस्यैव रथादधोमुखं सदपसरद्भूमौ पतत् प्रहरणमस्त्रसमुदायो यस्य तम् । तस्य खड्गादिशून्यतायां सत्या-मुत्लुत्य मया यदाहत्या तद्रथो भञ्जनीयः, तदनु ततोऽप्यस्त्राणि पतिष्यन्तीत्यर्थः ॥

**भग्गपुरिल्लविसंठुलभुअजुअलुक्खुडिअसेसणिप्फलबाहुम् ।**
**वज्जणिहहत्थणिवडन्तदिण्णदढमुट्ठिभिण्णवच्छद्धन्तम् ॥ ५३ ॥**

[भग्नपुरोगविसंष्ठुलभुजयुगलोत्खण्डितशेषनिष्फलबाहुम् ।
वज्रनिभहस्तनिपतद्दत्तदृढमुष्टिभिन्नवक्षोर्धान्तम् ॥]

एवम्—मयैव । तस्येत्यर्थात् । भग्नाः पुरोगामिनः पुरोवर्तिनः । अर्थाद्दश । ये बाहवस्तैर्विसंष्ठुलो विकलः सन्ममैव भुजयुगलेनोत्खण्डिताः शेषाः पश्चाद्वर्तिनो निष्फलाः कार्याजनकत्वाद्दश बाहवो यस्य तम् । अथ विरथस्य तस्य पुरः पुरो-वर्तिनो दश, पश्चात्पश्चाद्वर्तिनोऽपि दश, एवं विंशतिरपि बाहवो मया भुजाभ्या-मुत्पाटनीया इत्यर्थः । यद्वा—मयैव प्रथमं भग्नमत एव पुरोवर्ति सत्, विसंष्ठुलं यद्भुजयुगलं तेनैव हेतुना तत्प्रतिबद्धत्वेनोत्खण्डितास्त्रुटिताः शेषा निष्फला बाहवो यस्य तम् । मुख्यबाहुद्वयभञ्जनात्तदन्विताः परेऽप्यष्टादश भञ्जिताः स्युरित्यर्थः । एवम्—वज्रनिभस्य हस्तस्य निपतन्सन्दत्तोऽर्पितो यो दृढो मुष्टिस्तेन भिन्नो वक्षसो-ऽर्धान्तो यस्य । तथा च बाहुभञ्जनानन्तरं मुष्ट्या तस्य वक्षो विदारयिष्यामीत्यर्थः ॥

**भुअणिव्वालिअकड्ढिअखुडिअक्केक्कविसरन्तपविद्धसिरम् ।**
**णिप्फलसीआसंधिअणक्खुक्खुडिअहिअअं करेमि दहमुहम् ५४**
**(अन्त्यकुलअम्)**

[भुजनिर्वालितकृष्टखण्डितैकैकविसरत्प्रवृद्धशिरसम् ।
निष्फलसीतासंहितनखोत्खण्डितहृदयं करोमि दशमुखम् ॥]
(अन्त्यकुलकम्)

एवम्—भुजाभ्यां निर्वालितानि धृत्वा धृत्वा पृथक्कृतानि तदनु आकृ[ष्टान्याकृ]-ष्टानि पश्चात्खण्डितानि सन्ति एकैकं प्रत्येकं विसरन्ति भूमौ पतन्ति प्रवृद्धान्युप-

च्छितानि शिरांसि यस्य तम् । वक्षोविदारणानन्तरं प्रत्येकं तस्य मस्तकानि विच्छिद्य विच्छिद्य भूमौ पातयिष्यामीत्यर्थः । अथ कार्यानिष्पत्त्या निष्फलं यथा स्यादेवं सीताविषये संहितमासञ्जितमत एव नखैरुत्खण्डितमभ्यन्तरादप्युत्खातं हृदयं यस्य तथाभूतम् । शिरःखण्डनानन्तरं सीतायामासक्त्यपराधात्तदन्तःस्थितमपि तन्मनो नखैरुत्खाय बहिः करिष्यामीत्यर्थः ॥

इअ अज्ज चेअ मए णिहअम्मि दसाणणे णिआ किक्किन्धम् ।
अणुमरिहिइ व मरन्तं दच्छिहि व जिअन्तराहवं जणअसुआ५५

[इत्यद्यैव मया निहते दशानने नीता किष्किन्धाम् ।
अनुमरिष्यति वा म्रियमाणं द्रक्ष्यति वा जीवद्राघवं जनकसुता ॥]

इत्यनेन प्रकारेणाद्यैव मया दशानने निहते सति किष्किन्धां नीता सती जनकसुता जीवन्तं राघवं द्रक्ष्यति वा । अथ तथाभूतमेव म्रियमाणमनुमरिष्यति वा । तथा च—इतः सीताया नयने रामस्य जीवने मरणे वा पक्षद्वयेऽपि सीतालाभ इत्युभयथापि मम प्रत्युपकारसिद्धिः स्यादथ नयनं न चेत्तदा कस्यामपि दशायां तस्य तल्लाभो न स्यादिति महदनिष्टम् ॥

अथ रामस्य गरुडाह्वानमाह—

विसहरबाण त्ति इमे विहीसणेण विणिवारिए सुग्गीए ।
आढत्तो चिन्तेउं मन्तं हिअएण गारुडं रहुणाओ ॥ ५६ ॥

[विषधरबाणा इतीमे विभीषणेन विनिवारिते सुग्रीवे ।
आरब्धश्चिन्तयितुं मन्त्रं हृदयेन गारुडं रघुनाथः ॥]

इमे विषधराः सर्पास्तद्रूपा बाणास्तथा च किं करिष्यन्तीति कृत्वा विभीषणेन सुग्रीवे विनिवारिते सति । राघवयोः किष्किन्धां प्रेषणादित्यर्थात् । रघुनाथो रामस्तत्प्रतिकाराय गारुडं मन्त्रं हृदयेन चिन्तयितुमारब्धः ॥

अथ गरुडागमनमाह—

णवरि अ सहसुच्छिप्पन्तसाअरद्धन्तधुव्वमाणसुवेलम् ।
जाअं खरवाआहअकिरन्तरक्खसकलेवरं धरणिअलम् ॥ ५७ ॥

[अनन्तरं च सहसोत्क्षिप्यमाणसागरार्धान्तधूयमानसुवेलम् ।
जातं खरवाताहतकीर्यमाणराक्षसकलेवरं धरणीतलम् ॥]

मन्त्रचिन्तनानन्तरं च धरणीतलं महीतलं जातम्। कीदृशम्। सहसा उत्क्षिप्यमाणेन। पक्षपातैरित्यर्थात्। सागरस्यार्धान्तेन सुवेलसंनिहितभागेन दोधूयमानः कम्प्यमानो धाव्यमानः क्षाल्यमानो वा सुवेलो यत्र तादृशम्। एवम्—खरेण तीक्ष्णेन पक्षयोरेव वातेन कीर्यमाणमितस्ततः प्रेर्यमाणं राक्षसानां कलेवरं यत्र तत्। विरोधित्वादित्याशयः॥

अथ गरुडदर्शनमाह—

पेच्छइ अ कणअपेहुणबहलुज्जोअपडिसारिअमहातिमिरम्।
णवपिञ्छमउअपम्हं थिरपिट्ठिणिहित्तमहुमहासणमग्गम्॥ ५८॥
[प्रेक्षते च कनकपिच्छबहलोद्द्योतप्रतिसारितमहातिमिरम्।
नवपिच्छमृदुकपक्ष्माणं स्थिरपृष्ठनिहितमधुमथनासनमार्गम्॥]

रामो गरुडं प्रेक्षते चेत्युत्तरस्कन्धकेन संदानितकम्। कीदृशम्। कनकमयानां पिच्छानां बहलोद्द्योतेन प्रतिसारितं महातिमिरं येन तम्। सुवर्णमयगरुत्तेजसा तमो नाशयन्तमित्यर्थः। एवम्—नवपिच्छत्वान्नूतनपक्षत्वान्मृदुकपक्ष्माणं मृदुलोमाग्रम्। एवम्—स्थिरपृष्ठे निहितो मधुमथनासनस्य मार्गः स्थानं यत्र तम्। तद्वाहनत्वादिति भावः॥

दुव्वारवासवाउहघाअविमुक्केक्कपिञ्छपाअडवच्छम्।
रामो पाआलच्छिअकण्ठवलन्तट्ठिओरअधरं गरुडम्॥ ५९॥
(जुग्गअम्)

[दुर्वारवासवायुधघातविमुक्तैकपक्षप्रकटवक्षसम्।
रामः पातालाञ्चितकण्ठवलत्स्थितोरगधरं गरुडम्॥]
(युग्मकम्)

किंभूतम्। दुर्वारस्य वासवायुधस्य वज्रस्य घातेन विमुक्तस्त्रुटितो य एकः पक्षस्तेन प्रकटं वक्षो यस्य तम्। पक्षाभावेनावरणाभावादिति भावः। एवम्—पातालादञ्चित आकृष्टः सन् कण्ठे वलन् वक्रीभूय स्थितो य उरगस्तद्धारकम्। पातालादेव तदानीमागमनाच्चञ्च्वाकृष्टसर्पेण वेष्टितकण्ठमित्यर्थः॥

अथ नागपाशत्यागमाह—

तो कअरामपणामे गरुडे ओवइअसमुहसंठिअदिट्ठे ।
दोह्ण वि मुक्कसरीरा ण विणज्जइ ते कहिं गआ सरणिवहा ६०

[ततः कृतरामप्रणामे गरुडेऽवपतितसंमुखसंस्थितदृष्टे ।
द्वयोरपि मुक्तशरीरा न विज्ञायते ते कुत्र गता शरनिवहाः ॥]

ततो रामस्य तद्दर्शनानन्तरं दूरादेव कृतप्रणामे गरुडेऽवपतितेनाकाशादवतरणेन संमुखसंस्थिते दृष्टे सति द्वयोरपि रामलक्ष्मणयोर्मुक्तं त्यक्तं शरीरं यैस्तथाभूताः सन्तः शरनिवहाः कुत्र गता इति न विज्ञायते। रामसंमुखगतं गरुडं दृष्ट्वा हठादेव सर्पाः पलायिता इति भावः ॥

अथ गरुडालिङ्गनमाह—

अह सरबन्धविमुक्को विणआतणओवऊहणक्खअरहिओ ।
अप्पाहिअत्थमन्तो जाओ गअगरुडदारुणो रहुणाहो ॥ ६१ ॥

[अथ शरबन्धविमुक्तो विनतातनयोपगूहनक्षतरहितः ।
अध्यापितास्त्रमन्त्रो जातो गतगरुडदारुणो रघुनाथः ॥]

अथ गरुडसांनिध्यानन्तरं शरबन्धाद्विमुक्तो रघुनाथो गतेन गरुडेन हेतुना दारुणो दुःसहो जातः। तस्मिन्सति तदासक्तत्वादिति भावः। कीदृक्। विनतातनयस्योपगूहनादालिङ्गनात्क्षतै रहितः शून्यः। एवम्—गरुडेनाध्यापित उपदिष्टोऽस्त्रमन्त्रो गारुडो यस्मै सः। गरुडेनालिङ्ग्य सर्पभयाभावायोपदिष्टनिजमन्त्रः प्रबलोऽभूदित्यर्थः ॥

अथ धूम्राक्षस्य युद्धोद्योगमाह—

अह सरबन्धविमुक्के सोऊण णिसाअराहिवो रहुणाहे ।
आअअगरुडासङ्को धुम्मक्खम्मि सअलं णिमेइ रणभरम् ॥६२॥

[अथ शरबन्धविमुक्तौ श्रुत्वा निशाचराधिपो रघुनाथौ ।
आगतगरुडाशङ्को धूम्राक्षे सकलं नियोजयति रणभरम् ॥]

अथ गरुडगमनोत्तरं शरबन्धाद्विमुक्तौ रघुनाथौ श्रुत्वा निशाचराधिपः सकलं रणभरं धूम्राक्षे नियोजयतीति। कीदृक्। आगता गरुडादाशङ्का यस्य। गरुड एवास्मान् हन्तुमागत इत्येवंरूपतदाशङ्कावानित्यर्थः। आगताद्गरुडादिति वा ॥

अथ धूम्राक्षस्य प्रयाणमाह—

**सो रोसेण रहेण व उच्छाहेण व णिसाअरबलेण समम् ।**
**णीइ भुअं व पहरिसं वहमानो विक्कमं व वेरावन्धम् ॥ ६३ ॥**

[स रोषेण रथेनेवोत्साहेनेव निशाचरबलेन समम् ।
निरैति भुजमिव प्रहर्षं वहमानो विक्रममिव वैराबन्धम् ॥]

स धूम्राक्षो रणाय निरैति । रथेनेव रोषेण समम् । यथा रथेन सह निर्गच्छति तथा रोषेणापि सहेत्यर्थः । एवम्—उत्साहेन सह यथा तथा निशाचरबलेनापि सहेत्यर्थः । किंभूतः । यथा भुजं तथा प्रहर्षमानन्दमपि । एवम्—यथा विक्रमं तथा वैराबन्धमपि वहमान इति सर्वत्र सहोपमा ॥

अथ हनूमद्धूम्राक्षसैन्ययोः सांमुख्यमाह—

**तो सो रक्खसणिवहो सह धुम्मक्खेण साअरद्धन्तणिहो ।**
**वडवामुहाणलस्स व संचरणपहम्मि मारुअसुअस्स ठिओ ॥६४॥**

[ततः स राक्षसनिवहः सह धूम्राक्षेण सागरार्धान्तनिभः ।
वडवामुखानलस्येव संचरणपथे मारुतसुतस्य स्थितः ॥]

ततो धूम्राक्षनिर्गमनानन्तरं सागरस्यार्धान्त एकदेशस्तन्निभो बहुलत्वान्नीलत्वाच्च तत्तुल्यो राक्षसनिवहो धूम्राक्षेण समं तेजस्वित्वात्कपिशत्वाच्च वडवामुखानलस्येव मारुतसुतस्य संचरणपथे संमुखे स्थितः । तथा च सागरार्धान्ततुल्यत्वेन राक्षसनिवहस्य भक्ष्यत्वम्, वडवानलत्वेनोत्प्रेक्षया हनूमतो भक्षकत्वं प्रतीयते ॥

अथैतयोर्युद्धमाह—

**अह दारुणावसाणे कइरक्खससेण्णवइअरम्मि पअत्ते ।**
**संभारिअक्खणिहणो ओत्थरइ सरेहिं मारुइं धुम्मक्खो ॥ ६५ ॥**

[अथ दारुणावसाने कपिराक्षससैन्यव्यतिकरे प्रवृत्ते ।
संस्मृताक्षनिधनोऽवस्तृणाति शरैर्मारुतिं धूम्राक्षः ॥]

अथ सांमुख्यानन्तरं क्षयहेतुत्वाद्दारुणमवसानं यस्य तादृशि कपिराक्षससैन्ययोर्व्यतिकरे युद्धरूपे प्रवृत्ते सति धूम्राक्षः शरैर्मारुतिमवस्तृणाति आच्छादयति । किंभूतः । संस्मृतमक्षस्य भ्रातुर्निधनं मरणं येन तादृक् । लङ्कादाहसमयेऽक्षोऽनेनैव हत इति क्रोधादिति भावः ॥

अथ धूम्राक्षरथभङ्गमाह—

तो तस्स सरणिघाए रोमन्तरलग्गणिप्फले धुअमाणो ।
अक्कमणमोडिअरहो हिअधुम्मक्खधनुसंठिओ हसइ कई ॥६६॥

[ततस्तस्य शरनिघातात्रोमान्तरलग्ननिष्फलान्धुन्वानः ।
आक्रमणमोटितरथो हृतधूम्राक्षधनुःसंस्थितो हसति कपिः ॥]

ततः शरवृष्ट्यनन्तरमाक्रमणेनोत्प्लुत्यारोहणेन मोटितो भग्नो रथो येन । धूम्राक्षस्येत्यर्थात् । स कपिर्हनूमान् हृतमाच्छिद्य गृहीतं यद्धूम्राक्षस्य धनुस्तत्र संस्थितः हसति । धूम्राक्षं लक्ष्यीकृत्येत्यर्थात् । मर्कटस्वभावोऽयमिति भावः । किं कुर्वन् । तस्य धूम्राक्षस्य शरनिघातात्रोमान्तरेषु लग्नान् सतो निष्फलानकिंचित्करत्वाद्धुन्वानो देहोत्क्षेपणादिना दिशि दिशि क्षिपन् ॥

अथ हनूमद्देहदार्ढ्यमाह—

भग्गो भुअम्मि फलिहो वच्छुच्छलिअदलिअं ण दट्ठं मुसलम् ।
धुम्मक्खरोसमुक्कं पवअस्स जहिं तहिं विराइ पहरणम् ॥ ६७ ॥

[भग्नो भुजे परिघो वक्षउच्छ्वलितदलितं न दृष्टं मुसलम् ।
धूम्राक्षरोषमुक्तं प्लवगस्य यत्र तत्र विशीर्यति प्रहरणम् ॥]

हनूमतो भुजे परेषां परिघो भग्नो द्विधाभूतः । वक्षस उच्छ्वलितं सद्दलितं द्विधाभूतं मुसलमपि न दृष्टम् । कुत्र गतमित्यर्थः । एवम्—धूम्राक्षेणापि रोषेण मुक्तं प्रहरणं परिघादि प्लवगस्य यत्रैव तत्रैव देहे विशीर्यति खण्डखण्डीभवति । पतितं सदित्यर्थात् । एतेन वज्रदेहत्वमुक्तम् ॥

अथ युग्मकेन धूम्राक्षमरणमाह—

तो दीहवामकरअलपडिवण्णावेढणोणअगलुद्देसम् ।
रुम्भन्तजीवणिग्गमवच्छब्भन्तरभमन्तसीहणिणाअम् ॥ ६८ ॥
खणवावारिविसंठुलगलन्तपहरणपलम्बिओहअहत्थम् ।
कुणइ पभञ्जणतणओ उद्धद्धिअमुक्कजीविअं धुम्मक्खम् ॥ ६९ ॥

( जुग्गअम् )

[ततो दीर्घवामकरतलप्रतिपन्नावेष्टनावनतगलोद्देशम्।
रुध्यमानजीवनिर्गमवक्षोभ्यन्तरभ्रमत्सिंहनिनादम्॥
क्षणव्यापारिविसंष्ठुलगलत्प्रहरणप्रलम्बितोभयहस्तम्।
करोति प्रभञ्जनतनय ऊर्ध्वोत्थितमुक्तजीवितं धूम्राक्षम्॥]

(युग्मकम्)

ततः परिघादिप्रहारानन्तरं प्रभञ्जनतनयो हनूमान् धूम्राक्षमूर्ध्वमुत्थितं गतं सन् मुक्तं त्यक्तं जीवितं येन तादृशं करोतीत्युत्तरस्कन्धकेनान्वयः। किंभूतम्। दीर्घेण वामकरतलेन प्रतिपन्नमङ्गीकृतं यदावेष्टनमामोट्य ग्रहणं तेनावनतो गलोद्देशो यस्य तम्। वामबाहुनावेष्ट्यामोट्य गले धृतमित्यर्थः। अथ कण्ठस्य मोटितत्वाद्रुध्यमानो जीवनिर्गमस्तेन हेतुना वक्षोभ्यन्तरे भ्रमन् सिंहनिनादो यस्य तम्। प्राणावस्थित्या सिंहनादो घूर्णतीत्यर्थः। पुनः किंभूतम्। गलामोटने सति क्षणं व्यापारिणौ प्रतिक्रियानिमित्तं हनूमत्करादिनिर्मोचनाय कृतप्रयत्नौ सन्तौ विसंष्ठुलौ विह्वलौ। अत एव गलत्प्रहरणौ पतदस्त्रौ सन्तौ प्रलम्बितावुभयहस्तौ यस्य तम्। निर्याणपीडया करयोरवशीभावेन पतदस्त्रत्वं लम्बमानत्वं चेत्यर्थः॥

अथाकम्पनप्रयाणमाह—

**अह पडिए धुम्मक्खे हअसेसम्मि अ गए णिसाअरसेण्णे।**
**दहमुहसमुहाणत्तं णिन्तं पेच्छइ अकम्पणं पवणसुओ॥ ७०॥**

[अथ पतिते धूम्राक्षे हतशेषे च गते निशाचरसैन्ये।
दशमुखसंमुखाज्ञप्तं निर्यन्तं प्रेक्षतेऽकम्पनं पवनसुतः॥]

अथ पूर्वोक्तप्रकारानन्तरं धूम्राक्षे पतिते निशाचरसैन्ये च हतशेषे हतावशिष्टे स्वल्पे सति दशमुखेन संमुखे आज्ञप्तम्। युद्धायेत्यर्थात्। निर्यन्तं लङ्कातो बहिर्भवन्तमकम्पनं नाम रावणपुत्रं पवनसुतः प्रेक्षते, न तु प्रसह्यातिक्रामति। तथासति निकटवर्तिनीं लङ्कामेव प्रविशेदित्याशयः॥

अथाकम्पनपतनमाह—

**तं पि विइण्णोरत्थलवीसत्थोहरिअणिट्ठिआउहणिवहम्।**
**ओसुम्भइ हणुमन्तो एक्केक्कखुडिअविप्पइण्णावअवम्॥ ७१॥**

[तमपि वितीर्णोरःस्थलविश्वस्तावहतनिष्ठितायुधनिवहम् ।
अवपातयति हनूमानेकैकखण्डितविप्रकीर्णावयवम् ॥]

तमपि । निकटागतमित्यर्थात् । हनूमानवपातयति । अकम्पनं मारयामासेत्यर्थः। किंभूतम् । वितीर्णं प्रहारायाग्रे कृत्वा दत्तं यदुरःस्थलम् । हनूमतेत्यर्थात् । तत्र विश्वस्तमक्षोभं यथा स्यादेवमवहतः पातितः । अकम्पनेनेत्यर्थात् । अत एव निष्ठितः शतखण्डीभूय विनष्ट आयुधनिवहो यस्य तम् । हनूमता प्रहरेत्युक्त्वा पुरः कृते वक्षसि वज्रमयत्वादकम्पनप्रहितान्यस्त्राणि खण्डखण्डीभूतानीत्यर्थः । अथैकैकं प्रत्येकं खण्डिताः सन्तो विप्रकीर्णा हनूमतैव दिशि दिशि क्षिप्ता अवयवाः करचरणादयो यस्य तम् ॥

अथ नीलप्रहस्तयोर्युद्धमाह—

अह दहमुहसंदिट्ठो हणुमन्ताघाअसमतुलग्गप्फिडिओ ।
पडिओ णीलस्स मुहे अलद्धसमरसुहदूमिअस्स पहत्थो ॥ ७२ ॥

[अथ दशमुखसंदिष्टो हनूमदाघातसमतुलाग्रस्फेटितः ।
पतितो नीलस्य मुखेऽलब्धसमरसुखदुःखितस्य प्रहस्तः ॥]

अथाकम्पनवधानन्तरं युद्धाय दशमुखेन संदिष्टो हनूमत्कृतादाघातात्समतुलाग्रेण काकतालीयसंवादसाम्येन दैवात्स्फेटितो बहिर्भूतः प्रहस्तो नाम राक्षसोऽप्राप्तसमरसुखत्वाद्दुःखितस्य नीलस्य मुखे संमुखे पतितः । हनुमता हन्तुमारब्धोऽपि दैवादपक्रान्तो नीलस्याग्रं प्राप्तवानित्यर्थः ॥

अथ नीलोरसि प्रहारमाह—

णवरि अ पत्थाणे च्चिअ बाणो कालाअसो पहत्थविमुक्को ।
पडिओ णीलस्स उरे वणपडिभिण्णरुहिरुग्गमेण पिसुणिओ ७३

[अनन्तरं च प्रस्थान एव बाणः कालायसः प्रहस्तविमुक्तः ।
पतितो नीलस्योरसि व्रणप्रतिभिन्नरुधिरोद्गमेन पिशुनितः ॥]

सांमुख्यानन्तरं च प्रस्थान एव प्रहस्तं प्रति नीलस्य प्रयाणसमय एव प्रहस्तेन विमुक्तः कालायसो द्रवीकृतत्वेन श्यामलौहघटितो बाणो नीलस्योरसि पतितः । यदैव नीलस्तदतिक्रमाय प्रस्थितस्तदैव प्रहस्तमुक्तो बाणस्तदुरसि पतित इत्यर्थः ।

अथ स बाणो व्रणात्प्रतिभिन्नस्य रुधिरस्योद्गमेनोच्छलनेन पिशुनितः क्षिप्रगमनत्वान्नीलरुधिरोद्गमेन सूचितः । अनुमापित इति यावत् ॥

अथ नीलस्य कल्पद्रुमक्षेपमाह—

**वेओवत्तिअविडवं मुअइ कई वि सुरहत्थिपरिमलसुरहिम् ।**
**गइमग्गलग्गभमलं पडिसोत्तपसारिअंसुअं कप्पदुमम् ॥ ७४ ॥**

[वेगापवर्तितविटपं मुञ्चति कपिरपि सुरहस्तिपरिमलसुरभिम् ।
गतिमार्गलग्नभ्रमरं प्रतिस्रोतःप्रसारितांशुकं कल्पद्रुमम् ॥]

कपिरपि कल्पद्रुमं मुञ्चति । प्रहस्तं प्रतीत्यर्थात् । किंभूतम् । वेगेनापवर्तितानि पश्चादभिमुखीकृतानि विटपानि यस्य तम् । वेगोत्कर्षेण प्रतिकूलीकृतवायूत्कर्षादिति भावः । एवम्—सुरहस्तिनामैरावतादीनां परिमलेन कटकण्डूयनादिविमर्दरूपसंबन्धेन सुरभिम् । मदसंबन्धादिति तदुपमर्दसहत्वेन महत्त्वं दृढत्वमप्युक्तम् । एवम्—गतिमार्गे लग्ना अनुगामिनो भ्रमरा यस्येति विश्लिष्टभ्रमरैरप्यलभ्यत्वेनाप्युत्कृष्टजवत्वम् । एवम्—प्रतिस्रोतसा पश्चाद्वर्त्मना प्रसारितमंशुकं वस्त्रं यस्य । वेगमारुतेनेत्यर्थात् । अनेनापि तदेवोक्तम् ॥

अथैतद्वृक्षस्य मुक्तावर्षणमाह—

**वोलन्तजलहरस्स व तो से आसारजललवत्थवअणिहो ।**
**आगममग्गम्मि ठिओ धुअविडवक्खलिअमोत्तिअफलणिवहो ७५**

[व्यतिक्रामजलधरस्येव ततोऽस्यासारजललवस्तबकनिभः ।
आगममार्गे स्थितो धुतविटपस्खलितमुक्ताफलनिवहः ॥]

ततस्त्यागानन्तरमस्य नीलक्षिप्तकल्पवृक्षस्यागममार्गे संचरणपथे धुतेभ्यः कम्पितेभ्यो विटपेभ्यः स्खलितो मुक्ताफलनिवहः स्थितः । अस्य किंभूतस्य । व्यतिक्रामतो नभसि गच्छतो जलधरस्येव । फलनिवहः कीदृक् । आसारो वृष्टिस्तज्जलस्य लवो बिन्दुस्तत्समूहनिभः । तथा च जलधरप्रायस्य कल्पद्रुमस्य वृष्टिजलबिन्दुप्राया मुक्ताः पतिता इत्यर्थः ॥

अथ प्रहस्तोरसि तद्वृक्षभङ्गमाह—

**तो तस्स भुअविमुक्को भग्गो वणभरिअमोत्तिअप्फलवअरो ।**
**भज्जन्तविडवविअलिअसिअंसुआवीअपहरुधिरम्मि उरे ॥ ७६ ॥**

[ततस्तस्य भुजविमुक्तो भग्नो व्रणभृतमौक्तिकफलप्रकरः।
भज्यमानविटपविगलितसितांशुकापीतप्रहाररुधिरे उरसि ॥]

ततस्तदनन्तरं नीलभुजेन विमुक्तः क्षिप्तः। कल्पद्रुम इत्यर्थात्। तस्य प्रहस्तस्योरसि भग्नो विशीर्णः। इत्युरसः प्रहारस्य च दार्ढ्यमुक्तम्। किंभूतः। व्रणेषु तज्जनितक्षतेषु भृतो व्याप्तो मौक्तिकफलप्रकरो यस्य स तथा। उरसि कीदृशे। भज्यमानेभ्यो विटपेभ्यो विगलितानि यानि सितांशुकानि तत्स्थितवस्त्राणि तैरापीतानि संसृज्य शोषितानि प्रहारजन्यरुधिराणि यत्रेति विशेषणाभ्यां क्षतमुक्तायतनवस्त्रभ्रंशनैरपि प्रहारोत्कर्ष उक्तः॥

अथ नीलस्य शीघ्रक्रियतामाह—

समअं वञ्चेइ सरे थएइ समअं कईं दुमेहिँ णहअलम्।
समअं तेण विमुक्को चउद्दिसं पाअडो सिलासंघाओ ॥ ७७ ॥

[समं वञ्चयति शरान्स्थगयति समं कपिर्द्रुमैर्नभस्तलम्।
समकं तेन विमुक्तश्चतुर्दिशं प्रकटः शिलासंघातः ॥]

कपिर्नीलः सममेकदैव तत्प्रेषिताञ्शरान् वञ्चयति। उत्पतनावपतनादिना वारयतीत्यर्थः। एवम्—एकदैव द्रुमैर्नभस्तलं स्थगयत्याच्छादयति। एवम्—एकदैव तेन कपिना विमुक्तः शिलासमूहश्चतुर्दिशं प्रकटः। सर्वत्र पततीत्यर्थः। तथा च शरान् वञ्चयन्नेव द्रुमान् क्षिप्तवांस्तदैव च शिला इति कृतहस्तत्वमुक्तम्॥

अथ नभसि नीलास्त्रखण्डनमाह—

विअलन्तदुमच्छेआ सरघाअदलन्तविअलिअसिलाणिवहा।
दीसन्ति दलिअपव्वअवोच्छिज्जन्तोज्झरा णहअलुद्देसा ॥ ७८ ॥

[विगलद्द्रुमच्छेदाः शरघातदलद्विगलितशिलानिवहाः।
दृश्यन्ते दलितपर्वतव्यवच्छिद्यमाननिर्झरा नभस्तलोद्देशाः ॥]

नभस्तलप्रदेशा दृश्यन्ते। कीदृशाः। विगलन्तो द्रुमाणां छेदाः प्रहस्तशरप्रहारकृताः खण्डा यस्मात्[1]। एवम्—तस्यैव शरघातेन दलन्तः सन्तो विगलिताः पतिता नीलक्षिप्तशिलानिवहा यस्मात्। एवम्—तस्यैव शरेण दलितानां पर्वतानां

१. अन्यपदार्थस्यैकवचनान्तत्वं चिन्त्यम्।

व्यवच्छिद्यमाना निर्झरा यत्र ते । पर्वतेषु द्विधाभूतेषु निर्झरा अपि द्विखण्डीभूता इत्यर्थः । पर्वतेषु शतखण्डेषु पृथग्भूता इति वा ॥

नीलस्यावस्थामाह—

**गिरिधाउरअक्खउरो अंसविपल्हत्थबहलकेलरणिवहो ।**
**संझाअवविच्छुरिओ सजलो व्व घणो णहम्मि दीसइ णीलो ७९**

[गिरिधातुरजःकलुषोंऽसविपर्यस्तबहलकेसरनिवहः ।
संध्यातपविच्छुरितः सजल इव घनो नभसि दृश्यते नीलः ॥]

नभसि नीलो दृश्यते । सर्वैरित्यर्थात् । कीदृशः । क्षिप्यमाणगिरीणां गैरिकरजोभिः कलुषः कर्बुरितः । स्वतो नीलत्वात् । एवम्—अंसे स्कन्धमूले विपर्यस्तो नित्यं नमनोन्नमनादिना विसंष्ठुलः केसराणां स्कन्धवालानां निवहो यस्य स तथा । क इव । संध्यातपेन संध्याकालीनरविकिरणेन विच्छुरितः संबद्धः । अरुणीकृत इति यावत् । एवंभूतः सजलो घन इव । तथा च—जलसंबन्धेन श्यामतया मेघेन नीलस्य, रक्ततया संध्यारागेण गैरिकरजसां तौल्यादुपमा ॥

अथ नीलेन प्रहस्तधनुर्ग्रहणमाह—

**णवरि अ गअणद्धन्ते ओवडणक्खित्तधणुणिअत्तत्थिमिओ ।**
**तह धरिओ विअ दीसइ पढमविमुक्केहि सरसमूहेहि कई ॥८०॥**

[अनन्तरं च गगनार्धान्तेऽवपतनाक्षिप्तधनुर्निवृत्तस्तिमितः ।
तथा धृत इव दृश्यते प्रथमविमुक्तैः शरसमूहैः कपिः ॥]

कपिर्नीलः प्रहस्तेन प्रथमं विमुक्तैः शरसमूहैस्तथा धृत इव दृश्यते । किंभूतः । गगनस्यार्धान्ते उपर्येकदेशेऽवपतनेनोर्ध्वाधोगमनेनाक्षिप्तमतिक्रम्य गृहीतं धनुर्येन तथाभूतः सन्निवृत्तो यत एवावपतितस्तत्रैव गतः सन् स्तिमितः स्थिरीभूतः । तथ च—प्रथमं प्रहस्तेन शरा विमुक्तास्तदुत्तरमवपत्य प्रहस्तधनुर्गृहीत्वा निवृत्य पूर्वस्थानस्थितो नीलः स्तिमितोऽपि शरैः पृष्ठगामिभिर्धृत इव लक्षितो न तु धृत इत्यवफालोत्फालयोः क्षिप्रता सूचिता ॥

अथ प्रहस्तस्य मुसलक्षेपमाह—

**अह णिसिअरेण मुसलं णीलस्स ललाटवट्टपच्चुप्फलिअम् ।**
**मज्झम्मि धरेन्तरवं समुहागअतुरिअवच्चिअं पडिवण्णम् ॥८१॥**

[अथ निशिचरेण मुसलं नीलस्य ललाटपट्टप्रत्युत्फलितम् ।
मध्ये ध्रियमाणरवं संमुखागतत्वरितवञ्चितं प्रतिपन्नम् ॥]

अथ धनुःशून्यतानन्तरं निशिचरेण खेनैव क्षिप्तं मुसलं नीलस्य ललाटपट्टात्प्रत्युत्फलितं यत एव गतं तत्रैवागतं सन् मध्ये प्रतिपन्नम् । हस्तेनोत्प्लुत्य गृहीतमित्यर्थः । ध्रियमाणरवं ससिंहनादं यथा स्यात् । कीदृशम्[१] । संमुखागतं त्वरितमेव वञ्चितम् । ललाटभेदनाभावात् । तथा च—प्रत्युत्फलेनोत्कर्षेण प्रहारललाटयोर्दार्ढ्यप्रकर्षः । यद्वा—मध्ये स्वयमुत्प्लुत्य पुरो गत्वा मध्यवर्त्मनि धृतमिति प्रथमजातमुसलोच्छलनादपि प्रहस्तोत्फालस्य शीघ्रत्वमित्याशयः ॥

अथ नीलेन शिलाग्रहणमाह—

गेण्हइ अ जलणतणओ सुवेलसिहरद्धलग्गमेहच्छाअम् ।
विअडपहत्थोरत्थलसमवित्थारकढिणत्तणं कसणसिलम् ॥ ८२ ॥

[गृह्णाति च ज्वलनतनयः सुवेलशिखरार्धलग्नमेघच्छायाम् ।
विकटप्रहस्तोरःस्थलसमविस्तारकठिनत्वां कृष्णशिलाम् ॥]

च पुनर्ज्वलनतनयो नीलः कृष्णशिलां गृह्णाति । किंभूताम् । विकटं विस्तीर्णं यत्प्रहस्तस्योरःस्थलं तत्समे विस्तारकठिनत्वे यस्यास्तामिति तदभिभवसौकर्याय । एवम्—सुवेलशिखरस्यार्धान्ते उपरिदेशे लग्नस्य मेघस्येव छाया कान्तिर्यस्यास्तामिति । यथा सुवेलशिखरोपरिभागे मेघस्तिष्ठति तथा नीलहस्तोपरि शिलापीति सुवेलेन नीलस्य, शिखरेण भुजस्य, तदूर्ध्वभागेन करस्य, मेघेन शिलायास्तुल्यत्वम् ॥

अथ नीलोत्फालमाह—

दूरसमुप्पइएण अ णीलेण सिलाअलोत्थअम्मि दिणअरे ।
जाओ णहम्मि दिअसो तक्खणबद्धतिमिरा महिअलम्मि णिसा ८३

[दूरसमुत्पतितेन च नीलेन[२] शिलातलावस्तृते दिनकरे ।
जातो नभसि दिवसस्तत्क्षणबद्धतिमिरा महीतले निशा ॥]

दूरं समुत्पतितेन कृतोत्फालेन च नीलेन दिनकरे शिलातलेनावस्तृते छन्ने सति

१. 'कीदृशम्' इति पदं 'ध्रियमाणरवम्' इत्यतः प्राग्भवेत्. २. 'नीलस्य' इति भवेत्.

नभसि दिवसो जातः, तत्क्षणे बद्धं संबद्धं तिमिरं यया सा निशा महीतले जाते-त्यर्थात् । शिलया रविरश्मीनां व्यवहितत्वादधः प्रसरणाभावादत एवोर्ध्वं प्रसरणाद्दिवस इति भावः ॥

अथ प्रहस्तवधेनाश्वासं विच्छिनत्ति—

अह णीलस्स पहत्थो रणाणुराएण सहिअगाढप्पहरो ।
घाअब्भन्तरभिण्णो गलन्तजीअरुहिरो गओ धरणिअलम् ॥८४॥

इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे
महाकव्वे चउद्दहो आसासओ ॥

[अथ नीलस्य प्रहस्तो रणानुरागेण सोढगाढप्रहारः ।
घाताभ्यन्तरभिन्नो गलज्जीवरुधिरो गतो धरणितलम् ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये
चतुर्दश आश्वासः ।

अथ शिलोत्थापनानन्तरं प्रहस्तो धरणितलं गतः । पतित इत्यर्थः । कीदृक् । रणानुरागेण संग्रामप्रीत्या नीलस्य सोढः प्रतीष्टो गाढः प्रहारो येन । शिलाकृत इत्यर्थात् । तथाभूतः । अत एव घातेन शिलाभिघातेनाभ्यन्तरे भिन्नश्चूर्णो बहिः क्षताभावात् । तत एव च गलद्बहिर्भवज्जीवः प्राणस्तद्रूपं रुधिरं यस्य तादृक् । अभिघाते सति रुधिरनिर्गमस्यौचित्याज्जीव एव रुधिरत्वेन रूपितो यतो जीव एव रुधिरमतो यागादावशस्त्रहतस्य छागादेरुत्तरकालं खण्डनेऽपि रुधिरनिर्गमाभावः, सजीवस्यैव तन्निर्गमादिति भावः ॥

रक्षोविक्षोभदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य शिखा पूर्णा चतुर्दशी ॥

---

पञ्चदश आश्वासः ।

अथ रावणस्य प्रयाणमाह—

अह णिहअम्मि पहत्थे बन्धुवहामरिसणिन्तबाहुप्पीडो ।
चलिओ सिहिपच्चग्गअहुंकारभरेन्तदसदिसो दहवअणो ॥ १ ॥

[अथ निहते प्रहस्ते बन्धुवधामर्षनिर्यद्बाष्पोत्पीडः ।
चलितः शिखिप्रत्युद्गतहुंकारभ्रियमाणदशदिग्दशवदनः ॥]

अथ शिलापतनानन्तरं प्रहस्ते निहते सति दशवदनश्चलितः । रणायेत्यर्थात् । कीदृक् । बन्धूनां वधेनामर्षान्निर्यन्बहिर्गच्छन्बाष्पोत्पीडो यस्य सः । इति यात्रासमये रोदनादमङ्गलमुक्तम् । पुनः कीदृक् । शिखिना वह्निना प्रत्युद्गतः संगतः क्रोधशोकहेतुकत्वाद्यो हुंकारस्तेन गम्भीरतया भ्रियमाणाः पूर्यमाणा दश दिशो येन स तथा ॥

अथैतस्य हास्यमाह—

**तह कुविएण पहसिअं करालमुहकन्दराभरेन्तदशदिशम् ।**
**जह से भअतुण्हिक्को भवणक्खम्भेसु परिअणो वि णिलुक्को॥२॥**

[ततः कुपितेन प्रहसितं करालमुखकन्दराभ्रियमाणदशादिशम् ।
यथास्य भयतूष्णीको भवनस्तम्भेषु परिजनोऽपि निलुकितः ॥]

करालानि व्यात्तत्वात्सच्छिद्राणि मुखान्येव कन्दरास्ताभिर्भ्रियमाणाः पूर्यमाणा दश दिशो यत्र तद्व्यात्तदशमुखव्याप्तदशदिग्यथा स्यादेवं कुपितेन रावणेन तथा प्रहसितं हास्यं कृतं यथा भयेन तूष्णीको मौनी अस्य रावणस्य परिजनोऽपि भवनस्तम्भेषु निलुकितः । निलीन इत्यर्थः । क्रुद्धस्य दृष्टिपथो वर्जनीय इत्याशयादिति भावः॥

अथैतस्य रथारोहणमाह—

**तो रक्खसपरिवारं णिअपाअभरोणमन्तपच्छिमतडिमम् ।**
**सारहिणा रुब्भन्तं चडुलतुरङ्गमधअं रहं आरूढो ॥ ३ ॥**

[ततो राक्षसपरिवारं निजपादभरावनमत्पश्चिमतडिमम् ।
सारथिना रुध्यमानं चटुलतुरङ्गमध्वजं रथमारूढः ॥]

ततो हास्यानन्तरं स रथमारूढः । किंभूतम् । राक्षसाः परिवाराः परिचारका यत्र तम् । तैः परिवृतमिति वा । एवम्— निजपादयोर्भरेणावनमदधोगच्छत्पश्चिमं तडिमं भित्तिर्यस्य तम् । पश्चाद्भागेनैवारोहणसंप्रदायात्सारथिगौरवेण तेजस्वितया वा चटुलाश्चञ्चलास्तुरङ्गमा अत एव ध्वजस्य यत्र तम् । अत एव रुध्यमानम् । क्वचिदप्युड्डीय मा गच्छेदिति तुरगवल्गाकर्षणादिना स्थाप्यमानम् ॥

अथ कपीनां रावणज्ञानमाह—

**हुंकारेण सहाए खुहिअमहाकलअलेण लङ्कामज्झे ।**
**पुरसेण्णकलअलेण अ णाओ चलिओ त्ति वाणरेहि दहमुहो ४**

[हुंकारेण सभायां क्षुभितमहाकलकलेन लङ्कामध्ये ।
पूर्णसैन्यकलकलेन च ज्ञातश्चलित इति वानरैर्दशमुखः ॥]

दशमुखः सभायां तिष्ठतीति वानरैः क्रोधजन्यहुंकारेण ज्ञातः । तथा—क्षुभितानाम् । नगरीयाणामित्यर्थात् । महाकोलाहलेन लङ्कामध्ये आगत इति ज्ञातः । पश्चात्पूर्णस्य च तुरङ्गतापन्नस्य सैन्यस्य कलकलेन रणरणकसमुत्थेन लङ्कातो युद्धाय चलित इति ज्ञातः ॥

अथैतस्य नगरान्निर्गममाह—

णवरि अ मुहणिवहोवरि दुक्खपहुत्तधवलाअवत्तच्छाओ ।
णिग्गन्तूण पुरीओ भञ्जइ भग्गरणमच्छरं कइसेण्णम् ॥ ५ ॥

[अनन्तरं च मुखनिवहोपरि दुःखप्रभूतधवलातपत्रच्छायः ।
निर्गम्य पुरीतो भनक्ति भग्नरणमत्सरं कपिसैन्यम् ॥]

अथ प्रस्थानानन्तरं स रावणः पुरीतो निर्गम्य बहिर्गत्वा कपिसैन्यं भनक्ति भञ्जयति पराङ्मुखीकरोति । किंभूतम् । मुखनिवहस्योपरि दुःखेन प्रभूता संमिता धवलातपत्रस्य च्छाया यस्य स तथा । क्रोधेन मुखानामुत्फुल्लतया महत्त्वोत्कर्षात् । सैन्यं किंभूतम् । भग्नो रणाय मत्सरोऽभ्यसूया यस्य तम् ॥

अथ कपीनां पलायनमाह—

तो मुहमेत्तवलन्ता पच्छिमकेसरसडणहअग्गक्खन्धा ।
भग्गाणुमग्गलग्गा पेच्छन्ति दसाणणं पवंगमणिवहा ॥ ६ ॥

[ततो मुखमात्रवलमानाः पश्चिमकेशरसटाहताग्रस्कन्धाः ।
भग्नानुमार्गलग्नाः प्रेक्षन्ते दशाननं प्लवङ्गमनिवहाः ॥]

ततो रावणागमनानन्तरं भग्नानां पलायितानामनुमार्गं लग्नाः पश्चाद्गच्छन्तः प्लवङ्गमनिवहा दशाननं प्रेक्षन्ते । पुरोगता व्यवहिता एव पश्चाद्गतानां तु रावणकृतोपरिपातशङ्कित्वादिति भावः । किंभूताः । मुखमात्रेण वलमानाः पश्चादभिमुखा न तु चरणैरत एव पश्चिमाः पश्चादभिमुख्यः स्कन्धसंनिहितपश्चाद्भागवृत्तयो वा याः केसरसटास्ताभिराहताः स्पृष्टा अग्रस्कन्धा अग्रप्रदेशा येषां ते । सिंहावलोकितन्यायेन प्रेक्षणान्मुखस्य परिवृत्तत्वेन सटानामपि परिवृत्तत्वादित्याशयः ॥

अथ नीलस्तान्परावर्तयतीत्याह—

तो ते भिण्णपअट्टे दहवअणक्कन्तदिण्णविद्दविअपए ।
पम्हट्ठजहाभणिए भणइ समुप्पण्णरणभए जलणसुओ ॥ ७ ॥
[ततस्तान्भिन्नप्रवृत्तान्दशवदनाक्रान्तदत्तविद्रवितपदान् ।
प्रभ्रष्टयथाभणितान्भणति समुत्पन्नरणभयाञ्ज्वलनसुतः ॥]

ततस्तेषां पलायनोत्तरं तान्समुत्पन्नसमरभयान्कपीञ्ज्वलनसुतो नीलो भणति । किंभूतान् । प्रथमं भिन्नानितस्ततो गतानथ प्रवृत्तानेकीभूतान् । यद्वा—प्रथमं भिन्नान्पलायितानथ प्रवृत्तानपकीर्तिभिया परावृत्य संभूयस्थितान् । एवम्—दशवदनाक्रान्ततया दत्तं भूमावर्पितं विद्रवितं शीघ्रं विसंष्ठुलं वा पदं यैस्तान् । एवम्—प्रभ्रष्टं प्रस्मृतं यथाभणितं यैस्तान् विस्मृतयुद्धप्रतिज्ञावचनात् इति ॥

अथ नीलस्य परावर्तनवाक्यमाह—

मा मुञ्चह समरधुरं एस समुक्खित्तमलअसिहरद्धन्तो ।
जस्स कएण पडाअह तं चिअ वो हरइ जीविअं पवअवई ॥ ८ ॥
[मा मुञ्चत समरधुरामेष समुत्क्षिप्तमलयशिखरार्धान्तः ।
यस्य कृतेन पलायध्वं तदेव वो हरति जीवितं प्लवगपतिः ॥]

हे कपयः, समरस्य धुरां भारं मा मुञ्चत । कुत इत्यत आह—एष प्लवगपतिः समुत्थापितमलयैकदेशः सन् । युष्मान् हन्तुमित्यर्थात् । यस्य जीवितस्य कृतेन निमित्तेन पलायध्वं तदेव वो युष्माकं जीवितं हरति । हरिष्यतीत्यर्थः । 'वर्तमानसामीप्ये लट्' । तथा च—पलायने मरणापकीर्ती युद्धे तु मरणे कीर्तिस्वर्गौ, इतरथा तु कीर्तिर्लक्ष्मीश्चेति युद्धमेव सम्यगिति भावः ॥

अथ रावणस्य रामदर्शनमाह—

सीआहिअहिअएण अ अह सो त्ति दसाणणेण सारहिसिट्ठो ।
ण वि तह रामो त्ति चिरं जह तीअ पिओ त्ति सबहुमाणं दिट्ठो ॥९॥
[सीताहितहृदयेन चाथ स इति दशाननेन सारथिशिष्टः ।
नापि तथा राम इति चिरं यथा तस्याः प्रिय इति सबहुमानं दृष्टः ॥]

अथ नीलवचनोत्तरं दशाननेन सोऽयं राम इति सारथिना शिष्टः कथितो राम-

स्तथा मत्प्रतिपक्षः कृतसमुद्रबन्धनादिपुरुषार्थ इति कृत्वापि तथा न दृष्टो यथा तस्याः सीतायाः प्रियः स्वामी प्रेमपात्रं च तदुपभोगभाजनं चेति कृत्वा सबहुमानं सादरम् । सश्लाघमिति यावत् । चिरं दृष्टः । कीदृगस्य लावण्यं किं वा पौरुषमिति जिज्ञासावशादिति भावः । अत्र बीजमाह—किंभूतेन । सीतायामाहितचित्तेन । तथा चाहमियतापि श्रमेण सीतां न लभे, अयं त्वनायासेनैव लब्धवानिति धन्योऽयमिति तात्पर्यम् ॥

अथ रावणापयानमाह—

अह रामसराहिअओ पवएहि परंमुहोहसिज्जन्तरहो ।
छिण्णपडिआअवत्तो लङ्काहिमुहो गओ णिसाअरणाहो ॥ १० ॥

[अथ रामशराभिहतः प्लवगैः पराङ्मुखोपहस्यमानरथः ।
छिन्नपतितातपत्रो लङ्काभिमुखो गतो निशाचरनाथः ॥]

अथ रामदर्शनानन्तरं रामशरेणाभिहतो निशाचरनाथो लङ्काभिमुखः सन् गतः । लङ्कां प्रविष्ट इत्यर्थः । प्लवगैः पराङ्मुखत्वात्पश्चादुपगम्य करतलादिभिरुपहस्यमानो रथो यस्य । एवं छिन्नं सत्पतितमातपत्रं यस्य स तथा ॥

अथ कुम्भकर्णप्रबोधनमाह—

तो तेण लघुइअजसं पत्तविणासेण मुक्कसोडीरपअम् ।
पडिबोहणं अआले सुहोवसुत्तस्स कुम्भअण्णस्स कअम् ॥ ११ ॥

[ततस्तेन लघूकृतयशः प्राप्तविनाशेन मुक्तशौटीर्यपदम् ।
प्रतिबोधनमकाले सुखोपसुप्तस्य कुम्भकर्णस्य कृतम् ॥]

ततो लङ्काप्रवेशानन्तरं प्राप्तविनाशेन तेन रावणेन अकाले व्यवस्थितजागरणसमयं विनैव सुखोपसुप्तस्य कुम्भकर्णस्य प्रतिबोधनं कृतम् । किंभूतम् । लघूकृतं यशो येन स्वाक्षमताप्रकाशनात् । तथा—मुक्तं शौटीर्येणाहंकारेण पदं स्थानं यतः परसापेक्षत्वात्तत्क्रियाविशेषणं वा ॥

अथ कुम्भकर्णप्रयाणमाह—

सो वि अ जम्भाअन्तो अआलपडिबोहगरुइअसिरद्धन्तो ।
णीइ हसिऊण सुइरं लहुअं सोऊण रामवहसंदेसम् ॥ १२ ॥

[सोऽपि च जृम्भायमाणोऽकालप्रतिबोधगुरूकृतशिरोर्धान्तः ।
निरैति हसित्वा सुचिरं लघुकं श्रुत्वा रामवधसंदेशम् ॥]

अकाले प्रतिबोधेन जागरेण गुरूकृतः स्तम्भितः शिरोर्धान्तो मस्तकरूपैकदेशो यस्य तथाभूतः सन् जृम्भायमाणः स कुम्भकर्णोऽपि रामवधरूपं संदेशमभीष्टवचनं श्रुत्वा यतो लघुकमीषत्करमतः सुचिरं हसित्वा निरैति । निर्गच्छतीत्यर्थः ॥

अथैतस्य देहमहत्त्वमाह—

**ओच्छुण्णरइरहवहो जाओ देहस्स से कणअपाआरो ।**
**ऊरुपएसालग्गो दरखलिओ व्व तवणिज्जराअपरिअरो ॥ १३ ॥**

[आक्रान्तरविरथपथो जातो देहस्यास्य कनकप्राकारः ।
ऊरुप्रदेशालग्नो दरस्खलित इव तपनीयरागपरिकरः ॥]

अस्य कुम्भकर्णस्य देहस्य ऊरुप्रदेशालग्नः कनकप्राकारो दरस्खलितत्रिकरूपस्वस्थानात्किंचिदधोपसृत ऊरुलग्नत्वात्तपनीयस्य सुवर्णस्य रागो रञ्जनं यत्र स सुवर्णघटितः परिकर इव जातः । परिकरो मेखलावत्रिके निबध्यत इति समाचारः । स तु सुप्तोत्थितस्य शिथिलीभवत्येवेति ध्वनिः । कीदृक्प्राकारः । आक्रान्तो रविरथस्य पन्था येन स तावदुच्च इत्युत्प्रेक्षा ॥

अथास्य प्राकारलङ्घनमाह—

**लङ्घिअपाआरस्स अ तो से विवलाअमाणमअरप(क)ग्गाहा ।**
**जाणुप्पमाणसलिला जाआ फडिहागआ समुद्दद्धन्ता ॥ १४ ॥**

[लङ्घितप्राकारस्य च ततोऽस्य विपलायमानमकरप्रग्राहाः ।
जानुप्रमाणसलिला जाताः परिखागताः समुद्रार्धान्ताः ॥]

ततः सांनिध्यानन्तरं लङ्घितप्राकारस्यास्य कुम्भकर्णस्य जानुदघ्नसलिलाः सन्तः समुद्रैकदेशाः परिखागताः परिखाप्रविष्टा जाताः । प्राकारसंनिहितभूमेः कुम्भकर्णचरणयन्त्रितत्वेनावनमनात्समुद्रस्योन्नमनम् । तत एव तज्जलस्य नीचगामितया परिखायां संक्रम इति भावः । तथापि परिखाजलस्य जानुप्रमाणत्वमित्यस्य महत्त्वमुक्तम् । किंभूताः । विपलायमानाः क्षोभादितस्ततो गामिनो मकरप्रग्राहा यत्र ते । प्रग्राहो जलसिंहः ॥

अथ कपीनां पलायनमाह—

तो तं पेच्छन्त च्चिअ पच्छाहुत्ता णिअत्तरणवावारा ।
हत्थपडन्तधराहरविसमक्कन्ता पडाइआ कइणिवहा ॥ १५ ॥

[ततस्तं पश्यन्त एव पश्चादभिमुखा निवृत्तरणव्यापाराः ।
हस्तपतद्धराधरविषमाक्रान्ताः पलायिताः कपिनिवहाः ॥]

ततः प्राकारलङ्घनानन्तरं तं कुम्भकर्णं पश्यन्त एव पश्चादभिमुखाः सन्तः कपिनिवहाः पलायिताः । किंभूताः । निवृत्तयुद्धव्यापाराः । एवम्—हस्तात्पतद्धराधरेण विषममाक्रान्ता भीत्या सम्यग्धर्तुमसामर्थ्येन यन्त्रिताः ॥

अथामुष्य युद्धमाह—

अह सेलेहि तरूहि अ फलिहेहि अ मोग्गरेहि हन्तूण दढम् ।
दढदण्डाउहमग्गणमुसलेहि खणेण वाणरबलं सअलम् ॥ १६ ॥

[अथ शैलैस्तरुभिश्च परिघैश्च मुद्गरैर्हत्वा दृढम् ।
दृढदण्डायुधमार्गणमुसलैः क्षणेन वानरबलं सकलम् ॥]

अथ कपिभङ्गोत्तरं शैलादिभिर्दृढं दण्डरूपमायुधं मार्गणो बाणो मुसलं चैतत्पर्यन्तैरस्त्रैः क्षणेन सकलं वानरबलं दृढं यथा स्यात्तथा हत्वेति परस्कन्धकेन संदानितम् ॥

तो पवआइ गआइं तुरआइ अ रक्खसाइ लोहिअमत्तो ।
रामसरावाअधुओ णिअअबले परबले पअत्तो खत्तुम् ॥ १७ ॥

[ततः प्लवगान्गजांस्तुरगांश्च राक्षसांल्लोहितमत्तः ।
रामशराघातधुतो निजकबले परबले प्रवृत्तः खादितुम् ॥]

स कुम्भकर्णो रामशराघातेन धुतः कम्पितः सन् क्रोधात् । निजकबले परबले च प्लवगादीन् खादितुं भोक्तुं प्रवृत्तः । एषामेव लोहितै रुधिरैर्मत्तो यतः । युग्मकम् ॥

अथ कुम्भकर्णभुजच्छेदमाह—

चिरजुज्झिअस्स तो से दोएह वि रामधणुणिग्गअसराहिहआ ।
पढमं धरणीअ भुआ पच्छा छेअरुहिरोज्झरा पल्हत्था ॥ १८ ॥

[चिरयोधितस्य ततोऽस्य द्वावपि रामधनुर्निर्गतशराभिहतौ ।
प्रथमं धरण्यां भुजौ पश्चाच्छेदरुधिरनिर्झराः पर्यस्ताः ॥]

ततः सैन्यक्षयानन्तरं चिरं योधितस्य । कपिभिरित्यर्थात् । अस्य कुम्भकर्णस्य रामधनुर्निर्गतेन शरेणाभिहतौ छिन्नौ द्वावपि भुजौ धरण्यां प्रथमं पर्यस्तौ पतितौ, पश्चात् छेदरुधिराणां निर्झराः पर्यस्ता विकीर्णा इति रुधिराणां प्रतिरोधत्यागेन प्रथमं भुवि पतनार्हत्वेऽपि भुजयोः प्राथमिकं पतनं प्रहारस्यातिशयं तयोर्गौरवं वा सूचयति ॥

अथानयोः पतनस्थानमाह—

एक्को रुद्धणइमुहो अणुवेलं णिवडिओ सुवेलो व्व भुओ ।
साअरलद्धत्थामो बीओ से बीअसेउबन्ध व्व ठिओ ॥ १९ ॥

[एको रुद्धनदीमुखोऽनुवेलं निपतितः सुवेल इव भुजः ।
सागरलब्धस्थामा द्वितीयो द्वितीयसेतुबन्ध इव स्थितः ॥]

एको भुजः समुद्रस्य वेलामनु सुवेल इव स्थितः । यथा वेलायां सुवेलस्तिष्ठति तथेत्यर्थः । तत्समानरूपत्वात् । कीदृक् । रुद्धं नदीनां मुखं समुद्रप्रवेशस्थानं येन सः । तथा समुद्रोऽपि रुद्धपरदिग्वर्तिनदीमुख इति साम्यम् । एवं सागरे लब्धं स्थाम स्थैर्यं येन तथाभूतः सन् द्वितीयो बाहुर्द्वितीयसेतुबन्ध इव स्थितस्तत्समानाकारत्वात्प्रथमो वितत एवेति भावः ॥

अथ कुम्भकर्णशिरश्छेदमाह—

आअण्णकड्ढिएण अ तो से चक्कलिअसिहिसिहेण रणमुहे ।
रहुवइसरेण तुङ्गं चक्केण व राहुणो सिरं उक्खुडिअम् ॥ २० ॥

[आकर्णकृष्टेन च ततोऽस्य चक्रलितशिखिशिखेन रणमुखे ।
रघुपतिशरेण तुङ्गं चक्रेणेव राहोः शिर उत्खण्डितम् ॥]

ततो भुजपतनानन्तरमाकर्णकृष्टेन रघुपतिशरेण अस्य कुम्भकर्णस्य तुङ्गमुच्चं शिरो मस्तकमुत्खण्डितम् । कीदृशेन । चक्रलिता चक्राकारा शिखिनः शिखा यत्र तेन । आग्नेयत्वात्तद्रूपतेजोमयत्वाद्वा । राहोः शिर इव । यथा राहोस्तुङ्गं शिरश्चक्रितशिखिशिखेन चक्रेणोत्खण्डितमित्यर्थः ॥

अथ शिरःपतनमाह—

गअणुण्णएण तेण अ पवणभरेन्तमुहकन्दरामुहलेण ।
छिण्णपडिएण वि कओ चउत्थतुङ्गसिहरुग्गमो व तिऊडो ॥२१॥

[गगनोन्नतेन तेन च पवनभ्रियमाणमुखकन्दरामुखरेण ।
छिन्नपतितेनापि कृतश्चतुर्थतुङ्गशिखरोद्गम इव त्रिकूटः ॥]

पुनर्गगनं व्याप्योन्नतेन च्छिन्नपतितेनापि तेन शिरसा त्रिकूटः सुवेलश्चतुर्थस्य तुङ्गस्य शिखरस्योद्गम उत्पत्तिर्यत्र तथाभूत इव कृतः । त्रयाणां विद्यमानत्वाच्चतुर्थं तदेव शिरो जातमित्युत्प्रेक्षा । किंभूतेन । पवनेन भ्रियमाणा पूर्यमाणा या मुखमेव कन्दरा तया मुखरेण शब्दायमानेनेत्यवकाशातिशयादस्य महत्त्वमुक्तम् । शिखरमपि तादृशकन्दरामुखरमिति साम्यम् ॥

अथ कबन्धपतनमाह—

पडिए अ कुम्भअण्णे दूरपलाअदरभग्गपक्कग्गाहो ।
देहभरन्तुच्छङ्गो पव्वालेइ वडवामुहं मअरहरो ॥ २२ ॥

[पतिते च कुम्भकर्णे दूरपलायितदरभग्नप्रग्राहः ।
देहभ्रियमाणोत्सङ्गः प्लावयते वडवामुखं मकरगृहः ॥]

च पुनः कुम्भकर्णे पतिते सति मकराणां गृहं यत्र स समुद्रो वडवामुखं वडवाग्निं प्लावयति व्याप्नोति । कीदृशः । दूरं पलायितः सन् भग्नः क्षोणिक्षोभसंभूतः परस्परसंघट्टाद्देहाभिघाताद्वा अन्यथा संस्थितावयवः प्रग्राहो जलसिंहो यत्र स तथा पक्कग्गाहो देशी वा । अत्र हेतुमाह—देहेन कबन्धेन भ्रियमाणः पूर्यमाण उत्सङ्गो यस्य तत्रैव पतितत्वादिति वडवानलप्लावनेन (?) तदा ह्यस्यापि जलस्यादाहादाधिक्यं ते च समुद्रशोभाधिक्यात्कबन्धस्य महत्त्वमुक्तम् ॥

अथ रावणस्य रोषमाह—

तो कुम्भअण्णणिहणं सोऊण दसाणणो पहत्थब्भहिअम् ।
रोसाअवरज्जन्तं पुणो वि हसिऊण धुणइ मुहसंघाअम् ॥ २३ ॥

[ततः कुम्भकर्णनिधनं श्रुत्वा दशाननः प्रहस्ताभ्यधिकाम् ।
रोषातपरज्यमानं पुनरपि हसित्वा धुनोति मुखसंघातम् ॥]

ततस्तत्पतनानन्तरं प्रहस्तनिधनादप्यधिकं दुःखदत्वात्कुम्भकर्णस्य निधनं श्रुत्वा दशाननः पुनरपि मुखसंघातं धुनोति । विषादेन चालयतीत्यर्थः । किंभूतम् । रोषरूपेणातपेन तीक्ष्णत्वात् रज्यमानमरुणीक्रियमाणम् ॥

अथ पुनरपि रावणप्रयाणमाह—

णिन्तस्स अ तं वेलं अमरिसपरिवड्डिअस्स भवणुच्छङ्गे ।
खम्भन्तरवित्थारा ते च्चिअ वच्छत्थलस्स से ण पहुत्ता ॥ २४ ॥

[निर्यतश्च तद्वेलायाममर्षपरिवर्धितस्य भवनोत्सङ्गे ।
स्तम्भान्तरविस्तारास्त एव वक्षःस्थलस्यास्य न प्रभूताः ॥]

भवनस्योत्सङ्गे यैरेव पूर्वं गतागतं कृतं त एव स्तम्भयोरन्तरस्य मध्यस्य विस्तारा अवकाशास्तस्यां वेलायां निर्यतो युद्धाय प्रस्थितस्य वास्य रावणस्य वक्षःस्थलस्य न प्रभूता न परिमिताः । किंभूताः । (?) स्वल्पपरिमाणा बभूवुरित्यर्थः । अत्र हेतुमाह—किंभूतस्य । अमर्षेण परिवर्धितस्योत्फुल्लस्य । तथा च—वक्षःस्थलोत्फुल्लतया स्तम्भान्तरेण हठान्निर्गमनाभावादमङ्गलं सूचितम् ॥

अथेन्द्रजिद्विज्ञप्तिमाह—

दरणिग्गअस्स णवरि अ उग्घाडिअवच्छभरिअभवणुच्छङ्गो ।
जाणुपडिउट्ठिओ से जम्पइ हसिऊण मेहणाओ त्ति सुओ २५

[दरनिर्गतस्यान्तरं च उद्घाटितवक्षोभृतभवनोत्सङ्गः ।
जानुपतितोत्थितोऽस्य जल्पति हसित्वा मेघनाद इति सुतः ॥]

गृहान्तःस्तम्भद्वयगमनान्तरं दरनिर्गतस्य ततः किंचिद्बहिर्भूतस्यास्य रावणस्य मेघनादः सुतो जानुभ्यां पतितः सन्नुत्थितः । पूर्वकायेनेत्यर्थात् । हसित्वा क्रोधादिति वक्ष्यमाणं जल्पति । किंभूतः । उद्घाटितेनोत्थितत्वात्प्रकाशितेन वक्षसा भृतो व्याप्तो भवनोत्सङ्गो येन स तथा । युद्धरसोत्फुल्लत्वात् । अत एव हृदयोत्साहव्यजनाय तदुद्घाटनमिति भावः ॥

चतुर्थविविज्ञप्तिवाक्यस्वरूपमाह—

णिम्मविअम्मि कज्जे साहसगरुए वि अप्पण च्चिअ गुरुणा ।
पुत्तेण पुत्तसरिसं पुत्तप्फरिसं ण पाविओ होइ पिआ ॥ २६ ॥

[निर्मितेऽपि कार्ये साहसगुरुकेऽपि आत्मनैव गुरुणा।
पुत्रेण पुत्रसदृशं पुत्रस्पर्शं न प्रापितो भवति पिता ॥]

साहसविषयत्वेन गुरुके लोकैरादृते। साहसेनापि गुरुकेऽसाध्ये इति वा। तादृशेऽपि कार्ये गुरुणा पित्रा आत्मनैव निर्मिते निर्वाहिते सति पुत्रेण पिता पुत्रसदृशं पुत्रस्पर्शं पुत्रजन्मसुखतुल्यं पुत्रस्पर्शसुखं प्रापितो न भवति तादृशपुत्रस्य पुत्रत्वाभावात्तत्स्पर्शेन सुखानुत्पत्तेरिति भावः ॥

स्वोत्कर्षपरं तदेवाह—

**कीस मम्मि धरेन्ते माणुसमेत्तस्स दहरहसुअस्स कए।**
**इअ णीसि अप्पण च्चिअ लहुअन्तो अम्ह रक्खसउलस्स जसम्**

[किमिति मयि ध्रियमाणे मानुषमात्रस्य दशरथसुतस्य कृते।
इति निरैषि आत्मनैव लघूकुर्वन्मम राक्षसकुलस्य यशः ॥]

हे तात, मयि ध्रियमाणे जीवति सति मानुषमात्रस्य न तु देवादेर्दशरथसुतस्य कृते इत्यनेन प्रकारान्तरेण आत्मनैव किमिति निरैषि युद्धाय निर्गच्छसीत्यर्थः। मामेवादिशेति भावः। किं कुर्वन्। मम किमपरं राक्षसकुलस्य च यशो लघूकुर्वन्। एतेऽयोग्या एवेति रावणः स्वयमेव प्रस्थितोऽभूदिति लोकप्रसिद्धिः स्यादिति भावः ॥

रावणोत्कर्षपरं तदाह—

**उक्खअभुअंगरअणं णिसुढिअणन्दणवणं पलोटिअसेलम्।**
**अप्पाणं व ण आणसि समं समत्थस्स तिहुअणस्स भरसहम् २८**

[उत्खातभुजंगरत्नं निपातितनन्दनवनं प्रलोटितशैलम्।
आत्मानं वा न जानासि समं समस्तस्य त्रिभुवनस्य भरसहम् ॥]

हे तात, त्वमात्मानं वा न जानासि स्वं न परिच्छिनोषि। यदप्रतियोगिना मानुषेण समं युयुत्सुरसीति भावः। किंभूतम्। सममेकदैव समस्तस्य त्रिभुवनस्य भरसहम्। त्रैलोक्यमप्येकत्र भवति तथापि त्वया समं न पारयतीत्यर्थः। तदेवोपपादयति—पुनः किंभूतम्। उत्खातमुत्पादितं भुजंगस्य शेषादेः फणारत्नं येनेति पातालस्य, विच्छिद्य निपातितं नन्दनवनं येनेति स्वर्गस्य, प्रलोठितः परिवर्तितः कैलासः शैलो येनेति मर्त्यस्य, परिभावकत्वमुक्तम् ॥

रामेण समुद्रो बद्ध इति महत्त्वमाशङ्क्य तत्प्रतिक्षेपपरं तदाह—

**किं णिहणेमि रणमुहे सरेक्कसोसविअसाअरं रहुणाहम् ।**
**ओ सत्त वि अज्जं चिअ वलन्तवडवामुहे मलेमि समुद्दे ॥२९॥**

[किं निहन्मि रणमुखे शरैकशोषितसागरं रघुनाथम् ।
उत सप्ताप्यद्यैव वलद्वडवामुखान्मृद्नामि समुद्रान् ॥]

शरैरेकः शोषितः सागरो येन तं रघुनाथं किं रणमुखे निहन्मि मारयामि। उत पक्षान्तरे अद्यैव सप्तापि समुद्रान् मृद्नामि व्याकुलयामि । किंभूतान् । वलद्दिशि दिशि गच्छद्वडवामुखमौर्वानलो येषु तानिति क्षोभाधिक्यमुक्तम् । एकसमुद्राभिभावका-द्रामादुभयपक्षेणाप्यहमधिकः स्यामिति भावः । शरैकेन शोषित इति वा ॥

अथ युग्मकेनेन्द्रजितो रथारोहणमाह—

**इअ विण्णविअदहमुहो पच्छिमसारहिकरट्ठविअसीसक्को ।**
**आबद्धकवअमन्थरपअविक्कमभरणमन्तकित्थअतडिमम् ॥ ३० ॥**
**धअसिहरट्ठिअजलहरमुच्चन्तासणिपडिप्फलिअसूरकरम् ।**
**समरतुरिओ विलग्गइ रहं सुआसण्णरामधणुणिग्घोसो ॥ ३१ ॥**
**(जुग्गअम्)**

[इति विज्ञापितदशमुखः पश्चिमसारथिकरस्थायिशीर्षकः ।
आबद्धकवचमन्थरपदविक्रमभरनमद्विस्तृततडिमम् ॥]
[ध्वजशिखरस्थितजलधरमुच्यमानाशनिप्रतिफलितसूरकरम् ।
समरत्वरितो विलसति रथं श्रुतासन्नरामधनुर्निर्घोषः ॥]
(युग्मकम्)

इत्यनेन प्रकारेण विज्ञापितो दशमुखो येन स मेघनादः समरत्वरितः सन् रथं विलसति । आरोहति इत्यर्थः । इत्यग्रिमस्कन्धकेन समन्वयः । किंभूतः । पश्चिमेन पश्चाद्वर्तिना सारथिना करे स्थापितं शीर्षकं शिरस्त्राणं यस्य स तथा । रथं किंभूतम् । आ ईषद्बद्धो यः कवचः तेन मन्थरयोर्यन्त्रणाद्गुरूकृतयोः पादयोर्विक्रमा-दुद्धृत्तरोहणाद्भरेण गौरवेण नमदधोगच्छद्विस्तृतं तडिमं पश्चाद्वर्तिभित्तिभागो यस्य तम् । तथा च कवचं यथा तथा परिधायापि शीर्षकं न गृहीतवानिति त्वरातिशय

उक्तः ॥ पुनः किंभूतम्। ध्वजानां शिखरेषु स्थितैर्जलधरैर्मुच्यमानेष्वशनिषु प्रतिफलिताः संक्रान्ताः सूरस्य करा यत्र तम्। इति वज्रेषु रविकरसंघट्टाद्युद्योतप्रकर्षेण तडित्कल्पनम्। एतत्सर्वं मायाकल्पितमिति भावः। समरत्वराहेतुमाह—किंभूतः। श्रुत आसन्नस्य निकटवर्तिनो रामस्य धनुर्निर्घोषो येन। इति रणोत्साह उक्तः ॥

अथामुष्य प्रस्थानमाह—

इअ वारिअदहवअणो दहवअणाणत्तिविलइउक्खित्तभरो।
णीइ रहं आरूढो रक्खसपरिवारिओ दसाणणतणओ ॥ ३२ ॥

[इति वारितदशवदनो दशवदनाज्ञप्तिविलगितोक्षिप्तभरः।
निरेति रथमारूढो राक्षसपरिवारितो दशाननतनयः ॥]

इत्यनेन प्रकारेण वारितदशवदनो राक्षसैः परिवारितो वेष्टितश्च दशाननतनयो रथमारूढः सन् निरेति। रणाय निर्गच्छतीत्यर्थः। किंभूतः। दशवदनस्याज्ञया विलगितो योजितस्तनुत्क्षिप्त उत्थापितो भरः संग्रामरूपो येन स तथा। अन्यत्रापि समर्थेन केनचिदर्पितं भारादि समुत्थाप्यते इति ध्वनिः ॥

अथ रथवेगमाह—

जो दहमुहग्गदारे तुरिअपहाविअरहस्स जो णअरिमुहे।
खोहेन्तस्स कइबलं सो च्चिअ वेओ अ से पअत्तहलहलो ॥ ३३ ॥

[यो दशमुखाग्रद्वारे त्वरितप्रधावितरथस्य यो नगरीमुखे।
क्षोभयतः कपिबलं स एव वेगश्चास्य प्रवृत्तहलहलः ॥]

त्वरितं प्रधावितो रथो यस्य तथाभूतस्यास्य मेघनादस्य यो वेगो रथकृत एव दशमुखस्याग्रवर्तिनि द्वारे। मूलस्थान इत्यर्थः। यश्च नगरीमुखे लङ्काया गोपुरे। मध्य इत्यर्थः। कपिबलं क्षोभयतो विमर्दयतश्च तस्य स एव वेगो जात इत्यर्थात्। तथा च परेषां यथायथा पुरः समागमनं तथा तथा शत्रुसांनिध्येन वेगशैथिल्यं भवति। मेघनादस्य तु पितुरुत्साहनाय तदग्रे चरमकाष्ठापन्न एव जवोत्कर्ष आसीदथ पर्यन्ते संग्रामशिरसि तथैव स्थित इति रणोत्साहः सूचितः। वेगः कीदृक्। प्रवृत्तो हलहलः क्षोभविशेषो यस्माद्विपक्षाणामित्यर्थात्। शब्दोऽयं देशी ॥

अथ नीलादिभिरस्य प्रतिक्षेपमाह—

अह रामबद्धलक्खो पढमुद्धाइअपवंगमक्खविअबलो ।
वाणरजोहेहि समं जलणसुएण वरिओ दसाणणतणओ ॥ ३४ ॥

[अथ रामबद्धलक्ष्यः प्रथमोद्धावितप्लवङ्गमक्षपितबलः ।
वानरयोधैः समं ज्वलनसुतेन वृतो दशाननतनयः ॥]

अथ समरभूमिगमनोत्तरं रामे बद्धं लक्ष्यं शरलक्ष्यता येन तथाभूतो दशानन-तनयस्तत एव वानरयोधैर्हनूमदादिभिः समं ज्वलनसुतेन नीलेन वृतः । पुरो गत्वा प्रतीष्ट इत्यर्थः । कीदृक् । प्रथमोद्धावितमप्रेक्षितवेगमत एव प्लवङ्गमैः क्षपितं नाशितं बलं यस्य स तथा । ये पुरः समागतास्ते कपिभिर्हता इत्यर्थः ॥

अथ सर्वैरेकदा युद्धमाह—

णीलेण गण्डसेलं दिविएण दुमं सिलाअलं मारुइणा ।
दारेइ सरेहि समं णलेण मुक्कं अ मलअसिहरक्खण्डम् ॥ ३५ ॥

[नीलेन गण्डशैलं द्विविदेन द्रुमं शिलातलं मारुतिना ।
दारयति शरैः समं नलेन मुक्तं च मलयशिखरखण्डम् ॥]

नीलादिभिर्मुक्तं गण्डशैलादिकं सममेकदैव शरैर्दारयति मेघनाद इत्यर्थादिति निगदव्याख्यातम् । गण्डशैलो गिरेः स्थूलोपलः ॥

अथ विभीषणमन्त्रणमाह—

तो भग्गपवअसेण्णं णिउम्भिलाहुत्तसच्चविअपत्थाणम् ।
वारेह मेहणाअं विभीसणेण भणिओ सुमित्तातणओ ॥ ३६ ॥

[ततो भग्नप्लवगसैन्यं निकुम्भिलाभिमुखसत्यापितप्रस्थानम् ।
वारयत मेघनादं विभीषणेन भणितः सुमित्रातनयः ॥]

ततो युद्धानन्तरं भग्नं प्लवगानां सैन्यं येन । एवम्—निकुम्भिला नाम यज्ञ-स्थानं तदभिमुखं सत्यापितं स्थिरीकृतं प्रस्थानं येन । यष्टुमित्यर्थात् । तं मेघनादं वारयत । यथा तत्र न याति तथाचरतेति विभीषणेन सुमित्रातनयो लक्ष्मणो भणितः । तत्र गत्वा तृतीयवेलायामस्यां ब्रह्मणो वरं लब्ध्वा दुर्जयः स्यादिति भावः ॥

अथ मेघनादपतनमाह—

तो माआहि सरेहि अ सेलेहि अ जुज्झिअस्स रक्खससरिसम् ।
सोमित्तिणा णिसुद्धं पिआमहत्थेण मेहणाअस्स सिरम् ॥ ३७ ॥

[ततो मायाभिः शरैश्च शल्यैश्च युद्धस्य राक्षससदृशम् ।
सौमित्रिणा निपातितं पितामहास्त्रेण मेघनादस्य शिरः ॥]

ततो विभीषणमन्त्रणानन्तरं मायाभिर्मेघवृष्टिजलपातादिभिः शरैः शल्यैश्च राक्षससदृशं तद्योगं यथा स्यात् । अत्युत्कटमित्यर्थः । तथा युद्धस्य कृतयुद्धस्य । कर्तरि क्तः । मेघनादस्य शिरः सौमित्रिणा ब्रह्मास्त्रेण निपातितम् ॥

अथ रावणरोदनमाह—

सोऊण इन्दइवहं मुअइ सरोसं दसाणणो बाहजलम् ।
अब्भुत्तियदीवाणं णिवडइ तुप्पं व तक्खणं सहुआसम् ॥ ३८ ॥

[श्रुत्वा इन्द्रजिद्वधं मुञ्चति सरोषं दशाननो बाष्पजलम् ।
अभ्युत्तेजितदीपानां निर्बलति घृतमिव तत्क्षणं सहुताशम् ॥]

इन्द्रजितो वधं श्रुत्वा दशाननः सरोषं बाष्पजलं मुञ्चति । तच्च निर्बलति पृथग्भूय पततीत्यर्थः । किमिव । घृतमिव यथाभ्युत्तेजितानां दीपानां घृतं सहुताशं दीपरश्मिसंपर्कि सन्निर्बलति द्रवीभवति इति दीपदशाननयो रश्मिरोषयोर्घृतबाष्पयोस्तौल्यादुपमा । तथा च तदानीमुत्तेजितदीपवद्दशाननोऽभूदिति भावः ॥

अथ रावणस्य रोषविषादावाह—

णिहए अ मेहणाए परिअत्तन्तेण तक्खणं चिअ विहिणा ।
रोसविसाएहि समं हत्थेहि व दोहि आहदो दहवअणो ॥ ३९ ॥

[निहते च मेघनादे परिवर्तमानेन तत्क्षणमेव विधिना ।
रोषविषादाभ्यां समं हस्ताभ्यामिव द्वाभ्यामाहतो दशवदनः ॥]

च पुनर्मेघनादे निहते सति तत्क्षणमेव परिवर्तमानेन विरुद्धवृत्तिना विधिनादृष्टेन विधात्रा च द्वाभ्यां हस्ताभ्यामिव रोषविषादाभ्यां दशवदन आहतस्ताडितः । तथा च विधेरपि इन्द्रजितो भीतिः स्थिता, हते च तस्मिन् रावणवधेऽपि साध्यवसायत्वात्प्रतिकूलत्वं जातमिति रावणरोषविषादौ विधिहस्तत्वेनोत्प्रेक्ष्य तत्ताडन-

मुक्तम्, तेन विधिताडितो न जीवतीति ध्वनितम् । प्रकृते रोषविषादयोरेव युद्धहेतुत्वेन मृत्युहेतुत्वमित्याशयः । अन्येनापि रिपुर्हस्ताभ्यां ताड्यत इति ध्वनिः । यद्वा विधेरपि मेघनादजीवनपर्यन्तमेवानुकूल्यं स्थितम्, हते च तस्मिन् प्रातिकूल्यं जातम्, अतस्तथा कृतवानिति भावः ॥

अथ पुनरपि रावणप्रयाणमाह—

णीसेसणिहअबन्धू तो सो एक्को वि बहुभुआदुप्पेच्छो ।
भीषणमुहसंघाओ रक्खसलोओ व णिग्गओ दहवअणो ॥ ४० ॥

[निःशेषनिहतबन्धुस्ततः स एकोऽपि बहुभुजादुष्प्रेक्ष्यः ।
भीषणमुखसंघातो राक्षसलोक इव निर्गतो दशवदनः ॥]

ततो रोषविषादानन्तरं निःशेषं निहतो बन्धुर्यस्य स हतसकलराक्षसतया एकोऽप्यसहायोऽपि दशवदनो राक्षसलोक इव राक्षसपुञ्ज इव निर्गतो रणायेत्यर्थात् । पुञ्जत्वे हेतुमाह—कीदृक् । बह्वीभिर्भुजाभिर्दुष्प्रेक्ष्यः । एवम्—भीषणो भयानको मुखानां समूहो यस्य तथा । तथा च द्विभुजैकमुखत्वेन प्रसिद्धलोकवैलक्षण्याद्रोषादुत्फुल्लतया विंशतावपि बाहुषु दशस्वपि मुखेषु कोटिकोटिबुद्धिर्भवतीत्युत्प्रेक्षा मर्त्यलोकादिवद्राक्षसलोकः ॥

अथामुष्य रथारोहणमाह—

णवरि अ पवणपणोल्लिअकसणपलाआदरन्धआरिअसूरम् ।
परिणअमत्तेरावणमअपव्वालिअतुरंगकेसरभारम् ॥ ४१ ॥

[अनन्तरं च पवनप्रणोदितकृष्णपताकादरान्धकारितसूरम् ॥
परिणतमत्तैरावणमदप्लाविततुरङ्गकेसरभारम् ॥]

निर्गमनानन्तरं स रथमारूढ इत्युत्तरस्कन्धकेन संदानितकम् । किंभूतम् । पवनेन प्रणोदिताश्चालिता याः कृष्णपताकास्ताभिरन्धकारितोऽन्धकारविशिष्ट इव कृतः सूरो येन तम् । पवनोत्थापितत्वेन पताका एव सूर्यबिम्बलग्नाः श्यामतया सूर्योऽप्यन्धकारालिङ्गित इति बुद्धिं जनयन्तीति भावः । अत एवोत्पातादयोऽत्र सूचिताः । नीलपताकानां बाहुल्येन सूर्यस्य छन्नतया रविरप्यन्धकारच्छन्न इति बुद्धिर्वा । एवम्—परिणतः परिवृत्य कृताघातो यो मत्तैरावणस्तस्य मदैः प्लावितस्तुरङ्गाणां केसरभारो यत्रेति पूर्वपूर्वमपि बहुयुद्धसहत्वमुक्तम् ॥

चक्कमलमइलिओअरधअवडपुसिअससिबिम्बपच्छिमभाअम् ।
धणअगआभङ्गुग्गअसिहिजालालुङ्खिअं रहं आरूढो ॥ ४२ ॥
(जुग्गअम्)

[चक्रमलमलिनितोदरध्वजपटप्रोञ्छितशशिबिम्बपश्चिमभागम् ।
धनदगदाभङ्गोद्गतशिखिज्वालाकलुषितं रथमारूढः ॥]
(युग्मकम्)

पुनः किंभूतम् । चक्राणां मलेन मलिनितं घर्षणे सति संक्रान्तेन श्यामीकृतमुदरं यस्य तथाभूतः सन् तदानीं ध्वजपटेन प्रोञ्छितः शशिबिम्बस्य पश्चिमस्तलवर्तिभागो येन तथाभूतम् । चन्द्रे चक्रमलसंबन्धादुत्पन्ना श्यामिका पताकया प्रोञ्छ्यापसार्यते येनेति गगनचारित्वमुच्चत्वं च सूचितम् । एवम्—धनदस्य गदाया भङ्गादुद्गताभिः शिखिज्वालाभिः कलुषितमीषद्दाहाद्धूम्रीकृतम् । पूर्वं युद्धे सति कुबेरस्य गदा तत्र प्रहारेण भग्ना ततोऽग्निरुत्थितस्तेन कलुषमिति बहुयुद्धसहत्वमुक्तम् ॥ युग्मकम् ॥

अथ निशिचरीणामुद्वेगप्रकाशमाह—

दट्ठूण अ तं णिन्तं पीआ मङ्गलमणाहि रअणिअरीहिं ।
अत्तो च्चिअ उप्पण्णा तेहिं च्चिअ लोअणेहि बाहत्थबआ ॥ ४३ ॥

[दृष्ट्वा च तं निर्यान्तं पीता मङ्गलमनोभी रजनीचरीभिः ॥
अत एवोत्पन्नास्ताभ्यामेव लोचनाभ्यां बाष्पस्तबकाः ॥]

च पुनस्तं निर्यान्तं दृष्ट्वा मङ्गलचित्ताभिर्निशाचरीभिर्याभ्यामेव लोचनाभ्यामुत्पन्ना बाष्पस्तबकास्ताभ्यामेव पीताः । निहतसकलबन्धुत्वेन रावणः स्वयमेव रणाय गच्छतीति शोच्यबुद्ध्या निर्गता अप्यश्रुबिन्दवो यात्रायाममङ्गलानि मा भवन्त्विति पुनरन्तर्नीता इत्यर्थः ॥

अथ रावणस्य कपिसैन्यदर्शनमाह—

तो तेण करअलट्ठिअसेलोज्झरसलिलणिवरिअवच्छअडम् ।
दिट्ठीहि अ बाणेहि अ तुलिअं जाइ लहुअं पवंगमसेण्णम् ॥ ४४ ॥

[ततस्तेन करतलस्थितशैलनिर्झरसलिलनिर्वृतवक्षःस्थलम् ।
दृष्टिभिश्च बाणैश्च तुलितं याति लघुतां प्लवङ्गमसैन्यम् ॥]

ततो युद्धक्षेत्रगमनानन्तरं तेन रावणेन दृष्टिभिश्च बाणैश्च तुलितं प्लवङ्गमसैन्यं लघुतां याति । प्रथमं दर्शनेनैव ज्ञातं कपिबलमिदं मदुपमर्दं न सहिष्यते, चरमं शरत्यागे निर्धारितमिति तुलितपदार्थः । सांमुख्ये सति क्षुब्धं शरत्यागे सति क्षुब्धतरमभूदिति लघुतापदार्थः । किंभूतम् । करतलस्थितस्य शैलस्य निर्झरसलिलेन निर्वृतं शीतलितं वक्षःस्थलं यस्य तत् । तथा च रावणदर्शनादुत्तप्ते हृदि क्षोभोद्भूतकरकं येन पर्वतपरिवृत्त्या निर्झरपातेन शैत्यमभूदत एव दृष्ट्या तुलितमिति भावः । अन्यदपि तुलायामारोपितं सत्त्वशून्यतया लघुतामेव गच्छतीति ध्वनिः । 'बाणेहि व' इति पाठे बाणैरिव यथा बाणैस्तुलितं लघुतां याति तथा दृष्टिभिरपीति सहोपमा ॥

अथ विभीषणदर्शनमाह—

**पासावडिअम्मि वि से विहीसणे पवअसेण्णकअपरिवारे ।**
**दीणो त्ति सोअरो त्ति अ अमरिसरससंधिओ वि उल्लइ सरो ॥ ४५ ॥**

[पार्श्वापतितेऽप्यस्य विभीषणे प्लवगसैन्यकृतपरिवारे ।
दीन इति सोदर इति चामर्षरससंधितोऽप्युल्ललति शरः ॥]

अस्य रावणस्य पार्श्वापतितेऽप्यस्य विभीषणे अमर्षरसेन संहितोऽपि शरः दीन इति सोदरोऽयमिति हेतोरुल्ललति वे(व्य)द्धुं न स्थिरीभवतीत्यर्थ इति रोषकरुणभावयोः संधिरित्यग्रे कृपया न विद्ध इति भावः । किंभूते । प्लवगसैन्येन कृतः परिवारो वेष्टनं यस्य । यद्वा प्लवगसैन्यं कृतः परिवारः परिजनो येन तस्मिन्नित्यर्थः ॥

अथ लक्ष्मणस्य शक्तिवेधमाह—

**विसहिअपढमप्पहरो णवरि अ रोसेण संधिउब्भडबाणो ।**
**इन्दासणीअ व दुमो सत्तीअ उरम्मि लक्खणो णिब्भिण्णो ॥ ४६ ॥**

[विसोढप्रथमप्रहारोऽनन्तरं च रोषेण संधितोद्भटबाणः ।
इन्द्राशन्येव द्रुमः शक्त्योरसि लक्ष्मणो निर्भिन्नः ॥]

विसोढः प्रथमप्रहारो येन । रिपोरित्यर्थात् । अनन्तरं च रोषेण संधित उद्भटो बाणो येन तथाभूतो लक्ष्मणः शक्त्या उरसि निर्भिन्नस्ताडितः । रावणेनेत्यर्थात् ।

एकं रावणप्रहारं सोढ्वा यावद्बाणं लक्ष्मणः संदधाति तावदेव शक्त्या निर्भिन्न इत्यर्थः । द्रुम इव । यथा इन्द्राशन्या वज्रेण द्रुमो निर्भिद्यते तथेत्यर्थः ॥

अथ लक्ष्मणस्य विशल्यकरणमाह—

**सो वि अ पवणसुआणिअधराहरोसहिविइण्णजीअब्भहिओ ।**
**तह संधिअचावसरो णिसाअरेहि सह जुज्झिउं आढत्तो ॥ ४७ ॥**

[सोऽपि च पवनसुतानीतधराधरौषधिवितीर्णजीवाभ्यधिकः ।
तथा संधितचापशरो निशाचरैः सह योद्धुमारब्धः ॥]

सोऽपि च लक्ष्मणः पवनसुतेनानीतस्य धराधरस्य औषध्या वितीर्णेन प्रत्यानीय दत्तेन जीवेन प्राणपञ्चकेनाभ्यधिको नूतनसृष्ट्या श्रमराहित्येन परमतेजस्वी सन् निशाचरैः सह योद्धुमारब्धः । कीदृक् । तथा पूर्ववदेव संधितं चापशरं येन स तथेति क्षतजन्यधातुवैषम्याभाव उक्तः ॥

अथ त्रिभिरादिकुलकेनेन्द्ररथागमनमाह—

**अह रामो वि णिअच्छइ तुरअखुरप्पहरविहलजलहरवट्टम् ।**
**ठिअवज्जहरालम्बिअकणअद्धअक्खम्भणिम्महन्तपरिमलम् ॥ ४८ ॥**

[अथ रामोऽपि निर्ध्यायति तुरगखुरप्रहारविह्वलजलधरपृष्ठम् ।
स्थितवज्रधरालम्बितकनकध्वजस्तम्भनिर्यत्परिमलम् ॥]

अथ लक्ष्मणविशल्यतानन्तरं रामोऽपि स्वर्गान्निपतितं रथं निर्ध्यायति पश्यतीति तृतीयस्कन्धकेन सहान्वयः । किंभूतम् । तुरगाणां खुरप्रहारेण विह्वलानि स्थाने स्थाने खण्डितानि जलधराणां पृष्ठानि यस्मात्तम् । एवम्—स्थितेन वज्रधरेणालम्बितात्पृष्ठेनावष्टब्धात्कनकध्वजस्तम्भान्निर्यन्परितः प्रसर्पन्परिमलः सौरभं यत्र । इन्द्रदेहस्थितपारिजातादिसंबन्धात् ॥

**वामभुअगहिअपग्गहमाअलिभरणमिअदीहरधुरादण्डम् ।**
**भिज्जन्तमेहसीहरतण्णाओणअणिसण्णचामरपम्हम् ॥ ४९ ॥**

[वामभुजगृहीतप्रग्रहमातलिभरनमितदीर्घधुरादण्डम् ।
भिद्यमानमेघशीकरार्द्रावनतनिषण्णचामरपक्ष्माणम् ॥]

किंभूतम् । वामभुजेन गृहीतः प्रग्रहो वल्गा येन स तस्य मातलेरिन्द्रसुतस्य भरेण

नमितो दीर्घो धुरादण्डो यत्र तम् । अधःपतनेन मातलेरपि तदुपरि नमनादिति भावः । एवम्—भिद्यमानस्य द्विधाभूतस्य वर्त्मवर्तिनो मेघस्य शीकरैरम्बुकणैरार्द्रीण्यत एवावनतानि सन्ति निषण्णानि मिथो मिलितानि चामराणां पक्ष्माणि यत्रेत्यलंकृतत्वमुक्तम् ॥

ससिणिहसतुसारोल्लिअरविअरवसुआअधअवडसिहद्धन्तम् ।
उण्णअपच्छिमतडिमं णिवडन्तं खअवइं व सग्गाहि रहम् ॥५०॥
(आदिकुलअम्)

[शशिनिघर्षतुषारार्द्रितरविकरशुष्कध्वजपटशिखार्धान्तम् ।
उन्नतपश्चिमतडिमं निपतन्तं खगपतिमिव स्वर्गैरित्थम् ॥]
(आदिकुलकम्)

किंभूतम् । शशिनो निघर्षे सति तदीयतुषारैरार्द्रीकृतः पश्चात्तदधोवर्तिनो रवेः करैः शुष्को ध्वजपटस्य शिखाग्रं तदर्धान्तो यत्र तमिति तावद्दूरादागमनमुक्तम् । एवम्—उन्नतं पश्चिमतडिमं यस्य । अग्रभागेणाधःपतने पश्चाद्भागस्योत्थितत्वादिति भावः । खगपतिमिव । यथा गरुडः स्वर्गादधो गच्छतीत्यर्थः । आदिकुलकम् ॥

अथ रामस्य मातलिमेलनमाह—

तो रामो माअडिणा पढमदराभासणुम्मुहपसण्णमुहो ।
तिअसबहुमाणगरुअं दूरअरोणामिआणणेण पणमिओ ॥ ५१ ॥

[ततो रामो मातलिना प्रथमदराभाषणोन्मुखप्रसन्नमुखः ।
त्रिदशबहुमानगुरुकं दूरतरावनमिताननेन प्रणतः ॥]

तत आगमनानन्तरं दूरतरमतिदूरमत एवावनम्रीकृतं मुखं येनेत्यादर उक्तः । तादृशेन मातलिना रामः प्रणतो नमस्कृतः । त्रिदशानामिन्द्रादीनां बहुमानेन सत्कारेण गुरुकमतिशयितं यथा स्यात् । रामः कीदृक् । प्राथमिके कुशलप्रश्नादिरूपे किंचिदाभाषणे उन्मुखं सत्प्रसन्नं मुखं यस्य स इति प्रतीतत्वमुक्तम् ॥

अथ कवचदानमाह—

देइ अ रहपुञ्जइअं उहअकरक्खिवणपाअडिअवित्थारम् ।
कवअं तिहुअणवइणो अब्भन्तरलग्गणिम्महन्तपरिमलम् ॥ ५२ ॥

[ददाति च रथपुञ्जितमुभयकरक्षेपणप्रकटितविस्तारम् ।
कवचं त्रिभुवनपतेरभ्यन्तरलग्ननिर्यत्परिमलम् ॥]

त्रिभुवनपतेरिन्द्रस्य । त्रिभुवनपतये रामायेति वा । चतुर्थ्यर्थे षष्ठी । कवचं ददाति च । मातलिरित्यर्थात् । किंभूतम् । रथे पुञ्जितम् । तत्रैव स्थापितत्वादिति महत्त्वमुक्तम् । अथोत्थापने सति उभयकराभ्यां क्षेपणेन पार्श्वयोर्बाहुद्वयस्थानोत्थापनेन प्रकटितो विस्तारो यस्य । हृदयोत्थापनाभिव्यञ्जनादुभयकरस्थानयोः क्षेपणेन वा । एवम्—अभ्यन्तरे लग्नः सन्निर्यन्नितस्ततः प्रसर्पन् परिमलः श्रीखण्डादेर्यत्र तमिति तत्कालोत्तारितत्वमुक्तम् ॥

अथ कवचपरिधानमाह—

तं च कवअं सुराहिवसवङ्गपहुत्तलोअणसुहप्फरिसम् ।
सीआविरहोलुग्गे जाअं थोअसिढिलं रहुवइस्स उरे ॥ ५३ ॥

[तच्च कवचं सुराधिपसर्वाङ्गप्रभूतलोचनसुखस्पर्शम् ।
सीताविरहावरुग्णे जातं स्तोकशिथिलं रघुपतेरुरसि ॥]

तच्च कवचं सीताया विरहेणावरुग्णे दुर्बले रघुपतेरुरसि स्तोकमीषत् शिथिलं जातम् । दौर्बल्यादेव किंचिदवकाशादिति रामस्येन्द्रतुल्यदेहत्वमुक्तम् । किंभूतम् । सुराधिपस्य सहस्राक्षस्य सर्वाङ्गेषु प्रभूतानां व्याप्तानां लोचनानां सुखस्पर्शम् । नयनस्य कठिनस्पर्शासहत्वेन तत्तत्स्थानेषु कोमलीकृतत्वादिति भावः ॥

अथ कवचबन्धनमाह—

महिअलमोइण्णेण अ सुरवइहत्थपरिमाससइदुल्ललिअम् ।
आरूढस्स रहं से कवअं सवङ्गिअं कअं माअडिणा ॥ ५४ ॥

[महीतलमवतीर्णेन च सुरपतिहस्तपरिमर्षसदादुर्ललितम् ।
आरूढस्य रथमस्य कवचं सर्वाङ्गिकं कृतं मातलिना ॥]

महीतलमवतीर्णेन समागतेन च मातलिना कवचं रथमारूढस्यास्य रामस्य सर्वाङ्गिकं सर्वाङ्गव्यापि कृतं च । रथारोहणानन्तरं कवचपरीधानमिति चार्थः । किंभूतम् । सुरपतेर्हस्ताभ्यां परिमर्षेण रजोमार्जनादिना व्यापारेण दुर्ललितं स्नेहपात्रीकृतम् । उज्ज्वलीकरणादिति रामे तत्पक्षपात उक्तः ॥

अथ रामे लक्ष्मणविज्ञप्तिं प्रस्तौति—

**तो णीलरविसुराहिँ समहिओ राहवं सुमित्तातणओ ।**
**भणइ धरणीअ तक्खणविलइअधणुगब्भिणं णिमेऊण करम् ॥५५॥**

[ततो नीलरविसुताभ्यां समन्वितो राघवं सुमित्रातनयः ।
भणति धरण्यां तत्क्षणविलगितधनुर्गर्भितं निवेश्य करम् ॥]

ततो रामस्य कवचपरिधानोत्तरं नीलसुग्रीवाभ्यां समन्वितः सुमित्रातनयो धरण्यां करं निवेश्य राघवं भणति । किंभूतं करम् । तत्क्षणे विलगितेन गृहीतेन धनुषा गर्भितम् । पूर्णाभ्यन्तरमित्यर्थः । मुष्टिना धृतत्वादिति भावः ॥

त्रिभिर्विज्ञप्तिवाक्यमाह—

**वीसमउ तुम्ह चावं अडणिमुहप्फिडिअसिढिलजीआबन्धम् ।**
**अइरा पेच्छ विराअं ममम्मि णीले व रविसुए व दहमुहम् ५६**

[विश्राम्यतु तव चापमटनिमुखस्फेटितशिथिलज्याबन्धम् ।
अचिरात्पश्य विशीर्णं मयि नीले वा रविसुते वा दशमुखम् ॥]

हे राम, तव, चापम् अटनिमुखस्फेटित उत्तारितः सन् शिथिलोऽस्तब्धो ज्याबन्धो यत्र तथा सत् विश्राम्यतु सुखीभवतु । प्रान्तादुत्तार्य धनुष्येव ज्या निवेश्यत इति संप्रदायः । तर्हि रावणस्य का वार्तेत्यत आह—मयि नीले वा रविसुते वा सति विशीर्णं विशकलितप्रत्येकावयवं दशमुखं पश्य । समर्थे सेवके सति प्रभुणा न युध्यत इति भावः ॥

तव योग्योऽपि नायमित्याह—

**गुरुअम्मि कुणसु कोवं लहुए दहमुहवहम्मि मुअसु अमरिसम् ।**
**तुङ्गं तटं णिसुम्भइ ण अ णइवप्पं समत्थलिं व वणगओ ॥५७॥**

[गुरौ कुरुष्व कोपं लघौ दशमुखवधे मुञ्चामर्षम् ।
तुङ्गं तटं निपातयति न च नदीवप्रं समस्थलीं वा वनगजः ॥]

हे राम, गुरावस्मदाद्यसाध्ये कोपं स्वव्यापाराय कुरुष्व । लघौ सुकरत्वादस्मदादिसाध्ये दशमुखवधेऽमर्षं मुञ्च । अपकर्षहेतुत्वादन्यथासिद्धत्वादिति भावः । अर्थान्तरं न्यस्यति—वनगजस्तुङ्गमुच्चं तटं पर्वतादेर्निपातयति न च नदीवप्रं वेला-

दिरूपं समस्थलीं समभूमिं वा निपातयतीत्यर्थस्तेषामनुच्चत्वेन बुद्ध्यानारोहादिति भावः ॥

स्वयं सामर्थ्येऽपि प्रभुणा परिजन एव भारो निधीयत इति दृष्टान्तयन्नाह—

पज्जत्तस्स समत्थं दहिउं अद्धच्छिपेच्छिएण वि तिउरम् ।

रहुवइ किं व ण सुवइ आणत्ती तिणअणस्स तिअसेहि कआ ५८

[पर्याप्तस्य समस्तं दग्धुमर्धाक्षिप्रेक्षितेनापि त्रिपुरम् ।

रघुपते किं वा न शृणोषि आज्ञप्तिस्त्रिनयनस्य त्रिदशैः कृता ॥]

हे रघुपते, किं वा न शृणोषि न श्रुतवानसि त्रिनयनस्याज्ञप्तिराज्ञा त्रिदशैः कृता । त्रिपुरवध इत्यर्थात् । किंभूतस्य । अर्धाक्षिप्रेक्षितेनापि कटाक्षमात्रेण समस्तं त्रिपुरं दग्धुं पर्याप्तस्य समर्थस्य । तथा चेतरासाध्यमेव प्रभुणा साध्यत इति भावः ॥

अथ रामस्य प्रत्युत्तरमाह—

तो दहवअणालोअणरोसुग्गअसेअलङ्घिअणिलाडअडो ।

पुलइअणीलरविसुओ पणअं पडिभणइ लक्खणं रहुणाहो ॥५९॥

[ततो दशवदनालोकनरोषोद्गतस्वेदलङ्घितललाटतटः ।

प्रलोकितनीलरविसुतः प्रणतं प्रतिभणति लक्ष्मणं रघुनाथः ॥]

ततो लक्ष्मणवचनोत्तरमवलोकितनीलसुग्रीवः सन् प्रणतं लक्ष्मणं रघुनाथः प्रतिभणति । किंभूतः । दशवदनालोकनाद्रोषेणोद्गतैः स्वेदैर्लङ्घितमतिक्रान्तं ललाटतटं यस्य(?)तीर्ष्योक्ता ॥

प्रत्युत्तरवाक्यमाह—

णिव्वूढजम्पिआणं आसङ्कइ तुम्ह ववसिअं मह हिअअम् ।

किं उण भरो व होहिइ सअं अणिट्ठविअदहमुहो मज्झ भुओ ६०

[निर्व्यूढजल्पितानामध्यवस्यति युष्माकं व्यवसितं मम हृदयम् ।

किं पुनर्भर इव भविष्यति स्वयमनिष्ठापितदशमुखो मम भुजः ॥]

मम हृदयं कर्तृ निर्व्यूढजल्पितानां निर्वाहितस्वप्रतिज्ञानां युष्माकं व्यवसितं कर्म अध्यवस्यति । सिद्धत्वेन जानातीत्यर्थः । किं पुनः किं तु स्वयमात्मनानिष्ठापितदशमुखो भवद्भिरेव नाशितत्वादविनाशितरावणः सन्नेष मम भुजो भर इव भविष्यति । अकृतैवंविधकार्यत्वादुद्वहने गुरुरेव स्यादिति मयैव हन्तव्य इति भावः ॥

पुनस्तदेवाह—

**कुम्भस्स पहत्थस्स अ दूसह णिहणेण इन्दइस्स अ समरे ।**
**दसकण्ठं मुहवडिअं केसरिणो वणगअं व मा हरह महम् ॥६१॥**

[कुम्भस्य प्रहस्तस्य च तुष्यत निधनेनेन्द्रजितश्च समरे ।
दशकण्ठं मुखपतितं केसरिणो वनगजमिव मा हरत मम ॥]

हे सुग्रीव, नील, लक्ष्मण, यथासंख्यं समरे कुम्भस्य प्रहस्तस्य चेन्द्रजितश्च निधनेन यूयं तुष्यत। कृतस्वस्वकार्यत्वात्। मम केसरिणो मुखपतितं संमुखगतं वनगजमिव दशकण्ठं मा हरत मा आच्छिद्य गृह्णीत। तथा सत्याक्षिप्तगजः सिंह इवाहमकृतार्थ एव स्यामित्युत्प्रेक्षया व्यज्यते। केसरिणो वनगजमिवेति क्रमादुपमा वा ॥

अथ रावणस्य शरत्यागमाह—

**ताण अ कहं पअत्तं वोच्छिन्दन्तस्स दहमुहस्स रणमुहे ।**
**उम्मूलिउं पअत्तो अग्गक्खन्धम्मि कइबलं सरणिवहो ॥ ६२ ॥**

[तेषां च कथां प्रवृत्तां व्यवच्छिन्दतो दशमुखस्य रणमुखे ।
उन्मूलयितुं प्रवृत्तोऽग्रस्कन्धे कपिबलं शरनिवहः ॥]

च पुनर्दशमुखस्य शरनिवहो रणमुखेऽग्रस्कन्धे सैन्याग्रे । स्थितमित्यर्थात्। कपिबलमुन्मूलयितुं प्रवृत्तः। अभवदित्यर्थात् । अत एव तेषां रामादीनामित्थं प्रवृत्तां कथां व्यवच्छिन्दतो विघटयतः। आकस्मिकरावणशरत्यागेन सर्वे संभ्रान्ता बभूवुरित्यर्थः ॥

अथ रामरावणयोर्युद्धमाह—

**तो दोण्ह वि समसारं बाणवहप्फिडिअतिअसपेक्खिज्जन्तम् ।**
**एक्कअरमरणगरुअं जाअं रामस्स दहमुहस्स अ जुज्झम् ॥ ६३ ॥**

[ततो द्वयोरपि समसारं बाणपथस्फेटितत्रिदशप्रेक्ष्यमाणम् ।
एकतरमरणगुरुकं जातं रामस्य दशमुखस्य च युद्धम् ॥]

ततो रावणशरपातानन्तरं रामस्य दशमुखस्य च द्वयोरपि युद्धं जातम्। रामेण रावणः प्रतीष्ट इत्यर्थः। किंभूतम्। समसारं समबलम्। एवम्—बाणपथस्फेटितबाणपातभिया बहिर्भूतस्थिता ये त्रिदशास्तैः प्रेक्ष्यमाणम्। आकाशादित्यर्थात्। एवम्—एकतरस्य मरणेन गुरुकं सातिशयम् ॥

अथ रामोरसि बाणप्रहारमाह—

तो कड्ढिऊण चावं कुण्डलमणिकिरणघडिअजीआबन्धम् ।
मुक्को रामस्स उरे पढमं हअबन्धुणा दहमुहेण सरो ॥ ६४ ॥

[ततः कृष्ट्वा चापं कुण्डलमणिकिरणघटितज्याबन्धम् ।
मुक्तो रामस्योरसि प्रथमं हतबन्धुना दशमुखेन शरः ॥]

ततो युद्धारम्भानन्तरं यतो हतसकलपुत्रभ्रातादिबन्धुनात एव पीडितत्वात्प्रथमं दशमुखेन रामस्योरसि शरो मुक्तः । किं कृत्वा । कुण्डलमणिकिरणैर्घटितः संबद्धो ज्याबन्धो यत्र तद्यथा स्यादेवं चापं कृष्ट्वा । आकर्णमित्यर्थः । चापविशेषणं वा कुण्डलेत्यादि ॥

अथ रामक्षोभमाह—

वेअपडिएण तेण अ तह धीरो वि परिकम्पिओ रहुणाहो ।
अप्पाणणिविसेसं सअलं जह णेण कम्पिअं तेल्लोक्कम् ॥ ६५ ॥

[वेगपतितेन तेन च तथा धीरोऽपि परिकम्पितो रघुनाथः ।
आत्मनिर्विशेषं सकलं यथानेन कम्पितं त्रैलोक्यम् ॥]

वेगात्पतितेन तेन च शरेण धीरोऽपि रघुनाथस्तथा कम्पितो यथानेन रघुनाथेनात्मनिर्विशेषं सदृशं यथा स्यादेवं सकलं त्रैलोक्यं कम्पितम् । रामविपत्तिशङ्कित्वादिति भावः । वस्तुतस्तु आत्मनो निर्विशेषमभिन्नमात्मस्वरूपं त्रैलोक्यं कम्पितम् । रामस्य विष्णुरूपत्वेन सर्वस्यापि तदात्मकत्वात्स्वकम्पे स्वाभिन्नकम्पो युज्यत एव । विश्वंभरत्वेन वा तत्कम्पे त्रैलोक्यकम्प इति वयम् ॥

अथ रामशरत्यागमाह—

रहुणाहस्स वि बाणो अणुपरिवाडिघडिअप्फुडिअकेऊरम् ।
दहवअणभुअणिहाअं तालवणक्खन्धपरिअएण अइगओ ॥ ६६ ॥

[रघुनाथस्यापि बाणोऽनुपरिपाटिघटितस्फुटितकेयूरम् ।
दशवदनभुजनिघातं तालवनस्कन्धपरिचयेनातिगतः ॥]

रघुनाथस्यापि बाणस्तालवनस्कन्धेषु यः परिचयोऽभ्यासस्तेन दशवदनस्य भुजसमूहमतिगतोऽतिक्रम्य गतः । पुरा सप्ततालानेकदैवाभिनत्तद्रीत्यैव रावणस्य

विंशतिमपि बाहून्भित्त्वा गत इत्यर्थः। किंभूतम्। अनुपरिपाट्यानुक्रमेण घटिता एकाभिमुख्येन स्थिताः, अथ च स्फुटिता बाणेनैव विद्धाः केयूरा येषु (यस्मिन्) तमित्यङ्गदस्थान एव भुजानभिनदित्याशयः॥

अथ रावणस्य बाणत्यागे लाघवमाह—

**अण्णं संधिअबाणं रहसाअड्ढिअणिराअवट्ठं अण्णम्।**
**समअं रक्खसवइणो अण्णं सरलहुइओअरं होइ धणुम्॥ ६७॥**

[अन्यत्संधितबाणं रभसाकृष्टनिरायतपृष्ठमन्यत्।
समं राक्षसपतेरन्यल्लघुकृतोदरं भवति धनुः॥]

राक्षसपतेर्धनुः सममेकदैव भवति। कीदृशम्। संतितबाणं सत् अन्यत् अन्यावस्थं समकोटिद्वयत्वात्। रभसेनाकृष्टत्वान्निरायतपृष्ठमुत्थापितपृष्ठं सदन्यत् कोटिद्वयनमनात्। शरैर्लघूकृतोदरं शरत्यागेन तुच्छोदरं सत् अन्यद्विकटोदरत्वात्। इति संधानाकर्षणत्यागानामेककालिकत्वेन शिक्षाकौशलमुक्तम्॥

अथ रामस्यापि तदाह—

**सइसंधिअणिन्तसरं अवङ्गदेससइलग्गजीवाबन्धम्।**
**दीसइ सइमुक्कसरं सइमण्डलिअविअडोअरं रामधणुम्॥ ६८॥**

[सदासंधितनिर्यच्छरमपाङ्गदेशसदालग्नज्याबन्धम्।
दृश्यते सदामुक्तशरं सदामण्डलितविकटोदरं रामधनुः॥]

रामधनुर्दृश्यते। कीदृशम्। सदा संधिताः सन्तो निर्यान्तः शरा यस्मादिति संधानसमकालमेव निर्गमनमुक्तम्। यद्वा—सदासंधितशरं सदानिर्यच्छरमिति व्यवस्थाद्वयकथनम्। एवम्—अपाङ्गदेशे सदालग्नज्याबन्धं सदैवाकर्णकृष्टमित्यर्थः। एवम्—सदामुक्तशरमसंधानदशायामेव शरशून्यमित्यर्थः। एवम्—सदामण्डलितं मण्डलाकारं सद्विकटोदरं तुच्छोदरं त्यक्तशरत्वात्। यद्वा—सदा मण्डलितोदरं सदा विकटोदरं चेत्यर्थः। तथा च प्रेक्षकेषु येन धनुषा यावस्था प्रतिपन्ना तद्दृष्टिस्तामेवाग्रहीदिति हस्तलाघवमुक्तम्॥

अथोभयसाधारणं कौशलमाह—

**वामो पसारिअ च्चिअ दाहिणहत्थो अवङ्गदेसणिवडिओ।**
**चावेसु अ तह णिमिआ ताणं दीसन्ति अन्तरालेसु सरा॥ ६९॥**

[वामः प्रसारित एव दक्षिणहस्तोऽपाङ्गदेशनिपतितः ।
चापयोश्च तथा नियोजितास्तयोर्दृश्यतेऽन्तरालेषु शराः ॥]

तयो रामरावणयोरुभयोरपि वामो हस्तः प्रसारित एव दण्डाकार एव दृश्यते, उत्थापितधनुष्ट्वात् । दक्षिणस्तु अपाङ्गदेशे निपतित एव, कृष्टधनुष्ट्वात् । तथा चापयोश्च नियोजिताः संधिताः सन्तः शरा अन्तरालेषु लक्ष्यलक्षकयोस्तयोरेव मध्येषु दृश्यन्ते, धारावाहित्वात् । तथा च कदा गृहीताः कदा त्यक्ता इति न ज्ञायत इति भावः ॥

अथ रामस्य रावणशराभिघातमाह—

**दहमुहविसज्जिएण अ सरेण सीआविओअसइसंतत्तम् ।**
**हिअअं अमुक्कधीरं णिहाअभिण्णं पि राहवेण ण णाअम् ॥ ७० ॥**

[दशमुखविसृष्टेन च शरेण सीतावियोगसदासंतप्तम् ।
हृदयममुक्तधैर्यं निघातभिन्नमपि राघवेण न ज्ञातम् ॥]

दशमुखत्यक्तेन च शरेण निघातः संघट्टविशेषस्तेन भिन्नमपि ताडितमपि हृदयं राघवेण न ज्ञातम् । सीतावियोगेन संततं यतः । संतापेनैव बधिरीकृतत्वादिति भावः । न हि प्रौढविषमूर्च्छितमपि जनं विषान्तरं मूर्च्छयतीत्याशयः । अत एव अमुक्तधैर्यम् । धैर्यविशिष्टमित्यर्थः ॥

अथ रावणस्य रामशराभिघातमाह—

**रहुणाहपेसिएण अ सरेण समुहागअस्स रक्खसवइणो ।**
**भिण्णा णिडालवट्टो ण अ से फुडभिउडिविरअणा विद्दविआ ७१**

[रघुनाथप्रेषितेन च शरेण संमुखागतस्य राक्षसपतेः ।
भिन्नं ललाटपृष्ठं न चास्य स्फुटभ्रुकुटिविरचना विद्राविता ॥]

[1]....................रावणस्य ललाटपृष्ठं भिन्नं दारितम् । न चास्य ललाटपृष्ठस्य पूर्वकाल एव क्रोधादुत्पन्ना स्फुटा भ्रुकुटिविरचना विद्राविता त्याजिता । ललाटभेदेऽपि भ्रुकुटिसत्त्वेन वीररसोत्कर्षः ॥

---

१. अत्र टीकाग्रन्थः कियांस्त्रुटितः प्रतिभाति.

अथ रावणस्य मूर्च्छामाह—

**तो से मुच्छाविहलो लोहिअणीसन्दभरिअलोअणणिवहो ।**
**बारंबारपअट्टो भमिओ बाहुसिहरेसु मुहसंघाओ ॥ ७२ ॥**

[ततोऽस्य मूर्च्छाविह्वलो लोहितनिःस्यन्दभृतलोचननिवहः ।
वारंवारप्रवृत्तो भ्रमितो बाहुशिखरेषु मुखसंघातः ॥]

ततः शराभिघातानन्तरमस्य रावणस्य मुखसंघातो बाहूनां शिखरेषु स्कन्धेषु वारंवारं प्रवृत्त उत्थायोत्थाय निपतितः सन् भ्रमितो घूर्णितः । तथा च—प्रहारदार्ढ्यमुक्तम् । किंभूतः । मूर्च्छया विह्वलोऽसंवृतः । एवम्—लोहितस्य निःस्यन्देन व्याप्तलोचनसमूहः । तेषामधोवर्तितत्वादिति भावः ॥

पुनरपि रावणशरत्यागमाह—

**तो गअमोहुम्मिल्लो णअणहुआसणपइत्तपत्तणपम्हम् ।**
**मुअइ सरोसाअड्ढिअबिइअमुहावङ्गमिलिअपुङ्खं बाणम् ॥ ७३ ॥**

[ततो गतमोहोन्मीलो नयनहुताशनप्रदीप्तपत्रणापक्ष्माणम् ।
मुञ्चति सरोषाकृष्टद्वितीयमुखापाङ्गमिलितपुङ्खं बाणम् ॥]

ततो मूर्च्छानन्तरं गतमोहत्वाहदुन्मीला नयनोन्मीलनं यस्य स उन्मीलितनयनो रावणो बाणं मुञ्चति । किंभूतम् । रक्षःस्वाभाव्यादमर्षोद्भूतेन नयनहुताशनेन प्रदीप्तानि किंचिज्ज्वलितानि पत्रणा पुङ्खस्तस्य पक्ष्माण्यग्राणि यत्र तम् । एवम्—सरोषाकृष्टत्वात् द्वितीयमुखस्य पुरोवर्ति मुखपृष्ठवर्ति मुखस्यापाङ्गे मिलितः पुङ्खो यस्येत्याकर्षणोत्कर्षेण क्रोधोत्कर्षः सूचितः ॥

पुनरपि रामशरत्यागमाह—

**तो सो खआणलणिहो किरणसहस्सेहि णिब्भरेन्तदसदिसो ।**
**रहुवइसरराहुमुहे पन्थद्धे सूरमण्डलो व्व णिउड्डो ॥ ७४ ॥**

[ततः स क्षयानलनिभः किरणसहस्रैर्निभ्रियमाणदशदिक् ।
रघुपतिशरराहुमुखे पथ्यर्धे सूरमण्डलमिव निमग्नः ॥]

ततस्त्यागानन्तरं स रावणबाणः अर्धे पथि रघुपतिक्षिप्तः शर एव राहुस्तन्मुखे सूर्यमण्डलमिव निमग्नः । राहुणा भानुरिव रामशरेण कवलीकृत इत्यर्थः । सूर्यसा-

म्यमाह—कीदृक् । क्षयानलतुल्यः । आग्नेयत्वात् । एवम्—किरणसहस्रैर्निभ्रियमाणाः पूर्यमाणा दशदिशो येन स तथा । रविरप्येवमेवेत्यर्थः ॥

अथ रामस्य चरमबाणसंधानमाह—

रहुणाहो वि सधीरं उक्करिसेण अग्गहत्थेऊण सरम् ।
आसण्ण लाइअव्वं पेच्छइ फुल्लकमलाअरं व दहमुहम् ॥ ७५ ॥

[रघुनाथोऽपि सधैर्यमुत्कृष्याग्रहस्तेन शरम् ।
आसन्ने लवितव्यं प्रेक्षते फुल्लकमलाकरमिव दशमुखम् ॥]

रघुनाथोऽपि सधैर्यं यथा स्यादेवं हस्ताग्रेण शरमुत्कृष्य तूणादाकृष्य आसन्ने निकटे एव लवितव्यं छेदनीयं फुल्लकमलानामाकरं शर इव दशमुखं प्रेक्षते । अत्र नानाकमलतुल्यतानामुखसत्त्वादाकरत्वेन रावणस्योत्प्रेक्षा । मालिकोऽप्याकरे फुल्लपुष्पाणि प्रथमं पश्यति पश्चादवचिनोति इति तन्मुखानां पश्चाच्छेदनीयत्वं गम्यते ॥

अथ शरसंधानमाह—

रामो संधेइ सरं विभीसणन्तेण वलइ रक्खसलच्छी ।
दहमुहविणासपिसुणं फुरइ अ सीताइ तक्खणं वामच्छम् ॥७६॥

[रामः संदधाति शरं विभीषणान्तेन वलति राक्षसलक्ष्मीः ।
दशमुखविनाशपिशुनं स्फुरति च सीतायास्तत्क्षणं वामाक्षि ॥]

रामः शरं धनुषि संदधाति। तथा सति रावणवधनिर्णयाद्राक्षसानां लक्ष्मी रामपक्षीयत्वेन भयाभावापचितत्वाच्च विभीषणस्यान्तेन पार्श्वेन वलति वक्रीभवति । तमाश्रयितुमुपक्रमत इत्यर्थः। अन्योऽपि भीतो भयहेतुपक्षीयमाश्रयत इति ध्वनिः। च पुनस्तत्क्षणमेव दशमुखविनाशसूचकं सत् सीताया वामाक्षि स्फुरति वेपते । स्त्रीणां वामाक्षिस्पन्दोऽभीष्टसूचक इति भावः ॥

अथ रावणस्यापशकुनमाह—

वामं णिसिअरणअणं रहुवइणो दाहिणं च फुन्दइ णअणम् ।
बन्धुवहरज्जपिसुणं पप्फुरइ विहीसणस्स लोअणजुअलम् ॥७७॥

[वामं निशिचरनयनं रघुपतेर्दक्षिणं च स्पन्दते नयनम् ।
बन्धुवधराज्यपिशुनं प्रस्फुरति विभीषणस्य लोचनयुगलम् ॥]

निशिचरस्यास्य रावणस्य वामं नयनं स्पन्दते । मरणसूचकत्वात् । रघुपतेश्च

दक्षिणं नयनं स्पन्दते । अभीष्टभार्यालाभकथकत्वात् । बिभीषणस्य लोचनयुगलं प्रस्फुरति वेपते । रावणरूपबन्धुवधानिष्टसूचकत्वेन वामम्, निजराज्यलाभरूपाभीष्टसूचकत्वेन दक्षिणमित्यर्थः ॥

अथ रामस्य धनुराकर्षणमाह—

**वच्छभरन्तुच्छङ्गे संधिअबाणे धणुम्मि कड्ढिज्जन्ते ।**
**रामसरपत्तणेहि व उप्पुसिआ सुरवहूण बाहत्थबआ ॥ ७८ ॥**

[वक्षोभ्रियमाणोत्सङ्गे संहितबाणे धनुषि कृष्यमाणे ।
रामशरपत्रणैरिव उत्प्रोञ्छिताः सुरवधूनां बाष्पस्तबकाः ॥]

वक्षसा हृदयेन भ्रियमाणः पूर्यमाण उत्सङ्गो यस्य । इत्याकर्णकृष्टत्वं चापस्य, हृदयस्योत्साहोत्फुल्लत्वं च । हृदयं परिपूर्य प्रहारः कृत इति लोकप्रसिद्धिरप्युक्ता । तादृशे संहितबाणे धनुषि कृष्यमाणे सति । रामेणेत्यर्थात् । सुरवधूनां बाष्पस्तबका रामशरस्य पत्रणं पुङ्खवर्तिपक्षास्तैरिव उत्प्रोञ्छिता मार्जिताः । रामशराकर्षणसमकालमेव सुरबन्दीनामानन्दाश्रुप्रमार्जनं जातमित्यस्य संहितरामशरपक्षप्रोञ्छनहेतुकत्वमुत्प्रेक्षितम् । अन्यत्रापि अश्रु वस्त्रादिश्लक्ष्णद्रव्येण प्रोञ्छयत इति ध्वनिः ॥

अथ रावणस्य शिरश्छेदमाह—

**णवरि अ सो रहुवइणा वारं वारेण चन्दहासच्छिण्णो ।**
**एक्केण सरेण लुओ एक्कमुहो दहमुहस्स मुहसंघाओ ॥ ७९ ॥**

[अनन्तरं च स रघुपतिना वारं वारं चन्द्रहासच्छिन्नः ।
एकेन शरेण लून एकमुखो दशमुखस्य मुखसंघातः ॥]

धनुराकर्षणानन्तरं च रघुपतिना दशमुखस्य मुखसमूह एकेन शरेण एकं मुखमुपक्रमो यस्य स एकोपक्रमः सन् लूनः । एकदैव च्छिन्न इत्यर्थः । कीदृक् । वारं वारं शिवाराधनसमये चन्द्रहासेन रावणखड्गेन छिन्नोऽपि । तथा च य एव क्रमिकच्छेदेन पुनः पुनरुत्तिष्ठति स एव रामशरेण एकदा खण्डित इति पुनरनुत्थानं व्यज्यते । रामेणैव पूर्वं भूयो भूयश्चन्द्रहासेन क्रमशश्छिन्नत्वादुत्थित इति तदानीमेकदैव शरेण छिन्नत्वान्नोत्थित इति केचित् ॥

अथ रावणपतनमाह—

अविहत्तकण्ठगरुओ छिन्नो वि दसाणणस्स होइ भअअरो।
धरणिअलुत्तिण्णस्स व णिअअच्छेअपडिउट्ठिओ मुहणिवहो ८०

[अविभक्तकण्ठगुरुकश्छिन्नोऽपि दशाननस्य भवति भयंकरः।
धरणितलोत्तीर्णस्येव निजकच्छेदप्रत्युत्थितो मुखनिवहः॥]

धरणितल उत्तीर्णस्य भूमिपतितस्य दशाननस्य छिन्नोऽपि। मुखनिवहो भयंकरो भवति। कीदृक्। अविभक्तकण्ठः सन् गुरुकः। कण्ठविभागाभावेनादरस्थानं जीवितत्वभ्रमादित्यर्थः। उत्प्रेक्षते—निजकच्छेदेभ्यः प्रत्युत्थित इव पूर्ववत्पुनरुत्पन्न इव। अतोऽप्यभिनवोत्पत्तिभ्रमेण सर्वेषामाशङ्काविषय इति भावः। छेदेऽपि कबन्धलग्नस्यैव भूमौ पतनमिति प्रहारलाघवमुक्तम्॥

अथ रावणजीवनिष्क्रमणमाह—

तस्स हअस्स रणमुहे रक्खसणाहस्स अहिमुहं अप्पाणो।
दसहि वि मुहेहि समअं सिहाकरालो व हुअवहो णिक्कन्तो ८१

[तस्य हतस्य रणमुखे राक्षसनाथस्याभिमुखमात्मा।
दशभिरपि मुखैः समं शिखाकराल इव हुतवहो निष्क्रान्तः॥]

रणमुखे हतस्य च तस्य राक्षसनाथस्यात्मा दशभिरपि मुखैः सममेकदैव अभिमुखं संमुखं निष्क्रान्तः। शरीराद्बहिर्भूत इत्यर्थः। शिखाभिः करालः सच्छिद्रो दन्तुरो वा हुतवह इव। तेजोमयत्वाद्दशधा विभक्तस्य जीवस्य बहुशिखवह्नित्वेनोत्प्रेक्षा॥

अथ रामस्य युद्धोपसंहारमाह—

अह णिहअम्मि दहमुहे ऊससिअम्मि अ समन्तओ तेल्लोके।
वअणम्मि अ उप्पुसिआ भिउडी ओआरिअं च रामेण धणुम् ८२

[अथ निहते दशमुखे उच्छ्वसिते च समन्ततस्त्रैलोक्ये।
वदने चोत्प्रोञ्छिता भ्रुकुटिरवतारितं च रामेण धनुः॥]

अथ जीवोत्क्रमणानन्तरं दशमुखे निहते मृते त्रैलोक्ये च समन्ततः सर्वत उच्छ्वसिते सजीवे ऊर्ध्वश्वासविशिष्टे वा यन्त्रणाभावादुत्थिते आनन्दादुत्फुल्ले वा रामेण वदने भ्रुकुटिरुत्प्रोञ्छिता निवर्तिता, धनुश्च अवतारितम्, संहितज्यं कृतमित्यर्थः। कृतकार्यत्वादिति भावः॥

अथ रावणशोभामाह—

**णिद्दअबन्धुप्पित्था जाणन्ती विक्कमं णिसाअरवइणो ।**
**माअ त्ति परिगणेन्ती ण मुअइ णिअहं पि रावणं राअसिरी ८३**

[निर्दयबन्धूद्विग्ना जानती विक्रमं निशाचरपतेः ।
मायेति परिगणयन्ती न मुञ्चति निहतमपि रावणं राजश्रीः ॥]

निशाचरपतेर्विक्रमं जानती सती तन्मरणं माया इति परिगणयन्ती विचारयन्ती राजलक्ष्मीर्निहतमपि रावणं न मुञ्चति । मृतोऽपि रावणो राजशोभया न त्यक्त इति भावः । तत्र तत्पराक्रमाध्यवसायेन मायाबुद्धिहेतुकत्वमुत्प्रेक्षितम् । राजश्रीः किंभूता । उपेक्ष्य गतत्वेन दयाशून्यो बन्धुर्दशमुखो यस्याः सा निर्दयबन्धुः । अत एवोद्विग्ना व्याकुलचित्तापि । 'णिग्गअबन्धुप्पित्थेति' सम्यक्पाठः । निर्गतबन्धुत्वादुद्विग्नेत्यर्थः ॥

अथ विभीषणरोदनमाह—

**ताहे विभीसणस्स वि अन्तोहिअअम्मि बन्धुणेहुप्पण्णो ।**
**दासरहिणो वि पुरओ मुक्को च्चिअ लोअणेहि बाहत्थवओ ॥८४॥**

[तदा विभीषणस्याप्यन्तर्हृदये बन्धुस्नेहोत्पन्नः ।
दाशरथेरपि पुरतो मुक्त एव लोचनाभ्यां बाष्पस्तबकः ॥]

तदा दाशरथेरपि पुरतो विभीषणस्यापि लोचनाभ्यां बाष्पस्तबको मुक्त एव । यद्यपि मोक्तुं न युज्यते तथापीत्येवकारार्थः । तत्र हेतुमाह—कीदृक् । अन्तर्हृदये हृदयाभ्यन्तरे रावणरूपबन्धुस्नेहादुत्पन्नस्तथा च बाहुल्याद्धर्तुं न पारित इति भावः ॥

अथ विभीषणप्रलपमाह—

**णिहअम्मि अ दहवअणे विहीसणो णिन्दिआमरत्तणसद्दो ।**
**परिदेविउं पउत्तो मरणसमब्भहिअदुक्खदिण्णाआसो ॥ ८५ ॥**

[निहते च दशवदने विभीषणो निन्दितामरत्वशब्दः ।
परिदेवितुं प्रवृत्तो मरणसमभ्यधिकदुःखदत्तायासः ॥]

विभीषणः परिदेवितुं परिदेवनं कर्तुं प्रवृत्तश्च । कीदृक् । दशवदने निहते सति निन्दितोऽमरत्वशब्दो येन स तथा । अमरजेतुरपि रावणस्य चेन्मरणं तदाम-

रत्वेनापि किम् । अमरत्वं कुत्र वेत्याशयः । एवं निजमरणात्समभ्यधिकेन दुःखादपि महता रावणमरणदुःखेन दत्त आयासः क्लेशो यस्मै स तथा ॥

त्रिभिः प्रलापवचनमाह—

जो च्चिअ जेऊण जमं दिट्ठो इच्छासुहं तुमे जमलोओ ।
दीसिहिसि कह णु पत्थिव इण्हिं तं चेअ सेसजणसामण्णम् ॥८६॥

[य एव जित्वा यमं दृष्ट इच्छासुखं त्वया यमलोकः ।
द्रक्ष्यसि कथं नु पार्थिव इदानीं तमेव शेषजनसामान्यम् ॥]

हे पार्थिव रावण, यमं जित्वा य एव यमलोकस्त्वया इच्छासुखं स्वेच्छया दृष्टः । परिभ्रम्येत्यर्थः । इदानीं मृत्यौ सति तमेव यमलोकं शेषजनैः प्राकृतजनैः सामान्यं साधारण्यं यथा स्यात्तथा कथं नु द्रक्ष्यसि । यमशासनीयत्वेनेत्यर्थः ॥

एक्केण रक्खसाहिव पुव्वं अवहीरिओवएसेण वि ते ।
समणिहणेण रणमुहे पडिमुक्कं णवर कुम्भअण्णेण तुहम् ॥ ८७ ॥

[एकेन राक्षसाधिप पूर्वमवधीरितोपदेशेनापि ते ।
समनिधनेन रणमुखे प्रतिमुक्तं केवलं कुम्भकर्णेन तव ॥]

हे राक्षसाधिप, एकेन केवलं कुम्भकर्णेन तव प्रतिमुक्तं भरणपोषणाद्युपकारस्य प्रतिमोचनं कृतम् । प्रत्युपकारित्वादित्यर्थः । भ्रातृत्वाविशेषेऽपि न मयेति भावः । किंभूतेन । ते तव अवधीरित उपदेशो येन । पूर्वं प्रतिक्षिप्तभवदाज्ञेनापि स्वतन्त्रत्वात् । प्रतिमोचने हेतुमाह—पुनः किंभूतेन । रणमुखे भवन्मरणेन समं निधनं यस्य तेन । संप्रति भवता सह भवदर्थं त्यक्तजीवितेनेत्यर्थः ॥

पत्थिव तुमं मुअन्तो समसुहदुक्खेहि बान्धवेहि अमुक्कम् ।
जइ हं धम्मपहाणो धम्मपहाणाण को गणिज्जउ पुरओ ॥ ८८ ॥

[पार्थिव त्वां मुञ्चन्समसुखदुःखैर्बान्धवैरमुक्तम् ।
यद्यहं धर्मप्रधानोऽधर्मप्रधानानां को गण्यतां पुरतः ॥]

हे पार्थिव, समानसुखदुःखैर्बान्धवैः कुम्भकर्णादिभिरमुक्तं त्वां मुञ्चन् त्वया समं परलोकमगच्छन्नहं यदि धर्मप्रधानो धार्मिकः, तदाधर्मप्रधानानां मध्ये कः पुरतः प्रथमं गण्यताम् । न कोऽपीत्यर्थः । तथा चाहमेवाधर्मिकाणां प्रथमगण्य इति भावः ॥

अथ द्वाभ्यां रामं प्रति तद्वचनमाह—

**आहासइ अ रहुवइं मरणसमोब्भहिअरुद्धबाहुप्पीडो ।**
**बन्धुवहागअदुक्खो गिम्हुम्हासुक्खणइमुहो ब्व महिहरो ॥ ८९ ॥**

[आभाषते च रघुपतिं मरणसमभ्यधिकरुद्धबाष्पोत्पीडः ।
बन्धुवधागतदुःखो ग्रीष्मोष्मशुष्कनदीमुख इव महीधरः ॥]

रघुपतिमाभाषते च । किंभूतः । मरणादपि समभ्यधिकं यथा स्यादेवं रुद्धो बाष्पोत्पीडो येन यस्य वा स तथा । वचनसौष्ठवाय कृतं संतापजनितमुखशोषेण वा जातमश्रुनिरोधं मरणादप्यधिकं मन्यमान इत्यर्थः । एवम्—बन्धूनां रावणादीनां वधेनागतदुःखः । क इव । ग्रीष्मोष्मणा शुष्कं नदीमुखं यस्य तादृशो महीधर इव । तथा च प्रथमपक्षे नदीमुखशोषबाष्पनिरोधयोर्महीधरविभीषणयोः, द्वितीयपक्षे त्वधिकात् ग्रीष्मोष्मसंतापयोस्तौल्यादुपमा ॥

**पहु वीसज्जेहि महं ता दहमुहकुम्भअण्णचलणणिवडिओ ।**
**पच्छा परलोअगअं छिवामि सीसम्मि मेहणाअं अ सुअम् ॥९०॥**

[प्रभो विसृज मां तावद्दशमुखकुम्भकर्णचरणनिपतितः ।
पश्चात्परलोकगतं स्पृशामि शीर्षे मेघनादं च सुतम् ॥]

हे प्रभो राम, मां विसृज आज्ञापय । तावत्तदा प्रथमं दशमुखकुम्भकर्णयोश्चरणेषु निपतितः सन् पश्चात्परलोकगतं मृतं मेघनादं च शीर्षे स्पृशामि । परामृशामीत्यर्थः । तावद्विसृज यावदेतावत्करोमीति वा ॥

अथ रावणादिसंस्कारमाह—

**महिअलपडिअविसंठुलहीसणविलावजाआणुअम्पेण ।**
**रामेण वि पवणसुओ आणत्तो रक्खसाहिवइसकारे ॥ ९१ ॥**

[महीतलपतितविसंष्ठुलविभीषणविलापजातानुकम्पेन ।
रामेणापि पवनसुत आज्ञप्तो राक्षसाधिपतिसंस्कारे ॥]

महीतले पतितस्य विसंष्ठुलस्य विपर्यस्तकरचरणादेर्विभीषणस्य विलापाज्जातानुकम्पेन रामेणापि राक्षसाधिपतेः संस्कारे दाहादौ पवनसुतो हनूमान् आज्ञप्तो नियुक्त इत्यर्थः ॥

अथ सुग्रीवसाहाय्योपसंहारमाह—

**णिहअम्मि अ दहवअणे आसंघन्तेण जणअतणआलम्भम् ।**
**सुग्गीवेण वि दिट्ठो पच्चुवआरस्स साअरस्स व अन्तो ॥ ९२ ॥**

[निहते च दशवदनेऽध्यवस्यता जनकतनयालम्भम् ।
सुग्रीवेणापि दृष्टः प्रत्युपकारस्य सागरस्येवान्तः ॥]

च पुनर्दशवदने निहते सति जनकतनयायाः सीताया लम्भं प्राप्तिमध्यवस्यता स्थिरीकुर्वता सुग्रीवेणापि सागरस्येव प्रत्युपकारस्य अन्तो दृष्टः । यथा सागरस्य पारो दृष्टस्तथा सीतोद्धाररूपप्रत्युपकारस्य निर्वाहरूपः पर्यन्तो दृष्ट इति सहोपमा । दुस्तरत्वेन सागरतुल्यस्य प्रत्युपकारस्य पारो दृष्ट इति साधर्म्योपमा वा ॥

अथ सरथमातलिविसर्जनमाह—

**काऊण अ सुरकज्जं रहुवइवीसज्जिएण कइअणपुरओ ।**
**जलहरगुप्पन्तधओ सग्गाहिमुहो रहो कओ माअलिणा ॥ ९३ ॥**

[कृत्वा च सुरकार्यं रघुपतिविसृष्टेन कपिजनपुरतः ।
जलधरव्याकुलायमानध्वजः स्वर्गाभिमुखो रथः कृतो मातलिना ॥]

सुराणां रावणवधरूपं कार्यं कृत्वा कपिजनानां पुरतो रघुपतिविसृष्टेनाज्ञप्तेन मातलिना च रथः स्वर्गाभिमुखः कृतः । ऊर्ध्वं प्रेरित इत्यर्थः । किंभूतः । जलधरेषु व्याकुलायमानो ध्वजो यस्य स तथा । ऊर्ध्वतो यन्त्रणात्तिर्यग्भावादिति भावः ॥

अथ रामस्यायोध्यासमागमेनाश्वासकमुपसंहरति—

**घेत्तूण जणअतणअं कञ्चणलट्ठिं व हुअवहम्मि विसुद्धम् ।**
**पत्तो पुरिं रहुवई काउं भरहस्स सप्फलं अणुराअम् ॥ ९४ ॥**

[गृहीत्वा जनकतनयां काञ्चनयष्टिमिव हुतवहे विशुद्धाम् ।
प्राप्तः पुरीं रघुपतिः कर्तुं भरतस्य सफलमनुरागम् ॥]

रघुपतिः पुरीमयोध्यां प्राप्तः । किं कृत्वा । जनकतनयां गृहीत्वा । सीतया सहेत्यर्थः । किंभूताम् । काञ्चनयष्टिमिव हुतवहे वह्नौ विशुद्धामुत्तीर्णाम् । यथा वह्नौ प्रवेशिता काञ्चनयष्टिरधिकरोचिष्मती भवति, तथा रक्षोगृहनिवासजन्यपरीवादमा-

र्जनाय वह्नौ परिक्षिप्ता सीताप्यधिकरोचिष्मती वृत्तेति निर्दोषत्वमुक्तम् । किमर्थम् । भरतस्य भक्तिरूपमनुरागं सफलं कर्तुम् । रामसिंहासनानवरोहणादिरूपायास्तद्भक्ते रामसमागम एव फलमित्याशयः । यद्वा—भरतस्य कृते स्वीयं स्नेहरूपमनुरागं सफलं कर्तुमित्यर्थः । समाप्तौ सफलत्वोत्कीर्तनेन शुभसूचनरूपं मङ्गलमप्युक्तम् ॥

अथ ग्रन्थसमाप्तिमाह—

एत्थ समप्पइ एअं सीआलम्भेण जणिअरामब्भुअअम् ।
रावणवह त्ति कव्वं अणुराअङ्कं समत्थजणणिव्वेसम् ॥ ९५ ॥

**इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे पञ्च(न्द)रहो आसासओ परिसमत्तो ।**

[अत्र समाप्यते एतत्सीतालम्भेन जनितरामाभ्युदयम् ।
रावणवध इति काव्यमनुरागाङ्कं समस्तजननिर्द्वेषम् ॥]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये पञ्चदश आश्वासः परिसमाप्तः ।

एतद्रावणवध इति नाम काव्यमत्र समाप्यते । कविनेत्यर्थात् । कर्म कर्तरि वा । एतदेव स्कन्धकं तत्समाप्तिस्थानमित्यर्थः । किंभूतम् । सीताया लम्भेन प्राप्त्या जनितो रामस्याभ्युदयो यत्र वर्णितत्वेनेत्यर्थः । पुनः कीदृक् । सीतां प्रति रामानुरागस्य सेतुबन्धरावणवधादिरूपोऽङ्कश्चिह्नं यत्र तद्गतज्ञापकत्वात् । अथ च अनुरागपदरूपोऽङ्कः प्रत्याश्वासकान्तेऽसाधारणं चिह्नं यस्येत्यर्थः । एवं समस्तजनस्य द्वेषशून्यं सीतारामसंबन्धित्वेनानुरक्तसर्वजनमित्यर्थः ॥

सीतासंप्राप्तिदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णा पञ्चदशी शिखा ॥
सेतुग्रन्थसमुद्रादर्था मणयो भयाकृष्टाः ।
उपदेशसहकृतेन्द्रियपटुभिः प्राज्ञैः परीक्ष्यन्ताम् ॥

चतुर्भूतारिशीतांशु( १६५२ )भिरभिगणिते साहसाङ्कस्य वर्षे
वर्षे जल्लालदीन्द्रक्षितिमुकुटमणेरप्यनन्तागमा(४०)भ्याम् ।
पञ्चम्यां शुक्लपक्षे नभसि गुरुदिने रादामसेन राज्ञा
विज्ञेनापूरितोऽयं तिथितुलितशिखो रामसेतुप्रदीपः ॥
सूर्याचन्द्रमसोरुदञ्चति कथा यावत्तथा दीप्यते
यावत्कौस्तुभकान्तिजालजटिला वैकुण्ठवक्षःस्थली ।
गङ्गावीचिभिरञ्चितो हरजटाजूटः समुज्जृम्भते
यावत्तावदकब्बरेण जगती राजन्वती वर्तताम् ॥

इति श्रीश्रीमन्निखिलमहीमहेन्द्रमुकुटमणिमयूखमञ्जरीपिञ्जरीकृतकमलसकलसार्वभौमशिरोमणिश्रीमद**कब्बरजल्लालदीन्द्र**कृपाकटाक्षवीक्षितभानुभक्तिपरायणहृदयहर्म्यनिवासितनारायणमहाराजाधिराजश्रीश्री**रामदास**विरचितो रामसेतुप्रदीपो नाम ग्रन्थः परिपूर्णः ॥

